**Madras University Sanskrit Series No. 19. (A)**

KHAṆḌADEVA'S

# BHĀṬṬA-DĪPIKĀ

[ PURVAṢATKA-PART II ]

WITH

# THE PRABHĀVALĪ

OF

ŚAMBHU BHAṬṬA

*Edited by*

**Panditaraja**

**S. SUBRAHMANYA SASTRI, M.A.,**

*Lecturer in Sanskrit,*

*University of Madras.*




UNIVERSITY OF MADRAS

1957

मद्रपुरीयविश्वविद्यालयसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १९ (A)

# भाट्टदीपिका

## श्रीशम्भुभट्टविरचितप्रभावलीसंवालिता

[पूर्वषट्कम्—पञ्चमषष्ठाध्यायौ]

संपादकः

एस्. सुब्रह्मण्यशास्त्री

पण्डितराजः, न्यायवेदान्तविद्वान् मीमांसकशिरोमणिः

मद्रपुरीयविश्वविद्यालयः

१९५७

# विषयानुक्रमणिका

## पञ्चमाध्याये प्रथमः पादः

क्रमनिरूपणं अध्यायार्थः

---

द्वितीयः पादः

---

तृतीयः पादः

---

चतुर्थः पादः



---

## षष्ठाध्यायस्य प्रथमः पादः

द्वितीयः पादः



---

तृतीयः पादः

---

चतुर्थः पादः

---

पञ्चमः पादः

---

षष्ठः पादः

---

सप्तमः पादः

---

अष्टमः पादः



---

# अथ पञ्चमाध्यायस्य प्रथमः पादः

## (१)—श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् ॥ १ ॥

तदेवमङ्गप्रधानसाधारण्येन प्रयोज्यवर्गे निरूपितेऽधुना प्रयोगाश्रितः क्रमो निरूप्यते ।

---

॥ श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् ॥

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तः तं बालकृष्णं पितरं नमामि ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसङ्क्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥

यद्यप्यत्र गुरोः कृतावपि मयाऽप्युद्भाव्यते काचना
ऽसंभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्विवं मे मतिः ॥

पूर्वाध्यायोत्तराध्यायार्थनिरूपणयोः हेतुहेतुमद्भावसङ्गतिं प्रदर्शयति—**तदेवमित्यादिना** । अङ्गानां प्रयाजादीनां प्रयोज्यत्वं तु पूर्वमसकृदावेदितम्,प्रधानभूतानामपि राजसूयादीनां फलप्रयोज्यत्वं चतुर्थचतुर्थपादाद्याधिकरणे उक्तम् । प्रयोज्यवर्गे इत्यत्र भावप्रधानो निर्देशः प्रयोज्यत्वविशिष्टप्रयोज्यपदार्थवर्गे इत्यर्थः अवगते इत्यनेन च प्रयोज्यत्वं हि प्रयोगविषयत्वं तेन सविशेषणमपि प्रयोज्यत्वं प्रयोज्यपदार्थवृत्ति ज्ञातमिति सूचितम् । अधुना तदनन्तरं । प्रयोगाश्रित इति । प्रयोगज्ञानाश्रित इति चार्थः । अयं भावः । यावद्धि अनुष्ठानगोचरत्वेनाङ्गजातं निश्शेषं नावगतं न तावत् क्रमविशेषो निराधारो निरूपयितुं शक्यते, अवगतेषु तेषु अनुष्ठाने को वाऽत्र क्रम इति भवत्याकाङ्क्षा इति तदनन्तरमाकाङ्क्षितक्रमनिरूपणमुचितमिति । ननु

एकादशे हि अङ्गानां प्रधानानां चैकेनैव प्रयोगविधिना विधानमिति वक्ष्यते। अतश्चैकविधिविधेयत्वेन सर्वसाहित्यस्य विवक्षितत्वादेकेन कर्त्रा गु[illegible]ऽवश्यम्भाविनि कस्मिंश्चित्क्रमे नियामकानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि षट् प्रमाणानि निरूपयिष्यन्ते। तत्र क्रमो नाम अव्यवहितोत्तरत्वरूपमानन्तर्यम्। तच्चैकप्रतियोगिकमेकवृत्ति। यथा "वेदं कृत्वा वेदिं करोति" इत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदि-

---

अनुष्ठेयपदार्थानां परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं प्रयोज्यत्वं केनावगतं येन तादृशकृतिव्याप्तिसमये तेषामनुष्ठाने आकाङ्क्षा भवतीत्यत आह—एकादशे हीति। अयं भावः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधिना फलांशे विध्यभावात् फलोद्देशेन केवलदर्शपूर्णमासकरणत्वस्य करणत्वविशिष्टदर्शपूर्णमासयोः केवलयोर्वा विधाने प्रकरणपठिताङ्गविध्यनुपपत्तेः करणत्वनिर्वाहाय तदेकवाक्यतया लक्षणया समिदाद्यङ्गोपकृतयोस्तयोरेव करणत्वेन फले विधानं क्रियते। तथा चाङ्गविशिष्टदर्शपूर्णमासौ फलोद्देशेनानुष्ठेयौ इत्यर्थे सिद्धे एकवाक्यावगतपरस्परसाहित्यस्य उपादेयगतत्वेन विवक्षितत्वात् तन्निर्वाहाय अविलम्बापरपर्यायानुष्ठानगतप्राशुभावपर्यन्तोपि तद्विधिव्यापारः कल्प्यते अविलम्बेनानुष्ठान एव सहानुष्ठानमिति व्यवहारात्। अत एवाङ्गप्रधानसाधारण्येन फलविधिनैव प्राशुभावविशिष्टप्रयोगावगमात् तत्तदुत्पत्तिवाक्येषु प्रतीयमानमपि अनुष्ठानं विधिष्वनूद्यते अज्ञातस्वरूपज्ञापनमात्रमेव तु क्रियते अनयैव च युक्त्या निर्ज्ञातप्राशुभावे प्रयोगे पौर्णमास्यां पौर्णमास्या यजेत इत्यादिकालदेशादिविधयोपि पौर्णमास्यादिकालावच्छेदज्ञापनद्वारा तद्भेदज्ञापनसिद्ध्यर्था एव न त्वेतेपि प्रयोगांशे विधायकाः इति भाट्टालङ्कारकृतः।

पूज्यपादैस्तु विनिगमनाविरहात् प्रत्युत कालादेः प्रयोगान्वयिनो गुणस्य नियामकस्य सत्वात् तत्रापि प्रयोगविधानमुक्तमेकादशे। उभयथापि गुणभूतेन एकेन कर्त्रा एकस्मिन् देशकालादौ समस्तप्रधानभूतपदार्थानुष्ठानं कर्तुमशक्यं कथं प्रयोगविधिना विधातुं शक्यत इत्यपेक्षितः कश्चनानियतः क्रमोऽपि पदार्थविशेषणतया चेद्विधीयते प्रयोगविधिना तदा किमेतदनन्तरमेतत्कर्तव्यं एतदनन्तरंवेति प्रयोगविक्षेपापत्त्या तत्प्राशुभावभङ्गापत्तेः तदभङ्गाय प्रयोगविधिरेव नियतमेव क्रमं पदार्थविशेषणतया विधत्ते। तत्र नियामकानि षट्प्रमाणानीति तत्र क्रमस्वरूपाज्ञाने तत्प्रमाणनिरूपणमशक्यमित्येतदर्थं विततिविशेषः पौर्वापर्यरूपं वा क्रम इति मूलानुयायिकृतं लक्षणं दूषयिष्यन् प्राथम्यादीनां क्रमत्वाविवक्षया क्रमलक्षणमाह—तत्रेति। प्रयोगविधिः प्राशुभावायानन्तर्यरूपमेवापेक्षत इति तदपेक्षितानन्तर्यरूपक्रमस्यैव लक्ष्यस्येदं लक्षणं कर्तुं युक्तमिति भावः। तच्चेति। न तु व्यवहिताव्यवहितसाधारणं पौर्वापर्यमुभयवृत्ति न वा विततिरूपं

करणवृत्ति। अत्र च दर्शपूर्णमासोत्तरत्वस्यापि सोमाङ्गत्वात्तद्व्यावृत्त्यर्थमव्यवहितेति विशेषणम्। तत्र दर्शपूर्णमासपूर्वकालिकत्वमात्रं क्त्वाप्रत्ययार्थः। न त्वव्यवहितत्वांशोऽपि। न च सोमविधेस्तदपेक्षा, येन अव्यवधान एव तत्पर्यवस्येत्, सोमविधेर्भिन्नप्रयोगविधिविधेयदर्शपूर्णमासप्रतियोगिकक्रमानपेक्षत्वात्। अतस्तत्रोत्तरकालत्वमेव विधेयं, न क्रमः। क्रमश्च सर्वत्रोत्तरपदार्थाङ्गं, तस्यैव कार्हि कर्तव्य इत्यपेक्षणात् न तु पूर्वपदार्थाङ्गं, मदुत्तरं कः पदार्थः कर्तव्य इत्यपेक्षायाः कचिदप्यनुदयात्। पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणं, दर्शपूर्णमासादिरिव पूर्वकालतायाः। एतेनोभयपौर्वापर्यरूपोपि क्रमः पदार्थद्वयाङ्गमिति केषांचिदुक्तमपास्तं, प्रमाणाभावात्। अस्तु वा "प्रथमभक्षः" इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेव क्रमपदार्थः।

---

अनेकतावत्पदार्थसंघवृत्तीति स्वयमेव स्फुटीकरिष्यते। पूर्वकालताकत्वमात्रमिति। उभयत्रापि क्त्वाप्रत्ययसाम्ये सति केन वा विशेषेण कचित् पूर्वकालत्वं कचिच्चाव्यवहितानन्तर्यमर्थ इत्यपेक्षायां तं विशेषं दर्शयति —सोमविधेरिति। एकप्रयोगविधिपरिगृहीतानां मिथः सहानुष्ठानायापेक्षितमानन्तर्यरूपं क्रमं यदि वेदं कृत्वा विदिं करोति इति विधिः न विदध्यात्, किं तर्हि? पौर्वापर्यं, तदा अनपेक्षितविधानमदृष्टार्थता च स्यात्। अतस्तत्परिहाराय क्त्वाप्रत्ययात् साधारणतया प्रतीयमानमपि पूर्वकालत्वमुत्तरकालत्वं वा अव्यवहितत्वांशप्राधान्येनैव लक्षणया विधातुं तत्रोचितम्। सोमवाक्ये तु आनन्तर्यापेक्षतात्पर्यग्राहकाभावे लक्षणायां प्रमाणाभावात् व्यवहितसाधारणं पूर्वकालत्वमुत्तरकालत्वं वा अर्थो द्रष्टव्यः। विध्यन्तरप्रयोज्यपदार्थविशेषणतया विध्यन्तरेण क्रमविध्ययोगात्। एतदभिप्रायेणैव स्थानाच्चोत्पत्तिसंयोगादित्यधिकरणे तन्त्ररत्ने उक्तं-यद्यपि त्तवाशब्दः पूर्वकालतामाह नानन्तर्यं तथापि प्रयोगवचनाकांक्षितमानन्तर्यमेव पूर्वकालताविशेषस्वरूपं लक्षणया प्रतिपादयतीति "आश्विनं ग्रहं गृहीत्वा त्रिवृता" इति वाक्यार्थविचारे। उत्तरकालत्वमेवेति। एतच्च पूर्वकालत्वस्यानुयोगितया सोमयागादावन्वयेन यदर्थसिद्धमुत्तरकालत्वं तदभिप्रायेण न तु शक्त्यभिप्रायेण। समानकर्तृकयोः पूर्वकाले क्त्वा इत्यनुशासनेन पूर्वकालत्व एव तत्प्रतीतेः। अत्र च विततिरूपक्रमस्य अनेकपदार्थाश्रितत्वेन द्वित्वादिवत् व्यासज्यवृत्तित्वस्येव पौर्वापर्यस्यापि उभयपदार्थवृत्तितया व्यासज्यवृत्तित्वस्य स्वीकारात् उभयपदार्थाङ्गत्वम्। अत एव न द्वयोः पूर्वत्वं नापि परत्वं एकापेक्षया त्वितरस्य पूर्वत्वं तदपेक्षया चेतरस्य परत्वमिति प्रातिस्विकोभयपदार्थविधिनैव विधीयत इति प्रकाशकारोक्तं निरस्यति—एतेनेति। पूर्वपदार्थाङ्गत्वे अपेक्षाभावेनेत्यर्थः। पूर्वपदर्थाङ्गमेवेति। यत्पदार्थानुष्ठाना-

कांक्षया अन्वीयमानो विधिबोधितः क्रमःस तत्पदार्थविशेषणतयैव विधातुमुचित इति न्यायात् तन्मात्राङ्गमेव, न त्वेतावता उभयाङ्गमिति भावः ।

अस्तुवेत्यनास्थाद्योतनस्य अयमभिप्रायः । यथैव वेदं कृत्वेत्यादौ क्त्वाप्रत्ययेन पौर्वापर्यमात्रं प्रतीयते तथापि प्रयोगविधेरानन्तर्यस्यैवापेक्षणात् अव्यवहितपूर्वकालताकत्वमेव लक्षणया बोधितं सत् अव्यवहितानन्तर्यस्वरूपमेव फलति । ततःशब्दादिषु तु आनन्तर्यस्य शब्दादेव प्रतीतेः अव्यवहितत्वांश एव प्रयोगविधितात्पर्यं, व्यक्तं चेदं तन्त्ररत्ने "प्रयोगविधिस्तु आनन्तर्यमाकाङ्क्षति न पौर्वापर्यं ततस्तदेवानन्तर्यं पौर्वापर्योच्चारणात् प्रतीयमानं विधेयं" इत्यादिना । एवं च प्रथमभक्ष इत्यत्र एकप्रसरताभङ्गभयेन प्रथमतः समाख्यानिमित्तभक्षनिरूपितप्राथम्यविशिष्टभक्षान्तरविधानेऽपि कल्पितविशेषणाविधिना संबन्धिशब्दतया प्रथमपदोपस्थापिताध्वर्य्वादिभक्षान्तरप्रतियोगिकपूर्वकालताकत्वमितरभक्षे विधीयमानं अव्यवहितानन्तर्ये एव फलतीत्यत्राप्युत्तरपदार्थाङ्गत्वमेवाव्यवहितोत्तरत्वरूपानन्तर्यक्रमस्येति न क्वचिदपि पूर्वपदार्थाङ्गत्वं तस्य । तथा आश्विनो दशमो गृह्यते तं तृतीयं जुहोतीत्यत्रापि दशमपदेन नवमग्रहग्रहणाव्यवहितोत्तरत्वमेव प्राप्तमपेक्षावशादिति । एवं च पूर्वोक्तक्रमलक्षणेऽपि नाव्याप्तिरिति ध्येयम् ।

भा ।लङ्कारकृता तु पूर्वपदार्थनिरूपितमव्यवहितानन्तर्यमेव पौर्वापर्यापरपर्यायं क्रमलक्षणमभिधाय वषट्कर्तृनिमित्तभक्षवृत्तिप्राथम्ये क्रमव्यवहारो गौणः प्रथमभक्षानुष्ठानमात्रात् क्रमानुष्ठानं वृत्तमिति व्यवहारासंभवाच्च इत्युक्तम् । तदा न पूर्वोक्तलक्षणाव्याप्तिनिरासायोपपादितक्लेशाश्रयणमपि । यद्यपि पूर्वापरयोर्विद्यमानो धर्मः पौर्वापर्यमिति व्युत्पत्त्या पूर्वापरपदार्थद्वयवृत्ती कश्चन द्वित्वादिवत् व्यासज्यवृत्ती क्रमरूपो धर्मः प्रतीयते । अत एवार्थक्रमे यदीयप्रयोजनानुरोधेन कल्प्यमानः क्रमः तदाकाङ्क्षया तदङ्गमपि उत्तरपदार्थाङ्गत्वेनापि व्यवह्रियते पूर्वं यवागूपाकः पश्चादग्निहोत्रहोम इति तथापि प्रयोगप्राशुभावायानन्तर्यरूपमेवापेक्षत इत्येव पञ्चमाध्यायार्थो युक्तः । अत एवोक्तं भाट्टभास्करे—यद्यपि पौर्वापर्यमानन्तर्यं चेति क्रमो द्वेधा लोके प्रसिद्धः तथापि प्रयोगविधिः प्रयोगप्राशुभावायानन्तर्यरूपमेवापेक्षत इति तदपेक्षितमेव श्रुत्यादीति बोधयन्तीति । अर्थक्रमस्थलेऽपि प्रयोजनस्याग्निहोत्रनिष्पत्तिरूपस्य दृष्टस्यान्यथानुपपत्त्या कल्प्यमानः क्रमः प्रयोजनं साधनानन्तरं निष्पादनीयमित्येवंरूपेणैव कल्प्यते न तु यवागूपाकवृत्तिपूर्वत्वकल्पनपर्यन्तं व्यापारकल्पनं वैयर्थ्यात् पाठक्रमावगताग्निहोत्रहोमवृत्तिपूर्वत्वक्रमस्यैवार्थवशेन बाध्यत्वे तस्योत्तरानुष्ठानबोधनस्यैवौचित्यायातत्वाच्चेति ।

तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थवृत्तिपौर्वापर्यसमुदायरूपविततिरेव क्रम इति तु मूलोक्तः पक्षोऽशाब्दत्वात् विकृतौ क्वचिदेकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्यासम्भवात्, व्युत्क्रमेणानुष्ठानेऽपि वैगुण्यानापत्तेरुपेक्षितः।

अस्य च क्रमस्य प्रयोज्यनिष्ठत्वात्तन्निरूपणोत्तरमारम्भः। तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि। तेषां लक्षणानि तत्तन्निरूपणावसरे वक्ष्यन्ते। तत्र श्रौतः क्रमः प्रातिस्विक-

---

एवं तावदव्यवहितानन्तर्यात्मकपौर्वापर्यरूपक्रमस्वरूपं स्वाभिमतमुपपादितम्। प्राचीनैः विततिविशेष एव क्रमपदार्थ इति पक्षान्तरमुपपादितम्। क्त्वाततःशब्दादीनां पौर्वापर्यमात्रे शक्तिः न त्वव्यवहितानन्तर्ये। तत्रापि लक्षणायां प्रमाणाभावात् अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादौ क्रमातिरिक्तस्य सर्वस्य प्राप्तत्वात्। पदार्थानां गृहपत्यादिदीक्षाणामुन्नेतृदीक्षापर्यन्तानां पौर्वापर्येण उच्चारणे यः क्रमः तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थवृत्तित्वेन प्रतीयते स शब्दानभिहितोऽपि बुद्ध्यारूढस्सन्नेव पदार्थविशेषणतया भासमानः क्रमपदार्थः। स च पाठादिषु शब्दानभिहितो यथा तथैव श्रुतिक्रमेऽपीति। यद्यपि श्रुतिक्रमत्वं श्रुत्या प्रतिपाद्यत्वरूपं न संभवति तथापि यत्र क्रमपर एव विधिः तद्विशिष्टपदार्थपरो वा स श्रुतिक्रमः, न तु शब्दाभिहितत्वं श्रुतिक्रमलक्षणमभिमतम्। यत्र तु आनुपूर्व्येण पदार्था विधीयन्ते स पाठक्रम इत्येव भेदो द्रष्टव्य इति।

तदिदं पक्षान्तरं दूषयति—**तत्तत्पदार्थानन्तरमिति**। **असंभवादिति**। अतिदेशप्रमाणनियमितक्रमाभावे कर्त्रिच्छया इति—**व्युत्क्रमेणे**त्यस्यादौ पूरणीयम्। किं च पूर्वपदार्थनिरूपितानन्तर्यात्मनः क्रमस्योत्तरपदार्थोपस्थितिसंपादनेन दृष्टार्थतया अङ्गत्वे संभवति विततिविशेषस्य अदृष्टार्थतया स्वाश्रययावत्पदार्थाङ्गत्वं न स्वीकर्तुमुचितमिति। एवं क्रमस्वरूपं निरूपणीयं प्रदर्श्य तन्निरूपणस्य प्रयोज्यत्वनिरूपणोत्तरं करणे सूचितां सङ्गतिमनुसन्धत्ते—**प्रयोज्यनिष्ठत्वादिति**। **षट्प्रमाणानीति**। तत्र श्रुत्यर्थपाठक्रमा उपदेशविषया एव। तत्र श्रुतेः विकृतिष्वप्युपदेशरूपत्वं यथा तथा द्विविधस्यापि पाठस्य उपदेशरूपत्वमेव। अर्थस्थलेऽपि विकृतिषु अर्थवशेनातिदिष्टानां पदार्थानां क्रमान्तरासंभवात तद्रूपत्वमेव। प्रवृत्तिस्थानमुख्यक्रमास्तु उभयविषयाः। यथैव हि प्राजापत्येषु पशुयूपाकरणादीनां विकृतौ अनिरूपित एव क्रमः निरूप्यते तथैव प्रकृतौ सान्नाय्ययोः दध्नः पूर्वं धर्माः ततः पयस इति निरूपयितुं शक्यत एव। स्थानक्रमोऽपि भिन्नस्थानानां सह चोदितानां सर्वत्र प्रकृतौ विकृतौ च संभवति। मुख्यक्रमोऽपि प्रकृतौ आग्नेयसान्नाय्ययोः विकृतौ सारस्वतयोस्संभवत्येवेत्यादिविशेषः मूलग्रन्थे द्रष्टव्यः।

विधिना विधीयते, आर्थादिक्रमास्तु प्रयोगविधिनैवेति मूलानुयायिनः। वस्तुतस्तु---श्रौतक्रमस्थले क्त्वादिनाऽवगतेरुत्पन्नस्य वाक्येन विनियोगः, क्रमान्तरे तु अर्थादिनोत्पन्नस्य प्रकरणादिकल्पितश्रुत्या विनियोगः। प्रयोगस्तु सर्वत्रैवाङ्गान्तरवत्प्रयोगविधिनैव। इदं च तत्रतत्र स्फुटीकरिष्यते। युज्यते च क्रमस्यापि द्रव्यगुणादिवत् पदार्थविशेषणत्वेन विधानम्।

तदिह श्रुतिर्नाम वृत्त्या क्रमबोधकः क्लृप्तश्शब्दः। स चाथशब्दादिः। तत्राथ-शब्दस्यानन्तर्यवाचित्वं शक्त्यैव। क्त्वाप्रत्ययादीनां तु पूर्वकालादिवाचिनामपेक्षानुरोधात्क्रमपरत्वं लक्षणया। अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेति विशेषणम्। तत्र "वषट्कर्तुः प्रथमभक्ष" इत्यादौ क्रमविशिष्टभक्षविधानात् प्रथमपदोक्तक्रमस्य वाक्या-

---

प्रातिस्विकविधिनेति। ब्रह्माणं दीक्षयति वषट्कर्तुः प्रथमभक्ष इत्येवंरूपेणोत्पत्तिविनियोगावित्यर्थः। प्रयोगविधिनैवेति। पाकाग्निहोत्रविध्योः क्रमविधायकत्वात् प्रयोजनकल्प्यक्रमस्य विनियोजकः प्रयोगविधिरेवेत्यर्थः। वाक्येन ब्रह्माणं दीक्षयतीत्यादिरूपेण। अर्थादिक्रमे इतराङ्गवैलक्षण्येन प्रयोगविधिर्न विनियोजक इत्याह---क्रमान्तरे त्विति। प्रकरणादीति। यथैव यवागूपाकादीनां प्रकरणकल्प्यश्रुत्या विनियोगस्तथैव स्वानन्तर्यविशिष्टानामेव विनियोगः कर्तुं शक्यत एवेत्यर्थः। ननु क्रमस्य स्वतो धात्वर्थत्वाभावात् संघातविशेषणत्वेन च एकैकपदार्थविशेषणत्वेन विधानासंभवात् संघातस्य चाशाब्दत्वेनाविधेयत्वात् कथं प्रयोगविधिना विधानं तस्येत्याशङ्कानिरासायाह---युज्यते चेति। अयमर्थः श्रुत्यादिबोधितः क्रमस्तावत् क्वचित् प्रत्यक्षश्रुत्या, क्वचित् कल्पितश्रुत्या वा विहित इति भवति तत्तत्पदार्थाङ्गम्। समे दर्शपूर्णमासाभ्यां यजेतेति प्रयोगविधौ तृतीयावगतकरणत्वनिर्वाहाय प्रधानवाचिनोऽपि दर्शपूर्णमासपदस्य लक्षणया साङ्ग-प्रधानपरत्वम्। न च तावतापि करणत्वनिर्वाहः स्वाङ्गानि विना सहस्राङ्गसहितस्यापि प्रधानस्य फलकरणत्वाभावात्। अतो यावता करणत्वं निर्वहति तावल्लक्षणीयम्। तच्च तत्तत्स्वीयाङ्गयुक्त तत्तदङ्गसहितप्रधानलक्षणायां निर्वहतीत्येवमङ्गविशेषणत्वेन व्रीह्यादिगतानां कृष्णत्वादिगुणानामिव तद्विशेषणस्य क्रमस्यापि प्रयोगविधिविषयत्वमुपपद्यत एवेति। क्रमपरत्वमिति। पूर्वकालत्वस्य साधारणत्वात् अव्यवहितानन्तर्यरूपक्रमविशेषपरत्वं लक्षणयेत्यर्थः। ननु लक्षणया प्रतिपाद्यस्याश्रौतत्वात् कथं श्रौतक्रमत्वमित्याशङ्क्य क्रमबोधकशब्दगतक्लृप्तकल्प्यत्व-भेदेन परिहरति---अर्थादिष्विति। क्रमबोधिकापि श्रुतिः विधिसहकृता क्रमे प्रमाणम्। तत्र क्वचित्तस्यैव विधिविषयत्वमस्ति। क्वचित्तु तद्विशिष्टपदार्थस्येति विषयभेदं दर्शयति---तत्रेति। फल्ग्वादिति। होतुर्भक्षणप्राप्तावपि तदनुवादेन प्राथम्यरूपकर्मविधाने एक-

द्रक्षाङ्गत्वम्। "वेदं कृत्वा" इत्यादौ तु वेदिकरणस्य वाक्यान्तरेण प्राप्तत्वात्तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रविधानाद्वाक्यादेव तदङ्गत्वम्। यत्र तु क्रमस्य पाठादिप्रमाणेन सम्भवत्प्राप्तिकता, धात्वर्थश्च सम्भवत्प्राप्तिकोपि भावार्थाधिकरणन्यायेन प्रयोजनान्तरार्थं विधीयते, तत्र क्रमबोधिका श्रुतिरप्यनुवाद एव न तु क्रमे प्रमाणं, विशिष्टविधिगौरवापत्तेः, यथा "ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्"

---

स्मिन् पदे एकप्रसरताभङ्गापत्तेः प्राथम्यविशिष्टभक्षान्तरविधिः विशिष्टविधौ च कल्पितविशेषणविधिरूपात् वाक्यात् भक्षोद्देशेन प्राथम्यविधायकात् प्राथम्यरूपक्रमस्य भक्षाङ्गत्वम् तथा चैतादृशे विषये विशिष्टविधानद्वारा क्रमस्यापि विधानम्। **वाक्यान्तरेणेति**। वेद्यां हवींष्यासादयति इति विहितस्यासादनस्य वेद्यधिकरणत्वानुरोधेनैव वेदिकरणस्य प्राप्तेरित्यर्थः। अत्र च केवलक्रमस्यैव विधानात् तद्बोधिका श्रुतिः क्रमे प्रमाणम्। **वक्ष्यत इति**। इत्थं हि दशमाध्यायपञ्चमपादे विचारितं—उपांश्वन्तर्यामौ ज्योतिष्टोमे अधाराग्रहौ ऐन्द्रवायवादिग्रहा धाराग्रहाः। तदवान्तरप्रकरणे ऐन्द्रवायवाग्रात् ग्रहान् गृह्णीयात् यः कामयेत यथा पूर्वं प्रजाः कल्पेरन्निति। तत्र दध्नेन्द्रियकामस्येति वचनेन दध्नः फलोद्देशेन विधानस्येव अत्राप्यैन्द्रवायवाग्रत्वगुणस्यैव प्रजाफलोद्देशेन विधानात् मैत्रावरुणाद्यपेक्षयाच तस्य पाठादेव प्राप्तत्वेनाविधेयत्वापत्तेः वैयर्थ्यपरिहारार्थमुपांश्वन्तर्याम्याद्यपेक्षयैव विधेयत्वावगतेः; अवान्तरप्रकरणं बाधित्वा महाप्रकरणात् सर्वग्रहाणामेवाश्रयत्वमिति ऐन्द्रवायवस्य सर्वादितः प्रतिकर्ष इति पूर्वपक्षङ्कृत्वा ऐन्द्रवायवाग्रानिति पदस्य विधेयतावच्छेदकीभूतव्यापकजात्युपलक्षणत्वेनापि संभवाच्च भावार्थाधिकरणन्यायसिद्धधात्वर्थविधानं तदनुरोधेन बाधितुं युक्तमिति ग्रहणस्यैव प्राप्तस्य फलार्थं विधानात् धाराग्रहाणामेव फलसंबन्ध इति सिद्धान्तितम्।

तथा दशमसप्तमपादे हृदयस्याग्रेऽवद्यतीत्यादिवचनानां न क्रममात्रपरत्वं विशसनानुरोधेन सर्वावयवप्रकृतिकत्वेन पशोः साधनत्वावगमेन सर्वावयवानामेव प्रकृतिप्राप्तावदानसंबन्धात् तेषामेव हविष्ट्वेन तत्स्यादतः सर्वेषामवयवानां हविष्ट्वमिति पूर्वपक्षं कृत्वा प्रकृतिप्राप्तान्येवावदानानि हविस्संस्कारद्वारा इतरावयवानां हविष्ट्वपरिसंख्यार्थानि विधीयन्ते एतद्वाक्याभावेपि पञ्चावत्तैव वपा कार्येति वचनेन एकप्रसरताभङ्गभयेन प्राकृतकार्यापन्नावदानान्तरविधेरावश्यकत्वात् वपारूपावयवद्वारैव पशोः साधनत्वप्रतीतेः हृदयादीनां साधनत्वस्यैवाप्राप्तौ अवदानस्य सुतरामप्राप्तेः क्रमपरत्वासंभवात्। अतो हृदयादिवाक्यैः प्राकृतावदानस्य वपासंस्कारकावदानस्यैव वा हृदयाद्युद्देशेन विधानात् तेषामपि वपावदेव हविष्ट्वसिद्धिः। अतश्च हृदयाद्यवदानानां क्रमस्य पाठादेव सिद्धेर्न क्रमविधानमिति सिद्धान्तितम्। **यथेति**। सत्र एव ये यजमानास्ते ऋत्विज

"हृदयस्याग्रेऽवद्यति अथ जिह्वायाः अथ वक्षसः" इत्यादौ। अत्र हि ग्रहणावदानादिरेव फलार्थं हृदयादिमात्रहविष्ट्वसिद्ध्यर्थं च विधीयत इति वक्ष्यते। यत्र तु धात्वर्थस्य क्लृप्तप्रमाणेन प्राप्त्यभावेऽपि कथञ्चित्सम्भवत्प्राप्तिकस्य पुनर्विधाने न किञ्चित्प्रयोजनं, विधेयान्तरं च नान्यत्किञ्चित्, तत्र क्रम एव श्रुत्युक्तो विधीयते, यथा सत्रात्मके द्वादशाहे "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति—ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति—आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुरच्छावाकं होतुः, ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति—पोतारं ब्रह्मणस्सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाऽऽचार्यप्रेषितः" इति वाक्ये। अत्र हि न दीक्षणादिस्वरूपेण तत्तत्संस्कारकत्वेन वा विधिः, अतिदेशप्राप्तत्वात्। प्रकृतौ हि यजमानसंस्कारार्था दीक्षा अतिदेशेनैव सत्रे प्राप्यते, सत्रे च "ये यजमानास्त ऋत्विजः इति वचनेन ऋत्विक्कार्योद्देशेन यजमानविधानाद्ब्रह्मादीनां यजमानत्वेनैव प्रतिप्रधानावृत्तिन्यायेन तत्र तत्तत्संस्कारकत्वप्राप्तेः। न च ऋत्विक्कार्ये यजमानविधानादेव वरणादिनिवृत्त्या ब्रह्मत्वाद्यप्राप्तिः, तद्विधानेन वरणादिनिवृत्तावपि ऋत्विक्त्वनिवृत्तौ प्रमाणाभावेनाध्यव-

---

इति विधेरहीने सर्वेषां दीक्षाभावात् सत्रात्मके इत्युक्तम्। ननु ये यजमानास्ते ऋत्विज इति ऋत्विक्कार्योद्देशेन यजमानविधानात् ऋत्विजो निवृत्ताः नानेन ऋत्विक्कार्ये यजमानविधिः किं तर्हि प्रकृतावन्ये यजमानादृत्विजः। इहाप्यन्येषां तथैव प्राप्तेः वचनमिदं यजमानानामेव ऋत्विक्त्वं विधत्ते यजमाना एवर्त्विजो नान्ये इति तन्त्ररत्नग्रन्थात् यजमानोद्देशेनर्त्विक्त्वविधिरिति भाति तन्निराकरणाय उद्देश्यविधेयभावं विपरीतं दर्शयति—ऋत्विक्कार्योद्देशेनेति। अयमर्थः यद्यप्यत्र द्वयोस्सुबन्तयोर्विना लक्षणामन्वयासंभवः। तत्र च जघन्ये ऋत्विक्पद एव तत्कर्तव्यपदार्थान् लक्षयित्वा यच्छब्दप्राथम्याद्यवगतोद्देश्यभावयजमानसंस्कारार्थत्वेन तेषां विधानं भाति, तथापि ऋत्विक्कर्तव्यपदार्थानामप्राकृतकार्यकारित्वापत्तिभयेन नियमविधिलाघवानुरोधेन च यच्छब्दस्य व्यवहितान्वयमप्यङ्गीकृत्य आर्त्विज्योद्देशेनैव यजमानानां विधानं षष्ठाध्यायषष्ठपादे स्थिरीकृतं, अतस्तथैवोद्देश्यविधेयभावः। तन्त्ररत्नकृतस्तु ऋत्विक्कार्योद्देशेन यजमानविधाने ऋत्विजामेव निवृत्तिरित्येतावन्मात्रनिराकरणाय यदर्थसिद्धं यजमानानामृत्विक्त्वं तद्विधानपरत्वप्रदर्शनपरं तथावचनं, न तु शाब्दबोधमर्यादया ऋत्विक्कार्योद्देशेन यजमानविधानं नास्तीत्येतदभिप्रायकम्। अत एवैतदधिकरणे भाष्यकृता य ऋत्विजस्ते यजमाना इति तु दीक्षायाः प्राप्तत्वात् क्रमविधानार्था श्रुतिरिति सिद्धान्त इत्यन्ते उक्तमिति द्रष्टव्यम्। आध्वर्यवादिसंज्ञानां न कर्मकरण-

सायमात्रेणै ब्रह्मत्वादेरुपपादितत्वात् । न च तेन प्राप्स्यमानाया अपि दीक्षायाः अपूर्वत्वाद्यर्थं पुनश्श्रवणं, ब्रह्मादिप्राप्त्यर्थमतिदेशस्यावश्यकतया निवारयितुमशक्यत्वात् ।

न च दीक्षास्वध्वर्युविधिः, अतिदेशादेव सिद्धेः । न च दीक्षान्तरेऽध्वर्युनिवृत्त्या प्रतिप्रस्थात्रादिविधानं, अध्वर्युदीक्षायामध्वर्योः "चित्पतिस्त्वा पुनातु" इतिमन्त्रवर्णविरोधादेवाप्राप्तेः । न वाऽध्वर्युकर्तृकत्वानुरोधेनोहेन मन्त्रप्रयोगः, कर्तुस्साङ्गप्रधानाङ्गत्वेन चरमापेक्षितत्वेन च कर्त्रनुरोधेन त्वापदोहायोगात् । अतो मन्त्रमनूहितमेव प्रयुज्याध्वर्युकर्तृकत्वबाधावश्यंभावे "इतरमन्यस्तेषां यतोऽविशेषस्स्यात्" इति न्यायेन अध्वर्युपुरुषाणामाद्यः प्रतिप्रस्थातैवाध्वर्युदीक्षायां प्राप्नोति । ब्राह्मणाच्छंस्यादिदीक्षासु तु अध्वर्योः "न पूतः पावयेत्" इति वचनेन सत्रप्रकरणपठितेन दीक्षासु दीक्षाख्यसंस्काररहितपुरुषकर्तृविधायकेन पर्युदासात् प्रतिप्रस्थातृप्राप्तिस्सुलभैव । एवं प्रतिप्रस्थात्रादिदीक्षासु नेष्टुः

---

निमित्तत्वं, ततः पूर्वमपि अध्वर्युं वृणीत इत्यादौ तच्छब्दप्रयोगात् । अतो वरणजन्यादृष्टवत्त्वमेवाध्वर्युत्वादि तस्य च सत्रे अभावात् कथमध्वर्युब्रह्मादीनां प्राप्तिरिति प्राभाकरमतेन शङ्कते---न चेति । उपपादितत्वादिति । तृतीये सप्तमपाद इति शेषः । ऋत्विक्त्वं हि तावत् न वरणनिमित्तं, अतिरिक्तशक्तिकल्पने मानाभावात् । किंतु ऋत्विक्शब्दस्य ऋत्विग्दधृगित्यादिपाणिनिसूत्रविहितक्विन्प्रत्ययान्तत्वेन ऋतुयजनकर्तृत्वरूपयोगपुरस्कारेण बहुतरप्रयोगात् पङ्कजत्वमिव रूढ्यवगम्यम् । अतो वरणादिनिवृत्तावपि न तन्निवृत्तिः ब्रह्मत्वादिकमप्यहमध्वर्युः स्यां, अहं ब्रह्मा वा स्यामित्यादिनिश्चयजन्यो यस्तादात्म्याभिमानः तद्रूपत्वमेव । स चाभिमानः क्वचिदाम्नातेन वरणेन क्वचित्तु सत्रे वरणाभावे इच्छात एवेति न ब्रह्मत्वादीनां निवर्तकम् । अत एवावृतो होता सामिधेनीरन्वाहेत्यादौ वरणात् पूर्वमपि होतृपदप्रयोग इति । ब्रह्मादीति । न च सप्तदशावराः सत्रमासीरन्निति प्रत्यक्षोपदेशेन सप्तदशयजमानानां प्राप्तेः तेषामृत्विक्कार्ये विधानस्य ये यजमाना इत्युपदेशेनैव प्राप्तत्वात् कुतः अतिदेशापेक्षेति वाच्यं; ऋत्विक्कार्ये यजमानविधानेपि ऋत्विजां तत्कार्यस्य प्राप्त्यर्थं अतिदेशापेक्षणात् । दीक्षान्तरे अध्वर्व्यादिकर्मके । विरोधादिति । युष्मच्छब्दस्य स्वभिन्नवाचित्वेन स्वस्मिन् तद्घटितमन्त्रार्थासंभवः इत्यर्थः । ऊहेन । मा इत्येवंरूपेण । प्रधानाङ्गत्वेन प्रधानप्रयोगाङ्गत्वेन । मन्त्ररूपपदार्थान्तर्गतत्वात् पदस्य पदार्थनिष्ठप्रयोगाङ्गकर्त्रनुरोधेन बाधो योग्यः तदपेक्षया उत्तरकालीनस्य तत्कर्तृत्वस्यैव कर्मत्वानुरोधेन बाध उचित इति भावः । इतरमन्य इति । विप्रतिषेधे करणस्समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यादिति तार्तीयाष्टमपादाधिकरणन्यायेनेत्यर्थः । न पूतः

प्रतिप्रस्थात्रनन्तरस्य, नेष्ट्रादिदीक्षास्तु चोद्यैतुर्नेष्ट्रनन्तरस्य प्राप्तिर्न्यायात्रैवेति न विधेयान्तराशङ्का। अतः क्रम एवात्राप्राप्तस्तत्तद्दीक्षोद्देशेन विधीयते श्रौतःक्त्वाप्रत्ययोक्तः, ततःपदोक्तश्च। अत एव एतानि द्वादश वाक्यानि श्रौतक्रमविधायकानि। अर्धित्वाद्युद्देश्यतावच्छेदकमङ्गीकृत्य षडेव वा। उन्नेतृदीक्षावाक्ये तु वैकल्पिकब्रह्मचारिविधानाद्वयादिन्या-

---

पावयेदिति प्रतिषेधादित्यादिप्राचांग्रन्थेषु यत् प्रतिषेधपदं तद्विकल्पापत्तिभिया पर्युदासफलीभूतप्रतिषेधपरमित्यभिप्रेत्य पर्युदासादित्युक्तं—पूतो दीक्षितः अन्यं न पावयेत् दीक्षयेदिति वाक्यस्यार्थः अत एवेति। यतः पौर्वापर्यरूपं न क्रमस्वरूपं किं तु आनन्तर्यमेव तस्य च न पदार्थद्वयवृत्तित्वं किन्तूत्तरपदार्थवृत्तित्वमेव उक्तयुक्त्या युक्तम्। अत एव पौर्वापर्यात्मकस्यैव क्रमस्य पदार्थद्वयवृत्तित्वस्वीकारेण गृहपतिसहितानां सप्तदशदीक्षाणाम्मध्ये एकैकस्याः पूर्वत्वविधौ परत्वस्य अथवा परत्वविधौ पूर्वत्वस्य वा आक्षेपादेव प्रातिस्विकविधेरभावात् सप्तदशदीक्षाक्रमविधौ यानि सप्तदशवाक्यानि, एकं ब्रह्मचारीत्येवमिमान्यष्टादशवाक्यानीति प्रकाशकारोक्तमयुक्तमिति द्वादशवाक्यानीत्यर्थः।

अत्रैवं द्वादशवाक्यकल्पना—आद्यं वाक्यत्रयं स्पष्टमेव। ततस्तं प्रतिप्रस्थाता दीक्षयित्वा ब्राह्मणाच्छंसिनं ब्रह्मणो दीक्षयति। ततः पदानुक्तावपि अग्रे अनुषङ्गेण ततः प्रस्तोतारमुद्गातुः ततो मैत्रावरुणं होतुरिति वाक्यत्रयं एतेषामर्धित्वस्य मानान्तरसिद्धत्वेन अर्धिनो दीक्षयतीत्यत्र अर्धिपदमनुवादः। एवमुपरिष्टादपि बोध्यम्। अत्र तस्मात् क्रमातिरिक्तस्य सर्वस्य प्राप्तत्वात् पदार्थानां गृहपत्यादिदीक्षाणामुन्नेतृदीक्षापर्यन्तानां पौर्वापर्योच्चारणे यः क्रमः प्रतीयते स एव विधीयत इति वार्तिकतन्त्ररत्नग्रन्थात्। एवं चाध्वर्युर्गृहपतिमित्यादि ब्रह्मचारी वा आचार्यप्रेषितः इत्येवमन्तं विततिविशेषैकार्थविधानात् एकं वाक्यमिति शास्त्रदीपिकाग्रन्थाच्च। ततस्तमन्य इति वाक्यस्यापि केवलक्रमविधायकत्वं प्रतीयते। ततश्च तेन सह त्रयोदश वाक्यानीति कथं द्वादश वाक्यानीत्याशङ्कानिराकरणाय उन्नेतृदीक्षावाक्ये केवलक्रमविधानं ततस्तमन्यो दीक्षयतीत्येतत्संग्रहेण, न तु ब्रह्मचारिवाक्यसङ्ग्रहेण। अत एव तत्रत्योऽन्तशब्दो नावयवविशेषपरः। किंतु सागरान्ता भूरितिवत् अवयविपर इति ब्रह्मचारीत्ययमेव भागः तं दीक्षयतीत्यनुषङ्गेण उन्नेतृदीक्षाविधायक इति प्रकाशकारोक्तं ततस्तमन्य इति एतद्भागसहितेनैव ब्रह्मचारिवाक्येनैकेन तद्दीक्षाविधानसंभवे वाक्यभेदानुषङ्गयोः प्रयोजनाभावादयुक्तमित्यभिप्रेत्य ततस्तमन्य इत्यस्य क्रमपरत्वं प्राचीनोक्तमयुक्तमिति सूचयन् तद्वाक्यार्थं वर्णयति—**उन्नेतृदीक्षावाक्ये इति। वैकल्पिकेति।** वाशब्दस्यार्थोहि पाक्षिकः स्वाभावः तद्विशिष्टब्रह्मचारिविधानादित्यर्थः—**निपातत्वादिति।** कारकाणां भावनान्वयनियमेपि भावनान्वयकार्यकारणभावे निपातप्राति-

येन पाठादेव क्रमसिद्धेः ततः' इत्यनुवादः। निपातत्वाच्च वाशब्दस्य ब्रह्मचारिविशेषणत्वेऽपि न वाक्यभेदः। अभावपक्षे च ब्राह्मणानामेवार्त्विज्यविधानाद्ब्राह्मण इत्यनुवादः। ब्रह्मचारिणश्च आचार्याधीनत्वस्मृतेः आचार्यप्रेषित इत्यपि।

यत्तु मूले विततिरूपक्रमपक्षमङ्गीकृत्य सर्वस्याप्यस्यैकवाक्यत्वमित्युक्तं, तत् अशाब्दाया विततेर्विधेयत्वायोगादनेकदीक्षोद्देशेन विधाने च वाक्यभेदापत्तेः उन्नेतृदीक्षायां कर्तृविधेरावश्यकत्वाच्चोपेक्षितम् ।

वस्तुतस्तु आनन्तर्यरूपक्रमपक्षेऽपि तत्तत्संस्कार्यविशिष्टदीक्षोद्देशेन क्रमविधाने वाक्यभेदापत्तेः संस्कार्यमात्रोद्देशेन विधौ च दीक्षानिष्ठत्वालाभादुन्नेतृवाक्य एव तदुद्देशेन कर्तृविधिः। इतरस्तु सर्वोऽपि पदसमुदाय औचित्येन तत्स्तुत्यर्थोऽनुवादः। कर्तुर्दीक्षानिष्ठत्वलाभस्त्वनुवादबलादिरापदस्येव नानुपपन्नः एवं च सर्वस्याप्येकवाक्यत्वलाभः। क्रमस्त्वनुवाद एव तादृशपाठादवधेयः। निषादस्थपत्यधिकरणन्यायेन श्रूयमाणवाक्ये वाक्यभेदाभावेन पाठगम्यानेकवाक्यकल्पनस्यादोषत्वात्। अन्यथा हृदयादिवाक्येष्वपि

---

पादिकोपसर्गलिङ्गसंख्याव्यतिरिक्तस्यार्थविशेषणस्य कार्यतावच्छेदके प्रवेशेन निपातानां भावनान्वयनियमाभावे स्वसमभिव्याहृतान्वयस्य तत्र तत्रोक्तत्वात् नाव्युत्पन्नान्वयनिबन्धनवाक्यभेदप्रसर इत्यर्थः।

मम तु प्रतिभाति। अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिवाक्यचतुष्टयमेव क्रमविधायकम्। उत्तरत्र चाध्वर्युदीक्षानन्तं येन क्रमेण दीक्षानुष्ठानं तेनैव मुख्यक्रमेण ततपुरुषाणां ब्राह्मणाच्छंस्यादीनां प्रतिप्रस्थातृकर्तृकं दीक्षानुष्ठानं, प्रतिप्रस्थातृदीक्षानुष्ठानं च नेष्टृकर्तृकं भविष्यत्येवेति न क्रमापेक्षया तद्विधानम्। एवमग्रेपि द्रष्टव्यम्। भवन्मते षड्वाक्यपक्षे अर्धिनां दीक्षाविधानेऽपि परस्परं तत्क्रमे मुख्यक्रमाधीनत्वस्यावश्यवक्तव्यत्वेन ममापि तन्नियमादेव तन्नियमोपपत्तेः। न चाद्यवाक्यचतुष्टयं उत्तरत्र दीक्षापरिसंख्यार्थमेवास्त्विति वाच्यं अपेक्षितक्रमविधायकत्वे संभवति अनपेक्षितपरिसंख्याविधित्वकल्पनाया अयुक्तत्वात्। अत आद्यवाक्यचतुष्टयमेव श्रौतक्रमोदाहरणं युक्तमिति। अतस्तमन्य इत्युन्नेतृवाक्ये तत्पदोपात्तोन्नेतुद्देशेन ब्राह्मणादिकर्तृविधावपि तस्य कर्तुः दीक्षाद्वारकत्वनियमे मानाभाव इत्याशङ्कां पूर्वोक्तानुवादबलादेव दीक्षाद्वारलाभात् दीक्षाश्रितकर्तुः तदुद्देशेन विधानं नानुपपन्नं इत्यभिप्रेत्य परिहरति—

**विशिष्टविध्यापत्तेः। न च श्रौतक्रमस्य पाठक्रमस्य च कश्चिदनुष्ठाने विशेषः। अतो मूलोक्तश्रुतिक्रमोदाहरणम**नादरणीयमिति **ध्येयम्॥ १॥**

---

## (२)—अर्थाच्च ॥ २ ॥

अर्थः प्रयोजनम्। तच्च **व्युत्क्रमेऽनुपपद्यमानत्वात्क्रमे प्रमाणम्। यथा "अग्निहोत्रं जुहोति यवागूं पचति" इत्यत्र यवागूपाकस्य** पाठक्रमात् पश्चात्करणे **पाकसंस्कृताया** यवाग्वा

---

**कर्तुरिति। अनादरणीयमिति। यद्यपि** पाठक्रमश्रुतिक्रमयोर्नानुष्ठाने विशेषः **तथापि** अनुवादोच्चारणकाल एव क्त्वाततश्शब्दानां वृत्त्या तद्बोधकानां श्रवणमात्रेणैव तदाकांक्षाशान्तेः नाग्रे कल्पनावसर इति नायं पाठक्रमः। किंतु श्रुत्या बोधितत्वात् श्रुतिक्रमो भवत्येवेति मूलोक्त श्रुतिक्रमोदाहरणं संभवति तथाप्यङ्गभूतक्रमस्यैव प्रमाणनिरूपणात् तत्र च कथंचिल्लक्षणया निष्प्रयोजनया श्रुतिबोध्यत्वेपि तद्बोध्यस्य विधेयत्वाभावेनानङ्गत्वादन्यतोऽवगम्यमानस्य विधि-विषयत्वकल्पने गौरवापत्तेः अविधेयक्रमगोचरापि श्रुतिः क्रमप्रमाया अन्यतो जातत्वेन न तत्र प्रमाणमिति अप्रमाणश्रुतिगोचरक्रमनिरूपणमेवानुचितमिति भावः ॥

---

॥ **अर्थाच्च** ॥

आनुपूर्व्यमित्यनुषङ्गः। अत्र **प्रकाशकारैरर्थपदस्य** सामर्थ्यपरत्वमाश्रित्य पाकसामर्थ्यमेव लिङ्गविधया क्रमप्रमाणमित्युक्तं तत् पाकगतसामर्थ्यमात्रस्य होमरूपप्रयोजनपूर्वभाव्यनुष्ठान-क्रमबोधकत्वासंभवात् प्रयोजनानुकूलत्वनिवेशे लाघवात्तस्यैव स्वातन्त्र्येण तत्प्रमाणत्वं युक्तमिति सूचयितुं सौत्रमर्थपदं व्याचष्टे—**अर्थः प्रयोजनमिति। तच्चेति।** एतच्चार्थादितिसूत्रोक्त पञ्चम्यर्थहेतुत्वस्य प्रकृत्यर्थार्थान्वयानुरोधेन उक्तम्। **वस्तुतस्तु** अनुपपद्यमानतां तेषां तेषां प्रमाणत्वकल्पने गौरवेण अन्यथानुपपत्तेरेव प्रमाणत्वम्। एतच्च स्वयमेव तदन्यथानुपपत्त्या पूर्वं पाकः पश्चाद्धोम इत्यग्रे वक्ष्यति। अत्र **तन्त्ररत्ने शास्त्रदीपिकायां** च यवागूपाकहोमयोः नियमे प्रमाणाभावात् विध्योः पाकहोमपर्यवसानात् नात्र दीक्षावाक्य इव क्रमो विधीयत इति तयोरनियम इति पूर्वपक्षः कृतः। तत्राग्निहोत्रहोमयवागूपाकविध्योः क्रमपाठस्य स्वयमेव प्रदर्शनात् तेनैव तन्नियमो भविष्यतीति अयुक्तः पूर्वपक्ष इति सूचयन्नाह— **पाठक्रमात् पश्चात् करणे इति। पाकसंस्कृताया इति।** पाकेन संस्कृताया इव पाकसंस्कृताया इति लुप्तोपमा। **वस्तुतस्तु पाकस्य** यवागूत्पादकत्वस्य **स्वयमेव** वक्तव्यत्वेन व्रीहीन् प्रोक्षतीतिवत् **अत्र संस्कार-**

**होमरूपस्य "यवाग्वाऽग्निहोत्रं जुहोति" इतिवचनसिद्धस्य प्रयोजनस्यानिष्पत्तेः,** पाकस्य च **यवागूत्पादकत्वेऽपि अनुपयुक्तायास्तस्याः प्रयोजनत्वानुपपत्तेस्तदन्यथाऽनुपपत्त्या पूर्वं पाकः पश्चाद्धोमः।** न च **"तृतीया च होश्छन्दसि" इति स्मरणात् होः कर्मणि तृतीया चकाराद्द्वितीया चेत्यर्थकात् 'यवाग्वा जुहोति' इत्यत्र यवाग्वास्तृतीयया कर्मत्वावगमेन होमस्य प्रयोजनत्वासिद्धिः।** तथात्वेऽपि **यवाग्वा उपयोगाभावेन होमवाक्य एव** सक्तुन्यायेन **विनियोगभङ्गाङ्गीकारात्।** पाकस्य तु **दृष्टार्थत्वात्संस्कारकर्मत्वमेव।**

---

कर्मकत्वाभावात् संस्कृतोपमानफलं च भूतभाव्युपयोगराहित्येन प्रयोजनान्तराभावप्रतिपादनम्। **यच्च** प्रमाणसिद्धं प्रयोजनं तदपि नास्तीत्याह—**यवाग्वेति**। ननु यवाग्वाऽग्निहोत्रं जुहोतीति यवागूकरणकहोमस्य स्वतस्सिद्धयवाग्वापि संभवात् प्रयोगमध्ये विहितस्य पाकस्य होमानन्तरमपि अनुष्ठीयमानस्य यवागूसंस्कारार्थत्वमेवास्त्वित्याशङ्कां निरस्यति—**पाकस्य चेति**। **तदन्यथानुपपत्त्येति**। पाकस्य यवागूप्रयोजनताया यवाग्वाश्च होमप्रयोजनताया अन्यथानुपपत्त्येत्यर्थः। ननु पाकनिष्पन्नाया यवाग्वा नैव होमरूपं प्रयोजनं येन तदनुरोधेन पूर्वं पाकानुष्ठानं भवेत् किंतु होमस्य संस्कारकत्वेन तस्याः संस्कार्यत्वात् यवाग्वा एव प्रयोजनत्वमिति शङ्कते—**न चेति**। **तथात्वेपीति**। यवागूस्संस्कार्या संस्कारको होमः इत्यङ्गीकारेपीत्यर्थः। एतादृशार्थाङ्गीकारेपि यवागूनिष्पत्त्यर्थमेव पूर्वं पाकस्यावश्यकत्वेन पाकहोमयोरर्थवशेन निरूपणीयः क्रमः तावतापि सिद्ध एवेत्यपिशब्देन सूचितम्—**सक्तुन्यायेनेति**। सक्तून् जुहोतीत्यत्र भूतभाव्युपयोगाभावेन द्वितीयायाः करणत्वे लक्षणा; अत्र तु तदभावेन कर्मत्वार्थकतृतीयायाः करणत्वरूपे स्वार्थे लक्षणेति विवेकः। ननु होमेन संस्कृतायास्तस्याः पाके उपयोग इति क्षुद्रशङ्कां निरस्यति—**पाकस्य त्विति**। पाकस्य यवाग्वर्थत्वं यावद्यवागूनिष्पत्तिरूपदृष्टप्रयोजनद्वारा संभवति न तावददृष्टविधया तदर्थत्वकल्पनं युक्तम्। ततश्च पाकस्यैव यवाग्वर्थत्वं न तु यवाग्वाः पाकार्थत्वमदृष्टार्थत्वापत्तेः। अतः न होमसंस्कृतायास्तस्याः पाके उपयोगः किन्तु पाकनिष्पन्नायास्तस्याः होमरूपमेव प्रयोजनं वक्तव्यम्। तच्च पश्चात्करणेऽनुपपन्नं; अतो विपरीतः क्रम आश्रयणीय इति भावः।

**इत्थमत्र वैयाकरणमतं**—सर्वत्रैव जुहोतिसमभिव्याहारे ग्रामादिवत् प्रक्षेपान्तहोमक्रियाजन्यविजातीयोत्तरदेशसंयोगाश्रयत्वात् द्रव्यस्य कर्मत्वमेव; स्रुवादीनान्तु करणत्वम् अत एव सक्तून् जुहोतीति प्रयोगेपि न करणत्वलक्षणा। एवं च तत्कर्मणि द्वितीयाया एव सर्वत्र प्राप्तौ तृतीया च होश्छन्दसीति सूत्रात् छन्दसि तृतीयासमुच्चयो विधीयते। यथा यवाग्वा अग्निहोत्रं जुहोतीत्यादौ। अत्र तृतीयार्थः कर्मत्वमेव। "यदमेध्यमग्निहोत्रं श्रितम्"

वस्तुतस्तु करणत्व एव तृतीयायाश्शक्तिः। कर्मत्वे त्वानुशासनिकी लक्षणा। न चात्र तद्बीजमस्ति। अत एव यत्र च तुरवत्तादावुपयोगकल्पनमस्त्येव तत्राज्येन जुहोति इत्येतादृशवाक्यसत्त्वेऽपि कर्मत्वप्रतीतिरित्यनन्यपरं स्मरणम्।

---

इत्याद्यर्थवादेषु हविष्यपि अग्निहोत्रशब्दप्रयोगात्। चतुर्थीसमानिनात्राप्यग्निहोत्रपदं हविःपरमेव। तेन च सह यवाग्वा अभेदेनान्वयः। तथा च यवागूरूपमग्निहोत्रं हविः देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः।

यद्यपि विरुद्धविभक्त्यन्तपदप्रतिपाद्ययोरभेदेनान्वयो न दृष्टचरः तथापि अभेदेनान्वये न केवलं विरुद्धविभक्तिराहित्यमात्रं तन्त्रम्। अपि तु विरुद्धार्थकविभक्तिराहित्यम्। प्रकृते तु विद्यमानाया अपि तृतीयाविभक्तेः विरुद्धाया अपि नैव विरुद्धार्थकत्वं किंतु कर्मत्वरूपैकार्थत्वमेवेति न बाधकम्। अत एव दध्ना जुहोतीत्यादौ अग्निहोत्रपदाभावेऽपि छन्दसि कर्मत्वार्थकतृतीयाविधानात् तदर्थिकैव तृतीया। यत्र तु पायसेन जुहुयादिति लौकिकवाक्ये तृतीयाश्रवणं तत्र करणत्वमेव तृतीययोच्यते। एवं च यवाग्वाः कर्मत्वोपपत्तौ सक्तुन्यायेन विनियोगभङ्गाङ्गीकरणमयुक्तमिति।

तदिदं मतं निरस्यति---**वस्तुतस्त्विति**। अयं भावः; यत्र तावत् केवलं दध्ना जुहोतीति श्रवणं तत्र करणत्वस्यैव झटित्युपस्थितत्वात् लौकिकवाक्य इव दध्नः करणत्वमेवाश्रयितुं युक्तं लाक्षणिकार्थग्रहणे प्रमाणाभावात्। यत्रापि सक्तून् जुहोतीत्यादौ द्वितीयाश्रवणं तत्र ग्रामादिवत् सक्तूनामुत्तरदेशसंयोगाश्रयत्वमात्रबोधनेन वाक्यार्थपर्यवसानस्वीकारे विधिवैयर्थ्यपरिहारार्थमिष्टभाव्यकत्वानुरोधेन इष्टान्तरस्योद्देश्यत्वावश्यकत्वे सक्तूनामपि तत्कल्पने उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेः इष्टसाधनत्वेन रूपेण सक्तूनामुद्देश्यत्वे तदनापत्तावपि तादृप्यस्य पूर्वमनवगतत्वेन तदनुपपत्तेरवश्यमिष्टान्तरस्यैव भाव्यत्वं स्वीकार्यम्। ततश्च भाव्याकाङ्क्षायाः शान्तत्वात् करणापेक्षायां श्रुतत्वात् सक्तूनामेव तद्योग्यत्वात् विनियोगभङ्गेन बलादापतितं करणत्वं केन वारणीयम्। संभवति च प्रक्षेपाङ्गदेवतोद्देशपूर्वकद्रव्यत्यागरूपे यागपदार्थे व्रीह्यादीनामिव प्रक्षेपप्रधानदेवतोद्देशपूर्वकद्रव्यत्यागरूपे होमपदार्थेऽपि सक्तुदध्यादीनां करणत्वम्। प्रक्षेपाङ्गस्योभयत्र प्रतिपत्त्यर्थत्वेऽपि न त्यज्यमानद्रव्यप्रतिपत्त्यर्थत्वम्। अपि तु त्यक्तद्रव्यप्रतिपत्त्यर्थत्वमेवेति न प्रक्षेपजन्यफलाश्रयत्वमादाय त्यज्यमानद्रव्यस्य कर्मत्वमुपपादयितुं शक्यम्। यत्रापि यवाग्वा अग्निहोत्रं जुहोतीत्यत्र अग्निहोत्रपदानुरोधेन यवाग्वाः कर्मत्वाश्रयणं तत्रापि यवाग्वाः उपयोगाभावेन कर्मत्वानुपपत्तेः अग्निहोत्रपदस्य नामत्वेन कृत्स्नस्य इह तदर्थत्यागे प्रमाणाभावात् तत्रापि

**अत्र चार्थोपस्थितः क्रमः प्रयोगविधिनैव विधीयते। एवं पाठादिष्वपीति प्राञ्चः। अङ्गान्तरवत्तु अर्थकल्पितश्रुत्या विनियोगः, प्रयोगमात्रं प्रयोगविधिनेत्यपि शक्यं वक्तुम्।**

---

करणत्वमेव। यत्र तूपयोगः कॢप्तः चतुरवत्तादौ तत्र चतुरवत्तेन जुहोतीत्यत्र तृतीयायाः कर्मत्वार्थिकायास्सत्वेन कर्मत्वस्यापि संभवात् कर्मत्वमेव।

**यद्यपि** नामधेय एवाग्निहोत्रपदे द्वितीयाविधानाय एतत्सूत्रमिति वक्तुं शक्यते; अत एव **पदमञ्जर्यादौ** धात्वर्थस्य होमस्य करणत्वात् तद्वाचकाग्निहोत्रपदे द्वितीयाविधानमिति मीमांसकमतमुपपादितमिति न चतुरवत्तवाक्यपर्यन्तमनुधावनं युक्तं, **तथापि** कर्मणीत्यनुवृत्तेरेव हेतोरेतन्मते वैयाकरणैः सूत्राननुगुणत्वस्य प्रतिपादनात् तन्मतेनैव बोधयितुमिदमुदाहृतम्।

**वस्तुतस्तु** कर्मणीत्यस्य मीमांसकमते कर्मत्वे इत्यर्थात् जुहोतेः कर्मत्वे विवक्षिते तद्वाचकात् तृतीयाद्वितीयाविधानोपपत्तेः, प्रकृते यवाग्वाः करणत्वेन होमस्य कर्मत्वात् युक्तैव द्वितीयेति होमस्य करणत्वात् तृतीयाप्राप्तौ द्वितीयेति मीमांसकमतोपपादनं तत्कृतमयुक्तमेवेति।

ननु श्वः करिष्यमाणे सान्नाय्ये तत्पूर्वदिने अमावास्यायामन्यस्मिन् वा दिवसे सायमग्निहोत्रहोमे यवागूनियमविधानात् स्थालीगतहुतशेषस्य स्थापनपूर्वकमेकाहान्तरितदध्न इव "यज्ञस्य सन्ततिरसीत्यग्निहोत्रोच्छेषणमभ्यातनक्ति" इत्यभ्यानञ्जनार्थे विनियोगकरणात् अस्त्येव यवाग्वा उपयोग इति कथं यवाग्वा उपयोगाभावात् करणत्वमिति **पूज्यपाद**वचो विश्वसनीयम्। एतदभिप्रेत्यैव यवाग्वा अग्निहोत्रहोमस्सन्नयतस्तां रात्रिमिति **कात्यायनादि**सूत्रमूलं यवागूहोमः दधिप्रयुक्तः, न कालप्रयुक्तः। अतो न भवति असन्नयतः सान्नाय्यप्रयुक्तत्वादेव तद्विकारयवागूहोमः इत्यादि**धूर्तस्वाम्यादीनां** लिखनम्। अन्यथा तृतीया च होश्छन्दसीत्यनुशासनस्यापि वैयर्थ्यापत्तेः। नहि सक्तून् जुहोतीत्यत्र न्यायागते सक्तूनां करणत्वे सति तद्बोधार्थं लाक्षणिकानुशासनापेक्षा येन चतुरवत्तेन जुहोतीत्यत्र लाक्षणिककर्मत्वबोधनद्वारा तत्सार्थक्यमुच्येत अनुशासनं विनापि लाक्षणिकार्थबोधस्य प्रयाजशेषेण हवींष्यभिघारयतीत्यादौ स्वीकारात्। अतश्च एकस्मिन् वाक्ये होः कर्मणि द्वितीयातृतीययोः समुच्चयेन विधानार्थमवश्यमनुशासनं सार्थकं यथा यवाग्वा अग्निहोत्रं जुहोतीत्यत्र अग्निहोत्रपदे हविः परे द्वितीया; हविःपरे यवागूपदे च तृतीया।

**वस्तुतस्तु** प्रयोजनवशेन **पदार्थानुष्ठाने विहिते आनुषङ्गिकः क्रम इति न तदंशे विधानमिति ध्येयम्। अर्थोऽपि क्रमनियामक इति प्राञ्चः। वस्तुतस्तु अर्थाविरोधिपाठस्थलेऽन्यलभ्यत्वादनुवाद एव। विरोधिपाठस्थले चापूर्वस्यैव तस्य** ज्ञापक **इत्यप्यनुसन्धेयम्** ॥ २ ॥

---

न चात्राग्निहोत्रपदं कर्मनामधेयं वक्तुं शक्यं; तथात्वे बहुव्रीहिसमासनिमित्तस्वरापत्त्या तत्पुरुषस्वरानापत्तेः। अत एवैकस्मिन् वाक्ये द्वयोर्विभक्त्योस्समुच्चयविधानात् न दध्ना जुहोतीत्यादौ तदनुशासनप्रवृत्तिः। **अस्तु वा** सूत्रस्वारस्यात् हविःपदद्वयाभावेपि अस्य प्रवृत्तिः, तथापि दध्न उपयोगाभावात् दधिवाक्ये तदप्रवृत्तावपीहाग्रे उपयोगात् कर्मत्वेन द्वितीया, योग्यतया करणत्वेन तृतीयावेत्यव्यवस्थायां कर्मत्वार्थकद्वितीयानियमः इत्यभिप्रायेणैवाग्न्यैवोदाहरणताप्रदर्शनं **महाभाष्यादिषु**। अतोऽग्निहोत्रपदार्थे यवाग्वा उपयोक्ष्यमाणायाः कर्मत्वेनाभेदेनान्वय इति **नवीनवैयाकरणाद्युक्तमेव** साध्विति चेत्।

**तत्रोच्यते** —एतद्वाक्यात् पूर्वं तस्याः साधनतानवगमात् प्रक्षेपात् प्राक् त्यागांशेऽनुपयुक्ताया न तावत् प्रतिपाद्यत्वेन तत्संभवः तदन्यथानुपपत्त्या करणाकाङ्क्षोपशामककरणत्वस्य कल्पनापेक्षया आदावेव मुख्यार्थकत्वं तृतीयायाः कल्पयित्वा पश्चादेव तु पदान्तरकल्पनया तत्प्रतिपाद्यत्वकल्पनं युक्तं; उपयोक्ष्यमाणत्वं तु सान्नाय्ये यवागूत्वेन उपयोगाभावात् अयुक्तम्। प्रत्युतातञ्चने अग्निहोत्रोच्छेषणनाशे तण्डुलप्रतिनिध्युपादानात् सर्वमते प्रतिपत्तिकर्मत्वाभावेन अर्थकर्मत्वाङ्गीकारेपि अग्निहोत्रोच्छेषणतया परप्रयुक्तत्वेनैव उपादानात् होमकरणत्वमेव सिद्ध्यति। यवागूनियमः **कात्यायनापस्तंबादिसूत्र**स्वारस्यात् परमग्निहोत्रोच्छेषणसिद्धिद्वारा दृष्टानुरोधेन दधिप्रयुक्तोऽस्तु।

**एतेन** यवागूनियमाङ्गीकारेणापि यवाग्वाः संस्कार्यत्वं धूर्ताद्युक्तमपास्तम्। **कचि**दप्युद्देश्यस्य नियमविधिविषयत्वानङ्गीकारात्। अतश्चतुरवत्तवाक्यमेव तदुदाहरणम्। अथ वा सान्नाय्यार्थयवागूनियमविध्यतिरिक्तवाक्याभिप्रायेणोपयोगाभावोक्तिरिति दिक्। **प्रयोजनवशेनेति**। यवागूस्वरूपे आनर्थक्ये प्राप्ते लक्षणया होमापूर्वसाधनयवागूद्देशेन पाकः कर्तव्य इति पाकविधिना पाकस्य यवाग्वाग्निहोत्रं जुहोतीति विधिना अग्निहोत्रहोमोद्देशेन यवाग्वाश्च विधाने सति प्रयोजनजनकपदार्थविधानबलादेवानुषङ्गिकः क्रमस्सिद्ध्यतीति न तत्र विधिव्यापारकल्पनेति। **अनुवाद एवेति**। **वस्तुतस्तु** पदार्थानुष्ठानवेलायां क्रमस्यापेक्षणात्तस्य च प्रयोजनाधीनत्वात् अनुष्ठानकाले झटित्युपस्थितप्रयोजनकल्प्यक्रमेणैव तदाकाङ्क्षाशान्तेः न विप्रकृष्टपाठ-

## (३)—अनियमोऽन्यत्र ॥ ३ ॥

यत्रोक्तवक्ष्यमाणक्रमनियामकप्रमाणाभावस्तत्रानियम एव। यथा प्रयाजानुमन्त्रणानां 'वसन्तमृतूनां प्रीणामि' इत्यादीनां 'एको मम' इत्यादीनां च शाखाभेदेनाम्नातानां परस्परम् ॥

अत्र हि यद्यपि वसन्तादिप्रकाशकानां न देवताकल्पकत्वं, उभयाकाङ्क्षाप्रमाणकाङ्क्षभावयाज्यामन्त्रकल्प्यसमिदादिदेवताऽवरोधे अन्यतराकाङ्क्षाप्रमाणकाङ्क्षभावानुमन्त्रणमन्त्रेण

---

कल्प्यश्रुतिप्रसर इति पाठक्रम एवानुवादः कल्पयितुमुचित इति। ज्ञापक इति। यथा प्रकृतोदाहरण एवार्थक्रमाभावे पाठेनैव नियतक्रमप्राप्तेः अर्थसिद्धविपरीतक्रमस्य पक्षे प्राप्त्यभावेन नियामकत्वानुपपत्तेः अप्राप्तस्यैव बोधकोऽर्थ इति भावः।

---

॥ अनियमोऽन्यत्र ॥

अत्र षष्ठ्यन्ततया विपरिणतस्य पूर्वसूत्रस्थानुपूर्व्यपदस्यानुषङ्गः। यद्यपि सकलप्रमाणनिरूपणानन्तरमेव तद्व्यतिरेकप्रदर्शनं सूत्रकारस्योचितं तथाप्यर्थाच्चेति पूर्वसूत्रानुषङ्गलाघवजिघृक्षया अत्रैव तत्प्रदर्शनं कृतम्। दृष्टं च ते सर्वार्थाः प्रयुक्तत्वात् इति तृतीयसप्तमपादगतसूत्रोपात्तस्य प्राकृतसर्वकार्यार्थपरस्य सर्वार्था इति पदस्य प्रकृतिविकृत्यर्थरूपार्थभेदेपि अनुवृत्तिलाघवानुरोधेन अन्वयश्च स्वकालत्वादित्युत्तरसूत्रेणान्तरागर्भिणीकरणम्। तदयमर्थः अर्थाच्चानियमोन्यत्र चकार एवकारार्थे। अन्यत्रार्थादेवानियमो बोध्यः इति संपद्यते। अन्यथा सर्वान्तोक्तौ अर्थादि[1]ति अध्याहारक्लेशःस्यात्। अथवा स्वतन्त्रस्य ऋषेरिच्छया तदित्यभिप्रायेण व्याचष्टे—यत्रेति। सति ह्येतेषामनुमन्त्रणमन्त्रयुगलानां समुच्चये क्रमाकाङ्क्षा, विकल्पेतु तदभावात् नैव तद्विचार इत्यतः तत्साधनायोपक्रमते—अत्र हीति। अत्र बोधायनेन प्रयाजानां ऋतुदेवत्यत्वमङ्गीकृतं तदेव याज्ञिकरुद्रदत्तेन वसन्तादिप्रकाशकानुमन्त्रणबलात् समर्थितं यत तन्निराकरोति—यद्यपीति। उभयेति। यागानुष्ठानवेलायां हि देवतापेक्षा याज्यादिमन्त्राणामपि प्रकाश्यापेक्षा। एवमुभयाकांक्षया संबन्धेन उभयोः नैराकांक्ष्यात् उत्थाप्याकाङ्क्षया संबद्धानुमन्त्रणमन्त्रस्य न तत्कल्पकत्वमिति भावः। समिदादीति। एतेनापस्तंबसूत्रानुसारानुष्ठानैः

---

(१) A reads अर्थाच्च.

याज्ञिकैः प्रयाजानूयाजेषु अग्निदेवत्यत्वमङ्गीकृत्य अग्नय इदं न ममेति त्यागानुष्ठानं क्रियमाणमपास्तम् । नहि तेषु अग्नेर्देवतात्वे किंचित्प्रमाणमस्ति । संबोधनान्ताग्निपदस्याहवनीयपरत्वेनाज्यरूपद्रव्यसंबन्धस्य समिदादिष्वेव प्रतीतेः । अत एव समिधो यजेति होतारं प्रति प्रैष उपपद्यते । इतरथा अग्निं यजेति प्रैषापत्तेः । न चेतरप्रयाजेष्वपि तनूनपातं यजेत्यादिप्रैषापत्त्या यज यजेति प्रैषानापत्तिः । अग्निदेवत्यत्वपक्षेपि अग्निंयजेत्यादिप्रैषापादनस्य तवापि तुल्यत्वात् ।

यदि तु न्यायेनैतादृशप्रैषापत्तावपि "समिधो यजेति प्रथमं संप्रेप्यति यजयजेतीतरान्" इत्यापस्तंबसूत्रे तादृशप्रैषस्य वाचनिकत्वात् तथाऽनुष्ठानमिति चेत मामपि तुल्यपरिहारमेतत् । परंतु यजेति प्रैषे वास्तवकर्मापेक्षायां समिधो यजेति पूर्वप्रैषे समिध एव कर्मत्वदर्शनात् तत्साहचर्येण तनूनपातादीनामेव कर्मत्वकल्पनया तत्समर्पणं युक्तमाश्रयितुम् । यत्रापि आग्नेया वै प्रयाजा आग्नेया अनूयाजा इति श्रवणं तत्र वैशब्दोषबन्धेन पुराकल्पसरूपं सत न प्रबलप्रमाणप्रापितसमिदादीनां देवतात्वे बाधकम् ।

युक्तं चैतत् आग्नेया इत्यत्र यदि देवतातद्धितः स्यात् तदा तद्देवताकत्वं निश्चीयेतापि, न त्वेतदस्ति सूक्तहविषोरिष्टिरिति महाभाष्यकारीयवचनेन सूक्तहविस्समभिव्याहार एव तद्विधानात् । अतो यथाकथंचित् कल्पितेनाग्निसंबन्धेनाग्नेयत्वमादायार्थवादोपपत्तेः न तद्वशेनाग्निदैवत्यत्वं युक्तम् । एवमनूयाजेष्वपि मान्त्रवर्णिकदेवबर्हिरादीनामेव तत् । दाशमिकाधिकरणेऽपि एतन्निर्णेष्यते । अत एव कातीयानां तत्तद्याज्यामन्त्रप्राप्तसमिदादिदेवताङ्गीकारेण इदं समिद्भ्यो न मम इदं देवाय बर्हिषे न मम इत्यादि त्यागानुष्ठानं प्रयाजानूयाजेषु मीमांसान्यायसिद्धं युक्तं दृश्यते । अतोऽग्नय इदं न ममेत्यनुष्ठानं केषाञ्चित् याज्ञिकानामयुक्तमेवेति ।

अस्तु वा अग्नेरेव देवतात्वं शाङ्ख्यायनशाखायां ब्राह्मणे "देवासुराः संयत्ता आसन्" इत्यादिना देवासुरयुद्धप्रसङ्गे यदा देवानां पराभवो जातः तदा अग्निनागत्य क्रतुषु प्रवेशङ्कृत्वा असुराः पराजिताः । ततस्तेनाग्निना वरो देवान् प्रति याचितः । तस्मै वरो देवैर्यदा दातुमारब्धः तदा तेन "प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्तभागं घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवा" इत्यनेन प्रयाजानूयाजा याचिताः । देवैरपि च तव प्रयाजा अनूयाजाश्च केवलमूर्जस्वन्तो हविषस्सन्तु भागाः । तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्र इति प्रयाजा अनूयाजा इत्यर्थकेन सन्दर्भेण तस्यैव तत्प्रतीतेः ।

निरुक्तेपि छन्दोदैवत्याः प्रयाजाः प्राणापानदेवत्या वै प्रयाजा इत्यादिबहुतरश्रवणेन किंदेवत्याः प्रयाजा इत्याशङ्क्य आग्नेया इति तु स्थितिः, भक्तिमात्रमितरत इत्यादिना अग्निदेवत्यत्वं निश्चितम्। तद्भाष्यकृतापि याज्यामन्त्रे ब्राह्मणे च अग्नेस्सङ्कीर्तनेनाग्नेयत्वमेवेत्युपपत्तिरुक्ता। अतोऽग्निदैवत्यत्वं युक्तमिव भासते। तथापि किं केवलाग्नेः अग्निशब्देन देवतात्वमुत समिदादिगुणविशिष्टस्य समिदाद्यग्निशब्देन उत तस्यैवाग्नेः तद्वाचककेवलसमिदादिपदैः इति विवेचनीयम्। नाद्यः समिधो यजेति प्रैषानुपपत्तेः। अत एव न द्वितीयः। तस्माद्यथैवाग्नेः पूर्वाहुतिः प्रजापतेरुत्तरेति केवलाग्निप्रजापतिसङ्कीर्तनात् मन्त्रवर्णे ज्योतिष्ट्वादिगुण युक्तयोः श्रवणेपि न तच्छब्देन देवतात्वं कल्प्यते किन्तु केवलयोरेव तथेहापि न्यायतौल्येन विशेषसमर्पकाग्निशब्दं विनैव केवलसमिदादिपदैरेव तत्कल्पनं युक्तम्। दृष्टं च मन्त्रवर्णे अग्नेर्विशेष्यस्य उपादानेऽपि पात्नीवतं ग्रहं गृह्णातीत्युत्पत्तिवाक्ये केवलपत्नीवतः श्रवणात् तन्मात्रस्यैव तत्। अतश्च उत्तमप्रयाजे मन्त्रवर्णप्राप्तयावत्प्रधानदेवताकत्वेनाग्नीषोमादिदेवत्यत्वेपि कथंचित् लक्षणया अग्निपरत्वं प्रकल्प्य प्रयाजादिषु आग्नेयत्वमग्नेर्वरप्रदानं च क्लेशेनोपपादनीयमेव नैवं समिदादिशब्दैः अग्नेर्देवतात्वे समिदादिशब्दानामग्न्यादिवाचकत्वात् स्पष्टमेव प्रयाजेपीति चेत् इति नावमिकाधिकरणे समिधो यजतीत्यादिवाक्यैः केवलयागमात्रविधानं; देवता तु याज्यामन्त्रवर्णप्राप्तैव न विधीयत इति।

सिद्धान्ते कथं तर्हि समिदादिपदानामन्वय इत्याशङ्कोत्तरपरस्य अग्निसमिदादयश्च एवमेव विष्ण्वादिवदेवानूद्यन्ते मन्त्रवर्णप्राप्ता इति वार्तिकग्रन्थस्थाग्निशब्दः तनूनपात्प्रदर्शनार्थं इति तन्त्ररत्नीये व्याख्याने अग्निशब्दतनूनपादादिशब्दानां पर्यायविशेषसमानार्थकत्वेन उपलंभात् तनूनपाच्छब्दादिप्रतिपाद्यत्वमग्नेः प्रतीयते। वस्तुगत्या अग्निरेवात्र समिदादिशब्दाभिलप्या देवता, न तु अग्निशब्दाभिलप्य इति नाग्नेयत्वानुपपत्तिरस्मन्मतेपि प्रयाजाग्न्मे इति मन्त्रवर्णस्य। अग्नेया इति तुस्थितिः भक्तिमात्रमितरदिति यास्कोक्तेश्च वैदिकसमिदादिशब्दार्थनिर्वचनपरत्वेनाग्निपदाभिलप्यदेवताविधिपरत्वाभावात्। अत एव भक्तिमात्रमितरदिति वाक्यान्ते किमर्थं पुनरिदमुच्यते किं विचारे प्रयोजनमिति शङ्कोत्तरत्वेनावतारितं, "यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट्करिष्यन्" इति निरुक्तं होतुर्वषट्कारपूर्वकाले ध्यानविशेषसिद्धिं विचारप्रयोजनं कथयत् संगच्छते।

अत एव तत्तदर्थवादेषु अग्न्यतिरिक्तानां देवतात्वेन संबन्धाभासदर्शनात्—किंदेवत्याः प्रयाजा भवन्ति? ऋतुदेवत्याः प्रयाजा भवन्ति छन्दोदेवत्याः प्रयाजा भवन्ति प्राणापान-

**तत्कल्पनानुपपत्तेः। एवं 'एको मम' इत्यादीनामपि न** फलकल्पकत्वं, **निर्ज्ञातपारार्थ्यात्**, श्रुत्यविनियुक्तत्वाच्च। **न चोत्कर्षः, प्रयाजानुमन्त्रणसमाख्ययाऽत्रैवान्वयेनान्यत्र सामान्यसम्ब-**

---

देवत्याः प्रयाजा भवन्तीत्याशङ्काकोटौ समिदादीनां मन्त्रवर्णेषु भासमानमपि देवतात्वं न निवेशितम्। सिद्धान्ते आग्नेयत्वस्थापनेन समिदादिदेवत्यत्वस्यैव स्थिरीकरिष्यमाणत्वेन सिद्धान्तकोटिनिवेशात्। अत एव **शतपथे** हविर्यज्ञकाण्डे प्रयाजार्थवादेषु "समिद्धे वसन्त" इत्यादिना वसन्तादिके विशेष्ये उपात्तेऽपि "ऋतवो वै प्रयाजा" "वसन्तमृतूना" इत्यादिसाधक-बलात् प्राप्तमपि ऋतूनां देवत्वं समिधो यजेति प्रैषानुपपत्त्या याज्यामन्त्रेषु समिदादिसंकीर्त-नानुपपत्त्या च खण्डित्वा समिदादिदेवताकत्वं महता यत्नेन साधितम्। अत एव समिधो यजतीत्याद्युत्पत्तिवाक्येषु समिदादिपदानां नामधेयत्वं प्रसाधितं **तत्प्रख्याधिकरणे**। अतो युक्त-मेवोक्तं **पूज्यपादैः** "समिदादिदेवतावरोधे" इति। इति दिक्। **न फलकल्पकत्वमिति**। एकः पुत्रो मम एका कन्या द्वेषिणः इत्यर्थरूपेणेति शेषः। द्रव्यसंस्कारकर्मसु परार्थत्वात् फल-श्रुतिरर्थवादः स्यादिति चातुर्थिकाधिकरणे क्रतूपकारार्थत्वेन क्लृप्तानां कर्मणां नैराकांक्ष्येण न स्वतन्त्रफलार्थत्वं येन तदाकांक्षया फलकल्पकत्वं स्यादित्यभिप्रेत्याह—**निर्ज्ञातेति**। ननु परार्था-नामपि प्रस्तरप्रहरणाग्न्यन्वाधानादीनां आनुषङ्गिकायुर्वर्चः प्रभृति फलमप्यङ्गीक्रियत एव मान्त्र-वर्णिकम्। **तथा हि**—"सूक्तवाकेन प्रस्तरं प्रहरति" "ममाग्ने वर्चोविहवेष्विति पूर्वमग्निं परिगृह्णाति" इति वाक्याभ्यां सूक्तवाकममाग्न इति मन्त्रयोः प्रहरणान्वाधानयोः विनियोगकरणं तावन्निश्चितम्। मन्त्रो हि अन्यत्र क्रियातत्संबन्धिप्रकाशनस्वभावो दृष्टः। प्रकृते तु एतन्मन्त्रान्तर्गतायुर्वर्चः प्रभृतिपदार्थानामायुर्वर्चः प्रभृतीनां न क्रियात्वं तत्संबन्धित्वं वा क्लृप्तं येन तत्प्रकाशनं क्रियेत। अतो दृष्टार्थत्वानुरोधेन विनियोगान्यथानुपपत्त्या आयुर्वर्चः प्रभृतीनां प्रहरणान्वाधानक्रियाजन्यत्वं प्रकल्प्य क्रियासंबन्धिफलप्रकाशकत्वेनाङ्गत्वं तयोर्निर्वाहितं तृतीयाष्टमपादे ऋत्विक्फलमित्यधिकरणे। एवमत्रापि एको ममेत्यादीनां प्रकाशकत्वान्य-थानुपपत्त्या फलकल्पकत्वम्। ततश्च परार्थानामपि प्रयाजादीनां फलमपि तद्भविष्यतीत्याशङ्कां निराकरोति—**श्रुत्यर्थविनियोगाच्चेति**। **अयं भावः** यत्र तृतीयादिश्रुत्या इतिकरणेन वा विनियोगः तत्र तृतीयाद्यवगतकरणत्वनिर्वाहाय तथाङ्गीकारः, यथा उक्तस्थले। प्रकृते तु ताभ्यां विनियोगाकरणात् सामर्थ्यमात्रेण फलप्रकाशनेऽपि नैतावता प्रयाजादीनां तत्प्रकाश्य-फलजनकत्वं कल्पनीयम्। न चात्रापि प्रयाजानुमन्त्रणसमाख्यासहकृतलिङ्गावताङ्गत्वनिर्वाहाय फलकल्पनं युक्तं; तथात्वे सति प्रयाजानां तत्फले तत्प्रकाशनसामर्थ्यात् मन्त्रस्याङ्गत्वं सति

**न्धबोधकप्रमाणाभावात्। तथापि** मनोतामन्त्रवल्लक्षणया **प्रयाजीयक्रतूपकाराख्यफल-देवताप्रकाशकत्वेन दृष्टार्थत्वेऽपि भिन्नकार्यत्वात्समुच्चय एवोभयोरेकैकस्मिन् प्रयाजे।**

यत्तु **तन्त्ररत्नादौ अदृष्टार्थत्वेन समुच्चयाभिधानं तत् दृष्टार्थत्वसम्भवे तदयोगात्—**

---

चाङ्गत्वे तदनुपपत्त्या फलकल्पनेति अन्योन्याश्रयापत्तेः। सूक्तवाकादौ तु असत्यपि तत्प्रकाश्ये फले किं हि वचनं न कुर्यादिति न्यायेन बलवता तृतीयादिप्रत्यक्षप्रमाणेनांगत्वेऽवगते तन्निर्वाहाय सर्वमपि कल्प्यमानं न्यायागतमेवेति वैषम्यमिति। एवं च आयुर्दा अग्ने अस्यायुर्मे देहि अगन्मसुव इति मन्त्राणां यथोपस्थानादिप्रयोज्यकर्मफलप्रकाशकत्वं तादृशं च फलं दर्शपूर्णमासयोः सर्वफलार्थत्वात् संभवत्येवेति शक्त्यैव तत्प्रकाशनम्। इहतु उभयोरप्यनु-मन्त्रणमन्त्रयोः शक्त्या स्वप्रकाश्यार्थस्य कर्मणि समवायासंभवेऽपि लक्षणया तत्संभवात् कर्मजन्यक्रतूपकारस्यैव एकत्वादिविवक्षया फलप्रकाशकत्वं तद्देवताप्रकाशकत्वं च सुलभमेवे-त्याह—**अतश्चेति।** वसन्तादिपदेषु समिदादिलक्षणायां अग्निदेवत्यत्वोपष्टम्भकतत्तदर्थवादेषु असुरपराभवार्थं क्रतुषु अग्नेः प्रवेशस्योक्तत्वात् स्वाधिकरणप्रवेशकर्तृत्वरूप एव शक्यसंबन्धो विज्ञेयः। अत्र च **क्रमश्च देशसामान्यादिति** तृतीयाधिकरणगतानुमन्त्रणमन्त्रविषयदृष्टार्थ-त्वोपपादनपरवार्तिकोक्त्या सह अत्रत्यतन्त्ररत्नोक्तादृष्टार्थत्वस्याविरोधसमर्थनाय यत्र कर्मस्मृतिर्भ-वति तत्र कृतप्रत्यवेक्षणरूपदृष्टार्थत्वस्य वार्तिके उक्तावपीह तदनुत्पत्तेः न दृष्टार्थत्वं, वक्ष्यमाणानु-मन्त्रलक्षणमपि दृष्टार्थानुमन्त्रणपरमेव। अथवा मन्त्रार्थत्वेन संसरन्निति लक्षणगतार्थपदं न प्रतिपाद्यत्वपरंकरणमन्त्रेष्वतिप्रसङ्गात्। किन्तु येन केनापि द्वारेण प्रयाजादिरूपशेष्यनुसन्धान-प्रयोजनमात्राभिप्रायम्। तेन दृष्टार्थे अदृष्टार्थेवा अनुमन्त्रणे पाठवेलायां शेष्यनुसन्धानसत्वान्ना-नुपपत्तिः। अतो युक्तमेषां अदृष्टार्थत्वमिति **प्रकाशकारोक्तं** तदयुक्तमिति सूचयितुं कथमपि दृष्टार्थत्वसंभवे अदृष्टार्थत्वमन्याय्यमिति दृष्टान्तव्याजेन दर्शयति—**मनोतामन्त्रवदिति।** "त्वं ह्यग्ने प्रथमो मनोता" इति मन्त्रस्य कर्मसंबन्धिप्रधानाग्नीषोमदेवताप्रकाशकत्वमग्निपदे लक्षणया **मनोतायां तु वचनादविकारः स्यादिति** दशमचतुर्थपादाधिकरणे उक्तं तद्वदित्यर्थः। **यद्यपि** एको ममेत्यादीनामेकः क्रतूपकारो मम एकापक्तिस्तवेत्येवं लक्षणां विनापि शक्त्या प्रकाशकत्वं संभवति **तथापि** सामान्यतो विशेषणविशिष्टार्थमात्रप्रकाशकस्य क्रतूपकाररूपविशेष्यविशेष-प्रकाशकत्वं लक्षणयैवेत्यभिप्रायेण लक्षणया फलप्रकाशकत्वमुक्तम्। एवं भिन्नकार्यत्वेन स्वयमनुमन्त्रणानां समुच्चयमुपपाद्यादृष्टार्थत्वेन समुच्चयं **तन्त्ररत्नकृतोक्तं** दूषयति—**यत्त्विति।**

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरन्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्।

इत्यनुमन्त्रणलक्षणानुपपत्तेश्चोपेक्षितम्। तत्र चैकैकस्मिन् प्रयाजे द्वयोर्द्वयोर्मन्त्रयोः पठ्यमानयोर्न क्रमनियमः, प्रमाणाभावात्। ननु समित्प्रयाजे नियामकाभावेऽपि येन क्रमेण समिदनुमन्त्रितः तेनैव तनूनपातादयोपि, प्रवृत्तिक्रमादिति चेन्न, प्राजापत्यपशुषु हि एकप्रयोगविधिपरिगृहीतेषु पदार्थानुसमये सति प्रकृतौ पाठेन क्लृप्तक्रमयोरुपाकरण-नियोजनयोः औपदेशिकपशुसाहित्यानुरोधेन षोडशक्षणव्यवधानेऽपि तदधिकव्यवधाने प्रमाणाभावात् येनैव क्रमेणोपाकरणं तेनैव क्रमेण नियोजनमिति प्रवृत्तिक्रमो युक्तः। प्रकृते तु एकप्रयाजगतयोर्नानाशाखास्थानुमन्त्रणयोः पाठाद्यभावेनाक्लृप्तक्रमत्वात् सत्यपि च सर्वप्रयाजानामेकप्रयोगविधिपरिग्रहे पदार्थानुसमयासम्भवादेकैकस्मिन् प्रयाजे द्वयोर्द्वयो-र्मन्त्रयोः पठनीयत्वान्न प्रयाजान्तरीयमन्त्रस्य प्रयाजान्तरीयमन्त्रेण प्रवृत्तिक्रमः। न च नानाशाखास्थयोः क्लृप्तक्रमत्वाभावेऽपि एकशाखास्थानां पञ्चानामपि मन्त्राणां पाठेन क्लृप्तक्रमत्वाच्छाखान्तरीयेणाप्यनियतव्यवधाने प्रवृत्तिक्रमबाधापत्तिः, पञ्चानां मन्त्राणां

---

मन्त्रमुच्चारयन्निति। उच्चारयन्निति हेतौ शतृप्रत्ययः। तथा च यन्मन्त्रोच्चारणेन मन्त्रोच्चाण-कर्ता शेषिणं शेषिमना भूत्वा मन्त्रार्थत्वेन संस्मरन् स्यात् एतदनुमन्त्रणमिति कारिकार्थः। यत्तूक्तं लक्षणगतार्थपदस्य प्रयोजनमात्रपरत्वमङ्गीकृत्यार्थप्रतिपादकत्वाभावेऽपि लक्षणसङ्गतिरिति तत् शेषिणो मन्त्रप्रतिपाद्यत्वाभावे तदनुसन्धानस्य प्रयोजनत्वासंभवात् कथञ्चित्तस्य प्रयोजनत्वकल्पने अदृष्टार्थत्वानुपपत्तेः मनोतामन्त्रे तथात्वापत्तेः अयुक्तमिति प्रागेव मनोतादृष्टान्तोपपादनेन सूचितम्। प्रवृत्त्येति। समित् वसन्तं एको मम; तनूनपात् ग्रीष्मं द्वौ ममेत्यादिक्रमेण पाठे तत्तच्छाखाग-तानुमन्त्रणानां प्रयोगविध्यवगतप्रत्यासत्तिः सर्वत्र द्वाभ्यामेव क्षणाभ्यामन्तरिता भवति। कदाचित् द्वौ कदाचिद्ग्रीष्ममित्यनियतपाठे कयोश्चित् द्वाभ्यां कयोश्चित् त्रिभिः क्षणैः इत्यननुगतत्वापत्तिरि-त्याशयः। ननु एकप्रयोगविधिपरिगृहीतानां प्राजापत्यपशूपाकरणनियोजनादिपदार्थानुसमय-स्येवात्रापि पञ्चानां प्रयाजानां क्रमेणानुष्ठितानां तेनैव क्रमेण एकशाखास्थानुमन्त्रणेषु पञ्चसु पठि-तेषु तेनैव क्रमेणापरशाखास्थानुमन्त्रणपञ्चकपठनमित्येवं पदार्थानुसमयसंभवात् कुतो न प्रवृत्तिक्रम-इत्याशङ्कां निराकरोति — पदार्थानुसमयासंभवादिति। समिदनुमन्त्रणं तनूनपादनुमन्त्रण-मित्यादिसमाख्यया तत्तद्यागानुष्ठानमनुपश्चात् मन्त्रणमित्यवयवार्थप्रतीतेः तत्तत्प्रयाजाव्यवधानेनैव तेषां तेषां काण्डानुसमयेन पाठानुष्ठानमुचितं न तु सर्वेषामन्ते, समाख्याबाधापत्तेः। अतः तत्तत्प्रयाजाव्यवधानेनैव द्वयोर्द्वयोः पाठे न क्रमभापकमिति भावः। ननु एकशाखागतानां पाठेन

पञ्चप्रयाजाङ्गत्वेनैकशेष्यङ्गत्वाभावादवान्तरप्रयोगविधिभेदेन भिन्नप्रयोगविधिपरिगृहीतानां पाठेन मक्रानियमात्। इष्यते च पाशुकानूयाजानामैष्टिकपिष्टफलीकरणहोमस्य च महाप्रयोगैकत्वेऽपि भिन्नावान्तरप्रयोगविधिपरिगृहीतत्वेनाक्लृप्तक्रमत्वम्। तस्मादनियमः॥ ३॥

(४)—क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्॥ ४॥ अशाब्द इति चेत्स्याद्वाक्यशब्दत्वात्॥ ५॥ अर्थकृते वाऽनुमानं स्यात् क्रत्वेकत्वे पदार्थत्वात् स्वेन त्वर्थेन सम्बन्धः तस्मात्स्वशब्दमुच्येत॥ ६॥ तदा चान्यार्थदर्शनम्॥ ७॥

पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमनियामकः। न च विधीनां तत्तत्पदार्थवि-

---

क्रमोपलब्धेः वसन्तानुमन्त्रणे प्रथमं पठिते द्वितीयानुमन्त्रणकाले यदि स्वोत्तरानुमन्त्रणपठनं तदा तु पूर्वानुमन्त्रणेन सह यावदपेक्षितविहितक्षणव्यवधानेऽपि न तयोरानन्तर्यहानिः। यदा त्वनियमेन शाखान्तरानुमन्त्रणपठनं तदनन्तरं प्रथमशाखीयानुमन्त्रणपठनं तदा एकशाखीययोरनपेक्षितक्षणाधिक्यव्यवधाने पाठबोधितक्लृप्तक्रमत्वबाधापत्तिः। अतः एकशाखीयप्रथमानुमन्त्रणप्रवृत्त्या नियतक्रमो भविष्यतीत्यभिप्रायेणाशङ्कते—**न चेति**। **एकशेष्यङ्गत्वाभावादिति**। यदि हि एकशेष्यङ्गत्वं भवेत् तदा एकप्रयोगविधिपरिगृहीतानां साहित्यसिद्ध्यर्थं क्रमापेक्षया पाठस्तेषामनुमन्त्रणानामेकशाखास्थानामपि क्रमे नियामको भवेत् न त्वेतदस्ति। तत्तदनुमन्त्रणस्य तत्तत्प्रयाजाङ्गत्वेन तत्तद्भिन्नभिन्नप्रयाजप्रयोगविधिपरिगृहीतत्वेन क्रमानपेक्षणेन पाठस्यानियामकत्वादिति भावः। **इष्यत इति**। अत्रैव एतदग्रे प्रतिपादयिष्यते। एतेनाद्यप्रयाजे वसन्तानुमन्त्रणपाठानन्तरं एको ममेत्यादिपाठक्रमणौभोत्तरत्र पाठस्य याज्ञिकैः क्रियमाणस्यानियतक्रमाश्रयणेऽपि ऐच्छिकत्वेनाप्युपपत्तेः तदनुरोधेन नियतप्रवृत्तिक्रमाश्रयणेन सिद्धान्तं कृत्वा सूत्रस्याद्यप्रयाजविषयेऽनियमप्रतिपादकत्वमिति केषांचिदुक्तमपास्तं द्रष्टव्यम्॥

---

॥ **क्रमेण वा नियम्येत** ॥

अथेदानीं पाठक्रमं निरूपयति—**पदार्थेति**। वाक्यं चात्र पदानां समभिव्याहाररूपं, न तु विधिरूपं तेनोत्तरत्र संग्राह्यत्वेन वक्ष्यमाणमन्त्ररूपवाक्यस्यापि संग्रहः। **पदार्थेति**।

**धायकत्वात् क्रमस्य च** स्वाध्यायत्वसिद्ध्यर्थत्वेनाध्ययनविध्युपयुक्तत्वान्न **पदार्थक्रमनियामकत्वं, पदार्थानामनुष्ठानकाले स्मारकापेक्षायां मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात्** तत्क्रमेणैवानुष्ठानक्रमनियमोपपत्तेः। **अत एव यत्र मन्त्राम्नानं, तत्र तत्क्रम एव नियामकः। यत्र तु न तत्, तत्र विधायकत्वेन**ोपयुक्तस्यापि **विधिवाक्यस्यैवोपस्थितस्य स्मारकत्वेन नियमात् तत्क्रमस्यापि पदार्थक्रमनियामकत्वम्। पाठोपस्थितस्य च क्रमस्य विनियोजकवाक्यकल्पनयाऽङ्गत्वेऽवगते प्रयोगविधिना प्रयोगविधानम्। लक्षणे पदार्थबोधकत्वं च क्वचिदनुष्ठेयपदार्थबोधकत्वं, क्वचिच्च तत्सम्बन्धिद्रव्यदेवतादिबोधकत्वम्। तेन च द्विविधेनाप्यनुष्ठेयपदार्थक्रमनियमः। अत एव देवताबोधकयाज्यादिक्रमादपि यागक्रमः। अतः**

---

अनुष्ठेयेति शेषः। **स्वाध्यायत्वेति**। स्वाध्यायपदं च स्वैः पितृपितामहादिभिः अधीयत इति व्युत्पत्त्या योगरूढं सत् वेदनामधेयम्। नहि अव्यवहितोत्तरत्वरूपानुपूर्वीमन्तरेण सोऽधीतः पूर्वजैः। अतः तत्सिद्ध्यर्थं क्रमेण पाठ उपयुज्यत इत्यर्थः। **तत्क्रमेणेति**। मन्त्रजन्यस्मरणक्रमेणेत्यर्थः। **उपयुक्तस्यापीति**। स्वाध्यायोऽध्येतव्य इति विधिना यदध्ययनेन दृष्टं फलं कर्तुं शक्यं तत्साधयेदिति बोधिते सक्रमकतत्तद्विधिवाक्याध्ययनस्य पदार्थानुष्ठानप्रमाया इव तत्क्रमस्यापि फलत्वेन सिद्धत्वात्, अध्ययनकालीनविधिवाक्यपाठक्रमस्य कार्यभूतानुष्ठानक्रमनियमनद्वारा दृष्टे सति प्रयोजने नान्तरीयकत्वकल्पनस्यायुक्तत्वात् अनुष्ठानवेलायामपेक्षितमन्त्रादिस्मारकान्तराभावे विधिवाक्यानामेव स्मारकत्वं प्रकल्प्य तद्गतपाठक्रमोपि अनुष्ठानक्रमे नियामको युक्त एवेति।

अत्र च **पूज्यपादैर्विशेषत** उदाहरणाप्रदर्शनेन एतत्सूचितं **भाष्ये शास्त्रदीपिकायां** च ब्राह्मणपाठक्रमे समिधो यजति तनूनपातं यजतीत्येवमानुपूर्व्येण पठितानि प्रयाजोत्पत्तिवाक्यानि उदाहरणत्वेन धृतानि। नहि तत्र क्रमपठितानां याज्यामन्त्राणां सत्वे स्मारकापेक्षया विधिवाक्यानां स्मारकत्वकल्पनया तथा तत्पाठक्रमस्यानुष्ठानक्रमनियामकत्वं युक्तमाश्रयितुं यत्कर्मसंबन्धिद्रव्यदेवताप्रकाशकानां मन्त्राणामनुष्ठानकाले तत्कर्मसंबन्धिद्रव्यदेवताप्रकाशकत्वेनान्तरङ्गत्वात् तत्क्रमेणैवानुष्ठानक्रमस्य बलवत्त्वेन प्रसाधयिष्यमाणत्वेन मन्त्रपाठक्रम एवोदाहरणीयत्वात्। न चात्र याज्यामन्त्राणां विधिपाठक्रमापेक्षया अन्यादृशः क्रमोप्यस्ति तथात्वे तस्यैव बलवत्त्वेन तत्क्रमस्यैवापत्तौ ब्राह्मणवाक्यपाठक्रमप्रमाणकक्रमस्यैवासंभवापत्तेः।

**वस्तुतस्तु** तैत्तिरीयशाखायां स्पष्टं क्रमेणैवाम्नानबलात् **अभ्यासाधिकरणवार्तिके** क्रमविनियुक्तैर्वलिङ्गमन्त्रवर्णेत्यादिना ग्रन्थेन नवमे **तन्त्ररत्ने** समिधोऽग्न आज्यस्य व्यन्त्वित्या-

पाठोपि क्रमनियामकः अपेक्षितत्वात्। अत एव यत्र च न क्रमापेक्षा यथा साज्ञाय्यादौ एकप्रयोगविधिपरिग्रहेऽपि सम्प्रतिपन्नदेवताकत्वेन सहानुष्ठानात्। यत्र वा भिन्नप्रयोगविधिपरिग्रहः यथा तत्तत्काम्यकर्मणां, तत्र न पाठो नियामकः। तत्र तु स स्वाध्यायत्वसिद्ध्यर्थं एवोपयुज्यत इति द्रष्टव्यम् ॥ ४ ॥

---

(५)—प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ सर्वमिति चेत् ॥ ९ ॥ नाकृतत्वात् ॥ १० ॥ क्रत्वन्तरवदिति चेत् ॥ ११ ॥ नासमवायात् ॥ १२ ॥

एवं "सप्तदश प्राजापत्यान् पशूनालभते" इत्यादौ एकैकस्मिन् पशावुपाकरणादीनां पदार्थानामावर्तनीयानां पदार्थानुसमयस्य वक्ष्यमाणत्वात् आद्य उपाकरणपदार्थो येन क्रमेण कृतस्तेनैव क्रमेण नियोजनादिद्वितीयप्रभृतिपदार्थाः कर्तव्याः। अन्यथा प्रकृतिप्राप्तस्य उपाकरणनियोजनयोरव्यवहितानन्तर्यस्यौपदेशिकपशुसाहित्यानुरोधेन षोडशक्षणव्यवधा-

---

दिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैः देवता गुणत्वेन समर्प्यते इति ग्रन्थेन यथापेक्षितक्रमपाठो मन्त्राणां प्रदर्शित एवेति तत्क्रमेणैवात्र क्रमात् न ब्राह्मणपाठक्रमोदाहरणानि तद्वाक्यानि युक्तानि। किंतु यत्र मन्त्राम्नानं नास्ति यथा तूष्णीं विहितेषु होमेषु तत्रैव ब्राह्मणपाठक्रमोदाहरणत्वं युक्तमिति क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वादित्यधिकरणसूत्रगतं क्रत्वेकत्वे इति पदं एकप्रयोगविधिपरिगृहीतत्वपरं सत् भिन्नप्रयोगविधिपरिगृहीतमात्रस्यापवादकमिति न, किंतु क्रमाकाङ्क्षातात्पर्यकं सत् अनाकाङ्क्षितक्रमक्रतुक्रमापवादबोधकमित्यभिप्रेत्यापवादं दर्शयति— अत एव यत्रेति।

---

॥ प्रवृत्त्या तुल्यकालानाम् ॥

असन्निपातिनां प्रयाजादीनां तन्त्रानुष्ठेयसन्निपातिनामन्वाधानादीनां च प्रवृत्तिक्रमागोचरत्वं द्योतयितुमावर्तनीयानामित्युक्तम्। ये सन्निपातिनः पशुसंस्कारकत्वेन प्रतिपश्वावर्तनीयास्तेषां प्रवृत्तिक्रमविचारयोग्यत्वमिति भावः। वक्ष्यमाणत्वादिति। इहैवाध्याये द्वितीयपादाद्याधिकरणे इति शेषः। आद्य उपाकरणपदार्थ इति। "प्रजापतये त्वा जुष्ट-

नेऽप्यधिकक्षणव्यवधानापत्तेः। अत्र ह्युत्पत्तिवाक्ये, "वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति" इति प्रयोगवाक्ये च साङ्गानां सप्तदशयागानां साहित्यावगमादङ्गसाहित्यानुरोधेनैकैकाङ्गेन सप्तदशयागानां युगपदुपकर्तव्यत्वात्प्रधानवद्वितीयाङ्गेषु चैकेन कर्त्रा युगपदुपकारासम्भवादवश्यं षोडशक्षणव्यवधानेऽपि तदधिकव्यवधाने औपदेशिकसाहित्यस्यातिदेशिकानन्तर्यस्य च बाधस्स्पष्ट एव। अत एव केषुचित्पशुषु न्यूनक्षणव्यवधानमपि दोष एव। अतः पूर्वपदार्थक्रम एव प्रयोगविध्यवगतप्रत्यासत्त्यनुगृहीतः उत्तरपदार्थक्रमनियमे प्रमाणम्। अत्र पूर्वेत्युपलक्षणम्। उत्तरपदार्थप्रवृत्तिक्रमेणापि पूर्वपदार्थक्रमनियमस्य न्यायतौल्येन वक्ष्यमाणत्वात्।

---

मुपाकरोमि" इत्यादिमन्त्रेण देवतायै प्रतिश्रवणं कुर्वतो दर्भपवित्राभ्यां पशोः स्पर्शः उपाकरणपदार्थः। यूपे बन्धनं च नियोजनपदार्थः। यद्यपि साहित्यं नाम सर्वत्र एककालावच्छिन्नत्वं तथापि एककर्तृकबहुपदार्थानुष्ठाने तेषां तदसंभवात् अव्यवहितानन्तर्यरूपक्रमेण यावता कालेन शक्त्या अनुष्ठानं तावत्कालमादाय एककालकल्पनया अव्यवहितानन्तर्यरूपेणैव साहित्यं निर्वहणीयम्। तच्च दैक्षे पशौ प्रयोगविधिना पश्वङ्गानामुपाकरणनियोजनादीनां मिथो विहितप्राणिद्रव्यकत्वसादृश्येन तद्विकारे सवनीयेऽतिदेशेन प्राप्तं; तस्माच्च सुत्याकालीनत्वसामान्यात् ऐकादशिनेषु पशुषु तद्विकारेषु प्राप्तं तेभ्यश्च गणत्वसामान्येन तद्विकारेषु प्राजापत्यपशुषु प्राप्तं; तेषु हि सप्तदश प्राजापत्यान् पशूनालभत इत्युत्पत्तिवाक्यगतसंख्यया कर्मभेदात् प्रतिपशु यागभेदेनातिदेशानां भेदात् तत्तत्पशूपाकरणनियोजनादीनामव्यवहितानन्तर्यं एवं क्रमेण प्राप्तमिति द्योतयितुं प्रकृतिविशेषमनिर्दिश्यैव सामान्यतः प्रकृतिप्राप्तस्येत्युक्तम्। साङ्गानां सप्तदशयागानामिति। उत्पत्तिवाक्ये च एकपदोपादानेन साहित्यप्रतीतेः अधिकरणान्त एव वक्ष्यमाणत्वात प्रधानयागानां साहित्यप्रतीतेः प्रयोगवाक्येऽपि प्रधानानां तत्प्रतीतावपि तृतीयानिर्देशबलात् साङ्गानामपि तेषां तत्प्रतीतेः प्रधानानां परस्परं, प्रधानानामङ्गानां च परस्परं, अङ्गानां च परस्परं साहित्यमवगतमिति भावः। प्रधानयागेषु संप्रतिपन्नदेवताकत्वेन मिथः साहित्योपपत्तिसूचनेन तदनुपपत्त्यभावं दर्शयितुं अङ्गेषु चेत्युक्तम्। पूर्वपदार्थक्रम एवेति। यस्मिन्नुद्देश्ये यत्पूर्वाङ्गानुष्ठानं कृतं तदेव च येन क्रमेण उत्तरत्र प्रधानेऽपि आचरितं स पूर्वपदार्थक्रमः। तदुद्देश्यप्रभृतिकयावत्प्रधानेषु द्वितीयाङ्गभूतपदार्थानुष्ठानक्रमं प्रति नियामक इति भावः। वक्ष्यमाणत्वादिति। अत्रैव मुख्यक्रमाधिकरण इति शेषः। ननु यदि प्रवृत्तिक्रमस्वरूपं श्रुत्यादिक्रमवत् केनचित्प्रयोगविधिप्रवृत्तेः पूर्वमङ्गत्वेन ज्ञातं चेत् तदा प्रयोगविधिना तदनुष्ठानं बोधनीयम्। न च प्रवृत्तिक्रमबोधः प्राक्संभवति। अनुष्ठानरूप-

अयं च **प्रवृत्तिक्रमोऽनुष्ठानकालीनोपि प्रयोगविधिप्रवृत्तेः पूर्वमपेक्षावशादवगम्यमान-स्तदवगम्यप्रत्यासत्त्यनुगृहीतः पदार्थान्तरक्रमं बोधयति। ततश्च तद्विनियोजकवाक्यकल्पनया तस्याङ्गत्वेऽवधारिते प्रयोगविधिना प्रयोगविधानम्। तदुत्तरं च प्रयोगविधेः** पर्यवसान-मिति **ध्येयम्।**

**न चेदं सर्वं साहित्यानुरोधेन स्यात्, तत्रैव च प्रमाणाभावः बोधकशब्दाभावादिति वाच्यं, एकेन पदेनानेकोपस्थितौ क्रियान्वये एककालावच्छिन्नत्वरूपसाहित्यस्यानुभूयमानस्य शाब्दत्वसिद्ध्यर्थं लक्षणाङ्गीकारात्। प्रतीयते हि शतावधानवांश्चैत्रः, पृथिव्यां राजानो बहव इत्यादौ बहुत्वावच्छिन्नानामवधानादीनां चैत्राद्यन्वयोऽसति बाधके एककाला-वच्छिन्नः। अतः प्राजापत्यपदादौ तल्लक्षणेत्यपि ध्येयम्॥ ५॥**

---

## (६)—स्थानाच्चोत्पत्तिसंयोगात्॥ १३॥

---

प्रवृत्तिनियम्यक्रमस्य अनुष्ठानप्राक्कालीनत्वानुपपत्तेश्चान्योन्याश्रयापत्तिरित्याशङ्कानिरासायाह— **अयं चेति।** यदैव हि सप्तदश प्राजापत्यानित्युत्पत्तिवाक्येन सप्तदशयागकरणकभावना विहिताः तदैव तासां कथंभावाकांक्षायां प्रकृतिवद्वाक्यकल्पनया सर्वेऽपि प्रकृतिदृष्टाः पदार्थाः तच्छामकत्वेनान्वीयन्ते। तदा च प्रकृतावेकस्मिन् पशौ उपाकरणानुष्ठानाव्यवधानेन नियोजनादिकमङ्गजातं प्रयोगविध्यवगतप्रत्यासत्त्यनुग्रहार्थं एकाधिकरणवृत्तित्वेनानुष्ठितमासीत् तदैव एतेषु यागपशुषु तथैवानुष्ठेयमिति उपाकरणानुष्ठानक्रमपूर्वकनियोजनाद्यनुष्ठानक्रमस्वरूप-मुत्पत्तिवाक्येभ्य एव स्ववाक्यार्थदशायामवगम्यते। ततश्च उपाकरणानुष्ठानक्रमपूर्वकमनुष्ठान-क्रमं नियोजनादिषु कुर्यादिति वाक्यकल्पनया नियोजनाद्यङ्गत्वेऽवगते प्रयोगविधिना तदनुष्ठान-बोधनं सुलभमेवेति भावः। अपेक्षावशादुत्पत्तिवाक्यगतकथंभावापेक्षावशादित्यर्थः। **तदवगम्यप्रत्यासत्तीति।** प्रयोगविध्यवगताङ्गप्रत्यासत्तीत्यर्थः। **पर्यवसानमिति।** इतराङ्ग-साहित्येन प्रयोगविधिना प्रधानप्रयोगविधौ प्रवृत्तिक्रमरूपाङ्गज्ञाने तत्साहित्येन कथं प्रधान-प्रयोगविधानं कर्तुं शक्यमित्येवमनुपपत्तिप्राप्तौ पर्यवसानं नेत्यर्थः॥

---

**स्थानं च क्रमनियमे प्रमाणम्।** तच्च **क्लृप्तक्रमकपूर्वपदार्थोपस्थितिः। सा चैकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणमिति न्यायेनोत्तरपदार्थस्य झडित्युपस्थापिका। अतस्तत्साहित्येन विहितानामन्येषां पदार्थानां तदनन्तरानुष्ठानसिद्धिः।** यथा **प्रकृतौ अग्नीषोमप्रणयनानन्तरम्**औपवसथ्याहे **दैक्षः पशुः, आश्विनग्रहग्रहणोत्तरकालं च सौत्याहे सवनीयः, उदयनीयानन्तरं सुत्योत्तरमनूबन्ध्यः।** साद्यस्के **च सर्वमग्नीषोमप्रणयनादि सौत्येऽह्न्येव क्रियते।** तद्वाचनिकातिदेशाच्छ्येनेऽपि। **तत्र च "सह पशूनालभते" इति श्रुतम्। तच्च** प्रधानेनात्यन्त**प्रत्यासत्तिलाभादाश्विनोत्तरमेवेति स्थितं तृतीये। अतश्चाश्विनस्योपस्थापकस्य सत्त्वात्सवनीयस्यैव स्थानात्प्रथमत उपाकरणं न तु दैक्षस्य, तदुपस्थापकस्य**

---

॥ **स्थानाच्चोत्पत्तिसंयोगात्** ॥

पदार्थैदमर्थ्यश्रवणानुष्ठानसादेश्यादिपाठापेक्षया भिन्नत्वेन इह स्थानस्वरूपं दर्शयति— **तच्चेति।** योऽनुष्ठेय उत्तरः पदार्थः तेन सह क्लृप्तक्रमको यः पूर्वतनः पदार्थः तदुपस्थितिः। तत्र क्लृप्तक्रमेणेति विशेषणं झटित्युत्तरपदार्थोपस्थित्युपोद्बलकम्। **तत्साहित्येन** उत्तरपदार्थसाहित्येन विहितानामुपाकरणादीनामित्यर्थः। ज्योतिष्टोमे त्रयः पशुयागाः यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति वाक्येन विहितः अग्नीषोमीयपशुयागः क्रयसन्निधावाम्नात एकः। अपरस्सवनीयः। तृतीयः आनुबन्ध्यः। तत्र तेषां भिन्नदेशत्वमाह— **यथेत्यादिना। औपवसथ्याहेति।** स एष औपवसथ्याहन्यालब्धव्य इति वाक्यात्। **साद्यस्क इति।** साद्यस्को नाम सोमयागविशेषः। स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः। तत्रातिदेशप्राप्तमग्नेः शालामुखीयस्य आग्नीध्रीये धिष्णिये सोमस्य चासन्दीस्थस्य दक्षिणहविर्धाने निधानार्थानयनरूपाग्नीषोमप्रणयनाद्यङ्गपूर्वकं पशुयागत्रयमपीत्यर्थः। **तद्वाचनिकेति।** वाचनिकसाद्यस्कातिदेशादित्यर्थः। **प्रधानेनात्यन्तमिति।** सुत्यादिवसे हि सोमयागस्य प्रधानस्यानुष्ठानं, तस्मिन्नेव च दिने आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति वचनादाग्नेयस्यानुानम्। तत्राग्नेयसवनीयदेशे सहानुष्ठाने अग्नीषोमीयानुबन्ध्ययोः सोमयागप्रत्यासत्तिः लभ्यते। एतच्च स्थानातिक्रमसाम्यस्याप्युपलक्षणम्। सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्थानातिक्रममात्रं भवति। अग्नीषोमीयस्यानूबन्ध्यस्य वा देशे सवनीयस्यानुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रेऽपि अग्नीषोमीयदेशे अनूबन्ध्यस्यानुष्ठाने स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च अनूबन्ध्यदेशे अग्नीषोमीयानुष्ठानेऽपि स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च अधिक आपद्यते। अतस्सवनीयदेश एव

भ्रष्टत्वेन **स्थानाभावात्**। प्राकृतपाठस्य च **व्यवधायकपदार्थान्तरसत्त्वेन नियामकत्वाभावात्। अत एवोपाकरणोत्तरभाविनियोजनादिपदार्थेषु प्रधानसहितेष्वपि** प्रवृत्त्यैव **क्रमसिद्धेर्न स्थानोदाहरणता। प्रधाने** स्थानाभावाच **नोपाकरणे मुख्यक्रमाशङ्का। अतस्स्थानादेव सवनी-**

---

साहित्यं; स चाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोतीति वाक्याम्नातः आश्विनग्रहग्रहणोत्तरकालरूप इति **तत्काले च लिङ्गदर्शनादिति** तृतीयोपान्त्याधिकरणे हृतिनवनीताङ्गत्वविचारप्रसङ्गेन भाष्यादौ स्थितमित्यर्थः। **भ्रष्टत्वेनेति**। अग्नीषोमप्रणयनं हि अग्नीषोमीयस्योपस्थापकं; तत्तु सहालंभवचनेन दूरापास्तमिति भावः। **प्राकृतपाठस्य** अग्नीषोमप्रणयनोत्तरपाठस्य। पदार्थान्तरं च सुत्यासंबन्धि। **प्रवृत्त्यैवेति**। उपाकरणनियोजनादीनां परस्परसाहित्यानुरोधेन येन क्रमेणोपाकरणं तेनैव क्रमेण नियोजनादि कार्यं स्वस्वोपाकरणादीनां स्वीयस्वीयप्रधानानां च साहित्यानुरोधेन येन क्रमेण उपाकरणमादौ तेनैव क्रमेण तत्प्रधानानुष्ठानमिति प्रधानसहितोपाकरणादिपदार्थेषु प्रवृत्तिक्रमो द्रष्टव्यः। अत एवाग्नेयस्यैव पशोः प्रथममुपाकरणमिति **वार्तिके** केवलोपाकरणग्रहणप्रयोजनं दर्शयता **तन्त्ररत्नकृता** "उपाकरणात् प्राञ्चः पदार्थाः सहानुष्ठीयमानेषु पशुषु तन्त्रेणैवोपकुर्वन्तीति न तत्र चिन्ता। उपरितनेष्वपि पदार्थेषु उपाकरणक्रम एव पूर्वाधिकरणन्यायात् सिद्ध इति न तत्रापि विचारावतारः। उपाकरणमात्रस्य तु क्रमश्चिन्त्यत इति उपाकरणग्रहणं कृतं" इति ग्रन्थे मात्रपदादुपाकरणोत्तरभाविपदार्थान्तर्गतप्रधानेष्वपि प्रवृत्तिक्रमो दर्शितः। **एतेन** यत् **शास्त्रदीपिकायां** मुख्यक्रमाधिकरणे अत्र प्रधानप्रत्यासत्तिः अङ्गानां नियमकारणं, प्रवृत्तिक्रमे त्वङ्गानां मिथः प्रत्यासत्तिः इत्येतावान् विशेष इति ग्रन्थे **मिथोग्रहणं** कृतम्, तत्प्राजापत्यपशुषु उपाकरणनियोजनयोः अङ्गभूतयोरेव प्रत्यासत्त्यनुग्रहलाभनिमित्तप्रवृत्तिक्रमोपपादनमात्राभिप्रायेण द्रष्टव्यम्।

**वस्तुतस्तु** यदङ्गप्रत्यासत्यनुरोधेन उत्तरपदार्थमात्रस्यानुष्ठानं तदङ्गप्रवृत्तिः तेषां क्रमे नियामिका। यत्प्रधानप्रत्यासत्त्यनुरोधेन तत्प्राचीनाङ्गभूतपदार्थानुष्ठानं तत्प्रधानक्रमस्तेषां अनुष्ठानक्रमनियामकः इत्येव प्रवृत्तिमुख्यक्रमस्वरूपमादौ सवनीयस्यानुष्ठानक्रमसिद्ध्यभिप्रायकं निरूपयिष्यते **पूज्यपादैः** मुख्यक्रमाधिकरणे। अतस्सवनीयस्य इतरपश्वपेक्षया प्रथमानुष्ठानं प्रवृत्तिक्रमादेवेति भावः। **स्थानाभावादिति। अयं भावः**—यदि प्रधानानां क्रमः कॢप्तः स्यात् तदा तदनुरोधेन उपाकरणाद्यङ्गानां क्रमो भवेत् न त्वेतदस्ति साहित्यवचनेन सहानुष्ठानबोधनेऽपि तेषां परस्परं पौर्वापर्यस्योपाकरणादिक्रमं विनाऽनवगतत्वात्।

यस्य प्रथममुपाकरणं, तदुत्तरं दैक्षस्य, तदुत्तरमनूबन्ध्यस्य, प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात्। अत्रापि स्थानावगतस्य क्रमस्य कल्पितवाक्येन विनियोगेऽवगते प्रयोगविधिना प्रयोगविधानम्॥ ६॥

---

## (७)—मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्॥ १४॥

मुख्यक्रमोऽप्यङ्गक्रमनियमे प्रमाणम्। मुख्यत्वं च प्रधानत्वम्। यत्र ह्यनेकेषां साङ्गानां प्रधानानां सहकर्तव्यता, तत्र प्रयोगविधिनाऽङ्गप्रधानयोस्साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वीकारेऽपि तदधिकव्यवधाने प्रमाणा-

---

न च तत्र स्थानक्रमाशङ्का। आदौ सवनीयाङ्गानि ततः प्रकृतिदृष्टपौर्वापर्यमात्रेणाग्नीषोमीयस्य ततः आनुबन्ध्यस्येत्येवं अङ्गानुष्ठानोत्तरं प्रथमप्रधानसवनीयानुष्ठाने तस्मात् प्राचीनानामनुबन्ध्याद्यङ्गभूतानां सवनीयस्य च क्लृप्तक्रमत्वाभावेन क्लृप्तक्रमकपूर्वपदार्थोपस्थितिलक्षणस्य तस्यासंभवात्। एतेन यत् न्यायप्रकाशे स्थानक्रमनिरूपणप्रस्तावे सवनीयाग्नीषोमीयानूबन्ध्यरूपप्रधानत्रयस्य स्थानक्रमोदाहरणत्वप्रदर्शनं कृतं तन्निर्युक्तिकत्वात् तन्त्ररत्नशास्त्रदीपिकाविरोधाच्चोपेक्ष्यम्। अत उपाकरणक्रमं विना न प्रधानक्रमावगतिः पूर्वमिति। यद्यपि दैक्षानूबन्ध्ययोः नान्यदङ्गमुपस्थापकं येन सवनीयानन्तरं तदनुष्ठानं लभ्येत तथापि पशुत्रयसाहित्यरूपसंबन्धदर्शनेन संबन्धिनि सवनीये स्मृते तत्संबन्धिस्मरणमेव इतरसंबन्धिस्मारकमिति तदीयपशूपाकरणोपस्थितौ क्रमनियमं दर्शयति—तदुत्तरमिति। अस्तु नाम स्थानात् सवनीयस्य प्रथममुपाकरणमितरयोस्तु नियमकारणाभावादनियम इति न्यायसुधाकृन्मतमयुक्तमिति सूचयन् यद्यपि भिन्नकालत्वादार्थिकमग्नीषोमीयानूबन्ध्ययोः पौर्वापर्यं न चार्थिकं चोदकः प्रतिदिशति विकृतौ तथापि सन्देहे "अणुरपि विशेषोऽध्यवसायकर" इति न्यायेन पूर्वदृष्टत्वमेवात्र निर्णायकमिति पार्थसारथिमतमङ्गीकुर्वन्नाह—प्रकृतिदृष्टेति।

---

॥ मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्॥

मुख्यक्रमोऽपीति। अपिना अङ्गक्रमनियमे प्रवृत्तिक्रमः कारणत्वेन प्रागुपपादितः समुच्चीयते। यथा प्रवृत्तिक्रमः तत्क्रमनियमे प्रमाणं तथा मुख्यक्रमोपीत्यर्थः। मुख्यत्वमाद्यत्वव्यावृत्तिफलकमुपपादयति—मुख्यत्वं चेति। अङ्गनिरूपितेति। प्रवृत्तिक्रमे यथाङ्गनिरूपि-

**भावात् प्रधानप्रत्यासत्त्यनुग्रहाय, मुख्यक्रमेणैवाङ्गे क्रमनियमः। अत एव प्रवृत्तौ** अङ्गनिरूपित**प्रत्यासत्त्यनुग्रहो बीजं, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रहो बीजमिति तयोर्भेदो,** वैपरीत्येन **बलाबलं चेति वक्ष्यते।**

**मुख्यक्रमोदाहरणं च "सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वती सारस्वांश्च" इति वाक्यविहितप्रधानद्वयक्रमात्तन्निर्वापक्रमः। अत्र हि द्रव्यसामानाधिकरण्याभावेऽपि** सम्बन्धसामान्यवाचिन**स्तद्धितस्य 'दैव्यं' इति वाक्यशेषाद्देवतापरत्वोपपत्तेः** द्विवचनेन **देवताकल्पितयागद्वयं विधीयते।** अत एव **न यागद्वयेऽपि सरस्वानेव देवता। अर्थवादस्य विरूपैकशेषतात्पर्यग्राहकत्वेन सरस्वतीसरस्वद्देवत्यत्वावगमात्। न चैवमपि सरस्वती च सरस्वांश्च सरस्वन्तौ, सरस्वन्तौ देवते ययोस्ते इति व्युत्पत्त्या एकैकस्य द्विदेवत्यत्वं किं न स्यादिति वाच्यं, एकैकदेवत्ययाज्याऽनुवाक्यापाठेनैकैकदेवत्यत्वा-**

---

ता अङ्गेषु प्रत्यासत्तिः बीजं तथा प्रधानेपि सा बीजमिति अव्यवहितपूर्वाधिकरणे सूचितमित्यतः सामान्यतोऽङ्गनिरूपितप्रत्यासत्यनुग्रह इत्युक्तम्। **वैपरीत्येनेति।** सूत्रकृता प्रवृत्तिक्रमानन्तरं स्थानक्रममुक्त्वा मुख्यक्रम इत्येवं क्रमो दर्शितः। बलाबलन्तूत्तरोत्तरप्रमाणापेक्षया पूर्वपूर्वस्य प्राबल्यमिति वक्ष्यते तदा प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य प्राबल्यं भवत्यतः सूत्रकारोक्तक्रमापेक्षया क्रमवैपरीत्येनेत्यर्थः। **संबन्धसामान्यवाचिन इति।** देवतातद्धितस्य सूक्तहविषोरिति वचनेन द्रव्यसामानाधिकरण्य एव नियमितत्वात् इति भावः। **दैव्यमिति।** यद्यपि दैव्यमिति तद्धितेनापि देवसंबन्धित्वमात्रं सरस्वतीसरस्वन्मिथुनस्यावगतं नैतावता मिथुनस्य यागनिरूपितदेवतात्वावगतिः तथापि मिथुनस्य देवसंबन्धित्वेनैव देवत्वमवगतं ततश्च सरस्वन्तौ देवौ ययोस्ताविति विग्रहेण देवतात्वावगतिः। तेन भवत इत्यनेन यागो लक्ष्यत इति भावः। **द्विवचनेनेति।** संख्यया कर्मभेदादित्यर्थः। **वस्तुतस्तु** सारस्वतौ भवत इत्युत्पत्तिवाक्ये न देवता विधीयते येन तद्धितस्य देवतापरत्वाभावेऽपि कथंचित् देवतापरत्वमाश्रीयेतापि; किन्तु तत्तद्दैवत्ययाज्यानुवाक्यामन्त्रवर्णादेव देवताप्राप्तेः तत्प्रख्यन्यायेन सारस्वताविति पदं नामधेयमेवेति न काप्यनुपपत्तिः। यदि प्राजापत्ययागवत् संप्रतिपन्नदेवताकत्वं स्यात् तदा सान्नाय्यवत् सहानुष्ठानेन मुख्ययोः क्रमापेक्षाया एवाभावात् एकप्रयोगविधिपरिगृहीतत्वेपि नैव तत्क्रमेण क्रमोऽङ्गानां भवेदित्यतः संप्रतिपन्नदेवताकत्वाभावसाधनायोपक्रमः। **इति वाच्यमिति।** ततश्च संप्रतिपन्नदेवताकत्वं सिद्ध्यतीत्याशङ्कार्थः। **अत एवेति। अनियमप्रसक्ताविति। अत्रेदं प्रतिभाति। यद्यप्याग्नेयधर्माः** मुख्यक्रमात् सर्वेभ्य एवादौ, पश्चात् सान्नाय्यस्य कार्या इत्येवं प्राप्तं, **तथापि** सान्नाय्यधर्माणामा-

**वगतेः। अत एव प्राजापत्यवत्सम्प्रतिपन्नदेवताकत्वाभावेन मन्त्रपाठक्रमात्प्रधानक्रमे सति मुख्यक्रमेणैव तन्निर्वापयोः क्रमः॥**

**वस्तुतस्तु तुल्यन्यायतया पूर्वपदार्थप्रवृत्तेरिवोत्तरपदार्थप्रवृत्तेरपि पूर्वपदार्थक्रमनियामकत्वस्योक्तत्वात् प्रकृते च याज्याऽनुवाक्यादिरूपोत्तरपदार्थप्रवृत्त्यैव निर्वापक्रमोपपत्तेर्यद्यपि नेदं मुख्यक्रमस्यासङ्कीर्णमुदाहरणं, तथाऽपि दध्नः पूर्वं शाखाहरणादयो धर्माः पठिताः पश्चादाग्नेयस्य निर्वापादयः, याज्याऽनुवाक्ययोस्तु विपरीतः पाठः। ततश्च भूतभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणेऽनियमप्रसक्तौ मुख्यक्रमेणाग्नेयस्य प्रथम-**

---

तञ्चनादीनाग्नेयधर्मेभ्यः पूर्वं पाठात् अनुष्ठानवेलायां तदुपस्थितक्रमेणैव नैराकांक्ष्यात् पाठापेक्षया मुख्यक्रमदौर्बल्यस्य वक्ष्यमाणत्वात् दधिनिष्पत्तिप्रयोजनरूपार्थाच्च, सान्नाय्यधर्माणां केषाञ्चित् पूर्वमनुष्ठानम्। पश्चादेवाग्नेयधर्माणां तत्। ततश्च सान्नाय्यप्रवृत्तिक्रमेण परेद्युरपि पूर्वं सर्वेषामेव तद्धर्माणामनुष्ठानप्राप्तौ बलीयसा पाठक्रमेण यावत् पूर्वपठितानामेव तद्युक्तमिति पूर्वपठिताग्नेयधर्मोत्तरमेवावशिष्टानामनुष्ठानमित्यपि वक्ष्यते। प्रयाजशेषाभिघारणादौ तु भावियाज्यामन्त्रवर्णप्रवृत्तिक्रमापेक्षया भूतपदार्थप्रवृत्तिक्रमस्य शीघ्रमुपस्थितत्वेन आतिदेशिकक्लृप्तपाठक्रमेण नैराकाङ्क्ष्ये विकृतौ मुख्यक्रमाप्रसक्तिवत् तेनैव नैराकांक्ष्ये सति न भाविपदार्थप्रवृत्तिक्रमप्रसक्तिरिति कथमनियमप्रसक्तिः? अत एव सारस्वद्यागे अन्यतरस्याप्यपूर्वस्य कस्यचित् पाठाभावे बद्धक्रमकपदार्थाभावात् आतिदेशिकानां चातिदेशेन युगपत् प्राप्तौ क्रमाकाङ्क्षाया अविरतेः भाविपदार्थप्रवृत्तिक्रमेण तन्नियमोपपादनं युक्तमेव।

अत एवाग्नेयस्य पूर्वं निर्वापः पश्चादन्येषामिति मुख्यक्रमोदाहरणं **भाट्टभास्करे** प्रदर्शितमयुक्तम्। तत्र पूर्वेद्युः क्रियमाणकतिपयसान्नाय्यधर्मपाठानन्तरमेव परेद्युः क्रियमाणाग्नेयादिनिर्वापादिधर्मपाठात् तस्य प्रवृत्तिक्रमापेक्षया प्राबल्येन तत्कृतक्रमस्य सिद्धत्वेन मुख्यक्रमप्रयोजकत्वकल्पनानौचित्यात्।

यदपि **न्यायप्रकाशे** प्रवृत्तिक्रमापेक्षया मुख्यक्रमप्राबल्ये पूर्वेद्युः सान्नाय्यधर्मप्रवृत्त्यनन्तरं आग्नेयधर्मानुष्ठानक्रमस्योदाहरणत्वेन प्रदर्शनं कृतम्। **तदपि न** तत्र पाठेनैव प्रवृत्तिक्रमस्य बाधेन मुख्यक्रमाविषयत्वात्। एतदभिप्रेत्यैव **अवदानाभिघारणसादनेष्वानुपूर्व्यं प्रवृत्त्या स्यादि**त्यधिकरणसिद्धान्तसूत्रपाठानन्तरं **तन्त्ररत्नकृता** सत्यं दध्नः पाठात् पूर्वेद्युः केचन धर्माः पूर्वं क्रियन्ते। परेद्युस्तु पाठक्रमादेवाग्नेयस्य निर्वापादयः पूर्वं भवन्ति। एतावति विषये

**मभिघारणं पश्चाद्दध्न इत्युदाहरणं** वक्ष्यमाणं **द्रष्टव्यम्** ॥ ७ ॥

---

## (८)—प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥

**तदेवं षट् प्रमाणानि निरूपितानि । तेषां** चाद्याधिकरणोक्त**क्रमेण पारदौर्बल्यं द्रष्टव्यं**

---

मुख्यप्रवृत्तिकौ क्रमौ नावनरतः पाठक्रमस्य प्रत्यक्षत्वात् मुख्यप्रवृत्तिभ्यां बलीयस्त्वादित्युक्तम् **प्रकृतौ तु स्वशब्दत्वा**दित्यत्र । वेद्यासादने तु नास्ति पाठक्रमः कस्य पूर्वमासादनमित्युक्तम् ।

अस्माच्च ग्रन्थात् स्पष्टमेव पूर्वोदाहरणेषु पाठादिविषयेषु मुख्यप्रवृत्त्यविषयत्वं सूचितम् । वेद्यासादने तु नास्ति पाठक्रमः । कस्य पूर्वमासादनमिति ग्रन्थाच्च । यत्र सान्नाय्यधर्मप्रवृत्तेः बाधकः पाठादिर्नास्ति तत्रापवादाभावे उत्सर्गप्रवृत्तिरिति न्यायात् पूर्वं सान्नाय्यधर्मप्रवृत्त्यैव हविरासादनादिषु सान्नाय्यधर्मानुष्ठानं, पश्चात् आग्नेयादीनामिति क्रमः प्राप्तः । तद्बाधेन मुख्यक्रमेण एतादृशविषये अपूर्वः क्रमो बोध्यत इति सूचितं विस्तरेण वक्ष्यते । अतश्च भावियाज्यामन्त्रक्रमनिमित्तक्रममादाय क्रमानियमोपपादनं **पार्थसारथ्यादीनां** दुर्घटमेवेति दिक् ।

अत्र च यद्यपि यागद्वयस्य सहानुष्ठानेन दधिपयसोरभिघारणे न मुख्यक्रमस्य नियामकता, तथापि दध्नो वक्ष्यमाणरीत्या पूर्वावदानपक्षे भाव्यवदानप्रवृत्त्या भूतप्रवृत्तेरविरोधादेव दध्नः पूर्वं तत् । पयसः पूर्वावदानपक्षे तु भूतभाविप्रवृत्त्योर्विरोधे सति अनियमप्राप्तावपि दधियागब्राह्मणपाठक्रमस्यैव नियामकत्वात् तदापि दध्न एव पूर्वमित्यभिप्रेत्य दध्न इत्युक्तम् । **वक्ष्यमाणमिति** । इहैव चतुर्थपादद्वितीयाधिकरण इति शेषः ।

---

॥ **प्रकृतौ तु स्वशब्दत्वात्** ॥

**आद्याधिकरणेति** । एतदध्यायारम्भाधिकरणे “अवश्यंभाविनि कस्मिंश्चित् क्रमे नियामकानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि षट्प्रमाणाति निरूपयिष्यन्ते” इति ग्रन्थेन उपपादितप्रमाणक्रमेण इति भावः । तथा च निरालम्बनवादोपक्रमे **भट्टपादैः** ।

श्रुत्यर्थपठनस्थानमुख्यासत्तिप्रवृत्तिभिः ।
एकाख्यातगृहीतानां नियतः कर्मणां क्रमः ॥

न तु सूत्रक्रमेण । तत्र श्रुतिविरोधेऽर्थस्यैवान्यथाकल्पनाद्दौर्बल्यम्। अर्थविरोधे पाठस्य वक्ष्यते। एवं वैकृतपाठविरोधे प्राकृतस्थानबाधोऽपि। प्राकृतक्लृप्तस्थानविरोधे प्रधानप्रयोगविध्याश्रितमुख्यक्रमस्य दौर्बल्यं वक्ष्यत एव। मुख्यक्रमविरोधे प्रवृत्तिक्रमस्य दौर्बल्यमपि तथैव।

तदिह पाठक्रममुख्यक्रमयोर्बलाबलं चिन्त्यते — दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमादाज्यस्योपांशुयाजीयस्य प्रथमं निर्वापः। पश्चादग्नीषोमीयद्रव्यस्य। पाठक्रमात्तु विपरीतः क्रमः। तत्र पाठस्य स्मारकवाक्यवृत्तित्वेन प्रत्यक्षत्वाच्छीघ्रोपस्थितेश्च बलवत्त्वम्। मुख्यक्रमस्तु मुख्ययोरेव प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसम्पत्तये कल्प्यमानो विलम्बित इति दुर्बलः ॥ ८ ॥

---

(९)—मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशस्सः ॥

पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्, न तु ब्राह्मणपाठः, तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविधयैव क्रमनियामकत्वोक्तेर्मन्त्रसत्त्वे च तस्यैव स्मारकतया विधानोपयुक्तस्यासमर्थस्य च विधेरस्मारकत्वाभावान्मन्त्रपाठक्रम एव बलीयान्। तेन याज्याऽनुवाक्यादिमन्त्रपाठक्रमादाग्नेयस्य प्रथमानुष्ठानं, पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य। न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमं पश्चादुपांशुयाजोत्तरमाग्नेयस्य। अत एव तत्र पाठक्रमस्स्वाध्यायादावुपयुज्यते ॥ ९ ॥

---

इति। अयथासूत्रं एतान्यनुक्रम्य विरोधे पारदौर्बल्यं एतेषामपि पूर्ववत् इत्युक्तम्। न त्विति। सूत्रक्रमेण प्राबल्यदौर्बल्यविचारे मुख्यस्थानक्रमयोः परत्वं प्रवृत्तिक्रमस्य पूर्वत्वेन प्राबल्यं च स्यादित्यर्थः।

---

॥ मन्त्रतस्तुविरोधे स्यात् ॥

असमर्थस्येति। अनुष्ठानकालेऽप्रयुज्यमानत्वेन दूरस्थतया उपस्थापकाभावादिति शेषः।

---

(१०)—तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥ विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥

इदानीमातिदेशिकपाठक्रमापेक्षया विकृतौ मुख्यक्रमस्य बलाबलं चिन्त्यते। अध्वरकल्पायां "आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः," इति श्रुतम्। अत्र सत्यपि वाक्यत्रयेण यागत्रयविधाने "एतयैव यजेताभिचर्यमाणः" इति वाक्यान्तरेणाभिचारनिरासाख्यफलोद्देशेन सहितानां विधानात् त्रयाणामप्येकप्रयोगविधिपरिग्रहः। अत्राद्यस्य यागस्य द्विदेवत्यत्वौषधद्रव्यकत्वादैन्द्राग्नाग्नी-

---

॥ तद्वचनाद्विकृतौ ॥

यदि उत्पत्तिविधिष्वेव प्रयोगविधिः स्यात् तदा एकप्रयोगविधिपरिग्रहाभावे मुख्यक्रमस्यैवाभावात् बलाबलचिन्ता व्यर्था स्यात् इत्यतः एकप्रयोगविधिं साधयति—**अत्रेति**। **अभिचाराख्येति**। एतच्च भाष्यकारेण फलपदरहितमध्वरकल्पावाक्यमुदाहृतमिति तदेवोदाहरणत्वेनाङ्गीकृत्य "आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुः" इति **शास्त्रदीपिकायां** लिखितेन वाक्येन अभिचारे फले विनियोग इत्यभिप्रायेणोक्तम्। **वस्तुतस्तु** नेदं वाक्यद्वयं अध्वरकल्पाया उत्पत्तिविनियोगपरं तथात्वे अध्वरतुल्यताप्रतिपादकाध्वरकल्पेति व्यपदेशानुपपत्तेः। किंतु आहिताग्नेर्यजमानस्य सोमयागमकुर्वाणस्य यदि भ्रातृव्यः स्यात् तेन यदि सोमयागः क्रियते तदा स भ्रातृव्यस्सोमयागमकुर्वाणस्य वागादीन्द्रियाणि वीर्यं च स्वस्मिन्नाधत्ते अतः तत्संरक्षणार्थं सोमयागमकुर्वाणः अध्वरकल्पामिष्टिं निर्वपेत्। तदा चास्मिन् वागादीन्द्रियवीर्याधानपूर्वकं सौमिकप्रातस्सवनादिफलं भवतीत्यर्थके इन्द्रियं वीर्यं वृङ्क्ते भ्रातृव्यो यजमानः इत्यादितैत्तिरीयशाखापठितवाक्यसन्दर्भे मध्ये पठितैः "आग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातस्सवनस्याकाले सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुः आग्नावैष्णवमेकादशकपालं निर्वपेत् माध्यन्दिनस्य सवनस्याकाले सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुः आग्नावैष्णवन्द्वादशकपालं निर्वपेत् तृतीयसवनस्याकाले सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुः" इति नवभिर्वाक्यैः नवहविष्कनवयागात्मिकाध्वरकल्पाया उत्पत्तिः क्रियते, तस्यां च त्रयाणां त्रयाणां यागानां प्रातर्मध्यंदिनादिकालभेदेन प्रयोगत्रयभेदेऽपि प्रातरादिकालैक्यात् तस्मिंस्तस्मिन् कालेऽनुष्ठीयमानानां त्रयाणां त्रयाणां एकप्रयोगविधिपरिगृहीतत्वं तस्याश्च फलमिन्द्रियवीर्यादिसंरक्षणपूर्वकं सौमिकप्रातस्सवनादिफलप्राप्तिरूपं **रात्रिसत्रन्यायेनार्थवादिकमेव**।

षोमीयान्यतरविध्यन्तः। केचित् समानाक्षरतद्धितान्तपदकत्वसादृश्यादग्नीषोमीयस्यैवेति वदन्ति। द्वितीयस्याज्यद्रव्यकत्वादुपांशुयाजविध्यन्तः। तृतीये एकदेवताकत्वादौषध-द्रव्यकत्वादाग्नेयविध्यन्तः। तत्राज्यद्रव्यकयागधर्मापेक्षया आग्नावैष्णवस्य धर्माः आति-देशिकपाठमुख्यक्रमयोरविरोधादेव प्रथमतः कार्याः, बार्हस्पत्यस्य तु मुख्यक्रमात्पश्चात्कार्याः उतातिदेशिकपाठक्रमात्पूर्वमिति चिन्तायाम्—मुख्यक्रमस्यौपदेशिकप्रयोगविध्युन्नीतत्वेनौप-देशिकत्वात्सत्यप्यतिदेशोत्तरकालकत्वे शरादिवद्बाधोपपत्तेर्मुख्यक्रमस्य बलवत्त्वमिति प्राप्ते—

प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वाच्छरन्यायानुपपत्तेः कल्प-नायां चापेक्षाया मूलत्वेन प्रयोगविध्युपजीव्यप्राथमिकातिदेशप्रापितपाठक्रमेणैवाकाङ्क्षाया उच्छेदाच्छ्यनादावतिदेशिकनानाकर्तृकत्ववदातिदेशिकपाठक्रमप्रापितक्रमस्यैव बली-यस्त्वम्। तदेतत्सिद्धमपि चोदकस्य प्रयोगविध्यपेक्षया बलवत्त्वस्पष्टीकरणार्थं क्रमलक्षणे

अत एवाध्वरेण सोमेनेपन्न्यूनत्वात् अध्वरकल्पेति नामाप्युपपन्नं भवति। अत एव शास्त्रदीपिकालिखितं वाक्यमपि अभिचरदभिचर्यमाणकर्तृकेष्ट्यन्तरपरमेव। तथैव तैत्तिरीयशाखायां अध्वरकल्पाविधायकसन्दर्भात् पूर्वं पार्थक्येन पाठात् प्रतीतेः।

यद्यपि वा इष्ट्यन्तरविधायकमेवैतद्वाक्यं भाष्ये शास्त्रदीपिकायां चोदाहृतं तावतापि प्रकृताधिकरणविचारोपपत्तेः इत्यपि शक्यं वक्तुं तथापि अध्वरकल्पावाक्यत्वेन भाष्ये अधिकरणमालायां चैतद्वाक्योदाहरणमयुक्तं शाखान्तरीयवाक्यत्वेन कथंचित् भाष्यसमर्थने-ऽपि एतद्वाक्यविहिताया अभिचारोद्देशेन विनियोगाभिधानं पूज्यपादानां नातीव सगतमिति ध्येयम्। प्रथमस्त्वाग्नावैष्णवः द्विदैवत्यत्वादौषधद्रव्यकत्वात् अग्नीषोमीयं विकरोतीति तन्त्ररत्नकृता अग्नीषोमीयविकृतित्वं निश्चितं तन्मूलं प्रदर्शयति—केचिदिति। अग्नीषोमीयस्यैवेति। प्रकृतावपि व्रीहिनिर्वापानन्तरमेव आज्यनिर्वापः कृतः स्थितः। इहापि मुख्यक्रमेण तथैव क्रम इत्येवम-विरोधः। श्येनादाविति। श्येनयागे हि प्रधाने औद्गात्रमिति समाख्यया उद्गातृकर्तृकत्व-मेवायाति अतिदेशप्राप्ताङ्गेषु तु नानाकर्तृकत्वमतिदेशेन। तत्र यद्यपि प्रधानप्रयोगविधि-बोध्यं उद्गातृकर्तृकत्वं प्रधानाश्रयि तथापि अङ्गप्रधानयोरेकदेशकालकर्तृकत्वमौत्सर्गिकन्याय-सिद्धमिति कृत्वाऽङ्गेषु कल्प्यं, नानाकर्तृकत्वं तु कॢप्तं प्रबलप्रमाणातिदेशबोधितमिति नानाकर्तृकत्वेनैवातिदेशिकेन उद्गातृकर्तृकत्वस्य बाधः। तद्वदिहाप्यातिदेशिकस्यैव प्राबल्यमिति। तदेतत्सिद्धमिति। तदेतत् तार्तीयसप्तमपादान्त्याधिकरणसिद्धं चोदक-

**पुनरुच्यत इति मन्तव्यम्। न चैवमाग्नावैष्णववार्हस्पत्यधर्माणामपि** प्राकृतक्लृप्तक्रमेणै**वानुष्ठानापत्तेर्यागिकानां वैकृतमुख्यक्रमानुरोधेनाग्नावैष्णवस्य प्रथमं निर्वापाद्यनुष्ठानं विरुध्येतेति वाच्यं, प्रकृतौ हि यत्र पाठादिप्रमाणकः क्रमस्तत्र तत्पदार्थानन्तरं तत्पदार्थः कार्य इति** विशिष्यैव **वाक्यकल्पनं, मुख्यक्रमे तु लाघवात् धर्मिग्राहकप्रमाणबलाच्च आद्यप्रधानधर्मानन्तरमुत्तरप्रधानधर्मा अनुष्ठेया इत्येव कल्पनं,** न तु विशिष्य, **न वाऽऽग्नेयत्वादिप्रवेशः। अत एव विकृतावपूर्वाङ्गप्रवेशेऽपि न वाक्यान्तरकल्पनमित्यपि लाघवम्।**

एवं **प्रवृत्तिक्रमेऽपि क्लृप्तक्रमकाङ्गप्रवृत्तिक्रमेणेतरे पदार्थाः कर्तव्या इत्येव वाक्यकल्पनम्। अतश्च विकृतावपि आद्यप्रधानधर्मानुष्ठानोत्तरमेव द्वितीयप्रधानधर्मानुष्ठानमिति**

---

प्राबल्यमेकादशेऽपि व्यतिरेकेण प्रतिपादितम्। **तथाहि**—"अप्स्ववभृथेन चरन्तीत्यत्र अब्देशस्य प्रधानमात्राङ्गत्वेन साङ्गप्रधानाङ्गत्वबोधनेऽपि वा प्रयोगविध्याश्रितत्वेन दुर्बलत्वात् नातिदेशप्राप्ताहवनीयस्य प्रयाजाद्यङ्गेषु बाध इत्याशङ्क्य, अतिदेशापेक्षया प्रयोगविध्याश्रितमपि अङ्गं कल्प्यं चेत् दुर्बलं भवति यथा श्येने उद्गातृकर्तृकत्वादिकं; प्रकृते तु प्रत्यक्षोपदेशेन अब्देशस्य साङ्गप्रधाने विहितत्वात् कल्प्यातिदेशप्राप्ताहवनीयस्य बाध एवेति द्वितीयपादे। प्रकृतेपि तेन न्यायेन मुख्यक्रमस्य दौर्बल्यं च सिद्धमेवेति भावः। **प्राकृतक्लृप्तक्रमेणेति।** आग्नेयधर्मानुष्ठानानन्तरं अग्नीषोमीयधर्मानुष्ठानरूपो य आग्नेयाग्नीषोमीयधर्माणां मुख्यक्रमेण पाठक्रमेण वा प्राकृतः क्लृप्तः क्रमः तेनैवाग्नेयविकारस्यादौ धर्माः अनन्तरमग्नीषोमीयविकारस्य धर्माः इत्यापत्तिरित्यर्थः। **विशिष्यैवेति।** यद्यत्पदार्थानन्तरं यो यः पदार्थोऽनुष्ठीयते तत्तत्पदार्थानन्तरं स स पदार्थः कार्य इत्येवं विशेषरूपेणैव सर्वत्र पाठक्रमे वाक्यकल्पनम्। पाठस्य तत्तत्पदार्थगतत्वेन भिन्नत्वात्। ततश्चाग्नेयाग्नीषोमीयप्रधानाभावादेव न तदीयत्वेन धर्माणामिह पाठक्रमः प्राप्यते। व्रीह्याज्यधर्मयोः पाठकल्प्ये क्रमे तु नाग्नीषोमीयव्रीहिधर्मानन्तरमाज्यधर्माः कार्या इति वाक्यकल्पनं तेषामाग्नेयाग्नीषोमीयसाधारण्येन व्रीहिधर्मत्वेनैव विशेषरूपलाभसंभवात्। अन्यथा इहैवाग्नावैष्णवानामाम्नाने उत्तरयागद्वयस्यैवाम्नाने सति आज्यधर्मेष्वाग्नेयधर्मोत्तरत्वस्य आतिदेशिकपाठप्राप्तत्वाभावेन वार्हस्पत्यधर्माणामाज्यधर्मेभ्यः प्रागनुष्ठानानापत्तेरित्यर्थः। **न तु विशिष्येति।** आद्यप्रधाननिर्वापानन्तरमुत्तरप्रधाननिर्वाप इत्येवं न पदार्थविशेषोल्लेखः, न वा आद्याग्नेयप्रधाननिर्वापानन्तरमित्येवं प्रधानविशेषोल्लेखो वेति भावः। **एवमिति।** साद्यस्के स्थानेन सवनीयस्योपाकरणं, तस्य वाचनिकातिदेशः श्येनादिविकृतावस्ति। तत्र कदाचिदग्नीषोमीयमुपाकृत्य सवनीयमुपाकुर्यादिति विधिः स्यात्। तदा नियोजनादिषु अग्नीषो-

आग्नावैष्णवस्य प्रथमं निर्वापः पश्चाद्बार्हस्पत्यस्य। एवं साद्यस्के स्थानगम्यक्लृप्तक्रमकोपाकरणस्य वाचनिकातिदेशवत्यां कस्यांचिद्विकृतौ वाचनिकोपाकरणव्यत्यये व्यत्यस्तोपाकरणप्रवृत्त्यैव नियोजनादिक्रमः। एवं च केषांचिदेतादृशविषयद्वयेऽपि याज्ञिकाचारे मूलं चिन्त्यमिति प्रकृतिक्लृप्तक्रमेणैव सिद्धान्तकरणं मूलस्योक्तत्वादुपेक्ष्यम्। अत आतिदेशिकपाठविरोध एव मुख्यक्रमादेर्दौर्बल्यमिति स्थितम् ॥ १० ॥

---

(११)—विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ १९ ॥ अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात्प्रकृतिधर्मलोपस्स्यात् ॥ २० ॥ कालोत्कर्ष इति चेत् ॥ २१ ॥ न तत्सम्बन्धात् ॥ २२ ॥

चातुर्मास्येषु साकमेधस्तृतीयं पर्व। तत्र कार्तिक्यां पौर्णमास्यां काश्चिदिष्टयो विहिताः। तास्तु वक्ष्यमाणेनैव न्यायेन 'य इष्ट्या' इति वाक्यवशेनान्येष्टिवत् सद्यस्काला

---

मीयोपाकरणक्रम एव भवति। न तु प्रकृतौ सवनीयोपाकरणक्रमः नियोजने प्रवृत्त्या क्लृप्तस्थितः स ग्राह्य इत्यर्थः। प्रकाशकारैरेतादृशमुख्यक्रमप्रवृत्तिक्रमविपर्यद्वये प्राकृतमुख्यप्रवृत्तिक्रमाभ्यां क्रमनियमसिद्धान्तः कृतः तं दूषयति—एवं चेति। आतिदेशिकपाठविरोध एवेति। व्रीहिनिर्वापाद्यनन्तरमाज्यनिर्वापविधिपाठो य अतिदेशप्राप्तः, तत्र मुख्यक्रमाद्विकृतौ वैपरीत्ये प्राप्ते एव मुख्यक्रमस्य दौर्बल्यं; नतु प्रकृतिप्राप्तमुख्यक्रमापेक्षयापि वैकृतमुख्यक्रमस्य दौर्बल्यं येन बार्हस्पत्यस्याग्नेयविकारस्याग्नीषोमीयविकाराग्नावैष्णवधर्मापेक्षया धर्माणामादावनुष्ठानं स्यात्। न त्वेतदस्ति मुख्यक्रमस्य सर्वत्रैकरूप्यादिति भावः। अस्य चाधिकरणस्याक्षेपिकी संगतिः पूर्वतनाधिकरणे मुख्यक्रमस्य कल्प्यत्वेन क्लृप्तपाठक्रमापेक्षया दौर्बल्येऽपि विकृतावतिदेशकल्प्यपाठक्रमापेक्षया मुख्यक्रमस्य प्राबल्यसंभवात्।

---

॥ विकृतिः प्रकृतिधर्मत्वात् ॥

काश्चिदिष्टय इति। ताश्च क्रीडनेष्टिः, आग्नेयाद्यष्टौ महाहवींषि, पित्र्येष्टिः, त्र्यम्बकेष्टिः अदितीष्टिः इत्येवं पञ्चेष्टय इत्यर्थः। वक्ष्यमाणेनैवेति। इहैवाध्यायोपान्त्याधिकरण इति

**एवेत्यविवादम्। यानि तु "द्व्यहं साकमेधेन यजेत" इति वचनेन** तत्पूर्वदिनकर्तव्यानि **कर्माणि "अग्नये ऽनीकवते प्रातरष्टाकपालं निर्वपेत्, मरुद्भ्यस्सान्तपनेभ्यो मध्यंदिने चरुं, मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दुग्धे सायमोदनम्" इत्येवंविधवाक्यत्रयविहितानि, तानि किं द्व्यहकालानि उत सद्यस्कालानीति क्रमविशेषौपयिकतया सन्देहे—**

**प्रकृतिप्राप्तत्वात् द्व्यहकालत्वम्। न चात्रान्यविकृतीष्टिन्यायः, तत्र हि 'य इष्ट्या' इत्यादिवाक्येन साङ्गप्रयोगस्य पौर्णमास्यादिकालविधानादातिदेशिकद्व्यहकालत्वानुग्रहे च तद्बाधप्रसङ्गाद्युक्तं सद्यस्कालत्वम्। प्रकृते तु प्रातरादिकालकत्वस्य दिनद्वयेऽपि सम्भवात् द्व्यहकालत्वमेव। अतश्च त्रयोदश्यां प्रातरादिकालेषु त्रयाणामप्यन्वाधानं कृत्वा चतुर्दश्यां प्रातरादिकालेषु यागा इति द्रष्टव्यम्।** कर्ममध्ये **कर्मान्तरारम्भस्तु "द्व्यहं साकमधेन" इति वचनान्नैव दुष्यति।** यदि तु प्रसङ्गसिद्धिराशङ्क्येत, **तदाऽस्तु त्रयोदश्यां प्रातस्सङ्कद-**

---

शेषः। **तत्पूर्वदिनेति।** कार्तिकीपौर्णमासीपूर्वदिन इत्यर्थः। तेन पौर्णमास्यामनुष्ठेयत्वेनाप्रसक्तानामेषां य इष्ट्येति वाक्याविषयत्वादुदाहरणत्वमित्यभिप्रायः। **कर्ममध्ये इति। अयमर्थः। यद्यपि** अनीकवत्याः प्रातः काले त्रयोदश्यामन्वाधाने कृते तामिष्टिमसमाप्यैव मध्यंदिने-सान्तपनीयाया अन्वाधानारंभः, एवं गृहमेधीयान्वाधानस्यारंभः, 'यो वा अन्यस्य तन्त्रे वितते ऽन्यत् प्रतायते पापीयान् भवति" इत्येतच्छ्रुतिमूलकात् न कर्मणीति निषेधात् न संभवतीत्येकादश्यां प्रातरनीकवत्यन्वाधानं द्वादश्यां प्रातरनीकवतीष्टिप्रधानं तदहरेव मध्यन्दिने सान्तपनीयान्वाधानं त्रयोदश्यां मध्यन्दिने सान्तपनीयेष्टिप्रधानं तदहरेवानन्तरं गृहमेधीयान्वाधानं चतुर्दश्यां सायं गृहमेधीयेष्टिप्रधानमित्येवं वक्ष्यमाण**प्रकाशकार**मतरीत्या द्वैयहकल्पनमुचितं, **तथापि** द्व्यहं साकमेधेन यजेतेति वचनेन द्वैयहकालपूर्वपक्षे साङ्गप्रधाने द्व्यहकालत्वस्य विधेरसंमतत्वात् प्रधानमात्र एव द्व्यहकालत्वं विधेयं; तत् यदि प्रधानान्यपि कानिचित् द्वादश्यादिषु क्रियन्ते तदा द्व्यहकालत्वासंभवकृतः तद्वचनबाधः स्फुट एव। अतो द्व्यहं साकमेधेनेति विधिः अनीकवत्यादीनां दिनत्रयसाध्यपृथक्प्रयोगत्रयेण प्रकृतिप्राप्तद्वैयहकालानुग्रहं नानुमन्यते। किंतु कर्ममध्ये कर्मान्तरारम्भेणापि त्रयोदश्यां तत्तत्कालेषु अन्वाधानत्रयं कृत्वा चतुर्दश्यां प्रधानत्रयानुष्ठानेनैव तदनुमन्यते। अत एव सिद्धान्ते साकमेधेनेति तृतीयाश्रुत्या साङ्गस्यापि द्व्यहकालताप्रतीतेः अन्वाधानाद्यङ्गसहितप्रधानत्रयमपि चतुर्दश्यामेव कर्तव्यमिति पूर्वपक्षनिराकरणकोटिमभिप्रेत्य अन्ते भाष्यकृता अपिच द्व्यहं साकमेधैरिति श्रूयते तत सद्यस्कालासूपपद्यत इत्यभिहितमिति। **यदि तु प्रसङ्गसिद्धिरिति।** यदि प्रसङ्गसिद्धिस्तदा अनीकवत्यङ्गभूतान्वाधानेनैव सान्तपनीयाद्यु-

वान्वाधाय चतुर्दश्यां प्रातरादिकालेषु यागाः। अङ्गानुष्ठानं तु पूर्वाङ्गानामनीकवत्या सह, उत्तराङ्गानां सान्तपनीयया। गृहमेधीयस्य त्वपूर्वत्वादेव नाङ्गापेक्षा। अन्वाधानं त्वाज्यभागार्थमिति द्रष्टव्यम्।

---

पकारसिद्धेः मध्ये कर्मणि न कर्मान्तरारंभ इति भावः। यदा तु अन्वाधानजन्योपकारस्य गृहमेधीयप्रधानापूर्वनाश्यत्वात् तावत्पर्यन्तं सत्वं तदा प्रयाजाद्यङ्गोपकारस्यापि तावत्पर्यन्तं सत्वस्य वक्तव्यत्वात् तेषामपि प्रसङ्गेनानुष्ठानमित्याह—अङ्गानुष्ठानमिति। तुशब्दसूचितास्वारस्यबीजं त्वित्थं—यदि द्वादशिकन्यायेन अग्निधारणार्थमेवान्वाधानं तथापि अनीकवत्यर्थकृतान्वाधानजन्योपकारस्य द्वितीयदिवसे प्रातः क्रियमाणानीकवत्युत्पत्त्यपूर्वोत्पत्त्यनन्तरमेव नाशात् सान्तपनीयाया विततोपकारमध्ये अप्रवेशात् कथं प्रसङ्गः? न वा तन्त्रता, प्रातरादिकालेषु अन्वाधानानुष्ठानेन द्व्यहकालत्वमित्येतत् पूर्वपक्षिमतेऽपि प्रातरादिकालानां साङ्गप्रधानाङ्गत्वेन अन्वाधानकालस्य प्रातर्मध्यन्दिनरूपत्वेन भेदात् सहानुष्ठानानुपपत्तेः।

एतेन गृहमेधीयाज्यभागार्थान्वाधाने कृते तदन्वाधानजन्योपकारस्य गृहमेधीयपर्यन्तं सत्वात् तन्मध्यपतितसान्तपन्यनीकवत्योरपि तस्य प्रसगात् सिद्धिरित्यप्यपास्तं दीक्षाकालविहितसोमाङ्गभूतजागरणेन अतिदेशप्राप्तोपसद्व्यहकालीनप्रायणीयाद्यङ्गभूतजागरणस्य प्रसङ्गसिद्ध्यभाववत् इहापि भिन्नकालीनत्वेन तदनुपपत्तेः। अतो न प्रसङ्गसिद्धिराश्रयितुं युक्ता।

कथं तर्हि कर्ममध्ये कर्मान्तरारम्भनिषेधे विद्यमाने प्रसङ्गसिद्धेश्च दुरुपपादत्वे त्रयोदश्यां प्रातस्सकृदेवान्वाधायेत्युपपादितप्रकारान्तरेण पूर्वपक्षसिद्धिरिति। उच्यते। तृतीयाद्यश्रवणेन प्रातरादिकालाः प्रधानमात्राङ्गं अन्वाधाने च नैव तत्कालापेक्षेति गृहमेधीयाज्यभागार्थान्वाधानेनैव इतरान्वाधानस्य प्रसङ्गः। गृहमेधीये चाज्यभागातिरिक्ताङ्गपरिसंख्यानेन प्रधानार्थमन्वाधानाद्यङ्गानपेक्षणेऽपि तदङ्गाज्यभागार्थापेक्षितान्वाधानं च दैव कर्मत्वात् पूर्वाह्णे कर्तव्यं सत् प्रातरेव कर्तव्यमित्यभिप्रायेण त्रयोदश्यां प्रातः सकृदेवान्वाधायेति प्रातः कालमात्रपरा पूज्यपादानामुक्तिः न तु प्रातःकालस्य प्रधानविधिनाङ्गेष्वपि विधानमित्यभिप्रायेण। एवं च प्रधानपूर्वदिने तन्त्रेणान्वाधानं सर्वेषाम्।

अथवा साङ्गसोमार्थप्रणयनोत्तरकालीनसमिन्धनेन दीक्षणीयाद्यङ्गभूतसमिन्धनस्येव गृहमेधीयाज्यभागार्थान्वाधानेन इतरान्वाधानस्य प्रसङ्गसिद्धिरिति युक्तमेव द्वैयहकाल्यम्।

---

1. A. पूर्वपक्षवादि

केचित्तु एकादशीप्रभृति द्व्यहकालं पृथक्प्रयोगमिष्टित्रयं पूर्वपक्षे कर्तव्यमिति वदन्ति। तेषां 'द्व्यहं साकमेधेन' इति वचनानुपपत्तिरिति प्राप्ते—

एकस्मिन् प्रातरादिकाले विहितस्य साङ्गतत्तत्प्रयोगस्य द्व्यहकालत्वपक्षे औपदेशिककालैकत्वबाधापत्तेस्सद्यस्कालत्वम्। न च सायंप्रातश्शब्दयोरव्ययत्वेनैकवचनान्तत्वे प्रमाणाभावः, एकवचनान्तमध्यंदिनपदप्रायपाठादेवैकवचनान्तत्वनिर्णयोपपत्तेः। 'द्व्यहं साकमेधेन' इति साङ्गस्यैव द्व्यहकालत्वश्रुतेश्च। अतश्च विशेषणस्यैकत्वस्य विवक्षितत्वात्सद्यस्काला एवैता इष्टयः ॥ ११ ॥

---

(१२)—अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥ तदादि वाऽभिसम्बन्धात्तदन्तमपकर्षे स्यात् ॥ २४ ॥

दैक्षे पशौ प्रकृतितो हविरासादनोत्तरभाविनां प्रयाजानामपकर्षः "तिष्ठन्तं पशुं प्रयजन्ति" इति वचनेन श्रुतः। तथा सवनीये हविरुद्वासनोत्तरभाविनामनूयाजामुत्कर्षः "आ-

---

अङ्गेषु प्रातर्मध्यन्दिनादिकालविधानाभावादेव प्रयाजाद्यङ्गानामनीकवतीष्टिसांतपनीयेष्ट्यर्थानामपि अनीकवतीष्टिप्रयोगेण तन्त्रेणैवानुष्ठानम्। उत्तराङ्गानामनूयाजादीनां सान्तपनीयाप्रयोगेण सह तन्त्रेणानुष्ठानं कर्तव्यमित्यङ्गतन्त्रत्वं च पूर्वपक्षे उपपादितम्। अस्मिंश्च पक्षे प्रतीष्टि पृथक् पृथक् अग्निप्रणयनानुष्ठानं याज्ञिकैः क्रियमाणमपि प्रयोजनाभावान्न कर्तव्यमिति। वचनानुपपत्तिरिति। यद्यपि त्र्यहं साकमेधैरिति वचनाभावं कृत्वाचिंतयैवैतदधिकरणपूर्वपक्षारंभोत्थानात् पूर्वपक्षवेलायां तद्वचनोद्भावनपूर्वकानुपपत्त्यापादनमशोभनमेव इतरथा य इष्ट्येति वाक्यबोधितपौर्णमास्यादिकालस्य तृतीयान्तपदबोध्यत्वेन साङ्गप्रधानाङ्गत्वात द्व्यहकालत्वबाधेन सद्यस्कालत्वपर्यवसायित्ववत् तेनैव न्यायेनेहापि साकमेधैरिति तृतीयाश्रवणात् साङ्गप्रधानस्य त्र्यहकालत्वबोधे चतुर्दश्यामेव साङ्गानुष्ठानेन प्रकृतिप्राप्तद्वैयहकाल्यासंभवेन पूर्वपक्षासंभवात्, तथापि तैरस्य वचनस्य पूर्वपक्षेप्युपन्यासपूर्वकं प्रधानाश्रयतया वर्णनात् तेषामन्ते तद्वचनसामञ्जस्यानुपपत्तिरुक्ता न विरुद्ध्यते इति ज्ञेयम्। अन्हः कालेषु ये पदार्था उच्यन्ते प्रातर्मध्यन्दिने सायमिति क्रमेण ते एकस्मिन्नहनीति प्रतीयन्ते यथा देवदत्तः प्रातरपूपं भक्षयति मध्यन्दिने विविधमश्नाति अपराह्णे मोदकान् भक्षयतीति एकस्मिन्नहनीति गम्यते' इति भाष्यादिग्रन्थेषु एकदिनीयत्वेन प्रातरादिप्रतीतिरुक्ता तद्बीजमुक्तमनुवदन् सिद्धान्तमुपसंहरति—अतश्चेति।

---

**ग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति श्रुतः। तौ किमुत्कर्षापकर्षौ तन्मात्रविषयौ उत तदन्तस्यापकर्षस्तदादेश्चोत्कर्ष इति चिन्तायाम्—**

**प्रयाजादिग्रहणस्योपलक्षणत्वे प्रमाणाभावात्पूर्वोत्तरपदार्थानां** च प्रयाजाद्यनङ्गत्वेन **तदुत्कर्षापकर्षयोरुत्कर्षापकर्षाशङ्काऽनुपपत्तेस्तत्तत्पदार्थानां** प्रधानप्रत्यासत्तिबाधापत्तेश्च **तन्मात्रस्यैवोत्कर्षापकर्षाविति प्राप्ते—**

**प्रकृतौ पाठादिक्रमेण पदार्थानां क्लृप्तत्वात्पूर्वपदार्थोपस्थापितस्यैव चोत्तरपदार्थस्यानुष्ठेयत्वावगतेः श्रुतवचनयोस्तन्मात्रविषयत्वेऽप्यनूयाजोत्तरपदार्थस्य सूक्तवाकादेरनूयाजानन्तर्यानूयाजोपस्थापितत्वादिधर्मानुग्रहलोभेनोत्कर्षः। न च प्रधानप्रत्यासत्त्यनुरोधेन तदभावः, तस्याः प्रयोगविधिना क्लृप्तप्रमाणगम्यक्रमानुरोधेनैव प्रकृताविव विकृतावपि कल्पनीयत्वात्। एवमपकर्षेऽपि प्रयाजादीनामाघारादिरूपपूर्वपदार्थानन्तर्यस्य तदुपस्थापितत्वस्य च बाधे प्रमाणाभावेन पूर्वभाविनामपि तदुपपत्तेः। न चापकर्षे पूर्वभाविनां**

---

॥ अङ्गानां मुख्यकालत्वात् ॥

**प्रकृतित इति।** अस्य हविरासादनोत्तरभाविनां प्रयाजानां जीवत्पश्ववस्थायामेवापकर्षः श्रुत इत्यर्थः। अत एव स्पष्टं **शास्त्रदीपिका**यामग्नीषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुत इति। **हविरुद्वासनेति।** अग्नीषोमीये पशौ हविःशेषोद्वासनानन्तरं सवनीयप्रचारः तदुत्तरनानाग्रहचमसाभ्यासतदुत्तरपात्नीवतग्रहाभ्यासोत्तरमाग्निमारुतं शस्त्रमिति तदाग्निमारुतशास्त्रोत्तरमनुष्ठेया इत्यर्थः। **पूर्वोत्तरपदार्थानामिति।** प्रयाजपूर्वपदार्थाः सामिधेन्याघारादयः। अनूयाजोत्तरपदार्थाः सूक्तवाकप्रहरणादयः तेषामित्यर्थः। **प्रयाजाद्यनङ्गत्वेनेति।** यदि पूर्वोत्तरपदार्थाः तत्तदङ्गं भवेयुः तदा अङ्गप्रधानयोरासत्त्यनुरोधेन प्रधानन्नीयमानं तु तत्राङ्गान्यपकर्षतीति न्यायेन स्यातामपकर्षोत्कर्षौ। न त्वेतदस्ति सर्वेषामेव दैक्षपशुसवनीयाङ्गत्वादिति। **तदुत्कर्षापकर्षयोरिति।** इदं सप्तमीद्विवचनम्। तच्छब्दः प्रयाजानूयाजपरः। **प्रधानप्रत्यासत्तिबाधापत्तेश्चेति।** प्रयाजादिपूर्वभाविनामाघारादीनां प्रधानासत्तिः केवलं प्रयाजमात्रव्यवहिता प्रकृतौ स्थिता। इहापि तथैवापेक्षिता। तत्र प्रयाजमात्रस्यापकर्षे आघारादीनां यथावस्थितानुष्ठाने च व्यवधायकाभावात् अत्यन्तमेवासत्तिर्भवति प्रयाजाद्यपकर्षेण आघारादीनामप्यपकर्षे तस्या बाधः स्फुट एव। एवमनूयाजोत्कर्षेपि द्रष्टव्यम्। **तद्बाधस्येति।** यदि प्रयाजेषु पूर्वपदार्थोपस्थापितत्वानन्तर्यादिधर्मानुग्रहलोभेन तदपकर्षे

काचित्क्षतिः, प्रधानप्रत्यासत्तेः प्रकृताविवाकिञ्चित्करत्वात् । न चापकर्षे हविरासादनानन्तरं क्रियमाणपदार्थस्य सामिधेन्यादेस्तदानन्तर्यतदुपस्थापितत्वादिरूपधर्मबाधापत्तेरपकर्षानुपपत्तिः, तद्बाधस्योत्तरकालिकप्रतीतिकत्वेनाविरोधात् । सामिधेनीनां तु प्रयाजाङ्गत्वादपि हविरासादनानन्तर्यादिबाधेऽप्यदोषः ॥ १२ ॥

---

## (१३)—प्रवृत्त्या कृतकालानाम् ॥ २५ ॥ शब्दविप्रतिषेधाच्च ॥ २६ ॥

सोमे सुत्यायां प्रातरनुवाकप्रैषं "प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि" इत्येवंविधं होत्रे दत्वा "प्रतिप्रस्थातस्सवनीयान्निर्वपस्व इति प्रैष्यति" इति प्रैषं विधाय होत्रा प्रातरनुवाकेऽनूच्यमानेऽध्वर्योरुपास्तिर्विहिता आ प्रातरनुवाकसमाप्तेः । सा च वचनादेव वैकल्पिकी । ततः "अथ यत्र होतुरभिजानात्यभूदुषारुशत्पशुः इति तत् प्रचरण्यां स्रुचि चतुर्गृहीतं जुहोति" इत्यादिना प्रचरणीहोमादिकान् सौमिकान् पदार्थान् विधाय सवनीयहविर्विधिः ।

---

तेषामप्यपकर्षः, एवं तत्पूर्वभाविनामपि तत्तद्धर्मानुरोधेनापकर्षोऽपि वचनसिद्धः तर्हि सामिधेनीनां हविरासादनानन्तर्यादिबाधस्यौत्तरकालिकस्याङ्गीकारेऽपि न दोष इत्यर्थः । **प्रयाजाङ्गत्वादपीति** । सामिधेनीनामङ्गप्रधानसाधारणाग्निसमिन्धनद्वारा अङ्गप्रधानार्थत्वेन प्रयाजाङ्गत्वात् प्रयाजाद्यर्थं तदावश्यकत्वात् प्रधानानुरोधेन तत्पूर्वानुष्ठाने हविरासादनाद्यानन्तर्यबाधेऽप्यदोष इत्यर्थः । न च सामिधेनीनां हविरासादनानन्तर्यादिधर्मानुग्रहलोभेन हविरासादनस्य तत्पूर्वभाविनां सर्वेषां चापकर्षस्वीकारेणाबाध एव शङ्क्यः हविर्निष्पत्त्यर्थं क्रियमाणस्य हविस्संस्कारकाण्डस्य हविरासादनान्तस्य पशोर्जीवदवस्थायां हृदयादिहविषामेवाभावेनापकर्षस्यासंभवाच्च ।

---

॥ प्रवृत्त्या कृतकालानाम् ॥

**उपास्तिरिति** । अत्र च उपास्तिः "जाग्रन्नेवाध्वर्युरुपासीत तस्मादु काममेव स्वप्यात्" इति शतपथवचनाद्वैकल्पिकी । तत्र उपास्तिर्नाम होत्रा प्रातरनुवाके पठ्यमाने प्रातरनुवाकं प्रतिगृणता मनसा अनुसन्दधता अध्वर्युणा होतुः समीपे आसितव्यमित्येवंरूपा तूष्णीमवस्थितिः । **सवनीयहविर्विधिरिति** । धानाकरंभपरीवापपुरोडाशपयस्याद्रव्यकयागविधिः । तत्रैवातिदेशेन सर्वपदार्थानां प्राप्तत्वात् प्रचरणीहोमानंतरमैष्टिकपदार्थानामनुष्ठाने प्राप्ते

**ततो बहिष्पवमानाद्यन्ते 'अग्नीदग्नीन् विहर' 'बर्हिस्स्तृणाहि' 'पुरोडाशानलङ्कुरु' इति प्रैषस्समाम्नातः। तत्र सवनीयहविष्षु धानादिषु दार्शिकविध्यन्ते निर्वापप्रोक्षणालङ्करणादिरूपे प्राप्ते** निर्वापान्तस्य **प्रैषविधानादपकर्षः, अलङ्करणादेश्चोत्कर्षो निर्विवाद एव।** मध्यतनानां **प्रोक्षणादीनां तु अलङ्करणात्प्रागेव करणं, न तु निर्वापोत्तरं,** प्रधानाङ्गानां **प्रचरणीहोमादीनां** क्लृप्तकालकत्वेन **तैर्व्यवधानादिति प्राप्ते—**

प्रोक्षणादीनां **निर्वापरूपपूर्वपदार्थोपस्थापितानामतिक्रमे प्रमाणाभावान्निर्वापोत्तरमेव करणम्।** न च **सौमिकैर्व्यवधानं, उपास्तिपक्षे तावत्प्रधानाङ्गभूतायामुपास्तावध्वर्युकर्तृक-**

---

केषांचित् निर्वापान्तानान्तस्मात् पूर्वं प्रैषविधानादपकर्षोविहितः। अलङ्करणादिरूपाणां तु केषांचिदन्ते उत्कर्षः श्रुतः। तेषामन्तराले विद्यमानाः प्रोक्षणादयः पदार्थाः। ते यदि निर्वापोत्तरं क्रियन्ते तदा आतिदेशिकपाठस्य स्थानस्य चानुग्रहकृतः क्रमः। प्रचरणीहोमानन्तरं तु करणे प्रधानप्रयोगविध्यवगतः पाठक्रम इति भिन्नप्रयोगविधिपरिगृहीतत्वेऽपि महाप्रयोगविध्यैक्यमादाय क्रमप्रमाणयोः प्राबल्यदौर्बल्यविचार इति भावः। ननु "प्रातर्यावभ्य" इति प्रैषदानानन्तरं होत्रा प्रातरनुवाके पठ्यमाने अध्वर्युणा निर्वापप्राग्भाविनः पौरोडाशिकाः पदार्थाः कार्याः उत प्रचरिणीकाहोमादयः सौमिकाः इत्येवं विचारस्यापि संभवात् निर्वापपश्चाद्भाविष्वेव प्रोक्षणादिषु क्रमविचारः किमित्यारभ्यत इत्याशङ्क्य अध्वर्योः कर्तृत्वेऽपि उपास्तिपक्षे तत्रैव व्यापृतत्वेन प्रचरणिहोमादिष्वेव कर्तृत्वप्राप्त्या तेषु तत्कर्तृत्वस्य संभावयितुमशक्यत्वात् उपास्त्यभावपक्षे च यावत्प्रचरणीहोमकालं निर्वापप्राग्भाविपदार्थानुष्ठानसंभवात् उभयोरेककालत्वासंभवेन तत्क्रमविचारो न संभवत्येवेति। एवं प्रत्युत्तरे विद्यमानेपि वस्तुत अध्वर्योः कर्तृत्वमेव नास्तीत्याह—**निर्वापान्तस्येति**। प्रातरनुवाकप्रैषानन्तरमेव प्रतिप्रस्थात्रे निर्वापप्रैषादिदानात् तदन्तापकर्षतदाद्युत्कर्षन्यायेन तेषु प्रतिप्रस्थातुरेव कर्तृत्वप्राप्तेः मध्यतनेष्वेव संभाविताध्वर्युकर्तृकत्वेषु क्रमविचारयोग्यत्वमित्याशयेनाह—**मध्यतनानामिति**। **अत्र तन्त्ररत्ने** निर्वापस्य प्रतिप्रस्थातृकर्तृकत्वात् भिन्नकर्तृकेन तेनाध्वर्युकर्तृकप्रोक्षणादीनामुपस्थित्यसंभवात् सौमिकानामपि निवापप्रैषेण व्यवहितानामुपस्थापकाभावान्निर्वापोत्तरं सौमिकानां प्रोक्षणादीनां चानियम इति पूर्वपक्षः कृतः। तत्र यस्मिन् पक्षे पौरोडाशिकपदार्थानामादावनुष्ठानं तस्मिन् पक्षे तेषां प्रातरनुवाकापेक्षया बहुत्वस्य स्वयमेवोक्तत्वेन तदनुष्ठानानन्तरं प्रचरणिहोमानुष्ठाने एतत्कालबाधः स्फुट एव। उपास्तिपक्षाभिप्रायेण कालविध्यङ्गीकारे नित्यवच्छ्रवणबाधः। न हि निर्वापोत्तरत्वानुरोधेन प्रधानाङ्गप्रचरणी-

**त्वस्यावश्यकत्वादतिदेशप्राप्तनिर्वापसमानकर्तृकत्वानुरोधाच्च प्रोक्षणादौ ' इतरमन्यः ' इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वागतेस्सौमिकस्य व्यवधायकत्वानुपपत्तेः। न चैवं सति ' निर्वपस्व ' इति प्रैषे प्रोक्षणादिलक्षणापत्तिरित्यादितन्त्ररत्नोक्तदूषणावकाशः, न्यायेनैव तत्प्राप्त्यङ्गीकारेण लक्षणादावापादकाभावात्। उपास्त्यभावपक्षे तु यद्यप्यध्वर्युरेवातिदेशप्राप्तप्रोक्षणादौ कर्तेति निर्वापेण भिन्नकर्तृकेन न शक्यते प्रोक्षणादिकमुपस्थापयितुं, तथाऽप्य-**

---

होमकालबाधो युक्तः। अतो नानियमोपपादनं पूर्वपक्षे युक्तम्। किन्तु निर्वापोत्तरं प्रचरणीहोमकालं प्रतीक्ष्य तस्मिन् काले प्रचरणीहोममनुष्ठाय पश्चात् प्रागलङ्करणात् प्रोक्षणाद्यनुष्ठानमित्येवं नियमः पूर्वपक्षे युक्त इत्यभिप्रेत्याह—**प्रधानाङ्गानामिति**। **कॢप्तकालत्वेनेति**। "अथ यत्र होतुरभिजानाति" इति पूर्ववचनविहितैतदृक्समाप्त्युत्तरकालस्य कॢप्तत्वेनेत्यर्थः। अत्र **तन्त्ररत्नादौ** उपास्तिपक्षे प्रोक्षणादीनां प्रतिप्रस्थातृकर्तृकत्वमिति केषाञ्चिन्मतं दूषितं तदेवापस्तंबादिसूत्रयाज्ञिकाचारसंवादीत्यभिप्रेत्य तन्मतेनैव सिद्धान्तमाह—**प्रोक्षणादीनामिति**। **निर्वापोत्तरमेवेति**। एवकारो हि अध्वर्युकर्तृकत्वव्यावृत्तिफलकः सन् प्रचरणीहोमानन्तर्यव्यावर्तकः न तु निर्वापाव्यवधानानन्तर्यसूचकः। निर्वापोत्तरं मध्ये सर्वर्त्विक्कर्तृकमहाभिषवानुष्ठानानन्तरं प्रतिप्रस्थातुः प्रोक्षणाद्यनुष्ठानविधानात्। अत्र **तन्त्ररत्नकृता** उपास्त्यभावपक्ष इव उपास्तिपक्षेपि अध्वर्योः निर्वापप्रैषद्वारा प्रयोजककर्तृत्वेन एककर्तृत्वात् प्रतिप्रस्थातृकर्तृकेणापि निर्वापरूपपूर्वपदार्थेन उत्तरप्रोक्षणाद्युपस्थितिः वक्तुं शक्या, तथापि उपास्तिं कुर्वीत अध्वर्योः हेतुकर्तुरपि निर्वापसंस्कारोपैति चिरवृत्तत्वात्। अतो न प्रोक्षणादीनां निर्वाप उपस्थापकः, सौमिकानां प्रचरणीहोमादीनां, " अभूदुषारुशत्पशुः " इति प्रातरनुवाकपरिधानीयैव स्वकालकर्तव्यतया उपस्थापिकाऽस्तीत्यतस्तेषामेवादावनुष्ठानं युक्तं, इतरथा तत्कालबाधापत्तेः। न चोपास्तिपक्षे प्रोक्षणाद्युपास्त्योः समाख्यानादध्वर्युकर्तृकयोरेकस्मिन् काले अनुष्ठानासंभवात् उपास्तिव्यापृतेप्यध्वर्यौ **इतरमन्य** इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वप्राप्त्या प्रोक्षणाद्यनुष्ठानं सुलभमिति वाच्यम्। नानाबीजेषु " सहावघ्नन्ति, सह पिंषन्ति " इति वचनात् सहानुष्ठानप्राप्तौ न्यायात् कर्त्रन्तरप्राप्तावपि प्रकृते प्रातरनुवाकः प्रोक्षणादयश्च प्रागलङ्करणात् सहानुष्ठेया इति वचनाभावे समानकालत्वाप्राप्तेः न्यायेन कर्त्रन्तरप्राप्तेः वक्तुमशक्यत्वात्। अत उपास्तिपक्षे प्रचरणीहोमादीनामेव आदावध्वर्युणाऽनुष्ठानात् तदुत्तरमेव प्रोक्षणाद्यनुष्ठानम्। उपास्त्यभावपक्षे तु प्रचरणीहोमकालविधेः उपास्तिपक्षाभिप्रायत्वाङ्गीकारात् निर्वापसंस्कारनाशिकाया उपास्तेः अनङ्गीकारात् निर्वापोपस्थापितप्रोक्षणाद्यनुष्ठानमादौ पश्चात्सौमिकानामित्येवमुपास्त्यभावपक्ष एव प्रोक्षणाद्यनुष्ठानं प्रथममितरपक्षे

**ध्वर्योरपि निर्वापे प्रैषद्वारा प्रयोजककर्तृत्वेन समानकर्तृकत्वोपपत्तेर्युक्तमेव निर्वापोपस्थापितत्वं प्रोक्षणादौ। न चास्मिन् पक्षे प्रधानाङ्गप्रचरणीहोमादिभिर्व्यवधानं, तस्य 'अभूदुषा' इत्यादिप्रातरनुवाकपरिधानीयकालकत्वेन प्रोक्षणाद्युत्तरत्वात्, प्रातरनुवाकचर्मामपि बहुतरत्वेन तन्मध्य एवैष्टिकपदार्थसमाप्त्युपपत्तेश्च॥**

---

सौमिकैर्व्यवधानात् तदुत्तरमेवेति फलतः सिद्धान्तप्रदर्शनं कृतम्। तदनूद्य दूषयति—**न चेत्यादिना। अयमर्थः।** यद्यपि उपास्तेः प्रोक्षणादीनां च समानकालताप्रापकं वचनं नास्ति तथापि निर्वापप्रैषानन्तरमुपास्तौ व्यापृतस्याध्वर्योः प्रतिप्रस्थातृकर्तृकनिर्वापान्ते जाते होतृकर्तृके प्रातरनुवाके असमाप्त एवास्त्येवार्थसमाजप्राप्तोभयोः समानकालतेति प्रोक्षणादिषु प्राप्त्यभावादध्वर्युपुरुषस्य प्रतिप्रस्थातुः युक्तैव प्राप्तिः। न चोपास्त्यनन्तरमेवाध्वर्युकर्तृकमेवास्तु प्रोक्षणाद्यनुष्ठानमिति वाच्यं; तथात्वे अतिदेशप्राप्तनिर्वपतिसमानकर्तृकत्वबाधापत्तेः। **एतेन** अतिदेशप्राप्तसमानकर्तृकत्वानुरोधेनैव उपास्त्यामेव प्रतिप्रस्थातृकर्तृकत्वं, प्रोक्षणादीनां चाध्वर्युकर्तृकत्वमित्य**पास्तम्।** ततश्चोपास्तिपक्षे सौमिकानामध्वर्युकर्तृकाणां प्रतिप्रस्थातृकर्तृकप्रोक्षणाद्यनुष्ठानव्यवधायकत्वासंभवात् प्रोक्षणादि प्रतिप्रस्थात्रा विधेयं प्रचरणीहोमादिकं तु स्वकालेऽध्वर्युणैव कर्तव्यमिति न काचनानुपपत्तिरिति।

अत्र च प्रोक्षणादौ वचनविहितसमानकालत्वाभावे आर्थिकैककालत्वानुरोधेन अतिदेशप्राप्तसामाख्यनिकाध्वर्युकर्तृकत्वबाधे न किंचित् प्रमाणम्। **एतेन** निर्वपतिसमानकर्तृकत्वानुरोधेनाध्वर्युकर्तृकत्वबाध इत्यप्ययुक्तं तस्याप्यार्थिकत्वात्। दैवाद्धि प्रकृतौ निर्वापप्रोक्षणादीनां समाख्याप्राप्ताध्वर्युकर्तृकत्वे प्रमाणायाते अर्थात् समानं कर्तृत्वं सपन्नमभूत्। नहि तस्यार्थिकस्य विकृतावतिदेशोऽस्ति। न वा प्रमाणसिद्धाध्वर्युकर्तृकत्वं प्रकृतिदृष्टत्वमात्रेण बाधितुं शक्यते। अतः कथमपि प्रतिप्रस्थातृकर्तृकत्वाप्राप्तेः अध्वर्युकर्तृकत्वानुरोधेन निर्वापोत्तरं प्रचरणीहोमादि कृत्वैव प्रोक्षणादिकमध्वर्युणैव कर्तव्यमिति **तन्त्ररत्नकाराभिमतमेव** साध्विति भाति।

**यत्त्वत्र** इत्यारभ्य अधिकरणान्तग्रन्थस्याभिप्रायः स्पष्टोऽपि एकरूपतया निरूप्यते—भवन्मते हि उपास्तिपक्षे तत्र व्यापृतस्याध्वर्योः प्रोक्षणादौ कर्तृत्वासंभवात् तदनुरोधेन प्रोक्षणाद्यैष्टिकानामेव बहूनां पदार्थानामध्वर्युकर्तृकत्वस्वीकारेणादावनुष्ठाने तेषां बहुत्वेनासमाप्तेः मध्ये प्रचरणीहोमाननुष्ठाने तत्कालबाधापत्तिभिया प्रचरणीहोमादीनामेव प्रथममनुष्ठानम्। उपास्त्य-

**यत्त्वत्र तन्त्ररत्नस्वरसादन्यैरपि बद्धक्रमाणामैष्टिकपदार्थानां बहुत्वात्प्रचरणीहोमकालविधिरुपास्तिपक्षाभिप्रायेणेत्युक्तं, तत् प्रचरणीहोमस्योपास्त्यभावपक्षे कालविध्यभावे 'प्रतिप्रस्थातः' इत्यादिप्रैषोत्तरभाविपाठक्रमेण क्लृप्तक्रमकाणां प्रचरणीहोमादीनां प्रधानाङ्गतया क्रमबाधे प्रमाणाभावात्प्रोक्षणादीनां सौमिकपदार्थोत्तरत्वस्य प्रतिप्रस्थातृकर्तृकत्वस्य वाऽऽपत्तेरुपेक्षितम्। इतरथा उपास्तिपक्षेऽपि तस्या एव प्रतिप्रस्थातृकर्तृकत्वापत्त्या प्रोक्षणादौ तदनापत्तेश्च।**

---

भावपक्षे प्रचरणीहोमकालविध्यनङ्गीकारात् तद्बाधसंभावनाया अभावात। बहूनामप्यैष्टिकानामादावनुष्ठानं पश्चात्सौमिकानामिति स्थितिः। तत्र प्रचरणीहोमकालविधेः नित्यवच्छ्रवणबाधस्तावत् स्फुट एव। किंच उपास्त्यभावपक्षे कालविध्यनङ्गीकारेऽपि न प्रोक्षणादीनामादावनुष्ठानं सिद्ध्यति। "प्रतिप्रस्थातस्सवनीयान्निर्वपस्व" इति प्रैषानन्तरमेव प्रचरणीहोमादीनां पाठात् तेनैव क्लृप्तक्रमेणाध्वर्युकर्तृकनिर्वापप्रैषानन्तरमध्वर्युकर्तृकप्रचरणीहोमस्यैवानुष्ठानापत्त्या प्रोक्षणादीनां तदुत्तरत्वस्यैव युक्तत्वात्। प्रचरणीहोमसमानकाल एवानुष्ठानाग्रहे अध्वर्योस्तत्र व्यापृतत्वात प्रतिप्रस्थातृकर्तृत्वस्यैवापत्तेश्च।

यदि चोपास्त्यभावपक्षे कालविध्यनङ्गीकारेणापि प्रधानाङ्गप्रचरणीहोमाङ्गक्लृप्तक्रमबाधः स्वीक्रियते। तदा उपास्तिपक्षे कालविध्यङ्गीकारेऽपि निर्वापप्रैषानुरोधेन निर्वापान्ते अवश्यकर्तव्ये सति आदितः उपास्तौ प्रतिप्रस्थातृकर्तृकत्वासंभवेऽपि निर्वापोत्तरमुपास्तिप्रोक्षणयोः कालप्राप्तौ कर्त्रैक्यासंभवे **इतरमन्य** इति न्यायेनावशिष्टोपास्तिप्रभृति प्रचरणीहोमान्ते प्रतिप्रस्थातृकर्तृकत्वं प्रोक्षणे चाध्वर्युकर्तृकत्वमित्यस्यार्थस्यापत्तेः प्रचरणीहोमसमकालमेव प्रोक्षणानुष्ठानापत्त्या सिद्धान्त्यभिमतप्रचरणीहोमोत्तरत्वानापत्तिः। अतस्तत्परिहाराय निर्वापप्रैषानन्तरभाविपाठक्रमबाधापत्तिः त्वया अवश्यं निर्वापोत्तरं प्रचरणीहोमानुष्ठाने उद्भावनीया। न हि तत्र कालविधिमात्रेण तत्परिहारस्संभवति तदनुग्रहस्य तदानीमपि संभवात्। अतः क्रमानुग्रहस्य तवाप्यङ्गीकार्यत्वे ममाप्युपास्त्यभावपक्षे तदनुरोध आवश्यकः इत्युभयपक्षेऽपि क्रमानुरोधेनैव कालविधिः, अथ वा तद्बाधको वा कालविधिरङ्गीकार्य इति। न चोपास्तौ प्रोक्षणादौ वा प्रतिप्रस्थातृकर्तृकत्वमित्यत्र विनिगमनाविरहस्त्वया शङ्कितुं शक्यः। उपास्तिपक्षे प्रचरणीहोमोत्तरमध्वर्युकर्तृकत्वस्यैव त्वया प्रोक्षणे अङ्गीकारात्। अतो निर्वापोत्तरमवशिष्टोपास्तिप्रभृतिप्रचरणीहोमान्तस्यैव प्रतिप्रस्थातृकर्तृकत्वापत्त्या उपास्त्यव्यापृताध्वर्युकर्तृकत्वस्य च प्रोक्षणादावेव संभवात् तेषामनुष्ठाने भिन्नकर्तृकोपास्तिप्रभृतिकर्मणो व्यवधायकत्वासंभवात् निर्वापोत्तरमेव प्रोक्षणाद्यनुष्ठानापत्तिः। न तु प्रचरणीहोमोत्तरम्।

**यत्तु ऐष्टिकानां बहुत्वात् 'अभूदुषा' इत्येतदुत्तरमपि तदापत्तेः प्रचरणीहोमकालवाक्यस्य सङ्कोच इत्युक्तं, तदस्तु नाम तथा, तथाऽपि यावन्त एवैष्टिकास्तत्कालावधि कर्तुं शक्यास्तावतां पूर्वं करणापत्तेरन्येषां च तदुत्तरं प्रतिप्रस्थात्रा वा करणोपपत्तेर्वाक्यसङ्कोचे प्रमाणाभावः। वस्तुतस्तु सर्वं पूर्वं कर्तुं शक्या एवेत्युक्तम् ॥ १३ ॥**

---

## (१४)—असंयोगात्तु तदेव प्रतिकृष्येत ॥ २७ ॥

**सौमिकाग्नीषोमप्रणयनानन्तरं पश्वङ्गतया 'यूपं छिनत्ति' इत्युत्पन्नं यूपच्छेदनं 'दीक्षासु**

---

तथा च उपास्तिपक्षे कालविधिसत्त्वात् कालाबाधार्थं न प्रोक्षणादीनां निर्वापोत्तमनुष्ठानं सिद्ध्यतीति निर्वापोत्तरमैष्टिकपदार्थानुष्ठानफलको विचारः उपास्त्यभावपक्षे इत्येतत्सिद्धान्तकरणं न सङ्गच्छते। अतः उपास्त्यभावपक्षेपि सौमिकस्य तु पदार्थस्य प्रचरणीहोमस्य वचनात् क्रमो बाधित इति भाष्यदर्शितरीत्या निर्वापप्रैषानन्तरभाविपाठक्रमलब्ध्यानुष्ठानबाधकः कालविधिरङ्गीकार्य एवेति यावत्प्रचरणीहोमकालमव्यापृतेनाध्वर्युणा यावन्त ऐष्टिकाः पदार्थाः कर्तुं शक्यन्ते तावतः कृत्वा अवशिष्टाः पदार्थाः तस्मिन्नेव काले प्रतिप्रस्थात्रा कर्तव्याः। अथ वा प्रचरणीहोमोत्तरमध्वर्युणैव कर्तव्याः।

**वस्तुतस्तु** ऐष्टिकानामल्पत्वेन होमकालात्पूर्वमपि तेषां समाप्तिसंभवात् तत्पूर्वमेवाध्वर्युकर्तृकमनुष्ठानं युक्तम्। उपास्तिपक्षेऽपि कालविधेस्सत्त्वेऽपि उपास्तिप्रभृतिकर्मणां प्रोक्षणादीनामैष्टिकानां च पदार्थानां मध्ये केषामध्वर्युकर्तृकत्वं केषां वा प्रतिप्रस्थातृकर्तृकत्वमिति सन्देहे निर्वपतिसमानकर्तृत्वस्यार्थिकस्य प्रकृतिदृष्टत्वमात्रत्वेन नियामकत्वस्य वक्तुं शक्यत्वात् उपास्तावेवाध्वर्युकर्तृकत्वं, प्रोक्षणादौ तु प्रतिप्रस्थातृकर्तृकत्वमेवेति सौमिकानामेवाध्वर्युकर्तृकाणां निर्वापोत्तरं प्रतिप्रस्थात्रा क्रियमाणानामैष्टिकानां च परस्परं न व्यवधायकतेत्येव सिद्धान्तो युक्त इति। **मूले** च प्रचरणीहोमकालवाक्यस्य संकोचे इत्यत्रोपास्त्यनुपास्तिपक्षसाधारण्येन नित्यवच्छ्रुतस्य उपास्तिपक्षमात्राभिप्रायकत्वकल्पनारूपः सङ्कोचो विवक्षितः।

---

**॥ असंयोगात्तु तदेव प्रतिकृष्येत ॥**

**सौमिकेति।** शालामुखीयस्याग्नेः आग्नीध्रीये धिष्णिये नयनमग्निप्रणयनम्। तथा प्राग्वंशस्थितसोमस्य हविर्धानमण्डपे नयनं सोमप्रणयनमित्यर्थः। **भिन्नप्रयोगविधिपरि-**

यूपं छिनत्ति' इत्यनेनापकृष्टं प्रयाजन्यायेन प्राचोऽपि पदार्थान् अग्नीषोमप्रणयनादीन-पकर्षतीति प्राप्ते—

भिन्नप्रयोगविधिपरिगृहीतत्वेनात्र पाठस्य क्रमानियामकत्वात् महाप्रयोगविध्यैक्येऽपि वा उत्पत्तिविधिवेलायां प्रयोज्यत्वानवगमेन क्रमानाकांक्षत्वात् पाठस्य क्रमाकल्पकत्वेन बद्धक्रमत्वाभावाद्दीक्षाकालविधिवाक्ये च प्रयोज्यत्वावगमेन तत्रैव क्रमापेक्षतया भिन्नप्रयोगविधिपरिगृहीतैरपि सोमाङ्गदीक्षाकालीनपदार्थैः पाठेन क्रमकल्पनात्तत्रैव सप्तहोतृहोमानन्तरं यूपच्छेदनमात्रं यूपोत्पादकधर्ममात्रं वाऽपकृष्य कार्यम्। न तु तदन्तापकर्षः।

---

गृहीतेति। यद्येकप्रयोगविधिपरिगृहीतत्वं स्यात् तदा साङ्गस्य प्रधानस्य एककालानुष्ठाने विहिते एकेन कर्त्रा सर्वस्यानुष्ठानाशक्तेः अवश्यंभावी क्रम अपेक्ष्यन इति तत्र नियामकः पाठादिर्भवति। इह तु सोमाङ्गाग्नीषोमप्रणयनस्य सोमयागप्रधानप्रयोगविधिपरिगृहीतत्वं यूपच्छेदनस्य च पश्वङ्गस्य अग्नीषोमीययागप्रयोगविधिपरिगृहीतत्वम्। ततश्चानयोर्युगपत् कर्तव्यताया एवाप्रसक्तेः कुत एककर्त्रनुष्ठानाशक्त्या क्रमापेक्षेति नात्र पाठस्य क्रमनियामकत्वमिति भावः। महाप्रयोगविध्यैक्येपि वा इति। अयं भावः—यद्यपि तत्तदङ्गविशिष्टाङ्गसहितसोमयागं कुर्यादिति महाप्रयोगविधौ विशिष्टरूपे अङ्गाङ्गांशे अवान्तरभिन्नप्रयोगविधिरूपविशेषणविधिकल्पनस्यावश्यकत्वेन तत्र क्रमापेक्षा तावत् भिन्नप्रधानाङ्गानां परस्परं नास्त्येवेति आवेदितमेव। अग्नीषोमीयपशुप्रयोगविधिना तु अग्नीषोमीयप्रणयनानन्तरं यूपच्छेदनं कर्तव्यमिति न बोध्यते। अग्नीषोमप्रणयनानन्तरं पाठत उत्पन्नस्यापि यूपच्छेदनस्योत्पत्त्यवगमेपि कर्तव्यतायास्तत्कालेऽनवगमात्। कर्तव्यताज्ञानानन्तरमेव क्रमापेक्षणात् यावत् प्रधानप्रयोगविधिना कर्तव्यताज्ञानं प्राप्य क्रमः पाठतः कल्पनीयः तावत् दीक्षासु यूपं च्छिनत्तीति वाक्येन कालविधिपरेण कर्तव्यताऽवगम्यत इति तत्रैव क्रमापेक्षायामपि नोत्पत्तिवाक्यावगतोत्पत्तिवेलायां तदपेक्षा, येन तत्पाठक्रमो नियामको भवेत्। तत्र च दीक्षाकाले कर्तव्यमिति बोधानन्तरमपि दीक्षाकाले कदा कर्तव्यमित्याकांक्षायां सप्तहोतृहोमानन्तरमेतद्वाक्यपाठात् अणुरपि विशेष इति न्यायेन भिन्नप्रधानाङ्गैर्दीक्षाकालीनैः पदार्थैः सहानङ्गस्यापि बुध्यमानस्य पाठक्रमस्य नियामकत्वकल्पने नैव किंचिद्बाधकम्। तथा च दीक्षानन्तरकालविध्यङ्गीकारेण "अदीक्षिष्टायं ब्राह्मण" इत्यावेदनान्ते यूपच्छेदनानुष्ठानं कातीयानां यत् तत् यमनियमपरिग्रहरूपदीक्षायाः स्वतोऽधिकरणत्वासंभवे तत्प्रयोगकालाधिकरणत्वस्यैव विधेयत्वात्, तस्य च तन्मध्यवर्तिन्येव काले संभवेन तत्रैव तदनुष्ठानप्राप्तौ अन्ते प्राप्तेः सप्तहोतृहोमानन्तरं पाठ-

एतेन यूपच्छेदनस्य दीक्षान्ते करणमिति केषांचिदुक्तमपास्तम्। 'दीक्षासु यूपं छिनत्ति' इत्यस्य सप्तहोतृहोमानन्तरं पठितत्वात् ॥ १४ ॥

---

## (१५)—प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥

सवनीयपशुतन्त्रं सवनीयहविष्षु प्रसज्यते। दैक्षपशुतन्त्रं च पशुपुरोडाशे इति वक्ष्यते। प्रसङ्गे च ये उपकाराः प्रयाजानूयाजादिजन्यास्तन्त्रितोलब्धास्तज्जनकीभूतपदार्थांशे नातिदेशः, अपेक्षाऽभावात्, ये तु न लब्धाः आज्यभागपिष्टलेपफलीकरणहोमादिजन्याः, तत्पदार्थांशेऽस्त्येवातिदेश इत्यपि वक्ष्यते।

---

वैयर्थ्यापत्तेश्चोपेक्ष्यमित्यभिप्रेत्याह—एतेनेति। पठितत्वादिति। सप्तहोतृहोमानन्तरपठित-दीक्षणीयोर्ध्वमित्यर्थः। तथैवापस्तंबादिसूत्रे पठितत्वात्। अत एव प्रकाशकारैरेतन्मत-खण्डनपूर्वकं दीक्षणीयोर्ध्वमेवानुष्ठानमुक्तं न तु दीक्षणीयातः पूर्वं सप्तहोतृहोमानन्तरं तदानीं दीक्षाभावेन दीक्षाकालविधानविरोधापत्तेः। अस्तु वा बोधायनसूत्रानुसारेण सप्तहोतृहोमानन्तरं पठितत्वादिति पूज्यपादीयं यथाश्रुतमेव वचः। तथा च तदनुसारेण दीक्षास्वारभ्यमाणासु इत्यर्थे न बाधकमिति ध्येयम्।

---

॥ प्रासङ्गिकं च ॥

अत्र प्रासङ्गिकञ्च नोत्कर्षेदसंयोगादिति सूत्रेण प्रासङ्गिकमनूयाजादि स्वोत्तरपदार्थं प्रकृतौ विद्यमानमपि विकृतावसंयोगात् नोत्कर्षेदित्यर्थकेण उत्कृष्यमाणस्यैव प्रासङ्गिकस्य इतरानु-त्कर्षकत्वप्रतिपादनात् उत्कर्षस्य स्वस्थाने विद्यमानस्य उत्तरत्र चलितत्वरूपस्य दर्शपूर्णमासयोरिव दैक्षे पशौ हविरुद्वासनोत्तरं स्वस्थान एवानूयाजानां सत्वेनासंभवात् तदङ्गभूतपुरोडाशाङ्गभूतदाक्षिणा-ग्निकहोमयोरुत्कर्षविचारस्यासङ्गतत्वादसंभवेन सवनीये तद्विकार एवानूयाजानामुत्कर्षविधानेन तदङ्ग-पुरोडाशाङ्गभूतदाक्षिणाग्निकहोमोत्कर्षविचारप्रदर्शनं तन्त्ररत्नादौ कृतमित्याशयवर्णनं प्रकाशकारैः कृतं, तत्र यद्यपि दैक्षेऽनूयाजानां नोत्कर्षस्तथापि दाक्षिणाग्निकहोमयोः सवनीय इवानूयाज-पूर्वभावित्वस्य तुल्यत्वात् तयोः स्वस्थानस्थितयोः प्रासङ्गिकानूयाजोत्तरमनुष्ठानेनोत्कर्षः संभवति न वेति उत्कर्षविचारविषयत्वस्य उभयत्रापि संभवात् सूत्रकृतापि उत्कृष्यमाणानुत्कृष्यमाणसाधा-रण्येन प्रासङ्गिकमात्रस्यैव इतरानुत्कर्षापादकत्वस्योक्तत्वात् पिष्टलेपहोमोत्कर्षानुत्कर्षमात्रेणापि

तदिह पाशुकानूयाजानां दैक्षे हृदयादियागोत्तरत्वात् सवनीये चाग्निमारुतशस्त्रोत्तरत्वात्तत्पूर्वभाविसवनीयहविःपशुपुरोडाशादीनामङ्गभूताः पिष्टलेपफलीकरणादिहोमाः किमनूयाजोत्तरमुत्कष्टव्याः उत नेति चिन्तायां—

प्रकृतौ दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमानां परप्रयुक्तानूयाजैरेव बद्धक्रमत्वादिहापि सत्यपि भिन्नप्रयोगविधिपरिग्रहे अङ्गभूतस्यान्याङ्गभूतानुयाजोत्तरत्वस्यापि सम्भवेनोत्कर्षे प्राप्ते—

---

सङ्गत्युपपत्तेः दैक्षपश्वङ्गपुरोडाशाङ्गदाक्षिणाग्निकहोमयोरपि एतदधिकरणविषयत्वं स्वयं दर्शयिष्यते तदर्थं तत्रापि प्रसङ्गविषयतामादौ प्रदर्शयति—दैक्षपशुतन्त्रमिति। वक्ष्यत इति। तन्त्रमध्ये-विधानात् मुख्यतन्त्रेण सिद्धिः स्यात् इत्यधिकरणे द्वादशाध्याय इति शेषः। तेनास्य न्यायस्य तुल्यत्वात् उभयत्रापि प्रसङ्गो वक्ष्यत इत्यर्थः। प्रसङ्गे चेति। अग्नीषोमीयपशुयागो हि अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपतीति विहितपुरोडाशानन्तरं हृदयाद्यङ्गयाग-विधानात् विततः। तथा "वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यंदिने अङ्गैस्तृतीयसवने" इति सवनत्रये उपदेशात् विततः सवनीयोऽपि। तत्र पूर्वस्येतिकर्तव्यताकाङ्क्षायां दर्शपूर्णमासातिदेशेन तत्र तत्प्राप्तिः। एतदतिदेशेन च सवनीये। उभयत्रापि विततयोर्यागयोरितिकर्तव्यतापि वितता भवति तत्तदितिकर्तव्यताजन्योपकारैः एककालविहितत्वात् संभूय प्रधानान्युपकर्तव्यानि, तेन यावत्क्रतूपकारः सर्वाङ्गजन्योऽभिनिष्पद्यते तावदग्न्यन्वाधानादिजनितोऽवान्तरोपकार आस्ते। तदभिनिर्वृत्तिश्च सर्वाङ्गेषु कृतेषु। तथा च यावत्पशोरन्त्यः पदार्थः तावदाद्योऽवान्तरोपकारेण पदार्थोऽवतिष्ठते। अन्त्योऽपि यावदाद्य उपकार आयाति तावत्तं प्रतीक्षते। एवमग्न्यन्वाधानादिजन्योपकाराणां अन्त्यपदार्थपर्यन्तं विद्यमानत्वात् मध्ये पतन् पशु-पुरोडाशयागः उपकाराकाङ्क्षो यावत् प्रकृतित उपकारान् तत्पृष्ठभावेन तज्जनकपदार्थांश्च उपक्रमते ग्रहीतुं तावत् पश्वङ्गजन्योपकारेणैव कार्यसिद्धेः न तेषु स्वातन्त्र्येण प्रयोजकत्वमङ्गीकरोति। ये तु न पशुप्रयुक्ताः पशुतो न लब्धाः तज्जनकपदार्थांशेऽस्त्येवातिदेश इति तेषु तु प्रयोजकत्वमस्त्येवेति जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रः प्रतिषेधः स्यादित्यधिकरणे वक्ष्यत इति। इहापीति। यद्यपि विकृतौ पशावनूयाजानां पशुप्रयोगविधिपरिगृहीतत्वात् पिष्टलेपहोमादीनां च पुरोडाश-प्रयोगविधिपरिगृहीतत्वाच्च न परस्परं क्रमाकाङ्क्षया बद्धक्रमत्वं, येनानूयाजोत्तरत्वमावश्यकं भवेत् तथापि प्रकृतौ दर्शपूर्णमासप्रयुक्तानूयाजानां तेषां च बद्धक्रमत्वेन दर्शनात् पिष्टलेपाङ्गभूतत्वेन प्रकृतौ स्थितानां होमानां पश्वङ्गभूतानूयाजोत्तरं यथाप्रकृत्यनुष्ठाने बाधकाभावादुत्कर्ष इति पूर्वपक्ष्यभि-

**न तावद्द्विकृतावेव क्रमक्लृप्तिः, भिन्नप्रयोगविधिपरिग्रहात्, पुरोडाशादिप्रयोगविधिना विहितानां पिष्टलेपफलीकरणहोमेडाभक्षणानां** व्यवधायकाभावात्, **व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य क्रमकल्पकत्वेनोत्कर्षे तत्क्रमबाधप्रसङ्गाच्च, पाशुकप्रयोगविधिविहितानां समिष्टयजुःपत्नीसंयाजानामुक्तप्रमाणेनैव क्रमक्लृप्तेस्तद्बाधस्यापि प्रसङ्गाच्च। नापि प्रकृतितो अनूयाजोत्तरत्वक्लृप्तिः, प्रकृतौ हि पाठकल्पितवाक्येन क्रमनियम एव**

---

प्राय इति भावः। विकृतौ तावत् पूर्वोक्तरीत्या न क्लृप्तक्रमत्वं, येन तदबाधाय तदुत्तरमनुष्ठानमङ्गीकार्यं यथाप्रकृति अनुष्ठाने तु बाधकमाह—व्यवधायकाभावेति। अयं भावः—सर्वत्र साद्यस्क्रपशौ सवनीयोपाकरणानन्तरमसति नियामकान्तरे प्रकृतिदृष्टपौर्वापर्यस्य क्रमकल्पकत्वमङ्गीकृत्य दैक्षस्यादावुपाकरणमुत्तरमनूबन्ध्यस्येत्येवं प्रकृतिदृष्टपौर्वापर्यं क्रमनियामकं स्वीक्रियते यदि तयोर्मध्ये व्यवधायकं न भवेत्। यदा तु सोमयागे प्रकृतौ सवनीयपशुना व्यवधानं तदा तु दैक्षानुबन्ध्ययोः व्यवधानेन पौर्वापर्यं त्वस्ति, न तु तत् अव्यवहितानन्तर्यरूपक्रमकल्पकम्। साद्यस्क्रे च व्यवधायकस्य सवनीयोपाकरणस्य सर्वादावेव कृतत्वात् मध्ये व्यवधायकाभावे पौर्वापर्यं क्रमकल्पकं भवत्येव। तथा च व्यवधायकाभावविशिष्टं यत्र प्रकृतिदृष्टं पौर्वापर्यं ययोः पदार्थयोर्भवति, तत्र तयोः तदव्यवधानरूपक्रमपर्यवसायीत्येवं दृष्टम्। प्रकृते तावत् दर्शपूर्णमासयोः प्रधानयागानन्तरमिडाभक्षणं, तदनन्तरमनूयाजाः, ततः पत्नीसंयाजाः, ततो दाक्षिणाग्निकौ पिष्टलेपफलीकरणहोमौ, ततः समिष्टयजुरित्येवं क्रमः। दैक्षे च इडाभक्षणस्य हृदयाद्यङ्गयागोत्तरं सत्वात् पिष्टलेपफलीकरणयोश्चाभावात् तद्धोमानां लोप एव तदतिदेशात् सवनीयेपि तथा। इतरे तु वर्तन्त एव यथास्थिताः पदार्थाः। पशुपुरोडाशे च ये पश्वङ्गभूताः तत्काले न सन्ति ते इडाभक्षणपिष्टलेपफलीकरणहोमादिपदार्थाः अतिदेशेन प्राप्यन्त एवेत्युक्तम्। एवं च दर्शपूर्णमासयोरिडाभक्षणपिष्टलेपफलीकरणहोमयोः पौर्वापर्यं तु वर्तते। परंतु तदनूयाजादीनां मध्ये व्यवधायकानां सत्वात् आनन्तर्यरूपक्रमकल्पकं नासीत्।

यदा तु पश्वर्थं कृतैरेवानूयाजादिभिरुपकारलाभात् न स्वातन्त्र्येण पशुपुरोडाशे इडाभक्षणानन्तरं तेषामनुष्ठानं तदा व्यवधायकाभावात् प्रकृतिदृष्टं तयोः पौर्वापर्यमिडाभक्षणानन्तरं पिष्टलेपहोमादय इत्येवमव्यवहितानन्तर्यरूपक्रमकल्पकं भवतीति प्रमाणायातः क्रमः पिष्टलेपहोमादीनां प्रकृतिदृष्टोत्तरत्वमात्रेणानूयाजोत्तरं यथाप्रकृत्येवानुष्ठाने सर्वथा बाधितं स्यादेव। एवं पत्नीसंयाजसमिष्टयजुषोः पौर्वापर्यमात्रं दर्शपूर्णमासयोरस्ति। परं तु मध्ये पिष्टलेपफलीकरणहोमयोः व्यवधायकत्वात् नानन्तर्यरूपक्रमकल्पकं तयोस्तत्पाशुकप्रयोगविधिना तु स्वानङ्गभूतपिष्टलेपफली-

**विधीयते न तु क्रमोऽपि, तस्य प्रयोगविध्याक्षेपादेव प्राप्तेः।** अतश्च **प्रकृते भिन्नप्रयोगविधिपरिगृहीतानां सामान्यतः क्रमस्याप्राप्तौ तदाश्रितस्य नियमस्याप्राप्तिः।** न ह्यत्राक्षेपा**त्पूर्वमेवावघातविधिवत्प्रवृत्त्यङ्गीकारेण पाठकल्पितवाक्यस्य क्रमविधायकत्वमेवेति शक्यं वक्तुं,** तद्वदिह **पाठकल्प्यस्य विधेः क्लृप्तत्वाभावेन समतया आक्षेपप्रतिबन्धायोगात्।** इतरथा **दधियागपयोयागयोरपि पाठेन क्रमापत्तेः।** अतश्च **प्रकृतितोऽप्यनूयाजोत्तरत्वस्याप्राप्तेः पुरोडाशाद्यङ्गेडाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ ॥ १५ ॥**

---

करणहोमव्यतिरिक्तपदार्थानामनुष्ठानबोधनेन पत्नीसंयाजसमिष्टयजुषोर्मध्येऽननुष्ठानात्। व्यववधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य पत्नीसंयाजानन्तरं समिष्टयजुरित्येवमव्यवहितानन्तर्यरूपक्रमकल्पकत्वाङ्गीकारात्। एतादृशक्रमोऽपि यथाप्रकृति पिष्टलेपहोमादीनामनुष्ठाने बाधितः स्यादेवेति नानूयाजोत्तरं यथाप्रकृति दाक्षिणाग्निकहोमयोरनुष्ठानमपि तु पशुपुरोडाशप्रयोगमध्ये तदङ्गभूतेडाभक्षणानन्तरमेव।

अत्र च पत्नीसंयाजसमिष्टयजुषोः अव्यवहितक्रमाभिधानं सवनीयपशुपरं न त्वग्नीषोमीयपरमपि। तस्य पत्नीसंयाजसमाप्तिप्रयोगकत्वविधिना पत्नीसंयाजोत्तराङ्गत्वाभावात्। अत एव दैक्षे पिष्टलेपहोमोत्कर्षपूर्वपक्षे पत्नीसंयाजरूपव्यवधायकाभावे तदुत्तरलोपेपि अनूयाजोत्तरं प्रकृतिदृष्टत्वमात्रेण तदनुष्ठानम्। सवनीये तु पत्नीसंयाजानामपि सत्वात् यथाप्रकृत्येवेति ज्ञेयम्। **अतश्च प्रकृते इति। प्रकृते** दैक्षसवनीयपशुयागादौ। **न ह्यत्रेति।** यत्र दर्शपूर्णमासयोस्तत्प्रयोगविध्याक्षेपात् क्रमसामान्यप्राप्तिस्तत्रेत्यर्थः। यत्र हि अवघातविधिः क्लृप्तो वर्तते तत्र क्लृप्तत्वात् तस्याक्षेपात् पूर्वप्रवृत्तिर्युक्ता। यत्र तु प्रयोगविध्याक्षेपकल्प्यक्रमविधिसम एव पाठकल्प्यक्रमविधिः तत्रोभयोरपि कल्प्यत्वात् एकस्य क्लृप्तत्वेन पूर्वप्रवृत्त्या इतरप्रतिबन्धकत्वं न युज्यत इत्याह—**तद्वदिति।** दर्शपूर्णमासप्रयोगविधिना हि युगपत साङ्गप्रयोगविधानेऽपि एकस्य कर्तुर्युगपत् सर्वानुष्ठानाशक्तिः यत्र तत्रावश्यंभावी क्रमोऽप्याक्षिप्यते। यत्र तु तत्संभवति तत्र नैव तदाक्षेप इत्यत एव हेतोर्दधिपयोयागयोस्संप्रतिपन्नदेवताकत्वेन युगपदनुष्ठानस्य एकेन कर्त्रा कर्तुं शक्यत्वात् न तयोः आनन्तर्येणानुष्ठानम्। यदि च पाठस्य क्रमनियामकत्वमङ्गीकृत्यापूर्वक्रमविधायकत्वं तदा तयोरपि ब्राह्मणपाठक्रमात् क्रमेणानुष्ठानापत्तिरित्याह—**इतरथेति।** प्रकृतावनूयाजाद्युत्तरं पाठो वर्तत इति हेतोर्विकृतौ तदनन्तरं तेषामनुष्ठानमापादनीयम्। स च प्रकृतिपाठः पूर्वोक्तरीत्या विकृतौ[1] विहितक्रमनियामको न भवतीत्युप-

---

१. A विकृताविह क्रम.

(१६)—तथाऽपूर्वम् ॥ २९ ॥

दर्शपूर्णमासयोः हविरभिवासनोत्तरं वेदिकरणमाम्नातम्। तस्य "पूर्वेद्युरमावास्यायां वेदिं करोति" इति वचनेनापकर्षश्रुतः पूर्वभाविनोऽपि हविरभिवासनादीनपकर्षेत, एकप्रयोगविधिपरिगृहीतत्वेन पाठस्य क्रमकल्पकत्वात्, अमावास्यापदस्य कर्मपरत्वे लक्षणाप्रसङ्गेन कालपरत्वावसायाद्धविरभिवासनोत्तरमाविर्भावि वेदिकरणविधेरेव पौर्णमास्यङ्गताबोधकत्ववद्दर्शाङ्गत्वबोधकत्वाच्च। न च कालद्वयविधाने वाक्यभेदः, सामर्थ्यात् "वेदं कृत्वा वेदिं करोति" इति श्रुतवेदकरणानन्तर्यबलेनैव च पूर्वेद्युत्वस्य प्राप्तत्वेनानुवादात्। प्रधानप्रत्यासत्तिलाभात् पौर्णमास्या अतीतत्वाच्च दार्शिकमेव वेदिकरण एवायं कालविधिः

---

संहरति—अतश्चेति। एवं च पशुपुरोडाशे पिष्टलेपफलीकरणहोमादीनामननुष्ठानं यच्च सवनीयहविष्षु तृतीयसवने अनूयाजोत्तरमनुष्ठानं याज्ञिकानां तदयुक्तमिति चकारेण सूचितम्।

---

॥ तथाऽपूर्वम् ॥

हविरभिवासनादीनिति। हविषः पुरोडाशस्य आहवनीये गार्हपत्ये वा कपालस्थस्य भस्मना आच्छादनमभिवासनं तदादिभूतं येषां पदार्थानां तत्पात्रीप्रथनालङ्करणादीनां तानपकर्षेदिति अभिवासनपूर्वपदार्थाभिधानात्प्रोक्षणादिपदप्रयोगः। युक्तं तु अभिवासनान्तानपकर्षेदिति वक्तुमिति ध्येयम्। पिष्टलेपफलीकरणहोमानूयाजानां विकृतावेकप्रयोगविधिपरिगृहीतत्वाभावात् क्रमापेक्षाया एवाभावेन न प्राकृतपाठस्य क्रमकल्पकत्वं युक्तम्। इह तु दर्शपूर्णमासैकप्रयोगविधिपरिग्रहात् पाठस्य क्रमकल्पकत्वं युज्यत एवेत्याह—एकेति। अत्र च तैत्तिरीयशाखायां हविरभिवासनोत्तरमाज्यनिनयनस्याम्नानात् तथैव च याज्ञिकानुष्ठानात् हविरभिवासनपदं सर्वत्राप्यनिनयनोपलक्षणं द्रष्टव्यम्। अत्र सिद्धान्ते यावद्धविरभिवासनोत्तरभाविपाठकल्प्यकर्मविशिष्टवेदिकरणस्य प्रकरणाद्दर्शपूर्णमाससाधारण्येनाङ्गत्वं कल्पनीयं तावत् पूर्वेद्युर्वाक्येनामावास्याङ्गत्वबोधनेनाक्लृप्तक्रमस्यैव वेदिकरणस्य पूर्वेद्युरपकर्षविधानात् न बद्धक्रमत्वमित्युक्तं तत् अमावास्यापदस्य कालपरत्वादयुक्तमिति पूर्वपक्षी दूषयति—अमावास्यापदस्येति। तथाचामावास्याकाले पूर्वेद्युः वेदि-

**अतश्च पौर्णमाससाधारण्येन पाठस्य क्रमकल्पकत्वावश्यंभावात्**। अत एव च **यूपच्छेदनवैलक्षण्यात्तदन्तापकर्षे प्राप्ते—**

**कालपरत्वेऽपि कालविधेः प्रयोगविधित्वेन दार्शिकवेदिकरणस्य तत्रैव प्रयोज्यत्वावगमात् तदवगमोत्तरं च क्रमापेक्षायां पाठस्य** नियामकत्व**ासम्भवात् श्रौतक्रमान्तर-**

---

करणविधानेऽपि अङ्गित्वेन[1] विनियोजकत्वं हविरभिवासनोत्तरपाठकल्प्यक्रमविशिष्टस्य यः प्रकरणकल्पितो विनियोगविधिः तस्यैवेति दर्शपूर्णमासयोरुभयोरपि क्रमविशिष्टस्य तस्याङ्गत्वमिति अस्त्येव बद्धक्रमत्वमिति भावः। **सामर्थ्यादिति**। वेदिकरणाङ्गामावास्याकालस्य संपूर्णे पर्वणि पूर्वदिन एव संभवरूपसामर्थ्यादित्यर्थः। खण्डपर्वणि पूर्वदिने अमावास्याकालस्य वेदिकरणे प्रातरनुष्ठीयमाने[2]ऽसंभवात् कथं पूर्वेद्युस्त्वस्य प्राप्तिरित्याशङ्कानिरासाय द्वितीयं हेतुमाह—**वेदं कृत्वेति**। ननु अमावास्याकालविधाने तस्य पौर्णमास्यङ्गवेदिकरणाङ्गत्वापत्तिरित्याशङ्कां निरस्यति—**प्रधानेति**। प्रधानं दर्शप्रधानं तस्यैव श्वःकर्तव्यत्वेन प्रत्यासन्नत्वात्। **अत एव चेति**। यत्र प्रयोगविधिस्तत्र तदपेक्षितक्रमनियामकत्वं पाठस्य कल्प्यते। यदि वेदिकरणस्य प्रधानप्रयोगविधिविषयत्वं न स्यात् तदा तदपेक्षितक्रमाभावे पौर्णमास्यामपि पाठस्य नियामकत्वं न स्यात्। अतः पाठकल्प्यक्रमस्य पौर्णमास्यङ्गत्वनिर्वाहायावश्यके प्रधानप्रयोगविधिविषयत्वे साधारण्यादमावास्यायामपि तत्कल्पनस्यावश्यकत्वात् युक्तमेव बद्धक्रमत्वम्। अग्नीषोमप्रणयनोत्तरयूपच्छेदनविधेरुत्पत्तिमात्रपरत्वेन प्रयोगविधेर्भिन्नत्वान्न तत्रत्यपाठस्य क्रमनियामकत्वमिति नाग्नीषोमप्रणयनेन बद्धक्रमत्वं यूपच्छेदनस्येति वैलक्षण्यमिति भावः। **नियामकत्वासंभवादिति**। न ह्यमावास्याकाले वेदिकरणं किमनन्तरं कर्तव्यमित्याकाङ्क्षा अमावास्यायां हविरभिवासनाभावे हविरभिवासनानन्तरमित्येवं पाठकल्प्यक्रमेण शाम्यति। अतस्तस्य तन्नियामकत्वानुपपत्तेः तदपेक्षाशामको वेदं कृत्वा वेदिं करोतीति श्रुत्या वेदकरणानन्तरमित्येवं विहितक्रम एवेति नामावास्याङ्गवेदिकरणसाधारण्येन हविरभिवासनोत्तरपाठस्य क्रमकल्पकत्वमिति भावः। यत्तूक्तं सामर्थ्यात् पूर्वेद्युस्[3]त्वस्य प्राप्तेरमावास्याकालविधाने न वाक्यभेदापत्तिरिति बाधकाभावात् कालपरत्वं तत् दूषयति—**चतुर्दश्यामिति**। न ह्यमावास्याकाले वेदिकरणविधौ जागरूके सति प्रातश्चतुर्दश्यां तत् कर्तुं शक्यं अमावास्याकालबाधापत्तेः। तदबाधायामावास्याकालप्रतीक्षणे प्रातःकालबाधापत्तेः।

---

१. A. अङ्गत्वेन २. A. प्रागनुष्ठीयमाने ३. B. पूर्वेद्युः तस्य.

सत्त्वाच्च न हविरभिवासनेन बद्धक्रमत्वम्। अतश्च पाठोऽपि परिशेषात्पौर्णमासविषय एव। यदि तु खण्डपर्वणि चतुर्दश्यां प्रातरन्वाधानदिने वेदिकरणसिद्ध्यर्थं लक्षणामभ्यङ्गीकृत्यामावास्यापदेन कर्मैवोच्येत, तदा दार्शिकवेदिकरणस्यायमेव विनियोगविधिरिति हविरभिवासनेन दार्शिकवेदिकरणस्य सुतरां न बद्धक्रमता। न चैवं पूर्वेद्युःकालविशिष्टवेदिकरणस्य दर्शाङ्गतया वाक्येन विनियोगात् प्रकरणेन पौर्णमासाङ्गत्वाभावः, वेदेस्सर्व-

---

एतेन वेदकरणानन्तर्यबलेन पूर्वेद्युस्त्वप्राप्तिरित्यपि निरस्तम्; वेदकरणानन्तर्यबलेन तत्प्राप्तावपि चतुर्दश्यां तत्प्राप्त्युपपादनस्यासंभवात्। अत उभयविधाने वाक्यभेदापत्त्या अमावास्यापदं लक्षणया कर्मपरमेव युक्तम्। तत्रामावास्याङ्गवेदिकरणमित्येव विधीयते। तच्च वेदकरणानन्तर्यबलात् पूर्वेद्युरेव प्राप्तमिति पूर्वेद्युःपदमनुवाद इति वाक्यार्थकल्पने अमावास्याङ्गत्वस्य पौर्णमाससाधारण्येन प्रकरणेनैव प्राप्तेः विध्यानर्थक्यापत्तेः। तत्सार्थक्याय परिसंख्यापरत्वकल्पने पौर्णमास्यङ्गत्वानापत्तेः। अमावास्याङ्गवेदिकरणोद्देशेन पूर्वेद्युःकालविधाने विशिष्टोद्देशे वाक्यभेदापत्तेः पूर्वेद्युःकालविशिष्टवेदिकरणममावास्याङ्गत्वेन विधीयत इत्येव वाक्यार्थमभिप्रेत्यायमेव विनियोगविधिरित्युक्तम्।

तत्र वेदिकरणस्य प्राप्तावपि पूर्वेद्युः पदस्याव्ययस्य निपातत्वेन स्वसमभिव्याहृतवेदिकरणे वैशिष्ट्यस्य व्युत्पन्नत्वात् प्राप्तस्यापि विशिष्टवेषेण विधानं नानुपपन्नम्। एवं विनियोगविधित्वे संपन्ने तस्य च यावत्प्रकरणकल्प्यविनियोगविध्यवगताङ्गभावस्य वेदिकरणस्य प्रधानप्रयोगविषयतया अपेक्षितक्रमनियामकत्वं पाठस्य कल्पनीयम् ततः पूर्वमेव प्रत्यक्षत्वेन प्रवृत्तेः तस्यैव पूर्वेद्युःकालविधानेन क्रमापेक्षायामनवगतक्रमस्यापूर्वःक्रमः कल्प्यत इति न हविरभिवासनेन बद्धक्रमत्वं प्रागित्यभिप्रेत्य सुतरामित्युक्तम्। वेदेः सर्वसाधारण्येनेति। अयं भावः। नात्र वैमृधयागस्य कल्पनाप्रतिबन्धद्वाराऽमावास्याङ्गत्वव्यावृत्त्या पौर्णमास्यङ्गत्वमिव पौर्णमास्यङ्गत्वव्यावृत्त्या अमावस्याङ्गत्वं वाक्येन बोधयितुं शक्यते। वेद्यां हवींष्यासादयतीति वचनविनियुक्तायास्तस्याः सर्वसाधारणतया पौर्णमास्यामप्यपेक्षितत्वात्। ततश्च यथैव "इत्यश्वाभिधानीमादत्त" इति विधेः मन्त्रलिङ्गकल्प्यश्रुतेः प्राक् अश्वाभिधान्युद्देशेन प्रथमतो मन्त्रविशिष्टादानविधायकत्वेऽपि गर्दभाभिधान्या अपि आनयनवशेनादानस्यापेक्षितत्वेन न तदीयादानांशेऽपि परिसंख्यापकत्वम्। अपि तु मन्त्ररूपविशेषणांश एवेति न गर्दभाभिधान्यादाननिवर्तकत्वं वाक्यभेदादिदोषपरिहाराय प्रथमतो विशिष्टवेषेण विधायकत्वकल्पनेऽपि विशेषणविधिकल्पनावेलायां प्राप्ताप्राप्तविवेकेन मन्त्रांश एव विधेस्तात्पर्यात्।

साधारण्येन तत्करणस्याप्यङ्गतयाऽपेक्षासहकृतपौर्णमासप्रकरणेन गर्दभाभिधान्यामादान-स्यैवाक्षेपोपपत्तेः। अत एव वाक्येन श्रुत्या वोभयत्र न प्रकरणस्यार्थाक्षेपस्य वा बाधः, तयोः पूर्वेद्युःकालमन्त्ररूपगुणमात्रविधिफलतया क्रियाविधिफलकत्वाभावात्। अतो न प्रकृते तदन्तापकर्षः ॥ १६ ॥

---

(१७)—सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ ३० ॥ अव्य-वायाच्च ॥ ३१ ॥ असम्बन्धात्तु नोत्कर्षेत् ॥ ३२ ॥ प्रापणाच्च निमित्तस्य ॥ ३३ ॥ सम्बन्धात्सवनोत्कर्षः ॥ ३४ ॥

दैवान्मानुषाद्वा प्रतिबन्धान्मध्यंदिनक्रियमाणसान्तपनीयाया उत्कर्षे स्वकालेऽग्निहोत्र-होमः कर्तव्यो न वेति चिन्तायां—स्वकालकरणे सान्तपनीयार्थं प्रणीतस्याग्नेः पुनः प्रणयना-सम्भवान्मन्त्रवत्प्रणयनलोपेन वैगुण्यापत्तेः, कालस्य च पदार्थगुणत्वेन प्रयोगविधिविशे-षणतयोत्तरकालप्रतीतिकत्वेन च लोपेऽपि वैगुण्याभावादुत्कर्ष इति प्राप्ते—

---

एवमिहापि वाक्यभेदादिपरिहाराय पूर्वेद्युःकालविशिष्टवेदिकरणविधानेऽपि विशेषण-विधिकल्पनावेलायां प्राप्ताप्राप्तविवेकेन उद्देश्यवाचकसमस्तपदकल्पनया पूर्वेद्युः कालमात्र-विधाने तात्पर्यात् तावन्मात्रनिवर्तकत्वमेव। न त्वेतावता उभयसाधारण्येनावगताङ्ग-भावस्य वेदिकरणस्य पौर्णमास्यां निवर्तकत्वमपि। तथा च प्रकरणकल्पितवाक्येनो-भयसाधारण्येन विनियुक्तस्य यावत्प्रधानप्रयोगविषयत्वेनापेक्षितक्रमस्य हविरभिवासनोत्तरपाठेन क्रमकल्पनं तावत् पूर्वेद्युरिति विहिते तत्रैव कालविधानेन प्रयोगविधित्वकल्पनादपेक्षितः क्रमो वेदं कृत्वेति श्रुत्या विधीयत इति नामावास्यायां हविरभिवासनेन बद्धक्रमत्वमिति ॥

---

॥ सान्तपनीया ॥

ननु भिन्नप्रयोगविधिपरिगृहीतयोः सान्तपनीयाग्निहोत्रहोमयोः क्रमापेक्षाभावात् सान्तपनीयो-त्तरमग्निहोत्रं कर्तव्यं न वेति विचारोऽयुक्त इत्यत आह—दैवादिति। न हि यथास्थितयो-स्तयोः क्रमोऽत्र चिन्त्यते। किन्तु दैवान्मानुषाद्वा प्रतिबन्धात् सान्तपनीयाया उत्कर्षे अग्निहोत्र-स्योत्कर्षो न वेति पौर्वापर्यमात्रं चिन्त्यत इति न बाधकम्। मध्यन्दिनेति। साकमेधाव-यवभूता "मरुद्भ्यःसान्तपनेभ्यो मध्यन्दिने चरुं" इति वाक्येनानीकवत्युत्तरं विहिता प्रणीतस्याग्नेः

अनुपादेयत्वात्कालस्य नित्ये यथाशक्ति उपादेयाङ्गत्यागस्यैव तदनुरोधेन षष्ठे वक्ष्यमाणत्वात् प्रणयनलोपेनापि कालानुग्रह एव न्याय्यः। सायंप्रातःकालस्य जीवनरूपनिमित्तविशेषणत्वेन सुतरामनुग्राह्यत्वाच्च।

वस्तुतस्तु—अग्निहोत्रस्यान्यतः प्रणयनजन्योपकारलाभे तदनाक्षेपकत्वस्य दर्शादौ क्लृप्तत्वात्तल्लोऽपि न वैगुण्यम्। अतस्स्वकाल एवाग्निहोत्रं कृत्वा सान्तपनीया कर्तव्येति सान्तपनीयाङ्गानां नैव क्रम आदरणीयः। अत्र च सान्तपनीयेत्युपलक्षणं प्रारब्धकर्ममात्रस्य। अग्निहोत्रेत्यप्यावश्यकमात्रस्य। अनावश्यकविषये "अप वा एतद्यज्ञस्य

---

प्रयोजनाभावात् पुनरकरणे बाधकाभाव इत्याशङ्कानिरासाय मन्त्रवदित्युक्तम्। प्रणयनस्य प्रयोजनाभावेऽपि मन्त्राभावकृतं तद्वैगुण्यमापद्यत एवेत्यर्थः। **कालस्य चेति**। साङ्गप्रधानप्रयोगविधिना तत्तत्पदार्थविशिष्टप्रधानप्रयोगज्ञानोत्तरं कस्मिन् काले तत् कर्तव्यमित्याकाङ्क्षयान्वितस्य पदार्थगुणस्योत्तरकाले प्रतीतिकत्वमित्यर्थः। **वैगुण्याभावादिति**। अनेन चाग्निहोत्रकालात् प्राक् अनुष्ठितो यः सान्तपनीयाङ्गभूतः पूर्वपदार्थः उत्तरस्य तदङ्गभूतस्य उपस्थापको भवतीति मध्येऽग्निहोत्रानुष्ठाने तयोः क्लृप्तक्रमबाधापत्तेर्यद्वैगुण्यं तदप्युपलक्ष्यते तदन्ते क्रियमाणे न तदापत्तेरिति। **निमित्तविशेषणत्वेनेति**। निमित्तबोधककालविध्योः एकवाक्यतायां सायं प्रातः कालावच्छिन्नजीवनस्य निमित्तत्वप्रतीतेः तादृशस्यैव कर्मानुष्ठानप्रयोजकत्वात् सायङ्कालादित्यागे प्रयोजकाभावात् कर्मानुष्ठानस्यैवाभावापत्तेः सुतरामनुग्राह्यत्वमिति भावः। कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात् तस्मिन् प्राप्तमग्निहोत्रं किंचिदङ्गमपहायापि कर्तव्यमिति प्राचां ग्रन्थेषु प्रणयनाङ्गत्यागकृतं वैगुण्यमङ्गीकृतमिव दृश्यते। तद्वैगुण्यं नास्त्येवेति स्पष्टयति—**वस्तुतस्त्विति**। **दर्शादाविति**। दर्शार्थप्रणीताग्नौ यथा प्रातर्होमे प्रसङ्गसिद्धिः क्लृप्तेत्यर्थः। तथा च प्रणयनजन्योपकारलाभात् प्रणयनाभावे तदङ्गमन्त्रस्याप्राप्तेरेव न मन्त्राभावकृतमपि वैगुण्यं सान्तपनीयाङ्गाङ्गभूतक्रमानुरोधेनानुपादेयकालस्य प्रधानभूताग्निहोत्राङ्गस्य त्यागोऽयुक्त इति ज्ञापयितुं सान्तपनीयाङ्गानां नैव क्रम इत्युक्तम्। अत्र च सूत्रे तथा चानीकवत्युत्कर्षेपि मध्ये सायङ्काले अग्निहोत्रहोमसन्ध्यावन्दनादि कर्तव्यमित्येवं सान्तपनीयासमानन्यायात् द्रष्टव्यमित्यर्थः। **प्रणयनस्य चेति**। अनीकवतीष्टिप्रयोगान्तर्गतमध्यन्दिने सान्तपनीयानुष्ठाने सान्तपनीयाङ्गभूतप्रणयनस्य चेत्यर्थः। अत्र प्रकाशकारैः सान्तपनीयावरुद्धे सायङ्काले सायङ्कालस्याधिकारिविशेषणत्वेपि अनुपादेयत्वात् तं विना काम्येष्टिष्वनधिकारादेवाग्निहोत्रानुष्ठानं सान्तपनीयासमाप्त्युत्तरमपि न सिद्ध्यति किमुत तन्मध्ये इति न कालान्वय-

छिद्यते यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतायते" इति निषेधात्। न चैवमनीकवत्युत्कर्षेऽपि मध्यंदिने सान्तपनीयापत्तिः, तथात्वे सान्तपनीयाया अनीकवत्युत्तरकालत्वस्यैकप्रयोगविध्यवगतस्य प्रणयनस्य च बाधेन वरमेकस्यैव मध्यंदिनकालस्य बाधः।

केचित्तु निमित्तविशेषणीभूतकालस्यैवानुग्राह्यत्वं न तु कालमात्रस्येत्यङ्गीकृत्य सान्तपनीयायाः काम्यचन्मध्येऽनावश्यकत्वादकरणमिति वदन्ति। तत्तु चातुर्मास्यानामपि नित्यत्वान्माध्यंदिनस्यापि निमित्तविशेषणत्वापत्तेरुपेक्षितम ॥ १७ ॥

---

## (१८)—षोडशी चोक्थ्यसंयोगात् ॥ ३५ ॥

दैवान्मानुषाद्वाऽपराधादेवो*क्थ्येषूत्कृष्टेषु षोडशिस्तोत्रमुत्कृष्यते न वेति चिन्तायां— "समयाध्युषिते सूर्ये षोडशिनस्स्तोत्रमुपाकरोति" इति वचनविहितसमयाध्युषित-

---

मात्रेण मध्ये तदनुष्ठानम्। अपि तु तत्कालावच्छिन्नजीवनरूपनिमित्तसंबन्धेनावश्यकत्वेन। नैवं सान्तपनीयायां तत्सबन्धेनावश्यकत्वम्। अतो न मध्ये मध्यन्दिने तदनुष्ठानमित्युक्तं;तदनूद्य दूषयति—**केचित्त्विति**। यावज्जीवप्रयुक्तानि चातुर्मास्यानि स्युरित्यादिबोधायनादिवचनैः तेषां नित्यत्वात मध्यन्दिनादिकालस्य निमित्तजीवनावच्छेदकत्वोपपत्तेः काम्यत्वे तेषामनावश्यकत्वेऽपि नित्यत्वे स्वकाले सान्तपनीयाद्यनुष्ठानापत्तिस्स्यादेवेत्यर्थः। **वस्तुतस्तु** यद्यपि चातुर्मास्यमहाप्रयोगविधिना सर्वेषामेकप्रयोगविधानेन क्रमापेक्षाणां पदार्थानां श्रुत्यादिषट्प्रमाणकक्रमकल्पनेऽपि अनीकवत्यादीष्टीनां पृथक्पृथक्कालानां अवान्तरप्रयोगविधिभेदेन क्रमानपेक्षाणां पाठस्याव्यवहितोत्तरत्वरूपक्रमनियामकत्वासंभवात् एकदिनीयप्रातरादिविभागेन मध्यन्दिनकाललभ्यमनीकवत्युत्तरकालत्वमात्रं सान्तपनीयायामार्थिकमेवेति न तदनुरोधेन श्रुतमध्यन्दिनकालस्योपजीव्यस्य बाधो युक्तः। प्रणयनस्यापि भवदुक्तरीत्या अनीकवतीप्रयुक्तप्रणयनजन्योपकारलाभे बाधेप्यक्षतिरिति मध्ये सान्तपनीयानुष्ठानापत्तिर्दुर्निवारैवेति।

---

**॥ षोडशी चोक्थ्यसंयोगात् ॥**

यथास्थितावस्थायां षोडशिग्रहग्रहणानन्तरं समयाध्युषिते सूर्ये स्तोत्रानुष्ठाने क्रियमाणे ग्रहग्रहणोत्तरकालत्वेन विरोधाभावादुत्कर्षानुत्कर्षविचारासंभवात् **दैवान्मानुषाद्वा अपराधादेवेत्युक्तम्।** **उत्कृष्टेष्विति**। त्रयो हि उक्थ्यग्रहाः सूर्यास्तात्पूर्वं नित्यं तृतीयसवने गृह्यन्ते। तेभ्यः पराञ्चमनन्तरं षोडशिग्रहणं बिहितं, तदनन्तरं सूर्यास्तमये षोडशिस्तोत्रमाम्नातं तत्रोक्थ्यग्रहेषु सूर्यास्तादूर्ध्वमुत्कृष्टेषु इत्यर्थः। अत्र च यथाश्रुतभाष्यानुसारेण **शास्त्रदीपिकायां** उक्थ्येषु

कालबाधे प्रमाणाभावादनुत्कर्षः। न च "तं पराञ्चमुक्थ्येभ्यो गृह्णाति षोडशिनम्" इति वचनेन ग्रहणे उक्थ्यपरभावस्य विहितत्वात् स्तोत्रस्य च "ग्रहं वा गृहीत्वा" इति वचनेन ग्रहणोत्तरकालत्वात् तदनुरोधेन समयाध्युषितकालबाधः, 'तं पराञ्चम्' इत्यनेन षोडशिग्रहयागाभ्यासस्यैवोक्थ्यपरभावविधानेन ग्रहणस्य स्तोत्रपूर्वकालत्वेऽपि बाधकाभावात्। अत एव तत्र गृह्णातिर्विधेयपतिवद्यागपर एव।

अस्तु वा ग्रहणपरः, तथाऽपि तैत्तिरीयशाखायां षोडशिनस्सवनत्रयेऽप्याम्नानात् सवनान्तरविषयकं 'तं पराञ्चम्' इति वाक्यम्।

अस्तु वा एतदपि सर्वविषयं, तथाऽपि 'ग्रहं वा' इत्यस्य सामान्यविषयत्वादुक्थ्योत्तरकालग्रहणेऽपि समयाध्युषिते स्तोत्रकरणे न कश्चिद्विरोधः।

---

उत्कृष्टेषु समयाध्युषितरूपस्तोत्रकालानुग्रहार्थं षोडशिग्रहस्योक्थ्यपरभावरूपक्रमबाधेनानुत्कर्षमाशङ्क्य क्रमोप्यत्र प्रधानभूतग्रहगुणत्वात् अङ्गभूतस्तोत्रगुणभूतात् कालात् बलीयान्। अतस्तदनुरोधेन स्तोत्रकालं बाधित्वोत्कृष्टव्यःषोडशीति सिद्धान्तितम्। तत्रोक्थ्योत्कर्षेण षोडश्युत्कर्षेपि वक्ष्यमाणरीत्या स्तोत्रकालानुग्रहसंभवेन तदनुरोधेन षोडशिग्रहानुत्कर्षपूर्वपक्षासंभवात् फलतोपि च स्तोत्रोत्कर्षानुत्कर्षपर्यवसानात् तमेव विचारं विषयीकरोति—**षोडशिस्तोत्रमुत्कृष्यते नवेति**। ननूक्थ्यषोडशिस्तोत्रयोः पौर्वापर्यरूपस्यापि संबन्धस्याभावात् उक्थ्योत्कर्षे कुतः तदुत्कर्षसंभवः इत्यनुत्कर्षसाधनं व्यर्थमित्याशङ्कानिरासाय सिद्धान्त्यभिप्रेतमुत्कर्षबीजमाशङ्क्य निराकरोति—**न चेति**। तत्र प्रातस्सवने इत्याद्यनुत्कीर्त्य"यत्प्रातस्सवन" इत्यादिना सवनद्वयं निन्दित्वा "तृतीयसवने ग्राह्य" इति श्रवणं तत्र प्रातस्सवनादिकीर्तनं निन्दाद्वारेण तृतीयसवनविधिस्तुत्यर्थतया तदेकवाक्यभूतमवगम्यमानं न पृथग्विधित्वमर्हतीति न सवने सवने षोडशी ग्रहीतव्य इति दशमे वक्ष्यमाणत्वात् तं पराञ्चमिति वाक्यस्य समयाध्युषितवाक्यस्य च समानविषयत्वान्न निरवकाशेन समयाध्युषितकालेन निरवकाशत्वेन उक्थ्यपरभावबाध इत्यर्थसिद्धिरित्येतदर्थं **तैत्तिरीयशाखायामित्युक्तं**; "तमभिसवने गृह्णाति" इत्यनन्यशेषभूतस्य प्रातस्सवनादिविधेर्दर्शनादित्यर्थः। दाशमिकमधिकरणं तु शाखान्तराभिप्रायेण। **सवनान्तरविषयं** तृतीयसवनातिरिक्तसवनद्वयविषयं; **सर्वविषयं** सर्वसवनविषयं **सर्वपदार्थानां** ग्रहग्रहणोत्तरकालोक्थ्यपरभावसमयाध्युषितकालरूपाणाम्। **यत्त्वत्र वार्तिकतन्त्ररत्नयोः** "तं पराञ्चं" इति वाक्येनागृहीतस्य यागासंभवात् ग्रहणस्य परभावे विहिते तद्यागस्यापि परभावविधानादवदानेनेव ग्रहणेन यागस्यैवोपक्रान्तत्वात् उक्थ्येभ्यः प्रागेव षोडशिग्रहणे प्रधानभूतस्य यागस्यापि प्रागुक्थ्येभ्यः प्रक्रमात् उक्थ्यपरभावरूपप्रधानयागाङ्गक्रमस्यैव लोपापत्तेः **अङ्गाङ्गस्तोत्रकालानुग्रहो न युक्त इति**

यदि तु सामान्यविशेषरूपबाधस्य यथाऽवस्थितशास्त्रार्थविषयत्वेन दैवाद्यपराधेऽप्रवृत्तेस्सर्वेपदार्थानां तुल्यबलत्वमुच्येत, तथाऽप्युक्थ्यपरभावस्य क्रमत्वेनोपादेयत्वात् पूर्वाधिकरणन्यायेन बाधोपपत्तेस्समयाध्युषितकालानुग्रहो न्याय्य एव। न च कालस्याङ्गाङ्गत्वेन प्रधानाङ्गक्रमापेक्षया दौर्बल्यं, उभयोरप्यङ्गाङ्गत्वात्। न च ग्रहणस्यात्रावदानवत्प्रदानोपक्रमता, तद्वदेकपदार्थत्वाभावादिति प्राप्ते—

ग्रहणस्य षोडशियागाभ्यासकल्पकत्वेनान्तरङ्गत्वात् तत्क्रमस्य प्राबल्यम्। वस्तुतस्तु 'तं पराञ्चं' इत्यस्यापि कालपरत्वमेवेत्यन्तरङ्गतद्बाधोऽन्याय्य एव। न च ग्रहणस्योत्तरकालं करणेऽपि स्तोत्रस्यैव कालानुग्रहश्शङ्क्यः, तथात्वे स्तोत्रे ग्रहणोत्तरकालत्वस्य प्रधानप्रत्यासत्तेश्च बाधप्रसङ्गेनैकस्यैवास्य समयाध्युषितकालबाधस्य न्याय्यत्वात्। अतस्तस्याप्युत्कर्ष इति सिद्धम्॥ १८॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
पञ्चमस्याध्यायस्य प्रथमः पादः

---

पक्षान्तरेण क्रमस्य प्रधानाश्रितत्वं सिद्धान्ते उपपादितम् तदनूद्य दूषयति—न चेत्यादिना। चतुरवत्तं जुहोतीत्यनेन चतुरवत्तसंस्कारार्थत्वेन होमविधानात् होमनिष्पत्त्यर्थमेव चतुरवत्तावयवत्वेन द्विरवदानविधानादवदानादिप्रदानान्तस्य एकपदार्थत्वं वक्ष्यते। न चात्र तद्वत् गृहीतं जुहोतीत्येवं वचनमस्ति। यागोपयोक्ष्यमाणद्रव्यसंस्कारमात्रार्थत्वेनैकपदार्थत्वकल्पने अवघातादिसंस्कारादिप्रदानान्तस्यापि एकपदार्थत्वापत्त्या तदुपक्रमेण प्रधानयागोपक्रमापत्तिः। अतो नैतादृशस्थले ग्रहणोपक्रमेण प्रधानोपक्रमात् प्रधानाश्रितत्वं क्रमस्येति भावः। **उत्तरकालं** उक्थ्योत्कर्षेऽपि समयाध्युषितकाले स्तोत्रं कृत्वा उक्थ्यानन्तरं षोडशिग्रहणमित्येवं स्तोत्रोत्तरकालमित्यर्थः। **प्रधानप्रत्यासत्तेश्चेति।** षोडशिग्रहणोत्तरं षोडशियागाभ्यासः क्रियते। तदानीमेव स्तोत्रानुष्ठाने प्रधानप्रत्यासत्तिर्भवति। पूर्वमनुष्ठाने तु सा बाधिता भवतीति भावः। **अतस्तस्याप्युत्कर्ष इति।** पूर्वपक्षे पूर्वोक्तरीत्या पूर्वं षोडशिग्रहानुष्ठाननियमाभावेऽपि षोडशिस्तोत्रमात्रं स्वकाले कार्यमेव न तूत्कर्षः। सिद्धान्ते तु अस्तादूर्ध्वमेव उक्थ्यग्रहस्तोत्रतद्यागाभ्यासान् कृत्वा षोडशिग्रहस्तोत्रषोडशिग्रहयागा इति प्रयोजनं सिद्धमित्यर्थः। **यत्तु प्रकाशकारैः** षोडशिग्रहस्तोत्रानन्तरमुक्थ्ययागः ततः षोडशियागः, इत्युक्तं तत् स्वयमेव ग्रहणे प्रधानोपक्रमस्य साधितत्वात् उक्थ्यग्रहस्तोत्रानन्तरमेव तद्यागाभ्यासस्य प्राप्तेः षोडशिग्रहणात् पूर्वमेवानुष्ठानमित्युपेक्ष्यम्।

इति श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीखण्डदेवान्तेवासिकविमण्डनशम्भुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां
पञ्चमस्य प्रथमः पादः

---

# अथ पञ्चमाध्यायस्य द्वितीयः पादः

## (१)—सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥
## सर्वेषां वैकजातीयं कृतानुपूर्वत्वात् ॥ २ ॥

यत्रानेकेषां प्रधानानामङ्गानां वा एकेन प्रयोगविधिनोपसंग्रहात्साङ्गानां साहित्यावगमस्तत्र दर्शपूर्णमासप्राजापत्यादौ किमेकैकस्य प्रधानस्य सन्निपत्योपकारकाङ्गकाण्डं कृत्वेतरस्य कर्तव्यमित्येवं काण्डानुसमयः, अथवा एकैकमङ्गमेकैकस्य कृत्वेतरस्य कर्तव्यमित्येवं पदार्थानुसमय इति चिन्तायां—

प्रधानप्रत्यासत्त्यनुग्रहात् प्रकृतितः परस्परसंश्लिष्टानामेवोपाकरणनियोजनादीनामेकैकस्मिन् पशौ प्राप्तत्वाच्च काण्डानुसमय एव। एकप्रयोगत्वं त्वारादुपकारकाङ्गाभिप्रायेणेति न कश्चिद्विरोध इति प्राप्ते—

प्रत्यक्षवचनेनैकस्मिन् काले साङ्गानां सर्वेषां प्रयोगविधानात्प्रधानसाहित्यवदङ्गेष्वपि साहित्यावगमादेकैकाङ्गेन सर्वप्रधानानां युगपदुपकर्तव्यमित्यर्थावगमेऽकमुपाकरणाख्य-

---

॥ सन्निपाते प्रधानानाम् ॥

**एकेनेति**। पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेत वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येवं रूपेणेत्यर्थः। **दर्शपूर्णमासे इति**। आग्नेयाग्नीषोमीयनिर्वापप्रोक्षणादिष्वपि एतदधिकरणसिद्धान्तेनैव पदार्थानुसमय इत्यर्थः। आरादुपकारकेषु प्रयाजादिषु तन्त्रत्वात् प्रतिप्रधानमावृत्त्यप्रसक्तेः न विचारविषयतेति द्योतयितुं **सन्निपत्योपकारकं काण्ड**मित्युक्तम्। एकपशुविषयाणामुपाकरणनियोजनादीनामानन्तर्यस्य प्रकृतिप्राप्तस्याबाधरूपपूर्वपक्षहेतोः प्राजापत्येषु संभवेपि दर्शपूर्णमासयोरसंभवात् तत्र पूर्वपक्षोदयासंभवमभिप्रेत्य प्राजापत्येष्वेव पूर्वपक्षमाह —**प्रधानप्रत्यासत्त्यनुग्रहादिति**। यदि एकस्य पशोरुपाकरणाव्यवधानेनैव नियोजनादि क्रियते तदा स्वप्रधानेन पशुना अव्यवहिता प्रत्यासत्तिर्भवति इतरथा षोडशक्षणव्यवहिता। सा च संभवत्यां तस्यामयुक्ता, इति संश्लिष्टानां स्वाव्यवहितकालोत्तरकालानुष्ठानविषयतया अतिदेशप्राप्तकाल्पनिकप्रधानासत्तिबाधे निमित्तं दर्शयितुं **प्रत्यक्षवचनेने**त्युक्तम्। **एकस्मिन् काल इति**। एकक्षणानुष्ठेयत्वेन साहित्यासंभवेऽपि षोडशक्षणव्य-

मङ्गं सर्वपशूनां कृत्वा नियोजनं कार्यम्। प्रधानप्रत्यासत्तिस्तु प्रत्यक्षवचनावगतोक्तसाहित्यानुरोधेनैव कल्पनीया। उपाकरणानन्तरमेव च नियोजनमिति यथाप्रकृत्येवानुष्ठानम्। आवृत्तानावृत्तत्वं तु प्रधानसाहित्यानुरोधेनेति न कश्चिद्विरोधः। अतः पदार्थानुसमयः। प्रवृत्तिक्रमविचारस्त्वेतदधिकरणोत्तरं द्रष्टव्यः॥ १॥

---

## (२)—कारणादभ्यावृत्तिः॥ २॥

यत्र तु प्रधानविरोधः यथा—अश्वप्रतिग्रहेष्ट्यां शते वा सहस्रे वाऽश्वदाने तावत्सु पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रयणं कृत्वोद्वासनं क्रियेत ततो दह्येरन्, ततस्तत्र काण्डानुसमय एव कतिपयाङ्गानाम्।

यत्त्वत्र वार्तिके निमित्तगतस्य यावत्त्वस्याविवक्षितत्वान्नैमित्तिकगतस्य च तावत्त्वबहुत्वादेः पृष्ठशमनीयन्यायेन अनुवाद्यगतत्वेनाविवक्षितत्वात्साहित्यबोधकवचनाभावेनानेकेष्वप्यश्वदानेषु प्रत्येकप्रयोगेणैव वारुणेष्टिकर्तव्यत्वावगतेर्भाष्यस्थमेतदुदाहरणं साहित्यबोधकवचनान्तरसम्भावनयेत्युक्तम्। तन्न, "सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्" इत्यत्र हि उदवसानसमानकर्तृकत्वबलेनैव पृष्ठशमनीये बहुत्वादेः प्राप्तत्वाद्युक्ता साहित्याविवक्षा। प्रकृते तु निमित्तसमसङ्ख्याकत्वस्यैव तावच्छब्दार्थस्य नैमित्तिकविशेषणतयाऽप्राप्तस्य विधेयत्वाद्युक्तमेवानेकनिमित्तसन्निपाते नैमित्तिकसाहित्यम्। तावच्छब्दाभावे हि युगपदनेकनिमित्तसन्निपाते तन्त्रेण नैमित्तिकीष्टिरेकैव प्रसज्येतेति युक्त एव

---

वहितकालानुष्ठेयतयैव साहित्यमुपपादनीयमिति कालपदेन सूचितम्। आवृत्तेति। प्रकृतौ पशोरेकत्वात् अनावृत्तोपाकरणमेवासीदिति अनावृत्तोपाकरणानन्तर्यमर्थसिद्धम्। इह तु पशूनां बहुत्वात् साहित्यानुरोधेनावृत्तोपाकरणानन्तर्ये जातेपि उपाकरणानन्तरं नियोजनमित्यर्थः सिद्ध्यत्येव। स्वस्वोपाकरणाव्यवधानांशस्तु परं बाध्यते प्रत्यक्षवचनानुगृहीतानुमतषोडशक्षणव्यवधानेनेति।

---

॥ कारणादभ्यावृत्तिः॥

दह्येरन्निति। आद्यप्रभृतयो दह्येरन् तत्तेषु कपलेष्वधिश्रयणेन बहुकालं श्रपणात्। कतिपयाङ्गानां यागसंबन्धिपुरोडाशानाम्। येषां तु पुरोडाशानां यावदुद्वासनं शोषः प्रसज्येत तावतामगत्या काण्डानुसमय एव। येषान्त्वन्तिमानां त्रयाणां चतुर्णां यावदुद्वासनं न शोषप्रसङ्गः तेषां प्रयोगविध्यवगतसाहित्यसंपत्तये यथाप्रकृति पदार्थानुसमय एवेति ज्ञापयितुं कतिपयेत्युक्तम्।

तावच्छब्दार्थविधिः। यत्रापि हि पुरुषार्थतया न क्रत्वन्तःपातित्वं यथा—युगपदनेकचण्डालादिस्पर्शादावनेकगृहदाहादौ च, तत्रापि नैमित्तिकस्य सकृदनुष्ठानं किमुत क्रतुप्रयोगमध्यवर्तितदङ्गवारुणेष्टेः। अतश्चाग्नेयादिभेदेऽपि प्रयाजाद्यङ्गतन्त्रत्ववत् युगपदनेककपालभेदने होमतन्त्रत्ववच्च वारुणेष्टेस्तन्त्रत्वप्रसक्तौ निमित्तसमसङ्ख्याकत्वविधानेन तावत्त्वप्रतीतावप्येकप्रयोगविधिपरिगृहीतत्वेन साहित्यप्रतीतेर्युक्तमेवोदाहरणत्वम्। तत्र चारादुपकारकेषु बहुधा प्रसङ्ग एव। सन्निपातिषु बहुधा पदार्थानुसमय एव। क्वचिदेव तु प्रधानविरोधे काण्डानुसमयः। प्रदाने तु सम्प्रतिपन्नदेवताकत्वात्तन्त्रत्वमेव। पुरोडाशमात्रे तु निमित्तसमसङ्ख्याकत्वं प्राजापत्यवदिति द्रष्टव्यम्॥ २॥

---

## (३)—मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन॥ ४॥ सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात्॥ ५॥

पदार्थानुसमयप्रसङ्गात् कियानेकः पदार्थ इति चिन्त्यते। किमेकैकमुष्टिनिर्वाप

---

एतेन यत्तन्त्ररत्नकृता यत्र तु नास्ति प्रधानबाधः त्रिचतुराद्यश्वदाने तत्र भवतु पदार्थानुसमयः। पौण्डरीकादिषु बहुष्वश्वदानेषु निमित्तेषु बहुषु पुरोडाशेषु मा बाधि प्रधानमिति न पदार्थैरनुसमेतव्यमिति ग्रन्थेन पदार्थानुसमयकाण्डानुसमययोः विषयप्रदर्शनं दूरतरस्थलभेदेन कृतं, तद्व्यर्थमेव पूर्वोक्तरीत्या पौण्डरीकादिष्वेव उभयोरप्युपलब्धिसंभवात्। एकप्रयोगविधिपरिगृहीतत्वेनेति। यदङ्गं वारुणीष्टिः तत्क्रतुप्रयोगविधिना इतराङ्गानामिवासां परस्परं प्रधानानां च साहित्यं प्रतीयत एवेत्यर्थः। यत्तु वार्तिकतन्त्ररत्नयोरेकक्रतूपकारप्रयोजनानामपि प्रयाजानूयाजानां न सह प्रयोगः किन्तु प्रयाजं साङ्गं समाप्यानूयाजप्रयोगः। एवमिहापि भिन्न एवेष्टीनां प्रयोगः इत्युक्तं, तद्दूषयितुं सह प्रयोगे विवेकं दर्शयति—तत्र चेति। अयमर्थः—एकप्रयोगविधिना हि साङ्गस्य कर्मणः सहप्रयोगे विहिते एकेन कर्त्रा येषां युगपदनुष्ठानं कर्तुमशक्यं क्रमोऽपि नियतःकश्चनाक्षिप्यते, तत्र श्रुत्यादीनि नियामकानि भवन्तीति प्रयाजानूयाजादीनां भवति पाठादनुष्ठानक्रमः। इह तु प्राजापत्यवत् संप्रतिपन्नदेवताकत्वेन सर्वेषां वारुणयागानां सहानुष्ठानसंभवात् एकोपक्रमेण प्रयोगः सुकर एवेति न पूर्वप्रयोगसमाप्त्यपेक्षा, येन क्रमापेक्षा भवेत्। तत्र प्रधानार्थं कृतैरारादुपकारकैः पशुपुरोडाशयाग इव उपकारलब्धेः प्रसङ्गसिद्ध्या न तेषां पृथगनुष्ठानमिति। प्राजापत्यवदिति। प्राजापत्ययागेषु संप्रतिपन्नदेवताकत्वेन सहानुष्ठानेपि सप्तदशसंख्यद्रव्यदेवताभेदात् यागानां सप्तदशसंख्यत्वं एवमिह तन्त्रेणानुष्ठानेपि पुरोडाशानां निमित्तगतसंख्याभेदात् भेदेन निमित्तसमसंख्यत्वमित्यर्थः।

---

एकः पदार्थस्तेन चाग्नेयाग्नीषोमीयनिर्वापयोरनुसमयः, किं वा चतुर्मुष्टिनिर्वाप एकः पदार्थस्तावता चानुसमय इति चिन्तायां—एकैकमुष्टिनिर्वापे यत्नसमाप्तेर्मन्त्रसत्त्वाच्च तस्यैवैकपदार्थत्वमिति प्राप्ते—

अङ्गपर्यायः पदार्थशब्दः, तस्यैव प्रयोगविधिना विधानात्, विहितस्यैवाङ्गत्वात्। न चैकमुष्टिनिर्वापो विहितः, किन्तु चतुर्मुष्टिनिर्वाप एव, "चतुरश्चतुरो मुष्टीन्निर्वपति" इति विधानात्। अत्र हि अर्थप्राप्तनिर्वापानुवादेन न गुणमात्रविधानं सङ्ख्यामुष्ट्युभयविधाने वाक्यभेदात्, पुरोडाशमात्रपर्याप्तव्रीहिमतः पृथक्करणरूपनिर्वापस्य नियमेनाप्राप्तत्वाच्च। अतश्चतुर्मुष्टिनिर्वापेणैवानुसमयः। अत एव वीप्साऽप्युपपद्यते। एवं "कपालान्युपदधाति अष्टौ दक्षिणतः एकादशोत्तरतः" इति सङ्ख्यादिविशिष्टोपधानविधानात्सर्वकपालोपधानेनानुसमयः। यद्यपि च कपालगतबहुत्वमुद्देश्यविशेषणत्वादविवक्षितं, तथाऽप्यष्टत्वादिसङ्ख्याया उपधानविशेषणत्वाद्विवक्षोपपत्तिः। यद्यपि च तत्तन्मन्त्रादिभेदादेकैकोपधानविधिरपि कश्चिदुन्नीयेत तथापि वक्ष्यमाणकृष्णाजिनास्तरणन्यायेन

---

॥ मुष्टिकपाल ॥

क्रमनिरूपणलक्षणे पदार्थेयत्तानिरूपणमसङ्गतं स्यादित्यत आह—**पदार्थानुसमयप्रसङ्गादिति। पदार्थशब्द इति।** अनुसमयप्रसङ्गे इति शेषः। वार्तिकोक्तां पूर्वपक्षयुक्तिमञ्जनादिषु अदृष्टार्थेषु अर्थतः प्राप्त्यभावेन अव्यापिकामप्याशङ्क्य निराकरोति—**अत्र हीति। यद्यपि चेति।** यत्तु प्रकाशकारैः यथा पुरोडाशे सर्वव्रीहीणामेव साधनत्वात् तादृशेष्वेव लक्षितेषु प्रोक्षणावघातादेर्विधिः, एवं कपालेषु श्रपयतीति सर्वेषां कपालानां साधनत्वात् तादृशेष्वेव लक्षितेषु उपधानं विधेयमिति सर्वकपालोपधानमेवैकः पदार्थ इत्युक्तम्। तत्तेनैव न्यायेन समुदितेष्वेव कपालेषूपधानादिसंस्कारापत्त्या प्रत्येकं तदनापत्तेरयुक्तमिति उपेक्ष्यान्यथा समाधत्ते—**तथापीति।** यद्यप्यस्मिन् पक्षे एकैककपालस्य अष्टवारमुपधानापत्तिः तथापि उपहितस्योपधानासंभवात् अष्टानामेव मन्त्राणामाम्नानाच्च एकैककपालद्वारकप्रचयशिष्टत्वेनैवाष्टत्वसिद्धिः, न त्वेकैकस्याष्टकृत्वः उपधानेनेति ज्ञेयम्। **वक्ष्यमाणेति।** यथा कृष्णाजिनास्तरणादिपेषणादिपदार्थानां पृथग्विधिप्रमेयत्वेऽपि पेषणविध्येकवाक्यतया एकपदार्थत्वमेवं एकैकोपधानस्य भिन्नभिन्नविधिविधेयत्वेऽपि तेषामष्टसंख्यकपालादिकोपधानविध्येकवाक्यतया एकपदार्थत्वं ज्ञेयमिति भावः। यद्यपि अर्थप्राप्तेऽवदाने द्वित्वसङ्ख्याविधिरिति मूलग्रन्थेषु प्रतीयते तथापि यथ संख्याविशिष्टावदानविधिः तथा स्वयमेव वक्ष्यते। तदभिप्रायेणोक्तं—**द्वित्वविशिष्टावदानेति।**

एकपदार्थत्वं सर्वोपधानस्य द्रष्टव्यम्। अत आग्नेयस्य सर्वाण्युपधायाग्नीषोमीयस्योपधेयानि। एवं "द्विर्हविषोऽवद्यति" इत्यत्रापि द्वित्वविशिष्टावदानविधानात् द्विरवदानेनानुसमयो न त्वेकैकावदानेन। न च "मध्यादवद्यति, पूर्वार्धादवद्यति" इति वाक्याभ्यामेव द्विरवदानप्राप्तेस्तद्विधिवैयर्थ्यम्। एतद्विध्यभावे चतुरवत्तवाक्यस्थचतुस्सङ्ख्या मध्यात् द्विः पूर्वार्धात् द्विः इत्येवं हविष एव सम्पादेत। एतत्सत्त्वे तु तद्विरोधादुपस्तरणाभिघारणाभ्यामिति तद्वाक्यस्था चतुस्सङ्ख्याऽनुवाद एव। इदं च सान्नाय्यविषयं द्विरवदानानुसमयकथनम्। आग्नेयादौ तु अवदानादिप्रदानान्तेनानुसमयस्य वक्ष्यमाणत्वात्। सान्नाय्ये तु उपस्तरणाभिघारणयोस्तन्त्रत्वात् दध्नो द्व्यवदानं गृहीत्वा पयसो ग्राह्यम्। कल्पसूत्रेषु तु पयसो द्व्यवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तम्। तैत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात्। होमस्तन्त्रेणैव सम्प्रतिपन्नदेवताकत्वात्। एवमञ्जनाभ्यञ्जनवपनपावनेष्वपि तत्तद्विधिसत्त्वान्नैकेन नेत्रेण शरीरावयवेन वाऽनुसमयः, अपि त्वनेकयजमानकेऽहीने एकत्र नेत्रद्वयेऽप्यञ्जनं कृत्वा यजमानान्तरे तत्कार्यं सर्वावयवोपेताभ्यञ्जनादिना च प्रत्येकमनुसमयः। सत्रे तु 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिना तत्तत्संस्कारकदीक्षोत्तरकालत्वविधानात् काण्डानुसमय एव॥ ३॥

---

अत्र वार्तिकतन्त्ररत्नयोः सिद्धान्ते भाष्योदाहृतं द्विर्हविषोऽवद्यतीति वचनं द्वित्वसङ्ख्याविशिष्टावदानविध्यभिप्रायमुक्तं अवदानादिप्रदानान्तस्य एकपदार्थत्वस्य वक्ष्यमाणत्वात्। अतः एकावदानं यथा न पदार्थः तथा द्व्यवदानमपि न पदार्थ इति उभयोरपि पक्षयोः एकतरस्यापि पदार्थत्वाभावात् सिद्धान्ते द्व्यवदानस्य पदार्थत्वकथनं भाष्यकारीयमेकावदानस्य एकपदार्थत्वाभावाभिप्रायं एतदधिकरणे एकावदानस्यैकपदार्थत्वाभावमात्रे साधिते तेनैव न्यायेन द्व्यवदानं न पदार्थ इत्युत्तराधिकरणे प्रसाधयिष्यत इत्युक्तम्। तत्र भाष्यकारस्याभिप्रायं दर्शयति—**इदं चेति**। तथा चावदानादिप्रदानान्तानुसमयकथनं वक्ष्यमाणमाग्नेयादिविषयं अत्रत्यं द्व्यवदानेनानुसमयनिरूपणं सान्नाय्यावदानविषयं, अवदानादिप्रदानान्तस्य एकपदार्थत्वं तु सान्नाय्ये यागद्वयस्य सहानुष्ठानात् दध्यवदानप्रभृतिकत्वात् एकरूपमेवेति न विरोधः। **दध्नो द्व्यवदानमिति**। यद्यपि "ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयं दधि हि पूर्वं क्रियते इत्यनादृत्यतच्छृतस्यैव पूर्वस्यावद्येत् इन्द्रियमेवास्मिन् वीर्यं श्रित्वा दध्नोपरिष्टाद्धिनोति यथा पूर्वमुपैति" इति तैत्तिरीयश्रुत्यनुसारिपयोवदानमेव याज्ञिकैः दध्यवदानात्पूर्वं क्रियते तथापि दध्नोऽवदाय शृतस्यावद्यति एतद्वा विपरीतमित्यापस्तंबसूत्रे दध्यवदानप्राथम्यमुक्तं न विरुद्ध्यते इति ज्ञेयम्। **तत्तद्विधिसत्वादिति**। दीक्षितः पूर्वमाङ्क्ते इत्यञ्जनविधौ पूर्वत्वाक्षिप्तवामनेत्राञ्जनविधिना नेत्रद्वयाञ्जनस्य एकपदार्थत्वम्।

(४)—संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥

सान्नाय्यवदाग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि द्व्यवदानेनानुसमय इति प्राप्ते—

'चतुरवत्तं जुहोति' इत्यनेनावत्तोद्देशेन होमाख्यसंस्कारविधानादर्थादेवावदानप्राप्तेः "द्विर्हविषोऽवद्यति" इत्यनेन द्वित्वमात्रविधानादुक्तविधचतुरवत्तहोमस्यैवैकपदार्थत्वेनावदानादिप्रदानान्तेनानुसमयः ।

वस्तुतस्तु—अवत्तस्योद्देश्यत्वेन ततः पूर्वमवदानप्राप्तेर्दुरुपपादत्वात् द्व्यवदान-

---

तथा नवनीतेनानुलोममभ्यङ्क्ते इत्यभ्यञ्जनविधौ अनुलोमविध्याक्षिप्तशीर्षादिनानावयवाभ्यञ्जनविधानात् शीर्षादिसर्वावयवाभ्यञ्जस्य एकपदार्थत्वम् । तथा केशश्मश्रु वपते एकविंशत्या पावयतीति विधिविहितवपनैकविंशतिविशिष्टपावनस्यैकपदार्थत्वमिति भावः । एवमेकपदार्थत्वसाधने प्रयोजनं दर्शयति—अपि त्विति । यत्तु प्रकाशकारैः एकविंशतिसंख्याकमन्त्रविशिष्टपावनविधानात् एकपदार्थत्वमित्युक्तं तत् चित्पतिस्त्वेति त्रयाणामेव मन्त्राणां आम्नानात् एकविंशतिसंख्याकत्वस्य मन्त्रेष्वनुपपत्तेरुपेक्ष्यम् ।

---

॥ संयुक्ते तु प्रक्रमात् ॥

उद्देश्यम् हि विधेयांशात् प्राक् निर्ज्ञातस्वरूपमपेक्षितम् । न चात्र होमविधेः प्राक् अवत्तस्वरूपं केनचित् प्रमाणेन ज्ञातमस्ति । होमविधिर्होमानुष्ठापकः अवदानं विना न संभवतीत्यार्थिकी अवदानप्राप्तिरित्येतत्तन्त्ररत्नाद्युपपादनं तु अन्योन्याश्रयग्रस्तत्वात् अयुक्तं ; अतश्चतुरवत्तस्य होमसंस्कार्यता अवदानं विना अनुपपन्नेत्येवं चतुरवत्तचोदनयैवार्थप्राप्ते अवदाने हविषो द्विरेवेत्येतावन्मात्रं विधीयते न तु विशिष्टविधिरयं, न चेदन्येन शिष्टा इत्यपवादात् इति प्रथमपक्षमुक्त्वा उपेत्यापि ब्रूमः विधीयमानेप्यदृष्टार्थता स्यात् इत्येतत्पक्षान्तरं तन्त्ररत्नाद्युपपादितं प्रकाशकारैः नानाबीजेष्ट्यविकरणे अभ्युपेत्यवादमात्रमित्युक्तं; तदयुक्तमिति सूचयितुं युक्तत्वेनोपपादयति—वस्तुतस्त्वित्यादिना । स्रुववदिति । यथा स्रुवेणावद्यतीति वचनविहितः स्रुवः सामर्थ्यात् आज्यावदानमात्रे भवतीति पुरोडाशालङ्करणार्थाज्यावदानेपि संभवति एवमवदानमात्रे द्वित्वविधाने तत्रापि तत्प्राप्त्यापत्तिरिति भावः । वाक्यभेदापत्तेरिति । एतेन एकां गामित्यत्र कर्मीभूतं गोमात्रं एकत्वविधावुद्देश्यं कर्मतया च गौर्दक्षिणादान एव प्राप्तेति न विशिष्टोद्देश्यतेति दशमे वक्ष्यते । एवं हविर्मात्रमेवापादानभूतमुद्देश्यम् । न चार्थप्राप्तावदानतोऽन्यत्र

वाक्ये चावदानमात्रे द्वित्वविधानेऽलङ्करणार्थाज्यावदानेऽपि स्रुववत् द्वित्वप्राप्त्यापत्तेर्द्वित्वविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेर्द्वित्वविशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेरवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽप्युपस्तरणादिविधिन्यायेन दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्याप्यङ्गीकारादवदानादिप्रदानान्तस्यैवैकपदार्थत्वावगमेन तेनैवानुसमयः ॥ ४ ॥

---

## (५)—वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ७ ॥ कारणाद्वाऽनवसर्गस्स्यात् यथा पात्रवृद्धिः ॥ ८ ॥ न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रविवृद्धिः ॥ ९ ॥

यूपधर्मा अञ्जनोच्छ्रयणसम्मानपरिव्याणादयो यूपगणेऽतिदेशप्राप्ताः पृथक्पदार्था अपि न प्रत्येकमनुसमेयाः "अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेत्" इति

---

हविषोऽपादानत्वं प्राप्नोतीति न विशिष्टोद्देशे वाक्यभेद इति प्रकाशकारोक्तमपास्तम् । तत्र दानस्य प्रकरणादाश्रयत्वेन लाभेपीह तदभावे अर्थप्राप्तत्वमात्रत्वे नित्यवदनुवादानुपपत्त्या नियमेनार्थप्राप्तावदानद्वारकत्वे मानाभावेन विशिष्टोद्देश्यस्यावश्यकत्वेन तदनिवारणात् । उपस्तरणाभिघारणन्यायेनेति । यथा उपस्तरणाभिघारणयोः स्वातन्त्र्येण विधीयमानयोरपि भिन्नपदार्थत्वे अदृष्टार्थत्वापत्तेः चतुरवत्तसंपादकत्वेनैव तदवयवत्वेन विधानं दृष्टार्थत्वानुरोधेन, एवमिहापि द्वित्वविशिष्टावदानस्य स्वातन्त्र्येण विधानेपि तदवयवत्वेनैव युक्तं विधानमिति न तावन्मात्रस्य भिन्नपदार्थत्वमिति ।

---

॥ वचनात्तु ॥

नन्वत्र त्यागरूपस्यावसर्गस्य निषेधे सति तस्य प्रसक्त्यालोचने धारणपूर्वकस्य तस्य विधितः प्राप्त्यभावे यदैव रागतो धारणं कृत्वा त्यागः प्रसक्तः तद्विषयत्वसिद्धेः विकृतावपि इह प्रयोगविधितः पदार्थानुसमयप्राप्तेः तद्विरुद्धं धारणमेव न करिष्यतीति तत्पूर्वकत्यागप्रसक्त्यभावान्निषेधस्यैवाप्रवृत्तेरित्यभिप्रायेण शङ्कते—न चानेनेति । पाक्षिकत्वाद्यापत्तेरिति । आदिपदेनादृष्टार्थत्वस्य संग्रहः । एकाकिनाप्यध्वर्युणा पुरुषान्तरसनाथेन वा यूपाञ्जनादि शक्यत एव कर्तुमिति अनियम-

प्रकृतावनवसर्गस्य विहितस्येहाप्यतिदेशात्। न चानेन रागप्राप्ते कादाचित्के यूपसंयोगे सति त्यागनिषेधविधिः, पाक्षिकत्वापत्तेः। अपि तु संयोगाभावाभावरूपसंयोगाख्य-स्यानवसर्गस्यैव सहायार्थं नियमविधिः। अतश्च तदनुरोधेन सत्रातिरिक्ते यूपगणे तावत् काण्डस्यानुसमयः। सत्रे तु येनकेनापि यजमानेन धारणसम्भवात्पदार्थानु-समय एव अन्यत्रापि तावदतिरिक्तपदार्थानां प्रत्येकमेवानुसमयः ॥ ५ ॥

---

## (६)—पशुगणे तस्य तस्यापवर्जयेत्पश्वेकत्वात् ॥ १० ॥ दैवतैरैक-कर्म्यात् ॥ ११ ॥ मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥

प्रकृतौ साान्नाय्ये अवदानादिप्रदानान्तस्यैकपदार्थत्वादतिदेशेन दैक्षेऽपि तथैव प्राप्तौ "दैवतान्यवद्यति दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति, सौवि-ष्टकृतान्यवदाय न तावत्येव होतव्यं ऐडान्यवद्यति" इति वचनेन क्रमान्यत्वविधायिना पदार्थभेदावगतिः।

---

प्राप्तौ नियमः संभवतीत्याह—नियमविधिरिति। तावत्काण्डस्य अञ्जनादिपरिव्याणान्त-काण्डस्य। अन्यत्रापि सत्रातिरिक्ते यूपगणेपि। तावदतिरिक्तपदार्थानां—अञ्जनादिपरिव्या-णान्तपदार्थातिरिक्तयूपाङ्गपदार्थानाम्।

---

॥ पशुगणे ॥

यद्यपि सान्नाय्ययागे द्व्यवदानेनानुसमयस्योक्तत्वात् द्व्यवदानमात्रमेव पदार्थ इति नाव-दानादिप्रदानांतस्यैकपदार्थत्वं तथापि दध्नः पूर्वावदानपक्षस्य पूर्वमुक्तेः तदुत्तरकर्तव्यपयोवदा-नादिप्रदानान्तस्य एकपदार्थत्वाक्षतेः पयोयागविकारे दैक्षे तथैव प्राप्तेः न पूर्वोक्तविरोधः यदापि पूर्वं पयोऽवदानपक्षः तदापि संप्रतिपन्नदेवताकत्वेन होमस्य तन्त्रत्वाच्चतुरवत्तावयवीभूतपूर्वद्व्यवदानोत्तर-द्व्यवदानानुसमयेपि अन्ते होमानुष्ठानात तदादितदन्तस्यैव वचनावगतमेकपदार्थत्व न विहन्यते। आद्यद्व्यवदानोत्तरमेवावदानादिप्रदानान्तस्यैकपदार्थत्वन्यायेन प्राप्तं यत् प्रदानमात्रं तदेव नास्तीति पूर्वतनप्रतिपादिताभिप्रायः। अत एव संयुक्ते तु प्रक्रमादित्यधिकरणे अन्ते तन्त्ररत्नकृतोक्तं—एतच्च भिन्नदेवताकेषु; संप्रतिपन्नदेवताकेषु सान्नाय्यादिषु प्रधानस्य तन्त्रत्वात् चतुरवदाने-नानुसमयो न होमान्तेनेति। अतस्तत्रापि युक्तमेवावदानादिप्रदानान्तस्यैक-पदार्थत्वमित्यभिप्रेत्याह—प्रकृतौ सान्नाय्ये इति। प्रकृतिभूते पयोयागे इत्यर्थः।

न ह्यसम्बन्धिपदार्थान्तरव्यवधाने प्राकृतैकपदार्थता सम्पद्यते। अतश्चैकदेवत्ये पशुगणे प्राजापत्यन्यायेन दैवतावदानादिना प्रत्येकमनुसमयः। अन्ते च तन्त्रेण दैवतहोमः न च प्रकृतावेकस्य पशोर्दैवताद्यवदानत्रयमानन्तर्येण कृतमितीहापि तथैव कार्यमिति शङ्क्यं, प्राजापत्यन्यायेनैव पश्वेकत्वस्य अङ्गत्वात् अव्यवधानानन्तर्यस्य प्रकृतावार्थिकत्वेन चोदकविरोधाभावात्। अत एव यत्र विभिन्नदेवताके पशुगणे चोदकविरोधस्तत्रावदानत्रयं होमं चैकस्य कृत्वा परस्याप्यवदानत्रयपूर्वकप्रदानान्तरं कार्यम्। स्विष्टकृदि-

---

ननु सान्नाय्ये चतुरवत्तसंपादनाय विधीयमानौ दैवतसौविष्टकृतौ अवदानरूपौ पदार्थावयवौ कथमत्र भिन्नपदार्थौ जातावित्याशङ्कां परिहरति— न हीति। ततश्चानयोर्भिन्नपदार्थयोः एकदेवत्ये पशुगणे. कथं तेनानुसमय इति विमर्शो युक्त एवेति भावः। ननु तर्हि अग्नीषोमीयातिदेशपरम्परया एकदेवत्येऽपि पशुगणे तत्तत्पशोर्दैवतावदानानन्तरं तत्तत्सौविष्टकृतेडावदानानुसमयेन काण्डानुसमय एव प्रसज्येतेत्याशङ्कां निराकरोति— अतश्चेति। प्रयोगवचनेन सर्वेषां पशूनां स्वस्वाङ्गसहित्यस्यावगमात् सर्वैः पशुभिः एकैकः पदार्थः सहानुभवितव्य इति बोधनेन तन्निर्वाहाय दैवतैः देवतानां, सौविष्टकृतैः सौविष्टकृतानामैडैरिडानामित्येवं प्रत्येकमेवानुसमयः, न त्वेकैकस्यावदानत्रयं होमं च कृत्वाऽपरस्य कर्तव्यमिति काण्डानुसमयः। ततश्च सान्नाय्ये यदा एकस्यावदानं कृत्वा अपरस्यावदाने जातेऽन्ते होमः यथा वा प्राजापत्यपशुषु सौविष्टकृताद्यवदानादीनां सत्वात् समस्तदैवतावदानानन्तरं सौविष्टकृद्यवदायान्ते तन्त्रेण होमः। एवमन्यत्रापि संप्रतिपन्नदेवताकेषु पशुषु द्रष्टव्यमिति। आर्थिकत्वेनेति। दैक्षे प्रकृतौ, "दैवतान्यवदाय न तावत्येव होतव्यं" इत्येतावद्विवक्षितं, न त्वानन्तर्यं, तद्बाधकस्याभावात्। इहापि द्वितीयस्य पशोः दैवतावदानं गृह्णन् तत्समर्थयामासैव। प्रकृतौ पशोरेकत्वात् अवदानद्वयस्यानन्तर्यमर्थात् संजातं, न चार्थिकस्यातिदेशोऽस्तीति नातिदेशेन सह एवमनुष्ठाने विरोध इति। चोदकविरोध इति। विभिन्नदेवताकपशुगणे एकस्यां जुह्वामन्यदेवताकहविरन्तरसंसर्गायोगात् पात्रभेदे अतिदेशप्राप्तजुह्वेकत्वबाधापत्तिरित्येवं चोदक विरोध इत्यर्थः। कदाचित् पात्रभेदेनापि एकदेवत्यपशुगणे तत् प्रत्येकावदानानुसमयोऽस्त्वित्याशङ्कां निरस्यति— तत्रापीति। प्रथमं सर्वेषां पशूनां दैवतावदानानि, ततः सौविष्टकृतानि, ततः ऐडानि कृत्वा प्रथमगृहीतपश्ववयवानां होमे एेडावदानानन्तर्यं तु संपद्यते। तदुत्तरकर्तव्यद्वितीयादिहोमानां तु पूर्वपूर्वहोमैः व्यवधानादैडानन्तर्यमतिदेशप्राप्तं तव पक्षे बाध्येतेति न प्रत्येकमनुसमयो युक्तः। एकदेवत्ये तु प्रत्येकमनुसमयोपि तन्त्रेण

डाभक्षणे तु तन्त्रेणैव। तत्रापि पदार्थानुसमये द्वितीयहोमस्यातिदेशप्राप्तैडावदानानन्तर्यबाधापत्तेः॥

वस्तुतस्तु असन्निधिपदार्थान्तरव्यवधानेऽपि पञ्चावत्तहोमसम्पादकत्वेन दैवतावदानस्यात्रापि प्रदानावयवत्वोपपत्तेर्विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेनानुसमयः। एकदेवताके तु पदार्थावयवानामेवानुसमय इति न कोपि विरोधः॥ ६॥

---

## (७)—नानाबीजेष्वेकमुलूखलं विभवात्॥ १३॥ विवृद्धिर्वा नियमानुपूर्वस्य तदर्थत्वात्॥ १४॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात्॥ १५॥

**राजसूये— "अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये**

---

सर्वेषां होमानामनुष्ठानात् सर्वेषामेव होमानामैडानन्तर्यं न बाधितं भवतीति भावः। **यदि तु** दैक्षे होमस्य ऐडानन्तर्यमपि आर्थिकमिति अत्र तद्बाधे न दोष इत्याशङ्क्येत, **तदा** दैवतावदानादीनां वस्तुतः भिन्नपदार्थत्वमेव नास्ति, येन तत्तत्पदार्थानुसमय एकदेवत्ये भिन्नदेवत्ये वा पशुगणे विचार्येत; किंतु "यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा" इति वाक्येन सर्वाङ्गावदानेष्वपि पञ्चावत्तविधानेन तस्यैव होमात् तादृशपञ्चावत्तसंपादकत्वेनैवेह दैवतावदानविधिरिति अवदानादिप्रदानान्तस्य एकपदार्थत्वाक्षतेः भिन्नदेवत्ये एकदैवतावदानोत्तरं मध्ये सौविष्टकृतैडावदानसत्वेपि यथाप्रकृति अवदानादिप्रदानान्तस्य एकपदार्थत्वन्यायेनैवानुष्ठानं, न तु दैवतान्तरावदानानि कार्याणि। एकदैवत्ये तु सान्नाय्यवत् पदार्थावयवभूतैः दैवतावदानैरेव संप्रतिपन्नदेवताकत्वात् प्रयोगवचनावगतसाहित्यानुरोधाच्चानुसमय इत्यभिप्रेत्याह—**वस्तुतस्त्विति**। **अत्रापि** दैक्षेपि।

---

**॥ नानाबीजेषु ॥**

यद्यपि प्राचीनैः कृष्णाजिनास्तरणादिफलीकरणान्तानामेवैकपदार्थत्वं अथवा भिन्नभिन्नपदार्थत्वमित्यभिप्रेत्य अनुसमयविचारः कृतः फलीकरणान्तमात्रेणैव च तण्डुलनिष्पत्तिरूपैककार्यनिष्पत्तेर्दृष्टत्वात् युक्तमेव तत्; तथापि फलीकरणोत्तरं पेषणार्थकृष्णाजिनास्तरणात् प्राक्

श्यामाकं चरुम्" इति नानाबीजेष्टिराम्नाता। तत्रातिदेशप्राप्तानि कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापावघातपरावपनविवेचनफलीकरणपात्र्यधिकरणतण्डुलप्रक्षाळनानि तत्तद्विधिविहितत्वेन पृथक्पदार्थत्वात्प्रत्येकमनुष्ठेयानि। न ह्यत्र द्रव्यवदानस्यावत्तहोमविध्याक्षिप्तत्ववत्सर्वेषामवघातविध्याक्षिप्तत्वं, येनैकपदार्थत्वं शङ्क्येत, तद्व्यतिरेकेणाप्यवघातसम्भवात्। नापि सर्वेषामेवावघातपदार्थत्वं, उलूखलमुसलसंयोगविशेषस्यैव सर्वौषधावघातवत्तत्पदार्थत्वात्। अतः प्रत्येकानुसमये प्राप्ते -

तत्तद्विधिविधेयत्वेऽपि पृथक्पदार्थत्वेऽदृष्टार्थत्वापत्तेरेषां तण्डुलनिष्पत्तिफलकावघातविधिशेषत्वेनैव विधेयत्वादेकपदार्थत्वादवघातेनैवावताऽनुसमयः। एवं सत्युलूखलमप्येकमेवेति सिध्यति पात्री च। इतरथा हि कृष्णाजिनवदुलूखलपात्र्योरेकत्वेनोपकारकत्वसम्भवेऽप्युलूखलपात्र्योर्भेदावश्यंभावात्। तस्मात्कृष्णाजिनास्तरणादिपात्रे तत्प्रक्षाळननिनयनान्तेनानुसमयः। उत्करे तत्प्रणिपरिमन्तु तन्त्रेणेति विवेकः। एवं कृष्णाजिनास्तरणादिपेषणान्तेन तस्याप्यनुसमयः, तेषामपि पेषणविध्येकवाक्यतया एकपदार्थत्वात्।

---

विधीयमानं पात्र्यधिकरणप्रक्षालनादिनिनयनान्तपदार्थजातं न तावत् स्वतन्त्रं अदृष्टार्थत्वापत्तेः। किन्तु पेषणोपयोगितण्डुलनिष्पत्त्यर्थत्वात् शुद्धतासंपादनद्वारा तण्डुलनिष्पत्त्यर्थमेव। तत्र यद्यपि पेषणान्तपदार्थेषु अस्य तदीयाद्यपदार्थत्वमपि सम्भाव्यते, तथापि शुद्धतण्डुलसिद्धिकरणार्थत्वात् तण्डुलनिष्पत्तिफलोपयोग्यवघातविधिशेषत्वेनैव विधानात् पूर्वपदार्थान्तर्गतत्वमिति सिद्धान्ते तद्वैपरीत्येन प्रक्षालनस्यापि भिन्नपदार्थत्वं पूर्वपक्षे दर्शयति—**पात्र्यधिकरणतण्डुलप्रक्षालनानीति**। **उलूखलाधिवर्तनं** आस्तृतकृष्णाजिनोपरि उलूखलस्य प्रतिष्ठापनं, व्रीह्यादीनां बीजानामुलूखले आवापः **बीजावापः**, शूर्पेण तुषप्रोहणं **परावपनम्**। यत्तु प्रकाशकारैः परावपनं पुनः शूर्पे प्रक्षेप इत्युक्तं तत् तस्य 'प्रति त्वा वर्षवृद्धं वेत्तु' इति समन्त्रकोद्वपनपदार्थत्वेन परावपनपदार्थत्वाभावात् अयुक्तमित्युपेक्ष्यम्। सतुषवितुषाणां पृथक्करणं **विवेचनं** तण्डुलमलचूर्णपृथक्करणं **फलीकरणम्**। अत्र नानाबीजेष्वेकमुलूखलं द्विभवादित्यधिकरणसूत्रानुसारेण एकमुलूखलं भिन्नं वेति विचारप्रदर्शनं भाष्यकारीयं फलीभूतं अन्यथा असङ्गत्यापत्तेरिति दर्शयितुं फलभेदं दर्शयति—**एवं सतीति**। उलूखलग्रहणं च सूत्रे पात्र्या अप्युपलक्षणमिति **पात्री चेत्यनेन** सूचितम्। **एकत्वेनोपकारकत्वेति**। एकमेव कृष्णाजिनमास्तीर्य तत्र बहून्युलूखलानि अधिवर्त्य तेषु नानाबीजान्योप्य एकेन मुसलेन क्रमात्, अवघातान् कृत्वा एकेनैव शूर्पेण सर्वेषां परावपना-

नन्वत्र किं अनुसमेयपदार्थानां पदार्थत्वं, न तावदनुष्ठेयत्वं, एकमुष्टिनिर्वापादावतिव्याप्तेः। नापि विहितत्वघटितमङ्गत्वं, द्रव्यादावतिव्याप्तेः। नापि क्रियात्वविशेषितं तत्, उपस्तरणकृष्णाजिनास्तरणादावतिव्याप्तेः। नापि परानवयवत्वे सति निरुक्तक्रियात्वं, अवयवत्वस्यापि निर्वक्तुमशक्यत्वात्। दृष्टविधया क्रियान्तरोपकारकत्वमिति चेत् अवघातस्यापि दृष्टविधया यागपेषणाद्युपकारकत्वेनावयत्वापत्तावघातादिपेषणान्तेनानुसमयापत्तेः, अवघातकालीनतदङ्गजपादिमन्त्राणामदृष्टविधयोपकारकत्वेनावयवत्वानापत्तेश्च। किञ्च सत्यप्यवयवत्वे कृष्णाजिनास्तरणोपस्तरणादीनां विहितत्वेनाङ्गत्वात्प्रयोगविध्युपसङ्ग्रहेण साहित्यावगतेः प्रत्येकानुसमयः किं न स्यात्। एवं द्व्यवदानस्यापि होमवद्धविस्संस्कारकत्वात् पेषणावघातन्यायेत प्रत्येकानुसमयः किं न स्यादिति चेन्न, सत्यपि कृष्णाजिनास्तरणादीनां स्वतन्त्रविधिविधेयत्वेन अङ्गत्वे प्रयोगविधिप्रयोज्यत्वे वा अवघाताद्यङ्गत्वेन तद्द्वारैव प्रयोज्यत्वावगमात् तदनुसमयेनैवानुसमय इति न प्रत्येकमनुसमयः, प्रत्येकं साहित्यानवगतेः। एवं परावपनादिप्रक्षाळननिनयनान्तानामपि तण्डुलरूपावघातफलोपयोगितयाऽवघातार्थत्वान्न पृथक्पदार्थता। अत एवादृष्टार्थमपि तदङ्गं न पृथक्पदार्थः। एवमुपस्तरणादेरपि स्रुच्यसंसर्गद्वारा होमार्थत्वान्न स्वातन्त्र्येण प्रयोज्यतेति न पृथगनुसमयः। द्व्यवदानस्य च हविस्संस्कारकस्याप्यवत्तोद्देशेन होमविधानाल्लाघवेनावत्तहोमस्यैव प्रयोज्यत्वेऽवदानांशेऽपि पृथक्प्रयोज्यत्वाकल्पनात् न पृथक्पदार्थत्वम्। अत एव पदार्थत्वं नाम स्वातन्त्र्येण प्रयोगविधिविषयत्वं, पदार्थावयवत्वेन सम्मतानां हि कृष्णाजिनास्तरणादीनां नावघातादिनिष्ठप्रयुक्तिविषयत्वज्ञानं विना प्रयुक्तिविषयत्वं ज्ञायते, अवघातादीनां

---

दिक्रमेण शक्यत एव कर्तुमिति पूर्वपक्षे तेषु भेदाप्रसक्तावपीत्यर्थः। यद्यपि परावपनसंस्कृतानां पूर्वबीजानां तस्मिन्नेव शूर्पे विवेचनानुष्ठानात् तदवरोधेनान्यबीजानामेकस्मिन्नेव शूर्पे परावपनं कर्तुं शक्यमिति शूर्पभेद आवश्यकः तथापि पात्रान्तरे पूर्वबीजस्थापनाभिप्रायेण शूर्पैकत्वमुक्तं ज्ञेयम्। वस्तुतस्तु पात्रान्तरसंपादनावश्यकत्वे शूर्पभेद एव युक्त इति ध्येयम्। ननु अवघातस्याप्यङ्गत्वेन तन्निष्ठप्रयुक्तिविषयत्वज्ञानं प्रधाननिष्ठप्रयुक्तिविषयत्वज्ञानोत्तरकालनियतमेव भविष्यति। एवं सति साङ्गप्रधानेन पदार्थानुसमयप्रसक्त्या प्रयोगविध्यवगतसाहित्यबाधः स्यात् इत्याशङ्कां निरस्यति—**प्रयोगेति**। प्रधानप्रयोगविधिना विशिष्टभावनाप्रयुक्तिज्ञापनेन भावनाविशेषणीभूतानां प्रधानाङ्गानां प्रत्येकं कल्पितप्रयोगविधिना निरपेक्षप्रयुक्तिविषयत्वावगमात् अङ्गप्रयुक्तेः प्रधानप्रयुक्त्यन्यथानुपपत्तिप्रसूतत्वं नास्तीति भावः। पदार्थान्तरत्वोपसंहारेण व्यतिरेकविधया एकपदार्थत्वमुपसंहृतं भवतीत्यभिप्रायेणोपसंहरति—**अतश्चेति**। तथा

तु नान्यनिष्ठप्रयुक्तिविषयत्वज्ञानोत्तरकालत्वनियतं तज्ज्ञानं, महाप्रयोगविधिनाऽङ्ग-प्रधानोभयविशिष्टभावनाप्रयुक्तिज्ञापनेनाङ्गप्रयुक्तेरपि प्रधानप्रयुक्त्यन्यथाऽनुपपत्तिप्रयुक्तत्वाभावात्। अतश्च न प्रयाजाग्नेयादेरेकपदार्थत्वापत्तिः। अतश्च यत्प्रयुक्त्यन्यथाऽनुपपत्तिं विनैव यत्प्रयुक्तिविषयत्वज्ञानं स ततः पदार्थान्तरमिति सिद्धम् ॥ ७ ॥

---

## (८)—विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥ १६ ॥

वैश्वे पशौ अनूयाजानां "पृषदाज्येनानूयाजान् यजति" इति पृषदाज्यं श्रुतम्। प्रयाजानां तु शुद्धमेवाज्यं प्रकृतिप्राप्तम्। प्रकृतौ चोपभृत्येकस्मिन्नेव पात्रे प्रयाजाङ्गभूतं चतुर्गृहीतं गृहीत्वा तस्मिन्नेव काले अनूयाजार्थं चतुर्गृहीतं गृहीतमासीत्। अत्रापि तथैव ग्रहणे प्रयाजाज्यस्य दधिसंसर्गेणोत्पवनावेक्षणयोरदृष्टार्थत्वप्रसङ्गेनाप्राकृतकार्यकारितापत्तेः, समानयनवेलायां प्रयाजाज्यस्य न्यूनत्वापत्तेश्च। अतोऽवश्यं पात्रैकत्वमनुगृह्य

---

च यत्प्रयुक्त्यन्यथानुपपत्त्या यत्प्रयुक्तिविषयत्वज्ञानं तत्र एकपदार्थत्वमिति। वस्तुतस्तु अष्टकपालसंस्कृतपुरोडाशप्रयुक्त्यन्यथानुपपत्त्या निर्वापादिप्रयुक्तेः ततः प्रभृति पुरोडाशासदनान्तस्य एकपदार्थत्वापत्तेः तेनैवानुसमयापत्तेः नैतत्पदार्थत्वं सुवचं, अपि तु मन्त्रत्ववत् अभियुक्तप्रसिद्धिविषयत्वमेव तावत्पदार्थवृत्तिपदार्थत्वं द्रष्टव्यं, इतरस्य दुर्वचत्वादिति मम प्रतिभाति ॥

---

॥ विकारे त्वनुयाजानाम् ॥

अष्टावुपभृति गृह्णातीति प्रयोजनविपर्यासंयुक्तस्य ग्रहणद्वयस्योत्पन्नस्य केवलं वाक्यान्तरेण यदुपभृति प्रयाजानूयाजेभ्यस्तदित्यनेन प्रयाजानूयाजार्थता कृता; न तूपभृत् प्रयाजानूयाजाङ्गत्वेन विधीयते; नतरां तदेकत्वम्। यत्र क्वचन पात्रे ग्रहीतव्ये सति जुहूध्रुवयोराज्यान्तरधारणे व्यापृतत्वात् अर्थादेव उपभृतः प्राप्तिः। अतः उपभृत् द्वयकरणे न कस्यापि प्राकृतस्य बाध इति केषांचिन्मतनिरासायाह—उपभृत्येकस्मिन्नेवेति। यथैव ग्रहणाङ्गत्वेन जुहूध्रुवयोः विधानं तेनैव न्यायेन उपभृतोऽपि विधानं विशेषाग्रहणात्। ततश्च उपभृतो विधानात्तदेकत्वमुपादेयगतत्वात् विवक्षितमेवेति भावः। अप्राकृतेति। उत्पवनावेक्षणयोः द्रव्यान्तरसंसर्गनिवृत्तिरूपदृष्टप्रयोजनार्थत्वं प्रकृतौ, इह तु दधिसंसर्गस्यावश्यंभावात् न तत्प्रयोजनं संभवतीत्यतः अदृष्टार्थत्वापात इति भावः। न च मर्यादाकरणेन उभयोरसंकरः तथात्वे उपभृदाकारविनाशापत्तेः। समानयनवेलायामिति। जुह्वामिति शेषः। अतोऽवश्यमिति।

**क्रमो बाध्यतां विपरीतं वेति चिन्तायां--पात्रैकत्वस्य श्रुतत्वात्पदार्थत्वाच्च बाधानुपपत्तेः क्रमस्यैव** मन्त्रपाठकल्प्यत्वेन **पदार्थगुणत्वेन च दौर्बल्यात्** शिष्टाकोपाधिकरणन्यायेन **बाधः। एवं "अष्टावुपभृति" इत्येतद्वाक्यावगम्यचतुष्कद्वयसाहित्यबलकल्प्यैककालत्वस्यापि। न च प्रकृतौ तयोः क्लृप्तकल्प्यत्वादिना बलाबलेऽपि विकृतावतिदेशेन प्राप्तयोस्तयोस्समत्वान्न**

---

प्रयाजाज्यग्रहणानन्तर्यरूपक्रमबाधेन एकस्यामेवोपभृति प्रयाजाज्यग्रहणानन्तरं प्रयाजानुष्ठानानन्तरं पुनः अनूयाजाज्यग्रहणं कर्तव्यं कालान्तरे; अथवा उपभृद्द्वयं संपाद्य एकस्यां प्रयाजाज्यग्रहणे कृते अनन्तरमेवापरस्यामुपभृति अनूयाजाज्यग्रहणं कर्तव्यं यथाप्रकृति क्रमानुरोधेन, इति संशयव्याजेन क्रमफलोपयोगिविचारप्रदर्शनेन लक्षणसंगतिरप्युक्ता भवति। **मन्त्रपाठकल्प्यत्वेनेति**। आज्यग्रहणेति मन्त्रपदात् पूर्वं शेषः। उपलक्षणमेतत् अष्टावुपभृति गृह्णातीति विध्यवगतेरपि। तेन हि एककाले ग्रहणद्वयमपि प्रकृष्टं कर्तव्यमिति बोधितम्। नहि तदेकेन कर्तुं शक्यमिति क्रमापेक्षायां मुख्यक्रमात् प्रथमं प्रयाजाज्यस्य, पश्चादनूयाजाज्यस्येवं सिद्धक्रमस्यापि अन्यथाऽनुपपत्तिकल्प्यत्वादिति। **शिष्टाकोपेति**। तत्र हि वेदवेदिकरणान्तराले क्षुताद्याचमननिमित्तप्राप्तौ पदार्थत्वेनाचमनस्यैवानुग्रहो, न तु तल्लोपेन पदार्थगुणभूतवेदवेदिकरणक्रमानुसरणमिति निर्णीतम्। अधुना क्रमकल्पकैककालत्वस्यापि बाधमाह—**एतद्वाक्यावगम्येति**। इडान्ता आतिथ्या सन्तिष्ठते नह्यत्रानूयाजान् यक्ष्यन् भवतीति वाक्यशेषबलात् अष्टपदेन चतुष्कद्वयं लक्ष्यत इत्युक्तम् चतुर्थे। तथा चैकस्मिन् वाक्ये एकपदोपादानात् साहित्यावगतिरेककालत्वपर्यवसायिनीति भावः। **सप्तदशशरावेति**। तत्र च विरोधेन चतुस्संख्यामुष्ट्योः उभयोरनुग्रहासंभवे जघन्यमुष्टिबाधेन चतुस्संख्याया एवानुग्रहः प्राथम्यस्य नियामकत्वात् अङ्गीक्रियत एवेत्यर्थः। **तद्धर्मत्वाभावादिति**। यदि पात्रैकत्वधर्मः क्रमः स्यात् तदा पात्रैकत्वेन प्रधानेन तदङ्गभूतक्रमस्य विरोधत्याग उचित एव स्यात्, न त्वेतदस्ति। किन्तु यथा पात्रैकत्वं पदार्थः तथा ग्रहणवृत्यानन्तर्यमपि पदार्थ एवेति न तत्कृतं प्राबल्यमप्राबल्यं च। शिष्टाकोपाधिकरणे तु अनङ्गभूतस्य स्वतन्त्रपुरुषार्थभूतस्याचमनस्याङ्गभूतक्रमापेक्षया प्राबल्यमुक्तं नैव विरुद्ध्यते। क्लृप्तकल्प्यत्वं तु विकृतौ न नियामकं उभयोरपि आतिदेशिकत्वेन कल्प्यत्वादिति भावः। युक्त्यतरमप्याह—**प्रत्युतेति**। **ननु एकत्रिके त्रिचादिषु माध्यंदिनः च्छन्दसां श्रुतत्वादिति** दशमपञ्चमाधिकरणे एकत्रिके क्रतौ माध्यन्दिनपवमाने पञ्चदशस्तोमकताबाधेन तिसृषु माध्यन्दिनः पवमान इति वाक्येन स्तोत्रीयात्रित्वविधानमुदाहृत्य विचारितं—प्रकृतौ माध्यन्दिनपवमाने त्रयस्त्रि-

बलाबलमिति शङ्क्यं, क्लृप्तकल्प्यत्वादिरूपबलाबलस्य विकृतावसम्भवेऽपि पदार्थतद्गुणा-दिकृतबलाबलस्य विकृतावपि नियामकत्वोपपत्तेः। सम्भवति विकृतौ नियामकान्तरा-सत्त्वे प्राकृतस्यापि बलाबलस्य सप्तदशशरावे चरौ चतुस्सङ्ख्यामुष्टिनिष्ठप्राथम्यजघन्यत्व-स्येव नियामकता। अतस्तस्मिन्नेव पात्रेऽनूयाजकरणवेलायां पृषदाज्यग्रहणमिति प्राप्ते—

---

चाः—गायत्रः प्रथमः बार्हतो द्वितीयः त्रैष्टुभस्तृतीयः। तत्रैवेदं वचनं-त्रिच्छन्दा आवापो माध्यंदिनः पवमान इति स्थितिः। इहतु विकृतौ प्राकृतीनां तृचत्रयसंबन्धिनीनां नवाना-मृचां मध्ये उपादातव्यासु तिसृषु ऋक्षु किं त्रयाणां त्रिचानामाद्याः तिस्रो ऋचः उपादातव्याः, तथा च त्रिच्छन्दस्कत्वमनुग्राह्यम्। अथवा प्रथमत्रिचस्यैव तिस्रः त्रिच्छन्दस्कत्वं तु बाधनीयमिति सन्दिह्यातिदेशप्राप्तस्य त्रिच्छन्दस्कत्वस्य पदार्थत्वेन क्लृप्तत्वेन च प्रबलस्यानु-ग्रहं कृत्वा प्रथमतृतीयाद्यगायत्रीव्यवधानेन[1] उपस्थितापि द्वितीया गायत्री बाध्यते, क्रमस्य पदा-र्थगुणस्य कल्प्यत्वादिति पूर्वपक्षे प्राप्ते, प्रकृतौ क्लृप्तकल्प्यत्वेन प्राबल्यदौर्बल्येपि विकृतौ उभयोरप्यतिदेशप्राप्तत्वेन कल्प्यत्वसाम्याद्यदेव विकृतावेव शीघ्रमुपतिष्ठते तदुपादेयम्। अतः क्रम एव बलीयान्। प्रथमा हि गायत्री समाप्यमानैव उपस्थापयति द्वितीयां, सा उपस्थापिता उपक्रान्तैव भवतीति नान्यस्या अवसरः। तस्मादाद्यतृचस्योपादानमिति सिद्धान्तितम्। इहापितु तथैव पूर्वोत्तरपक्षव्यवस्थापनात् पौनरुक्त्यं कथं परिहर्तव्यमिति चेत्।

परिहृतमत्रेत्थं प्रकाशकारैः। नात्र पूर्वपक्षे पात्रैकत्वेन सह क्रमस्य विरोधे बाधोऽभि-प्रेतः। किं कालैकत्वस्यैव। ततश्च यथा प्रयोगविधिविधेयस्याङ्गप्रधानयोः कर्त्रैक्यस्य कालैक्यस्य च विरोधे कल्प्यत्वात् कालैक्यमेव बाध्यते न तु कर्त्रैक्यं श्रुतत्वात्। अतः न कर्तृभेदेन कालैक्यं क्रियते। तद्वदिहापि पात्रैक्यमेवानुगृह्य कालैक्यं बाधित्वा प्रयाजानन्तरम-नूयाजकाले पृषदाज्यग्रहणमिति पूर्वपक्षः। सिद्धान्तस्तु अष्टगृहीतवाक्ये चतुष्टयविशिष्टग्रहण-द्वयविधानात् ग्रहणक्रिययोश्चैककाल्यानाकाङ्क्षणात् क्रमस्य च विवक्षितत्वात् तन्मन्त्रपाठक्रमेण क्रम एव कल्प्यत इत्येवं कालैक्यखण्डनेनात्र क्रमसत्वे स्थिरीकृते सति दाशमिकाधिकरणे एतदुदाहरणसाधारण्येनैव त्रिच्छन्दस्कवाक्यमुपलक्षणीकृत्य विचारः प्रवर्तते। शिष्टाकोपाधि-करणापवादार्थमेतदधिकरणसिद्धमेव क्रमप्राबल्यदौर्बल्यकथनमत्रत्यमतो न पौनरुक्त्यमिति।

---

1. A. गायत्र्यवव्यधानेन

पात्रैकत्वस्य पदार्थत्वेऽप्यनुष्ठेयपदार्थमात्रवृत्तिक्रमस्य तद्धर्मत्वाभावात् प्रत्युत साक्षाद्ग्रहणाङ्गभूतक्रमकालाद्यपेक्षया ग्रहणाङ्गभूतपात्राङ्गैकत्वस्य अङ्गगुणविरोधन्यायेन दौर्बल्यात्तदैवोपभृद्द्वयं सम्पाद्य शुद्धं दधिसंस्कृतं च चतुर्गृहीतद्वयं ग्राह्यम् ॥ ८ ॥

---

(९)—प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥ मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात्प्राकृतानां व्यवायस्स्यात् ॥ १८ ॥ अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥ १९ ॥ तथा चान्यार्थदर्शनम् ॥ २० ॥

"अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपलं निर्वपेत्" इति नक्षत्रेष्टिं विधाय "सोऽत्र जुहोति" इत्यारभ्योपहोमा विहिताः। प्रकृतौ च प्रधानस्विष्टकृतोर्मध्ये वाचनिका नारिष्ठहोमास्समाम्नाताः ॥

---

वस्तुतस्तु प्राचीनग्रन्थस्य पूर्वपक्षोपपादनपरक्रमबाधवचनानाञ्जस्यापत्तेः[1] मन्त्रपाठादीनां कालैक्यपरत्वस्यान्यत्रादृष्टत्वेन क्रमकल्पनपरत्वस्यैव युक्तत्वात् यथाश्रुतमेव क्रमबाधपरं वचनं न कालैक्यबाधपरत्वेन व्याख्येयं, न वा ऐककाल्यस्य सिद्धान्ते क्रमपर्यवसायित्वं वस्तुतो युक्तम्। ऐककाल्ये सत्येव क्रमापेक्षया मंत्रपाठस्य क्रमनियामकत्वकल्पनात्। इतरथा मंत्रपाठस्यापूर्वक्रमविधायकत्वापत्तेः। ऐककाल्यस्य क्रमापेक्षया पृथक् पदार्थावश्यंभावात्। तथाच क्रमकालोभयबाधेन पात्रैक्यानुग्रहे पूर्वपक्षिणोक्ते प्रधानाङ्गभूतोभयबाधापेक्षया पात्रैक्यस्यैकस्यैव बाध उचितः इत्येवं तन्निरासेनेह सिद्धान्तः। दशमे तु यत्र तु नोभयबाधसंभवः तत्र एकस्यापि पदार्थत्वात अनुग्रहोऽस्त्विति विशेषाशङ्कया पुनर्विचारप्रवृत्तिरिति न पौनरुक्त्यमिति **पूज्यपादैः** पूर्वपक्षे कालैक्यात् पृथगेव क्रमबाधोक्त्या सूचितमिति ॥

---

॥ **प्रकृतेः पूर्वोक्तत्वात्** ॥

दशमे नारिष्ठहोमोपहोमानां परस्परं बाधमाशङ्क्य समुच्चयः साधयिष्यते तमर्थतः प्राक् सिद्धं कृत्वा उपहोमानुदाहरति—सोऽत्र जुहोतीति। प्रधानवाक्यमेव प्राकृतानां

---

1. A. आञ्जस्यापत्तेः

तदत्रोपहोमानां नारिष्ठेभ्यः पूर्वमनुष्ठानं, औपदेशिकप्रधानपाठक्रमेण प्रधानानन्तर्यस्य विहितत्वात्। उपहोमानामौपदेशिकत्वेन नारिष्ठेभ्यः प्रथममन्वितत्वाच्चेति प्राप्ते—

उपकारकसाकाङ्क्षया विकृतिभावनया क्लृप्तोपकाराणामातिदेशिकानामङ्गानां प्रथमं गृहीतत्वेनोपहोमानामन्यतराकाङ्क्षया पश्चादन्वयादतिदेशस्य च प्रधानवाक्यशेषत्वस्यैव लाघवादभ्युपगमेनोपहोमानामातिदेशिकाङ्गयुक्तप्रधानोत्तरमेव पाठेन क्रमावगतेः पश्चादेव करणम्। तत्रापि ब्राह्मणतर्पणान्ते कर्तव्यत्वे प्राप्ते "मध्ये जुहोति" इति वचनेनोपहोमसमाख्यया च अत्रेति स्थाननिर्देशाच्च नारिष्ठेभ्योऽनन्तरं कार्याः ॥ ९ ॥

---

(१०)—कृतदेशात्तु पूर्वेषां स देशस्स्यात्तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् ॥ २१ ॥

राजसूये अभिषेचनीयसोमयागानन्तरं प्राग्दशपेयात् विदेवनादयोऽभिषेकान्ता राजसूयधर्माः "अक्षैर्दीव्यति, राजन्यं जिनाति, शौनश्शेपमाख्यापयति, अभिषिच्यते" इत्यादिभिर्विहिताः। तत्राभिषेकस्तावत् वचनादेव "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इत्यभिषेचनीयमाहेन्द्रकालेऽपकृष्टः। तदपकर्षेऽपि च न तत्पूर्वपठितानामपि विदेवनादीनामपकर्षः, वेदिकरणन्यायेन अपूर्वाणामेषां बद्धक्रमत्वाभावात् अभिषेचनीयोत्तरमपि

---

विधायकमिति तदनन्तरपठिताश्च वैकृताः पाठत एव प्राकृतेभ्यः पश्चादनुष्ठेयाः इत्यादि प्राचां ग्रन्थेषु सिद्धान्तितम्। तत्रागन्तूनामन्ते निवेशात् सर्वान्ते निवेशं कर्काद्युक्तं दूषयन् पश्चात्त्वं सविशेषं प्रदर्शयति—तत्रापीति। नारिष्ठहोमस्विष्टकृदन्तरालकालानुष्ठानविधायकत्वेन लिखितात् मध्ये जुहोतीति वचनात् अस्य विचारस्य कृत्वाचिन्तात्वं सूचितम् ॥

---

॥ कृतदेशात्तु पूर्वेषाम् ॥

अभिषेचनीयोत्तरं विधितः पठितानामपि विदेवनादीनां अभिषेचनीयाङ्गत्वे हि एकप्रयोगविधिपरिगृहीतत्वेन क्रमापेक्षायां स पाठः अभिषेचनीयप्राकृतोत्तराङ्गानां सन्निधौ पठितविदेवनादीनां च क्रमकल्पको भविष्यति। ततश्चाभिषेचनीयोत्तरमेव विदेवनादीनामनुष्ठानमापद्येत यथा पूर्वपक्षे, न त्वभिषेकात् प्राग्भावित्वं विदेवनादिविधीनां पाठक्रमात् सिद्धान्ते साधनीयं न सिद्ध्येदित्येतदर्थं राजसूयधर्मा इत्युक्तम्। ततश्च राजसूयधर्माणां विदेवनादीनामभिषेचनीयाङ्गत्वात् भिन्नप्रयोगविधिपरिगृहीतत्वेन न तदुत्तरपाठस्य

च पाठस्य सत्त्वेन पूर्ववत्प्राकृताङ्गोत्तरमेव करणमिति प्राप्ते—

पूर्वं प्रयाजादिवत् बद्धक्रमत्वाक्लृप्तावपि इदानीमेव प्रत्यक्षेण पाठेनैकराजसूयप्रयोगविधिपरिगृहीतानां विदेवनाद्यभिषेकान्तानां बद्धक्रमत्वोपपत्तावभिषेचनीयपाठेन प्राकृताङ्गानामानुमानिकत्वेन तैस्सह विदेवनादीनां भिन्नप्रयोगविधिपरिगृहीतानां क्रमकल्पनानुपपत्तेरभिषेकापकर्षेणापकर्ष एव विदेवनादीनाम् ॥ १० ॥

---

## (११)—प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥

दीक्षणीया ज्योतिष्टोमप्रकरणे समाम्नाता, चयनं चानारभ्याधीतं वैकल्पिकं सोमयागाङ्गम्, तत्प्रकरणे च सावित्रहोमोखासम्भरणादयश्चयनाङ्गभूता धर्माश्श्रुताः, पश्चाच्च सचयनज्योतिष्टोमाङ्गदीक्षणीयाप्रयोगोद्देशेन केचिद्गुणाश्श्रुताः।

तदत्र दीक्षणीयायास्सामान्यतस्सोमप्रकरणाम्नातदीक्षणीयापूर्वपदार्थैस्सह पाठेन बद्धक्रमत्वावगमाच्चयनप्रकरणे दीक्षणीयाया गुणमात्रश्रवणेन पाठाभावाच्च सावित्रादीनामागन्तुकानां दीक्षणीयादिनकृत्यान्ते निवेश इति प्राप्ते—

गुणेनापि गुणिन उपस्थितेस्तद्वाक्ये गुणिन उद्देश्यतया सङ्कीर्तनाच्च गुणगुणिनोरेकस्थानत्वागतेः प्रत्यक्षेण विशेषरूपेण च पाठेन सामान्यरूपस्य पाठस्य बाधात् पूर्वं सावित्रादयः पश्चाद्दीक्षणीयेति सिद्धम् ॥ ११ ॥

---

तत्क्रमकल्पकत्वमिति वक्ष्यते अत्रैव सिद्धान्ते। **अक्षैर्दीव्यतीति।** पष्ठौहीङ्गर्भिणीङ्गां पणरूपां विजिगीषतीत्यर्थः। **जिनातीति।** राजन्यं क्षत्रियं जयतीत्यर्थो वेदभाष्ये। **माहेन्द्रेति।** महेन्द्रग्रहसंबन्धिस्तोत्रकाल इत्यर्थः। **पूर्ववदिति।** यथा उपहोमानां वैकृतानां प्राकृतनारिष्ठहोमोत्तरमनुष्ठानमेवमिहापि अभिषेचनीयप्राकृताङ्गोत्तरमेव वैकृतानां विदेवनादीनामनुष्ठानं युक्तमित्यनेन पूर्वाधिकरणेनापवादिकी सङ्गतिरुक्ता भवति। **पूर्वं प्रकृतौ।** प्रयाजादिवदित्यस्याग्रे विदेवनादीनामिति शेषः। **अभिषेचनीयपाठेनेत्यस्य क्रमकल्पनानुपपत्तेरित्यनेनान्वयः।** **तैःसह—प्राकृताङ्गैः सह ॥**

---

**॥ प्राकृताच्च पुरस्ताद्यत् ॥**

विषयं विविनक्ति—**दीक्षणीयेति।** युञ्जानः प्रथमं इति यजुरष्टाभिः ऋग्भिः एकाहुतिः सावित्रीहोमः। उखाया अग्निधारणार्थस्य पात्रस्य मृदा संभरणमुखासंभरणम्। अत्र पूर्वपक्षे मूलग्रन्थे उखासंभरणादीनामन्ते प्रयोग इति सामान्यतः उक्तं, तत्र विशेषमाह—

## (१२)—सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥

चयनप्रकरण एव तत्रैव दीक्षणीयागुणश्रवणोत्तरं रुक्मप्रतिमोचनादि चयनाङ्गं श्रुतम्। ज्योतिष्टोमप्रकरणे च सामान्यतो दीक्षणीयोत्तरं दीक्षितसंस्कारा दण्डदानादयः।

तदत्रापि विशेषपाठेन सामान्यपाठस्य बाधात् दीक्षणीयोत्तरं रुक्मप्रतिमोचनादि कृत्वा ततो दीक्षितसंस्कारा इति प्राप्ते—

विशेषपाठस्य पश्चाद्भावमात्रबोधनेनान्यथासिद्धस्यावर्जनीयतयाऽप्युपपत्तौ दीक्षणीयाऽऽनन्तर्यानियामकत्वात्सामान्यपाठेन प्राप्तान् दीक्षितसंस्कारानेव दीक्षणीयाऽनन्तरं कृत्वा तद्दिनकृत्यान्ते रुक्मप्रतिमोचनादिकं कार्यम् ॥ १२ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां पञ्चमस्याध्यायस्य द्वितीयः पादः.

---

दीक्षणीयादिनकृत्यान्ते इति। प्रत्यक्षेण गुणविधानार्थं चयनप्रकरणस्थेन। समान्यरूपस्य सोमप्रकरणस्थस्य ॥

---

॥ सन्निपातश्चेत् ॥

विशेषपाठस्येति। यद्यपि यथैव दीक्षणीयायाः सावित्रादिभिः पूर्वपठितैः सह क्रमकल्पना तथा पश्चात् पठितैरपि रुक्मप्रतिमोचनादिभिः क्रमकल्पना समाना, पाठे अवर्जनीयत्वकल्पनमपि उभयत्र समानं तथापि दीक्षणीयोत्तरं दीक्षितसंस्कारानुष्ठानानन्तरमपि रुक्मप्रतिमोचने कृते दीक्षणीयापरत्वं पाठकृतं न व्याहन्यते। सावित्रादीनां तु पश्चादनुष्ठाने पाठकृतपूर्वत्वं बाध्येत। अतस्तत्र क्रमकल्पक एव पाठः। इहतु दीक्षणीयादीक्षितसंस्काराणां क्लृप्तक्रमत्वात् न तद्बाधेन परत्वमात्रेणाप्युपपन्नस्य पाठस्यात्रापूर्वक्रमान्तरकल्पकत्वं युक्तमिति अवर्जनीय एव पाठ इति विशेषः। उखाग्नेः शिक्येनासज्य कण्ठे धारणे उपरिप्रदेशे उरःप्रदेशदाहाभावाय व्यवधानार्थं रुक्ममन्तरं प्रतिमुञ्चतीति विहितसौवर्णाभरणविशेषधारणं अमृतमेव मृत्योरन्तराधत्ते इति ब्राह्मणविहितं रुक्मप्रतिमोचनशब्दार्थः।

इति श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां पञ्चमस्य द्वितीयः पादः

---

1. A. त्वाद्भावात्

# अथ तृतीयः पादः.

## (१)—विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥ अपि वा सर्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥

विकृतौ **"एकादश प्रयाजान् यजति" "षडुपसदः" इत्यादिवैकृती अनेकव्यक्तिवृत्त्यधिकसङ्ख्या श्रुता। सा** प्रतिप्रधानं **गुणावृत्तिन्यायेन पृषदाज्यादिवदेकैकस्मिन् प्रयाजादौ- प्रत्येकमभिसम्बध्येतेति एकैक एकादशवारमावर्तनीय इति प्राप्ते—**

---

॥ **विवृद्धिः कर्मभेदात्** ॥

**विकृताविति।** अग्नीषोमीये पशौ एकादशत्वसंख्या अग्नौ उपसत्सु षट् संख्या। **इत्यादि** इत्यादिपदेन चातुर्मास्येषु नव प्रयाजान्यजत इति नवानूयाजानिति विहितनवत्वसंख्यासंग्रहः। **वैकृतीति।** प्रकृतिगतसंख्या विकृतिं विकारं प्राप्ता वैकृतीत्यर्थः। तेन न विकृतावित्यनेन पूर्वोक्तेन पौनरुक्त्यम्। **प्रतिप्रधानमिति।** प्रयाजाद्युद्देशेन विधीयमानायां सङ्ख्यायां प्रयाजादीनामस्त्येव प्राधान्यम्। उद्देश्यविशेषणस्य च साहित्यस्याविवक्षितत्वात् यथैव पृषदाज्यं अनूयाजोद्देशेन विधीयमानं प्रत्येकमेव संबध्यते एवमियमपीत्यर्थः। तत्र पूर्वपक्षे चतुर्थोत्तमयोः एकादशवारमावृत्तौ, सिद्धान्तरीत्या अप्राकृतदेवत्यापूर्वषण्मन्त्राणां समानन्यायेन उभयत्र संबन्धात् प्रथमावृत्तिः प्राकृतदेवत्यमन्त्रसहिता, अपरावृत्तित्रयमप्राकृतदेवत्यमन्त्रत्रयसहितमित्येवमुभयत्र उपरितनमावृत्तिसप्तकं तु प्राकृतमन्त्रसहितमिति द्रष्टव्यम्। **वरमिति। अयमर्थः।** सङ्ख्या हि पृथक्त्वनिवेशिनी द्विधा भवति। एका पृथङ्निष्पन्नरूपद्रव्यादिविषयिणी, यथा दश घटा आनीयन्तामिति। अत्र च दशत्वसंख्या तत्तद्धटवृत्तितद्व्यक्तित्वेनैवावच्छेदेन सहितेषु संबध्यते। अपरा च असिद्धस्वरूपक्रियादिविषयिणी। यथा दश घटाःकर्तव्या इति। अत्र च घटस्वरूपाणामनिष्पन्नत्वात् न तद्व्यक्तित्वेनावच्छेदेन संख्या संबध्यते। अपि तूत्पत्त्यवच्छेदेनैव। ततश्चोत्पन्ना घटा दशेत्यर्थः पर्यवस्यति। प्रकृते च प्रयाजादिविषयिण्यपि संख्या श्रुता सा यदि तिस्र आहुतीर्जुहोतीति विधीयमाना त्रित्वसंख्या पृथक्कर्मत्रय इव एकैकप्रयाजे पञ्चसु समुदितेषु वा उत्पत्त्यवच्छेदेन संबध्यतेतदा असंभवः। तत्तदुत्पत्तिवाक्यैः समुदायेन वा उत्पन्नस्य एकादशवारमुत्पत्त्यनुपपत्तेः। न हि एकः एकादशीकर्तुं तिस्र आहुतीरित्यत्र पूर्वङ्कर्मणामेकत्वेन त्रित्वेन वा उत्पत्तेरनवगमात् कर्मत्रयोत्पत्त्य तदन्वयो युज्यते। एवं च प्रयाजैकादशपदयोः श्रुतिवृत्तयोः अन्व

लक्षणावश्यंभावे जघन्ये प्रयाजपद एव तत्प्रयोगलक्षणा रचिता। तथा च यः प्रयाजप्रयोगः प्रकृतितः प्राप्तः स इह एकादशसङ्ख्यः कार्यः प्रकृतिप्राप्ताः प्रयाजाः एकादशवारं प्रयोक्तव्या इति यावत्। शक्यते तु एकः एकादशवारं प्रयोक्तुम्। तत्रापि यद्यपि प्रयाजपदेन एकैकः प्रयाजप्रयोगः इतरनिरपेक्षोपि पृथक् पृथक् लक्षयितुं शक्यत इति एकैकस्य एकादशवारमावृत्त्या पञ्चपञ्चाशत्प्रयाजव्यक्त्यापत्तिः। तथापि संख्याया भिन्नेष्वपि सहितनिवेशित्वस्वाभाव्यात् एकेन च प्रयाजपदेन प्रयाजत्वेन रूपेण सर्वेषां सहितानामेव युगपदुपस्थितेः सहितैरेव प्रयाजैः स्वप्रयोगलक्षणे संभवति न पृथक् प्रयोगलक्षणा युक्ता आश्रयितुमिति समस्तप्रयाजप्रयोगः प्रकृतौ पञ्चसंख्यायुक्तः अतिदेशेनेह प्राप्तः स इह एकादशसङ्ख्यायुक्तः कर्तव्य इत्यर्थे बाधकाभावात् नाश्रुतपञ्चपञ्चाशत्सङ्ख्यप्रयाजव्यक्त्यापत्तिरिति।

अत्र तन्त्ररत्ने "अत्र च एतदुक्तं भवति-सत्यमुद्देश्यसाहित्यमविवक्षितं न त्विह प्रयाजा उद्दिश्यन्ते, यतः प्रतिप्रयाजं संख्या स्यात्। किंतु प्रयाजोपलक्षितं प्रयोगमुद्दिश्य संख्या विधीयते। तत्रापि च न प्रत्येकं प्रयाजाः प्रयोगं लक्षयन्ति। किंतु इतरेतरसापेक्षाः। सङ्ख्या हि भिन्नानामितरेतरसापेक्षाणां तन्त्रेणैव उपकर्तुं शक्नोति। तत्र किमिति समस्तैरेकशब्दाभिहितैः प्रयाजैः प्रयोगोपलक्षणे संभवति प्रत्येकप्रयोगा लक्ष्यन्ते। पृथङ्निवेशिसंख्यासंबन्धार्थं यावन्ति पृथग्भूतानि ततोऽधिकान्येव लक्षणया अवगमयितव्यानि। तस्मात् सहितैः प्रयोगलक्षणा" इत्युपक्रमग्रन्थात्, "अतोयं गुणोऽपि सन् प्रयाजाद्युपलक्षितेन प्रयोगेण संबन्धात् अनेकवृत्तित्वस्वभावेन च समस्तोपलक्षितैकप्रयोगद्वारेणापि तन्त्रेण सर्वेषामुपकर्तुमक्षमत्वात् अन्यगुणविसदृशः सर्वसंपाद्यः" इत्युपसंहारात्; तथा शास्त्रदीपिकायां "अतस्संख्यान्वयसिद्ध्ये प्रयाजाः स्वप्रयोगं लक्षयन्ति" इति द्वितीयस्वशब्दप्रयोगात् प्रयाजपदेन समस्तप्रयाजप्रयोग एकः उपलक्ष्यत इति प्रतिभाति।

तत्र सान्नाय्यवत् संप्रतिपन्नदेवताकत्वाभावात् पौर्णमास्यमावास्यात्रिकद्वयस्य समुदायरूपस्य पूर्वमवगतस्य कालविधायकशास्त्राभ्यामेकैकप्रयोगबोधनवत् पञ्चानां प्रयाजानां तद्बोधकशास्त्रानुपलम्भात् समस्तैकप्रयोगलक्षणानुपपत्तेः। प्रत्युत तत्तदुत्पत्तिवाक्यैः पृथक्प्रयोगाणामेवावगतेः समस्तैरपि मिलित्वा स्वस्वप्रयोगा लक्ष्यन्त इत्येव युक्तम्। तेषां च प्रयोगाणामुद्देश्यत्वेऽपि विधेयसंख्यायाः सहितनिवेशित्वसामर्थ्यानुरोधेन तद्गतं साहित्यं विवक्षितमिति पञ्चानां प्रयाजानां मिलिताः प्रयोगाः पञ्चसङ्ख्यायुताः प्रकृतितः इह प्राप्ताः। ते एकादशसङ्ख्यायुताः कार्या इत्यर्थे सिद्धेऽपि नैकैकप्रयाजप्रयोगस्य इतरनिरपेक्षस्य एकादशसंख्यान्वयः, न वा पञ्चसंख्यप्रयाजप्रयोगस्य एकादशवारमावृत्तिः प्रसज्यते। इतरथा एकप्रयोगस्य विधेयत्वाभावेनार्थ-

द्वित्वादिसङ्ख्यायाः पृथक्त्वनिवेशित्वादेकैकस्मिन् पञ्चस्वपि वा पृषदाज्यवदावृत्तिं विना एकादशत्वानुपपत्तेरुत्पन्नवाक्यगतत्वेन च कर्मभेदकत्वायोगादावश्यके जघन्ये प्रयाजपदे प्रयोगलक्षणया सङ्ख्याविधौ वरं सहितैरेव प्रयाजैस्तल्लक्षणात् सहितप्रयाजप्रयोगाणां सहितानामेवोद्देशात् सर्वसम्पाद्या सङ्ख्येति प्राञ्चः। वस्तुतस्तु—प्रयोगो नाम न पदार्थान्तरं येन लक्षणा स्यात् अपि तु प्रयाजानामेव व्यक्त्यन्तरम्। अतश्च यथैव प्रकृतौ "पञ्च प्रयाजाः" इत्यादौ तत्तद्व्याप्यजात्यवच्छिन्ना एव व्यक्तयः प्रयाजत्वरूपव्यापकजात्यवच्छेदेनोच्यन्ते तथाऽत्राप्येकादशत्वादिसङ्ख्यासम्पत्त्यर्थं तावद्व्यक्तीनामुक्तौ क्व लक्षणा, अतस्तदभावेऽपि व्यापकधर्मावच्छिन्नोद्देशेन विहितैकादशत्वादिसङ्ख्याऽनेकत्वव्यासज्यवृत्तित्वस्वाभाव्याद्व्यक्त्यन्तराण्याक्षिपन्ती लाघवात्प्रकृतिक्लृप्तव्यक्त्यधिकव्यक्तीः षडेवाक्षिपति नाधिका इति सर्वसम्पाद्यत्वसिद्धिः। न चैवं प्रयोगलक्षणाभावे "तिस्र आहुतीः" इत्यादावपि व्यक्तिभेदापत्तिः। तत्र विधेयतावच्छेदकविजातीयहोमत्वस्यै-

---

समाजग्रस्तत्वाङ्गीकारेऽपि तादृशस्यैकस्यैव एकादशवारमनुष्ठानापत्तिः। अतो नैकप्रयोगलक्षणाङ्गीकारेण प्राचां सिद्धान्तोपपादनं युक्तम्। अपि तु पृथक्सहितप्रयोगलक्षणयैवेत्यभिप्रायेण **सहितप्रयोगाणां सहितानामेव** उद्देशादिति बहुवचनं सहितप्रयोगपदयोः उपक्षिप्तमिति।

अस्तु वा प्रयोगलक्षणा, तथापि प्रयोगो नाम यदि प्रयाजानुकूला कृतिः तदा एकप्रयोगस्य नानाप्रयोगाणां वा लक्षणायामपि तेषामेव उद्देशात तेषां च एकपञ्चसंख्यान्यतरसंख्यत्वेनैव प्रकृतितः प्राप्तेः तत्रैकादशत्वान्वयः पुनरप्यनुपपन्न एव। यदि तु प्रकृत्यनुष्ठितप्रयाजव्यक्तिसमानजातीयव्यक्त्यन्तराण्येवातिदेशेन विकृतौ प्राप्तानि तेषामनुष्ठानानि पञ्चसङ्ख्यायुक्तानि यावत् प्राप्यन्ते तावत्तत्र एकादशसंख्याविधानं पूर्वमेव क्रियते। तथा च प्राकृतप्रयाजसमानजातीयप्रयाजव्यक्त्यन्तरानुष्ठानमिह एकादशसंख्यमित्यर्थे नान्वयानुपपत्तिरित्युच्यते तदा प्राकृतसमानजातीयव्यक्त्यन्तराणामुपस्थितिः प्रयाजशब्देन प्रयाजत्वेन रूपेण शक्त्यैव। अनुष्ठानबोधः अस्तु नाम लक्षणयेत्येवमेवाङ्गीकार्यमिति लाघवादनुष्ठानांशं विहायापि तावद्व्यक्तीनां प्रयाजपदेनोपस्थितौ बाधकाभावे किमिति लक्षणाश्रयणम्। न हि एकादशप्रयाजव्यक्तीः कुर्यादित्यर्थे काचनानुपपत्तिः अस्ति। भवन्मतेऽपि सङ्ख्यायाः प्रयोगाङ्गत्वापत्त्या प्रयाजाङ्गत्वोपपत्तये प्रयुज्यमानत्ववेषेण प्रयाजानामेवोद्देश्यत्वस्याकामेन वक्तव्यत्वाच्च। अत एव स्पष्टं **तन्त्ररत्नकृता** पृथङ्निवेशिसंख्यासंबन्धार्थं "यावन्ति पृथग्भूतानि ततोऽधिकान्येव लक्षणया अवगमयितव्यानि" इति ग्रन्थेन प्रयोगलक्षणोपपादनोपसंहारस्थेन प्रयुज्यमानप्रयाजरूपाण्युद्देश्यत्वेन स्वीकृतानि। अतः प्रयोगलक्षणा निरर्थिकेत्यभिप्रेत्याह—**वस्तुतस्त्वित्यादिना**। तत्तद्व्याप्यजातयः समिधा-

कस्य एवैमक्लृप्तत्वेन भेदप्रतियोगितावच्छेदकतया त्रयाणामेव तेषां कल्पनयोपपत्तौ तत्तद्व्यक्तित्वस्य प्रतियोगितावच्छेदकीभूतस्य विधेयतावच्छेदकत्वकल्पने गौरवात्, प्रकृते तु क्लृप्तप्रयाजत्वस्योद्देश्यतावच्छेदकत्वात् सङ्ख्यायाश्च विधेयत्वान्न काचित्कल्पनेति वैषम्यम् ॥ १ ॥

---

## (२)—स्वस्थानात्तु विवृद्धयेरन् कृतानुपूर्व्यत्वात् ॥ २ ॥

तत्र प्रयाजैकादशत्वादिसङ्ख्या स्वसम्पत्त्यर्थं व्यक्त्यन्तराण्याक्षिपन्ती चतुर्थोत्तमप्रयाजजातीयान्येवाक्षिपति, तदङ्गभूतयोः प्राकृततदङ्गदेवताप्रकाशकयोरपूर्वयोः प्रैषयोर्मध्ये षण्णामन्येषामप्राकृतदेवत्यमन्त्राणां पश्चावाम्नानात्। तद्यदि आद्यानां त्रयाणामभ्या-

---

गत्वादिरूपाः। तावद्व्यक्तीनामेकादशव्यक्तीनां; तेषां, वैजात्यानाम्। एतद्विचारस्य क्रमलक्षणसङ्गतिस्तु प्रत्येकसंबन्धपक्षे हि प्रथमामुपपदं द्विरुपेत्य पुनः सा उपेतव्या। सिद्धान्ते तु प्रथमां द्विरुपेत्य तदनन्तरं द्वितीयोपेतव्या इति क्रमविशेषात् अस्ति सङ्गतिरिति तन्त्ररत्न एव दर्शिता।

---

॥ स्वस्थानात्तु विवृद्धयेरन् ॥

अस्मिन्नधिकरणे भाष्यकृता उपसत्सु सन्देह इत्यादिना उपसत्स्वेव प्रयाजादीन् विहाय विचारविषयता प्रदर्शिता तन्मूलमुपपादयति—तद्यदीति। ये तावदप्राकृतदेवत्या मन्त्राः पठिताः तेऽवश्यमागन्तूनामङ्गमभ्युपेयाः। इतरेषां प्राकृतदेवत्यानां लिङ्गादेव पञ्चसु प्रयाजेषु व्यवस्थितत्वात्। तत्र यदि आद्यानामभ्यासः कल्प्येत, ततः पश्चात् पठितानां मन्त्राणामपकर्षापत्तेः प्रत्यक्षमन्त्रपाठक्रमबाधः प्रसज्येत। अतो ज्ञायते अनयोरेव चतुर्थोत्तमप्रयाजयोः अन्तराले आगन्तवोऽभ्यासाः, तेषामेते मन्त्रा इति। तत्र सन्निधानाविशेषात् समं स्यादश्रुतत्वादिति न्यायेन समानविभागास्त्रयः कार्या इति तयोरेव चतुश्चतुर्वारमावृत्तिः अर्थादेव सिद्धा। एवमनूयाजेपीति न विचारविषयतेति भावः। यत्त्वेतादृशे एकादशनवसंख्याप्रयाजविषये कात्यायनेन "सर्वान्वोत्त-

**स्स्यात् ततो मन्त्राणामपकर्षापत्तिः, समिद्यागत्वस्यानुपस्थितिश्च।** अतस्सन्निधाना- **विशेषाच्चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुर्वारमावृत्तिः। उभयत्राभ्यासत्रये च प्रकृतदेव- तावाधो लक्षणया वा तद्देवताप्रकाशनमित्यन्यदेतत्। एवमनूयाजेष्वपि मन्त्रलिङ्ग- वशादेव प्रथमानुयाजस्याद्याश्चत्वारो दशमश्च। द्वितीयस्याष्टमपर्यन्तं पञ्चमप्रभृत्यभ्यासः। नवमैकादशौ तृतीयस्येति। यत्र तु न किञ्चिद्गमकं** तत्र **विषमसम्पाद्यसङ्ख्याकस्थले अवश्यकल्प्याया अधिकाया आवृत्तेरन्तिमविषयत्वात्सर्वस्याअप्यन्तिमविषयकत्वमेवेत्यपि**

---

मेनोपाधित्वात्" इति सूत्रेणोक्तं चतुर्थप्रयाजानन्तरमागन्तूनां पाठात् तदुत्तरं तेषामनुष्ठाने पञ्चमस्यैव सर्वान्ते उत्कर्षो भवतीति। चतुर्थस्तु यथास्थान एव वर्तते। एवं च पञ्चमानुष्ठाने स्वस्थाने प्राप्तेऽपि तेषामागन्तूनां पाठात् प्राप्तमनुष्ठानं पञ्चमस्थाने जातमिति स्थानादुत्तमस्यैव सर्वे अभ्यासाः, तदीयमेवानुमन्त्रणधर्मादिकमिति **कर्काचार्यादिभिः** सिद्धान्तपक्षत्वेन विवृतं तद्दूषयति—**अत इति। अयंभावः।** नात्रागन्तूनां गिरापदस्थाने इरापदस्येव तद्बाधेन निवेशः येन स्थानापत्त्या तदीयधर्मजातं भवेत्। न वा पञ्चमप्रयाजकार्यकारित्वं तेषां प्रत्यक्षतोऽपि सिद्धम्। सत्वेऽपि वा अतिदेशादिप्रमाणाभावे कार्यापत्तेः स्वातन्त्र्येण न धर्मप्रापकत्वमित्यर्थस्य पूतीकानामभावे विधिखण्डने षष्ठ एव **तन्त्ररत्नादौ** प्रतिपादनाच्च। तथात्वे प्राकृतोत्तमप्रयाजलोपस्यैवापत्तेः। किन्तु आगन्तूनां मन्त्राणामन्ते तदीयमन्त्रपाठात् अन्ते करणम् तस्य। अन्येषां तु ततः पूर्वं, तत्रान्तरालिकं स्थानम्। प्रकृतौ चतुर्थ- प्रयाजानन्तरमुत्तमस्यानुष्ठानमित्यतः उत्तमस्य, अथ वा यावदुत्तमानुष्ठानं चतुर्थस्यैवानुष्ठानं प्रकृतावासीदित्यतः चतुर्थ एवाभ्यासेन तावत्पर्यन्तमनुष्ठेय इति चतुर्थस्येत्यस्याप्युपपत्तेः उत्तमस्यैव तत् स्थानमित्यत्र नियामकाभावः। अतः सन्निधानाविशेषस्य स्थानस्य च तुल्यत्वात् समं स्यादिति न्यायेन चतुर्थपञ्चमयोरेव क्रमेण त्रयस्त्रयोऽभ्यासाः। तदभ्यासेषु तत्तद्धर्मजातमेवेत्येव युक्तम्। एवमनूयाजेष्वपि। एतच्च प्रयाजानूयाजस्थितिप्रदर्शनम् प्राकृतं पाशुकतद्विषयमेव। अत एव चातुर्मास्येषु ज्ञापकान्तरसत्वात् चतुर्थप्रयाजस्य चतुर्वारमावृत्तिः। ततः चतुर्थप्रयाजधर्मजातं अनन्तरमुत्तमप्रयाजाभ्यासोत्तमप्रयाजौ। तदीयमेव धर्मजातं तयोः। आद्यास्त्रयः प्रयाजा इति नवसङ्ख्यानिवेशः प्रयाजेषु। अनूयाजेषु तु आद्ययोर्द्वयोर्द्वयोः चतुर्वारमावृत्तिः तृतीयस्यैक एवेति नवसङ्ख्यानिवेशो द्रष्टव्यः। यत्र न किमपि ज्ञापकं तत्रान्तिमस्यैवावृत्तिः अधिकसंख्यानिवेशार्थमिति। **तत्र विषमेति।** विषमेत्यत्र भावप्रधानो निर्देशः विषमतया संपाद्येत्यर्थः। अन्तिमविषयत्वादित्यस्मात्

ते। यत्र तु समसङ्ख्याकैवाऽऽवृत्तिः यथा तिसृषु उपसत्सु षट्त्वश्रवणे तत्रैककस्या द्विरावृत्त्याऽपि षट्त्वसम्पत्तौ नान्तिमाया एव चतुरावृत्तिः समुदाये विहितकार्यान्यथाऽनुपपत्त्या कल्प्यमानाया आवृत्तेः सर्वविषयत्वौचित्यात्। तत्र च त्रिरनुवाकः पठ्यतामित्यादौ सम्पूर्णानुवाकस्यावृत्तिदर्शनेन प्रकृतेऽप्युसत्त्रयमेकवारं कृत्वा पुनः कार्यमिति दण्डकलितवदावृत्तिरिति प्राप्ते—

प्रथमद्वितीययोर्हि तृतीयातः पूर्वं करणं क्लृप्तं तत् दण्डकलितवदावृत्तौ बाध्येत। अतः प्रथमां द्विः कृत्वा द्वितीयां च द्विरभ्यस्य तृतीयाऽपि तथैव कार्येति स्वस्थानविवृद्धिरेवेति सिद्धम्॥ २॥

---

(३)—समिद्ध्यमानवतीं समिद्धवतीं चान्तरेण धाय्यास्स्युर्द्यावापृथिव्योरन्तराले समर्हणात्॥ ४॥ तच्छब्दो वा॥ ५॥ उष्णिक्ककुभोरन्ते दर्शनात्॥ ६॥

पञ्चदशसामिधेनीनां यत्र "एकविंशतिमनुब्रूयात्" इत्यत्राधिका सङ्ख्या श्रुता,

---

पूर्वमुपस्थितत्वेनेति पूरणीयम्। इत्यपि वक्ष्यत इति। पशुपुरोडाशस्य प्रधानदेवतासंस्कारार्थत्वप्रसाधनाधिकरणशेषभूते अभ्यासो वा प्रयाजवदन्यदेवत्य इति सूत्रे भाष्यकारेणेति शेषः। बाध्येते इति। तृतीयोपसदुत्तरं पुनः प्रथमोपसत्करणे तत्पूर्वभावित्वक्रमो बाध्येत। एतच्च तृतीयोपसदनन्तरक्रियेमाणप्रवर्ग्योद्वासनक्रमबाधस्याप्युपलक्षणं द्रष्टव्यम्। यद्यपि पूर्वोत्तरपक्षयोः प्रधानभूतोपसदां समानत्वात् नानुष्ठाने विशेषः, तथापि तदङ्गभूतोपसद्धोमाङ्गमन्त्रेषु याते अग्ने अयाशयेत्यादिषु त्रिषु पाठकृतः तद्विशेषो द्रष्टव्यः॥

---

॥ समिध्यमानवतीन्॥

एकविंशतिमनुब्रूयात् इति। प्रतिष्ठाकामस्येति शेषः। अधिकेति। प्रकृतौ दर्शपूर्णमासयोः सामिधेन्यः ऋचः एकादश पठिताः। तासां पञ्चदशसामिधेनीरनुब्रूयादिति वचनविहितं पाञ्चदश्यं त्रिः प्रथमामन्वाह त्रिरुत्तमामिति वचनात् प्रथमोत्तमयोः त्रिस्त्रिरभ्यासेन संपाद्यते तदपेक्षया अधिकेत्यर्थः। यद्युपरितनानामपेक्षितानां षडृचामभ्यासः तदा नियामकान्तराभावे उत्तमाया एवाभ्यासपक्षे अन्तेनिवेशादिविचारः प्रकृतौ न युज्येत इत्यत आह—

तत्रागमेन सङ्ख्यापूरणं दशमे वक्ष्यते। तदत्रागम्यमानानामृचां यद्यपि न्यायेनान्ते निवेशः प्रसज्यते, तथाऽपि "इयं वै समिद्ध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्या" इति द्यावापृथिव्यन्तराळत्वेन स्तुतस्य च समिद्ध्यमानवतीसमिद्धवत्यन्तराळ-स्याप्राप्तिबलकल्पितविधिविहितस्य सत्त्वात्तदन्तराळ एव सर्वासामागम्यमानानां निवेशः। न च धाय्यापदपरिभाषितानामेव मन्त्रविशेषाणां तदन्तराले निवेशोऽन्येषां त्वन्त इति वाच्यं, धीयमानत्वयोगेन सर्वेषामेव धाय्यापदवाच्यत्वादिति प्राप्ते—

नायं यौगिकः स्तोत्रादावागम्यमानास्वपि धाय्याशब्दप्रयोगापत्तेः, पाणिनिना सामि-धेनीष्वेव धाय्यापदस्यानुशिष्टत्वाच्च। अतो रूढ एवायम्। सोपि यत्रैव वेदे "पृथुपाज-वत्यौ धाय्ये" इत्यादिना परिभाषितस्तत्रैव। तेषामेव चान्तराळे निवेशः। अन्येषां त्वन्त इति। अत एव त्रैधातवीयायामधाय्याशब्दितायाः "अग्ने त्री ते" इत्यस्या ऋचः "त्रिष्टुभा परिदधाति" इत्यन्ते निवेशदर्शनमुपपद्यते ॥ ३ ॥

---

## (४)—स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवस्स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥ पर्यास इति चान्ताख्या ॥ ८ ॥ अन्ते वा तदुक्तम् ॥ ९ ॥ वचनात्तु द्वादशाहे ॥ १० ॥ अतद्वि-कारश्च ॥ ११ ॥ तद्विकारेऽप्यपूर्वत्वात् ॥ १२ ॥

---

आगमेनेति। दाशतयीभ्योऽन्यासामागम एवेति न अभ्यासेन संख्यापूरणं "सामिधेनीष्वभ्यास-प्रकृतित्वात्" इत्यधिकरणे दशमपञ्चमपादे वक्ष्यते। तेनात्र युक्तो वक्ष्यमाणविचार इत्यर्थः। समिध्यमानवती पृथिवी, समिद्धवती द्यौरिति क्वचिद्भाष्यपुस्तकेषु पाठः। यदन्तरेति। यो होता सोध्वर्युरितिवत् व्यवहितेन धाय्यापदेनान्वयः। अन्तरालत्वेनेति। अन्तरालञ्च मध्य-तनावकाशः। तन्मध्ये विधेयत्वेन रूपेण संस्तुतस्येत्यर्थः। तदन्तराल एवेति। समिध्य-मानो अध्वरे" इतीयं ऋक् समिध्यमानवती। "समिद्धो अग्निराहुतः" इति समिद्धवती ऋक् तयोरन्तराले इत्यर्थः। अनुशिष्टत्वाच्चेति। पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससा-मिधेनीषु इति सूत्रेण धाय्याशब्दस्य निपातनादित्यर्थः। अन्तेनिवेशेति। परिदधातीत्यनेन अन्तेनिधानरूपस्य परिधानस्यानुवादादित्यर्थः।

---

**प्रकृतौ बहिष्पवमाने** त्रयस्तृचाः **स्तोत्रीयोऽनुरूपः पर्यासश्चेत्येवंसंज्ञाः। विवृद्धस्तोमकायां विकृतौ** बहिष्पवमाने ऋगागमो **वक्ष्यते।**

**तत्रागम्यमानामृचां प्राक्पर्यासान्निवेशः। पर्यासशब्दस्य नदीपर्यासः क्षेत्रपर्यासः इत्यादावन्तवचनत्वेन प्रसिद्धेस्समाख्ययैवान्तिमस्थानत्वावगतेस्तद्बाधार्थं प्राक्पर्यासादा-**

---

॥ स्तोमविवृद्धौ ॥

**त्रयस्तृचा इति।** उपास्मै गायता इत्येकः स्तोत्रीयः। दविद्युतेति द्वितीयोनुरूपः। पवमानस्येति तृतीयः पर्यास इत्यर्थः। **विकृतौ** एकविंशेनातिरात्रेण प्रजाकामं याजयेदित्यादिवचनविहितातिरात्ररूपायाम्। **बहिष्पवमाने इति।** यदि बहिष्पवमाने सामागमऋगभ्यासौ स्यातां तदा अन्तिमाया एवाभ्यासात् आगम्यमानसाम्नश्च तत्रैव निवेशात् अन्ते पर्यासात् प्रागिति वक्ष्यमाणविचारोऽनुपपन्नः स्यादित्यत आह–**ऋगागम इति।** यद्यपि दशमे ऋगागमो वक्ष्यते तथापि पूज्यपादैस्तत्र प्राचीनोक्तस्यार्थस्यातिकठिनतयोपपादनात् अर्थतः तदुक्तार्थव्याख्यानरूपेणायमर्थः प्रसङ्गादुपपाद्यते।

अग्निष्टोमे प्रकृतौ आद्यं बहिष्पवमानस्तोत्रं, चत्वार्याज्यस्तोत्राणि, माध्यंदिनपवमानस्तोत्रं, चत्वारि पृष्ठस्तोत्राणि, आर्भवपवमानस्तोत्रं, यज्ञायज्ञीयस्तोत्रं चेति द्वादशस्तोत्राणि। बहिष्पवमानस्तोत्रं गायत्रीछन्दस्कनवस्तोमकं गायत्रसामकं, उपास्मै गायतानर इत्यारभ्याच्छासमुद्रमिन्दव इत्यन्तानाङ्गायत्रीछन्दस्कर्चां नवानामेव पाठप्राप्तत्वात्। अत एव "पराग्बहिष्पवमानेन स्तुवत" इति पराक्शब्दवाच्यानभ्यासविधायकं वचनं न प्राकृतबहिष्पवमाने प्रवर्तते, तत्रानभ्यासस्यार्थसिद्धत्वात्। न चैकस्य गायत्रसाम्नः स्तोत्रियाख्ये एकतृचे गानेऽपि अनुरूपपर्यासरूपे उत्तरत्रिचद्वये तस्याभ्यासप्राप्तौ अनभ्यासविधायकतया सार्थकं प्रकृतावेवेति वाच्यं, "यदुत्तरयोः पवमानयोः त्रिचाय त्रिचाय हिंकरोति अथ कस्मात् बहिष्पवमाने सकृदेव हिंकरोति एकं हि तत्र सामेति ब्रूयात् स्वरसामैव गायति" इति वचनान्तरेण तदेकत्वविधानेन तन्निषेधानुपपत्तेः बहिष्पवमानं सर्पन्ति पराञ्चो हि यंति पराचीभिः स्तुवत इति तैत्तिरीयकवाक्ये पराचीभिरिति स्त्रीलिंगनिर्देशेन ऋगभ्यासनिषेधकत्वस्यैवावगतेश्च। अतः प्रकृतावनिविशमानं तदेकविंशतिस्तोमकातिरात्रादिविकृतिविशेषीयबहिष्पवमान एव निविशते। तत्र हि एकविंशस्तोमकता सर्वस्तोत्रेषु विहितेति एकविंशतिसंख्या "स्तोमे डविधिः पञ्चदशाद्यर्थे" इति **व्याकरणेन स्तोत्रीयऋग्गतसंख्यायां डप्रत्ययविधानात् ऋक्षु संबन्धा सती तत्परिछेदकसामस्वपि भवतीत्युभयार्था।**

तस्याश्च पृथक्त्वनिवेशित्वस्वाभाव्यात् अपेक्षितानामृक्साम्नामागमसंपाद्यत्वं सर्वस्तोत्रेष्वपि प्राप्तं, तत्रेदं वचनं प्रवर्तते अनारभ्याधीतं-त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् अत्र ह्येवावपन्ति अत एवोद्वपन्ति इति । इदं नार्थवादः किन्तु अप्राप्तत्वाद्विधिरेव यदावपन्ति उद्वपन्ति तदेतच्छन्दस्कऋक्ष्वेवेति विधानादन्यच्छन्दस्कर्गधिकरणत्वं परिसंख्यायते । तत्र ऋचां ऋगधिकरणत्वासंभवात् विधेयसामर्थ्यानुरोधेनार्थात् सामावापस्यैव तत्संभवात् तस्यैवान्याधिकरणत्वपरिसंख्यया एतच्छन्दस्कऋक्त्रयाधिकरणत्वं सिद्धं भवति । आगम्यमानस्यैव च लोके आवापदर्शनात् यदागमेनावपन्तीत्यर्थावगमेन साम्नामेवागमः ऋचान्त्वभ्यासः ।

**यद्यपि** साम्नामृगन्तराधिकरणत्वपरिसंख्यानेऽपि ऋगन्तरागमो न परिसंख्यातुं शक्यते **तथापि** गायत्र्यादिपदानामसमस्तानां विधेयसमर्पकत्वे विधेयानेकत्वनिमित्तवाक्यभेदापत्तेः सप्तम्यन्तत्वाभावेन चाधिकरणपरत्वानुपपत्तेश्च अत्रेत्येवैकं पदं विधायकम् । तद्विधाने च यज्ञस्योदराणीति हेतूपादानात् सिद्धयज्ञसंबन्धिगायत्र्यादीनामेवावापसंबन्धप्रतीतेः एतच्छन्दस्कानामेव ऋगन्तराणां आनयनेपि तासां सिद्धयज्ञसंबन्धाभावेन विधिबाधापत्तेः प्रत्यक्षपठितानामेव विहिताधिकरणत्वान्यथानुपपत्त्या तासामेवाभ्यासेनागम्यमानसामाधारत्वावसायात् अर्थात् ऋगागमपरिसंख्या ज्ञेया । तत्रापि[1] अत्रेति एकपदोपादानेन साहित्यप्रतीतेः तस्य च विधेयगतत्वेन विवक्षितत्वात् तादृक्समुदाय एव सामावापे विहिते तादृक्समुदायस्य उत्तरपवमानद्वय एव सत्वात् उत्तरपवमानद्वय एव एतासु ऋक्षु साम्नामावापः ऋचामभ्यासः । स्तोत्रान्तरेषु तु न्यायसिद्धयोः ऋक्सामागमयोर्मध्ये सामागमस्य परिसंख्यानात् तेषामभ्यासः । अपरिसंख्यातो ऋगागमश्च भवत्येव । एवं च उत्तरपवमानद्वयातिरिक्तसर्वस्तोत्रेष्वपि ऋगागमसामाभ्यासयोः प्राप्तौ पराग्वाक्येन यत्पराक् तत् बहिष्पवमान एवेति परिसंख्याकरणात् बहिष्पवमान एव सामाभ्यासपूर्वकः ऋगागमः । आज्यादिस्तोत्रेषु तूभयोरप्यभ्यासः इत्यर्थे सिद्धेऽपि यथैव पराग्वाक्यं प्रकृतौ बहिष्पवमाने नवानामेवर्चां पाठेनैव प्राप्तेः अभ्यासप्रसक्त्यभावात् न प्रवर्तते । एवमुत्तरपवमानद्वयविषयावपि सामागमऋगभ्यासौ न प्राकृतयोस्तयोः प्रवर्तेते । तत्र प्राकृतमाध्यन्दिनपवमाने तावत् गायत्रबार्हतत्रैष्टुभानान्त्रयाणां त्रिचानां पाठत एव प्राप्तेः "पञ्चदशो माध्यन्दिनः पवमान" इति वाक्यविहितपञ्चदशत्वसंख्यासंपत्त्यर्थमवश्यापेक्षितानां षड्ृचां दाशतयीभ्य आगमः । तासु च साम्नामप्यागमः संभाव्यते ।

1. B. तथापि

तथापि "गायत्रामहीयवे गायत्रे तृचे भवतः, रौरवयौधाजये बार्हते तृचे भवतः, औशनसमन्त्यं त्रिष्टुप्सु" इति वचनैः गायत्रामहीयवरौरवयौधाजयौशनसानां पञ्चानामेव साम्नां विधानात् तन्मध्ये एकैकतृचे सामद्वयविधानस्य तत्तदृचामभ्यासं विनाऽनुपपत्तेः अवश्यं गायत्रबार्हतत्रिचयोरेवाभ्यासेन षडृचां पूरणमिति नोभयागमप्रसक्तिः। एवं प्राकृतार्भवपवमानेपि स्वादिष्ठयेति त्रिचस्य गायत्रीछन्दस्कस्य पवस्व मधुमत्तम इत्येकर्चस्योष्णिक्छन्दस्कस्य, इन्द्रमच्छ सुता इमे इत्येकर्चस्य ककुप्छन्दस्कस्य पुरोजितीवो अन्धसः इति तृचस्यानुष्टुप्छन्दस्कस्य अभिप्रियाणि पवत इति तृचस्य जगतीछन्दस्कस्य प्रत्येकं मेलनेन एकादशर्चां पाठादेव प्राप्तत्वात् सप्तदश आर्भवः पवमान इति वाक्येन सप्तदशसंख्याया विहिताया निष्पत्त्यर्थं षडृचान्तासु च साम्नामागमश्च न्यायेन प्राप्तः।

तथापि "गायत्रसंहिते गायत्रे त्रिचे भवतः उष्णिहि शफं ककुभि पौष्कलं श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः कावमन्त्यं जगतीषु" इति वाक्यैः सप्तानामेव साम्नां विधानात् तन्मध्ये सामद्वयस्य एकैकतृचे विधानस्य तत्ततृचाभ्यासं विनानुपपत्तेः अवश्यं गायत्रानुष्टुभतृचयोरभ्यासेनैव षडृचां पूरणमिति नोभयागमप्रसक्तिः। अपि तु एकविंशस्तोमकातिरात्रादिविकृतिषु सर्वस्तोत्रेषु प्राकृतस्तोमगतसंख्याबाधेन एकविंशतिस्तोमकत्वविधानात् तत्र उत्तरपवमानद्वये ऋक्सामयोरागमप्रसक्तौ त्रीणि ह वा इति वाक्येन "उच्चाते जातमन्धस" इति माध्यन्दिनपवमानीयगायत्रछन्दस्के तृचे पुनान इति बृहतीछन्दस्कतदीयतृच एव साम्नामावापो माध्यन्दिनपवमाने न तु त्रिष्टुप्छन्दस्कान्त्यर्क्षु। तथा आर्भवपवमाने गायत्रानुष्टुभतृचयोरेव साम्नामावापो न तु जगतीछन्दस्कान्त्यर्क्षु इति परिसंख्याबोधनद्वारा साम्नामागमः तदाश्रितानामृचां तु अभ्यास एव उत्तरपवमानयोः।

बहिष्पवमाने तु नवानामृचामतिदेशतः प्राप्तावपि एकविंशतिस्तोमकत्वसंपत्तये द्वादशर्चां दाशतयीभ्य आगम एव। साम्नस्तु अभ्यास एव। आज्यादिस्तोत्रेषु प्रकृतावपि एकैकाज्यस्तोत्रस्यैकैकतृचमात्राम्नानात् पञ्चदशान्याज्यानीति विहितपञ्चदशत्वसंख्यासंपत्तये ऋक्सामयोरुभयोप्यागमप्राप्तौ सामागमस्य उत्तरपवमानद्वय एव विधानात् ऋगागमस्य बहिष्पवमान एव विहितत्वात् इतरत्र परिसंख्याकरणात उभयोरप्यभ्यास एवेति विवृद्धस्तोमकायां विकृतावपि तथैवाभ्यासः एवं पृष्ठादिष्वपि द्रष्टव्यम्। यथा च गायत्रीबृहत्यनुष्टुभऋगगतसाहित्यविवक्षायामपि उत्तरपवमानद्वये प्रकृतौ तत्तच्छन्दस्कऋग्द्वयस्यैव सत्वेन साहित्यासंभवात् विवृद्धस्तोमकायां चातिदेशेन प्रकृतावेव प्राप्तेः तदीयोत्तरपवमानद्वयेपि साहित्यासंभवात्, तत्सत्वेपि वा

गन्तूनां निवेशकल्पनात्। अत एव द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि पञ्चदशस्तोमके स्तोत्रीयानुरूपौ पठित्वा वृषण्वन्तौ तृचौ समाम्नाय पश्चात्पर्यासः पठित इति प्राप्ते—

प्रकृतिक्लृप्तस्यानुरूपानन्तर्यस्य पर्यासे बाधे प्रमाणाभावात् समाख्यायाश्च प्रकृतौ पाठप्राप्तान्तिमस्थानकत्वानुवादकत्वेन स्थानविधिकल्पकत्वाभावादन्त एवागन्तूनां निवेशः। द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि तु वाचनिकं वृषण्वतोस्तृचयोः प्राक्पर्यासादनुष्ठानम्। तदपि तयोरेव। तद्विकारेष्वन्येषामागमस्त्वन्त एव ॥ ४ ॥

---

संस्कारकस्य सा॰.: त्रिषु व्यासज्यगानाशक्तेः प्रतिप्रधानगुणावृत्तिन्यायेन प्रत्येकमेव गातव्यानां ऋचां साहित्यं नैव विवक्षितुं शक्यते। तद्विवक्षाभावे च विवृद्धस्तोमकायां विकृतौ पवमानत्रयेपि सामागमऋगागमयोः प्राप्तिः। तत्र पराग्वाक्येन ऋगागमस्य सामाभ्यासस्य च विधानेन बहिष्पवमाने ऋगागमसामाभ्याससिद्धावपि उत्तरपवमानवत् आज्यादिस्तोत्रेष्वपि प्रकृतौ तदतिदेशेन विकृतौ वा गायत्रीऋचां सत्वात् तत्रैव साम्नामेवावापो ऋचामभ्यासश्च प्राप्नोत्येवेति कथं त्रीणि ह वा इत्यस्य उत्तरपवमानद्वयविषयत्वेन सामावापस्य तद्विषयत्वमेव नाज्यादिस्तोत्रविषयत्व-मित्यस्योपपत्तिः। तथा त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा, सप्तछन्दा आवाप आर्भवः पवमानः सप्तसामा इत्यनन्यगतिभ्यां वचनाभ्यामेवेति पूज्यपादैर्दशमे विशदी-कृतमित्यलं भूयसा। सर्वथा बहिष्पवमाने साम्नामभ्यास ऋचामागम इति प्रकृतविचारोप-पत्तिरिति दिक्। **वृषण्वन्ताविति।** यद्यपि वृषण्वन्तस्तृचा भवन्तीति वचने बहुवचन-दर्शनात् वृषण्वत्तृचत्रयं प्रतीयते, न द्वौ तथापि स्तोत्रीयानुरूपपर्यासरूपतृचत्रयसंबन्धि-नवर्गपेक्षया पञ्चदशस्तोमकतासंपत्तये अविकानां षड्चामपेक्षितत्वात् वृषण्वत्तृचद्वयस्यैव विधानात न द्विवचनानुपपत्तिः। कथं तर्हि बहुवचनमिति चेत; परिहृतं श्रुतिभाष्ये पवस्वेन्दो वृषासुत इत्यनुरूपस्य तृचस्यापि वृषण्वत्तृचद्वयविध्यर्थवादार्थमनुवादकरणपूर्वकमेव वृषण्वतोः वृषासोमद्युमामसि वृषासि भानुनेति तृचयोः पाठात् तमादाय बहुवचनप्रयोग इति। **वाचनिकमिति।** प्रत्यक्षमन्त्रपाठप्राप्तानुवादकमपि स्तोत्रीयानुरूपौ तृचौ भवतः वृषण्वन्तस्तृचा भवन्ति तृच उत्तमः पर्यासः इति वचनमभिप्रेत्यैव वचनात्तु द्वादशाहे इति सूत्रम्। तदभिप्रायेणेदम्।

---

(५)—अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥ अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात् ॥ १४ ॥

यत्र तु विवृद्धस्तोमकेष्वेव क्रतुषु उत्तरयोर्माध्यन्दिनार्भवपवमानयोर्वक्ष्यमाणस्सामागमः, तत्र स नान्ते अनारभ्याधीतेन "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् अत्र ह्येवावपन्ति अत एवोद्वपन्ति" इति वचनेनाप्रातिबललब्धविधिशक्तिकेन गायत्र्यादिष्वेव सामावापविधानात्। अतो नान्त इति प्रत्युदाहरणमात्रमिदम् ॥ ५ ॥

---

(६)—ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषस्स्यात् ॥ १५ ॥ क्रत्वग्निशेषो वा चोदितत्वादचोदितानुपूर्वस्य ॥ १६ ॥

यानि प्राकरणिकानि ग्रहणान्यैन्द्रवायवादीनि तानि यथापाठमेव व्यवस्थितानीति न तेषु चिन्ता। यानि त्वनारभ्याधीतानि तेष्वपि यत्रांश्वदाभ्यादौ प्राकरणिको विनियोगस्तत्रापि विनियोगविधिपाठबलादेवानुष्ठानसिद्धेर्न चिन्ताविषयत्वम्। अत एव न तयोरन्ते करणं, अपि तु प्रातस्सवन एव धाराग्रहेभ्यः पूर्वमेव। यत्र त्वनारभ्याधीतमेव तेषां यागाङ्गतयाऽपि विनियोजकं वाक्यं तत्र ग्रहणस्य यागाभ्यासोपकारकस्य सामर्थ्यादभ्याससमुदायात्मकसवनद्वारकतयैव यागाङ्गत्वात् द्वारभूतसवनभेदेन प्रतिसवनं ग्रहणानुष्ठानं निर्वापाङ्गस्य मन्त्रस्येव मुष्टिरूपद्वारभेदेन। एवमनारभ्याधीतानां "चित्रिणीरुपदधाति"

---

॥ अन्ते तूत्तरयो र्दध्यात् ॥

व्याख्यातप्रायमेतत् ॥ गहेष्टकमौपानुवाक्यम् ॥

अत्र भाष्यकारेण एष वै हविषा हविर्यजति[1] योऽदाभ्यं गृहीत्वा सोमाय यजते परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णातीति विहितयोः अंश्वदाभ्यग्रहयोरौपानुवाक्याकाण्डे समाम्नातयोः उदाहरणत्वं प्रदर्शितम्। तदादाय यः तन्त्ररत्नकृता निरूपितः प्राकरणिकग्रहा इष्टकाश्च यथासवनं यथाचिति व्यवस्थिताः। न तेषु चिन्ताप्रयोजनमस्ति। यदि क्रत्वग्निशेषाः, यदि वा चितिसवनशेषा उभयथापि तादृगेवानुष्ठानं, औपानुवाक्यकाण्डपठितास्तु चितिसवनशेषत्वे सति विशेषे प्रमाणाभावात्, प्रतिचिति प्रतिसवनं चानुष्ठेयाः। क्रत्वग्निशेषत्वे सकृदनुष्ठानमिति तेषु चिन्तेति। तथा चानारभ्याधीतावंश्वदाभ्यग्रहावपि

---

1. A. यजते

**इत्यादीनामपि प्रतिचिति भेदेनानुष्ठानम्। चित्रिण्यादीष्टकानां ह्यनारभ्याधीतानामप्यु-पधानसंस्कृतानामुपयोगापेक्षायां “तस्मादग्निचित्सर्वमायुरेति” इत्याद्यर्थवादवशादग्न्यङ्ग-त्वप्रतीतावप्यग्निपदाभिधेयस्थण्डिलारम्भकचितिद्वारकतयैव तदङ्गत्वावगतेः प्रतिचित्या-वृत्तिः। 'यां कां चन' इति वचनं तु प्राकरणिकेष्टकाभिप्रायमिति प्राप्ते—**

**ऐन्द्रवायवादिग्रहणवदेवाभ्याससम्पादनद्वारा यागोपकारकत्वस्यैव सिद्धेस्सवना-रम्भस्यानुषङ्गिकत्वेऽपि द्वारत्वे प्रमाणाभावान्न प्रतिसवनमावृत्तिः, अपि त्वन्त एवानुष्ठानम् एवं चित्रिण्यादेरपि न प्रतिचित्यनुष्ठानम् ॥ ६ ॥**

---

उदाहरणमित्युक्तं भवति। तद्दूषयति—**यत्रांश्वदाभ्याविति**। प्राकरणिको विनियोगस्तैत्तिरीय· शाखायाम्। **धाराग्रहेभ्य इति**। ज्योतिष्टोमे उपांश्वन्तर्यामावधाराग्रहौ, ऐन्द्रवायवादयो ग्रहास्तु धाराग्रहा इति दशमे वक्ष्यते। तेन यत्र विनियोजकब्राह्मणपाठः तत्रैव धाराग्रहेभ्यः पूर्वं दधिग्रहोत्तरं च प्रातस्सवनेऽनुष्ठानं, न त्वन्ते इति भावः। प्रतिचित्यावृत्तौ यांकाञ्चिदिति वाक्येन मध्यमचितावेवोपधानविधानानुपपत्तिशङ्कां परिहरति—**यां कांचिदिति**। सकृदनुष्ठाने सिद्धे मध्यमायां चितावुत्तमायां वा चितावित्यग्रिमः क्रमविचारो युज्यते इत्यस्य विचारस्य उपोद्घात-संगतिः। सूत्रे औपानुवाक्यशब्दस्यायमर्थः उपानुवाक्या अनुवाक्याः, तत्संबन्धिनि काण्डे पठितमित्यनारभ्याधीतमिति।

---

**॥ अन्ते स्युरव्यवायात् ॥**

स्थिते सकृदनुष्ठाने क्रमोऽत्र विचार्यते। किञ्चित्रिण्यादीनां उत्तमायां पञ्चम्यां चितावुपधानं, अथवा मध्यमायामिति सन्देहे प्राकरणिकीनां क्लृप्तक्रमाव्यवायार्थमनारभ्याधीतानां चित्रिण्या-दीनामन्त एव निवेशः। यां काञ्चिदिति वाक्यम् तु सर्वासामेवेष्टकानां पठितेन कल्पितेन वा ब्राह्मणेन तद्भत्वात् सर्वासामेव मध्यमचितावुपधानासंभवात् संभवेपि वा चित्यन्तराभावेन मध्यमचितित्वव्याघातापत्तेः मध्यमचितिक्रमेऽधीतैः “इन्द्राग्नी अव्यथमाना” इत्यादिभिः “विश्वकर्मा त्वासादयतु” “ध्रुवासीद” इत्युपधानलिङ्गकैः मन्त्रैः यासामेव उपधानं मध्यमायां प्राप्तं तदनुवादमात्रं न तु विधायकं ब्राह्मणवतीष्टकामात्रोद्देशेन उपधानस्य तथात्वे विशिष्टोद्देशे वाक्यभेदापत्तेः। अतः अध्वर्युकर्तृकत्वसिद्धये मध्यमचितिसंबद्धेष्टकानामुपधान-

(७)—अन्ते स्युरव्यवायात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ मध्यमायां तु वचनाद्ब्राह्मणवत्यः ॥ १९ ॥

चित्रिण्यादीनां तु "यां कां चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यात्" इति वचनेन मध्यमचितावुपधानम्। अत्र ह्यभिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वाद्वाक्यस्यार्थवत्त्वाच्च प्रत्यक्षब्राह्मणविहितेष्टकोद्देशेन मध्यमचितिरूपदेशविधानम्। उपधानं तु प्रकरणप्राप्तमाश्रयः। प्रत्यक्षब्राह्मणवत्त्वं इष्टकावाचिश्रुतशब्दविनियुक्तमन्त्रोपधेयत्वमित्युक्तमेव भूमाधिकरणे। न च प्रत्यक्षब्राह्मणवत्त्वस्योद्देश्यविशेषणता, तच्छब्देन विशिष्टपरामर्शकेन विशिष्टोद्देशोपपत्तेः। अतो मध्यमचितावेवोपधानम्। न चेदं प्राकरणिकविषयं, अविशेषात् ॥ ७ ॥

---

(८)—प्राग्लोकंपृणायास्तस्यास्सम्पूरणार्थत्वात् ॥ २० ॥

मध्यमायामपि प्राकरणिकेष्टकोपधानानन्तरमेवोपधानं चित्रिण्यादीनां न तु प्राग्लोकंपृणायाः, आगन्तुकत्वात्। न च "यदेवास्योनं यच्छिद्रं तदेतया पूरयति लोकं पृण छिद्रं पृण" इति वचनेन लोकं पृणायाः पूरणार्थत्वावगमात् तस्या अन्ते निवेशावगतेः ततः प्राङ्निवेशश्चित्रिण्यादीनां, लिङ्गादेव मन्त्रस्य छिद्रपूरणार्थत्वे अस्य वचनस्य तदर्थत्व-

---

मात्रस्य विधायकं न चित्रिण्यादीनाम्, अतोऽन्ते निवेशः। अत एव "आवपनं वा उत्तमाचितिः अन्या इष्टका उपदधाति" इति लिङ्गदर्शनमपि उपपद्यते इति पूर्वपक्षं दूषयति—**चित्रिण्यादीनां त्विति। वाक्यस्यार्थवत्त्वादिति।** अनुवादमात्रत्वे वैयर्थ्यापत्तिः। अतो विधायकत्वं वरमिति भावः। तच्छब्दस्य विशेष्येष्टकामात्रपरामर्शित्वे वाक्यानर्थक्यापत्तेः विशिष्टपरामर्शित्वमेव वक्तव्यमित्यभिप्रेत्याह—**तच्छब्दस्येति।**

---

॥ **प्राग्लोकंपृणायाः** ॥

**प्राकरणिकेष्टकोपधानानन्तरमेवेति।** एतच्च न पूर्वपक्षशरीरं सिद्धान्तेपि तदनन्तरमेवानुष्ठानात्। अपि तु प्राग्लोकंपृणाया इत्येवं द्रष्टव्यम्। तथा चित्रिण्याद्युपधानानन्तरं लोकंपृणाया मध्यमचितौ नैवानुष्ठानं येन न्यायप्राप्तान्ते निवेशबाधः स्यात्, तस्यास्तु चि-

**विधायकत्वाभावात्। कथञ्चिन्मन्त्रस्य तद्विधायकत्वेऽपि इष्टकायास्तदर्थत्वे प्रमाणाभावाच्च। अस्तु वा मन्त्रे छिद्रपूरकत्वस्येष्टकायास्तत्पूरकत्वं विनाऽनुपपत्तेस्तस्या अपि तत्, तथाऽपि तस्य चित्यन्तरेऽपि सावकाशत्वान्न चित्रिण्यादीनामन्ते निवेशन्यायस्य निरवकाशस्य बाधः। न च लोकंपृणाया अपि प्रत्यक्षब्राह्मणवत्त्वान्मध्यमचितिमात्रविषयत्वं, इतिकरणविनियुक्तत्वेनास्य मन्त्रस्येष्टकावाचिश्रुतपदविनियुक्तत्वाभावात्। न च तथाऽपि तत्तच्चित्यवान्तरप्रकरणपठितत्वे तत्रैव निवेशापत्तेश्चयनमहाप्रकरणपठितत्वे चान्तिमचितावेव निवेशापत्तेः** कथं **सावकाशत्वमिति वाच्यं, पूरणार्थत्वलिङ्गादेव** द्वारभेदेन **भेदोपपत्तेस्सर्वविषयत्वादिति प्राप्ते—**

**चित्रिण्यादीनामन्ते निवेशे लोकंपृणायादिछद्रपूरणरूपफलस्यैव बाधापत्तेर्वरं** पूर्वपठिते**ष्टकोपधानोत्तरत्वरूपक्रमबाधेन चित्रिण्यादीनां लोकंपृणायाः प्राङ्निवेशः॥ ८॥**

---

त्यन्तरेष्वेवानुष्ठानमिति पूर्वपक्ष इत्यर्थः। **कथञ्चिदिति।** तथा च मन्त्रमात्रपाठेनैव छिद्रपूरणं न तु तन्मन्त्रपाठपूर्वकमिष्टकाभिः। तेन लोकंपृणाया अभावादेव अन्ते निवेशे न बाधकमित्यर्थः। मन्त्रमात्रविधायकत्वे तदेतया पूरयतीति मन्त्रे इष्टकाकरणकपूरणप्रकाशकत्वानुपपत्तेः अन्यथानुपपत्त्या इष्टकांशेपि विधिः कल्पनीयः तथापि न क्षतिरित्याह—**अस्तुवेति। कथं सावकाशत्वमिति।** एतच्च निरवकाशत्वोपपादनं न सिद्धान्तिनः, येन मध्यमचित्यविषयत्वरूपपूर्वपक्ष्यभिमतखण्डनं भवेत्। अवान्तरप्रकरणात् तत्तच्चितिषु महाप्रकरणादन्तिमचितौ निवेशेपि तत्रैव सावकाशायाः लोकंपृणायाः मध्यमचितिसंबन्धाभावे चित्रिण्यादीनामन्ते निवेशपूर्वपक्षस्यानायाससिद्धत्वात्। अपि तु लोकंपृणाया मध्यमचितिसंबन्धप्राप्तिं पूर्वपक्षसिद्धान्तपक्षयोरङ्गीकृत्य यत् सावकाशत्वं निरवकाशत्वं चोच्यते तत्कथमिति तटस्थस्यैवाशङ्का द्रष्टव्या। **द्वारभेदेनेति।** छिद्रपूरणद्वारं तत्तच्चितिषु भिन्नं भिन्नमेव, तेन प्रतिचिति लोकंपृणाया अपि भेद इत्यर्थः। **पूर्वपठितेति।** लोकंपृणाया यदुत्तरत्वं तत्पूर्वत्वं पूर्वशब्दार्थः। तथा च चित्यन्तरेषु लोकंपृणापूर्वपठितेष्टकोपधानोत्तरत्वं लोकंपृणायामासीत्। मध्यमचितौ तु तदुत्तरत्वबाधेन चित्रिण्यादीनां मध्ये उपधानं कृत्वा अनन्तरं लोकंपृणोपधानमित्यर्थः। अत्र च **एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्** इति तार्तीयाधिकरणे स्थितेनाविशेषप्रवृत्तवचनस्य न्यायमात्रेण सङ्कोचायोग इति **न्यायेन** न गतार्थत्वं निरवकाशेन न्यायेन सावकाशस्य वचनस्य संकोचसंभवरूपविशेषाशङ्कया पुनरारंभादिति पूर्वपक्ष एव **पूज्यपादैः** सूचितम्।

---

(९)—संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ २१ ॥ अनन्तरं व्रतं तद्भूतत्वात् ॥ २२ ॥ पूर्वं च लिङ्गदर्शनात् ॥ २३ ॥ अर्थवादो वा अर्थस्य विद्यमानत्वात् ॥ २४ ॥ न्यायविप्रतिषेधाच्च ॥ २५ ॥

आधानस्य **नैरपेक्ष्येणोत्पत्तिवाक्येऽग्निनिष्पादकत्वावगमात् आधानमात्रेणैवाग्निनिष्पत्तिरिति सिद्धत्वादग्नीनामाधानमात्रानन्तरमेवोत्तरक्रतूनां प्रवृत्तिः । पवमानेष्टयस्तु** यदि भाष्यकारमतादग्न्यङ्गं तदा सिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया संमार्गवत् संस्कारविशेषाधायकाः । यदि तु वार्तिककारमतादाधानाङ्गं तदा बृहस्पतिसववदेवैत अग्नीनां स्थापिकाः इति केषां चित्क्रतूनामाधानानन्तरमेव करणेऽपि न पवमानेष्टीनां वैयर्थ्यापत्तिः । "अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्ति" इति पवमानेष्टिभ्यः प्रागेवाग्निहोत्रप्रवृत्तिं दर्शयति । अतश्च "आहिताग्निर्न क्लिन्नं दार्वभ्यादध्यात्" इत्याद्याहिताग्निव्रतवदेवाधानोत्तरमेव क्रतुप्रवृत्तिरिति प्राप्ते—

---

॥ संस्कृते कर्मसंस्काराणाम् ॥

**आधानस्येति** । यद्यपि **भाष्यकारेण** "आधाने सन्ति पवमानेष्टयः, सन्ति च नियतानि कर्माण्यग्निहोत्रादीति अनियतानि च ऐन्द्राग्नादीनि । तत्र सन्देहः किं पवमानेष्टीः कृत्वा कर्माणि प्रतिपत्तव्यानि उताहितमात्रेष्वग्निष्विति" इति सन्देहपूर्वको विचारः पवमानेष्टीनामाधानसन्निकर्षविप्रकर्षसाधारण्येन प्रदर्शितः । तद्वदत्र मूलेपि प्रतीयते तथापि नक्तं गार्हपत्यमादधाति दिवाहवनीयमिति दिवाहवनीयाधानानन्तरमेव सद्यस्कालपवमानेष्टिपक्षे अन्यत्र क्रतूनां मध्ये करणे सद्यस्कालत्ववचनबाधापत्तेः न सद्यस्कालपवमानेष्टिपक्षे अयं विचारो युज्यत इत्यभिप्रेत्य **तन्त्ररत्ने शास्त्रदीपिकायां** द्वादशसु रात्रिष्वनुनिर्वपेत् इत्यादिवचनैराधानाद्विप्रकृष्टानि पवमानहवींषि । तत्र कस्यचित् कालशास्त्रस्य बाधाप्रसक्तेः अन्तरा उत्तरक्रतूनां प्रवृत्तिविचारे बाधकाभावात् विप्रकर्षपक्षे विचारप्रदर्शनं कृतं तदभिप्रायकमेव मूलेपि द्रष्टव्यम् । **उत्पत्ति वाक्ये**—वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिवाक्ये । अत्र भाष्यकारमते पवमानेष्टीनामग्न्यङ्गत्वं वार्तिककारमते आधानाङ्गत्वं ; उभयथापि इतरनैरपेक्ष्येणाधानस्याग्न्युत्पादकत्वासंभवात् एकतरानुष्ठानमात्रेणाग्नीनामनुत्पत्तेः तत्सिद्ध्यर्थमुभयानुष्ठानं प्राक् तदुत्तरमेव उत्तरक्रतूनां प्रवृत्तिरिति यत् प्राचां सिद्धान्तकरणं तद्विविच्य पूर्वपक्षे अनूद्य दूषयति—**यदि भाष्येत्यादिना** । अग्न्यङ्गत्वपक्षेपि न तेषान्तदुत्पाद-

भाष्यकारमते तावत् तत्तद्वाक्ये नैरपेक्ष्यश्रवणेऽपि एकस्योत्पादकत्वमितरस्य संस्कारकत्वमित्यत्र प्रमाणाभावः। प्रत्युत पवमानेष्टीनामेव स्वविनियोजकवाक्ये आहवनीयोत्पादकत्वावगतेराधानस्य गुणवाक्यावगताहवनीयोत्पादकत्वं विलम्बोपस्थितिकम्। न चैवमुभयोरुत्पादकयोर्विकल्पः, "सद्यो निर्वपेत् द्वादशरात्रिष्वनुनिर्वपेत्" इत्यादिकालविधिवशादेव समुच्चयसिद्धेः।

वार्तिककारमते तु साङ्गस्यैवाधानस्योत्पादकत्वात् न तदभावेऽग्निसिद्धिः। न च स्थापकत्वं बृहस्पतिसववत्, पवमानेष्टीनामाधानप्रयोगबहिर्भावेऽपि तद्वदत्राधानकरणकभावनाबहिर्भावस्याश्रुतत्वेन स्थापकत्वकल्पनानुपपत्तेः। अतः पवमानेष्ट्यतिरेकेणाहवनीयनिष्पत्तेरभावात् तदनन्तरमेवाग्निहोत्रादीनि। आहिताग्निव्रतेषु तु आधानोत्तरमेव पुरुषस्याहिताग्निपदवाच्यत्वोपपत्तेस्तदनन्तरं करणम्।

---

कत्वेन द्रव्यादिवत् तदङ्गत्वं, अपि तु संस्कारकर्मविधया। ततश्चोत्पन्नेष्वग्निषु पवमानेष्टिभिः क्रियमाणः संस्कारः कुत्रोपयुज्यत इत्यपेक्षायामग्न्युत्पत्त्यनन्तरं यावत्पवमानेष्ट्यनुष्ठानं यावतां क्रतूनामनुष्ठानं मध्ये कर्तुं शक्यते तज्जन्यापूर्वेषु अग्निसंस्कारद्वारा उपयोगः। अथवा पवमानेष्ट्यनन्तरक्रियमाणक्रत्वपूर्वेषु वोपयोगः भूतोपयोगापेक्षया भाव्युपयोगस्याभ्यर्हितत्वादिति भाष्यकारमते सुपरिहरमेव। वार्तिकमतेपि आधानाङ्गभूतानामपि पवमानहविषां बृहस्पतिसवयागवत् उत्तराङ्गत्वेन स्वीकारात् आधानोत्पन्नाग्निषु अदृष्टस्थापकत्वमात्रकल्पनेपि ततः पूर्वमाहिताग्नित्वस्य सद्भावात् दुर्निवारैव क्रतूनां प्रवृत्तिरिति भावः। **तत्तद्वाक्ये** आधानपवमानेष्ट्योः तत्तदुत्पत्तिवाक्ये। **यत्तु** प्रकाशकारैराधानपवमानेष्ट्योः वाक्यान्तराधीनतायास्तुल्यत्वात् आहवनीयोत्पादकत्वावगतिः तुल्येत्युक्तं तद्वैषम्यप्रदर्शनेनायुक्तमिति सूचयितुमाह—**प्रत्युतेति**। विनियोजकवाक्यास्याकाङ्क्षितप्रवृत्तिकत्वेनानाकाङ्क्षितप्रवृत्तिकगुणविधिवाक्यापेक्षया शीघ्रप्रवृत्तेर्वैषम्यादिति भावः। **स्वविनियोजकवाक्ये**—यदाहवनीये जुहोतीति प्राकरणिके। **गुणवाक्यावगतेति**—यद्यप्याधानोत्पत्तिवाक्ये अग्निसामान्योत्पादकत्वमवगतं तथापि तदग्नित्रयं गार्हपत्यदक्षिणाग्न्याहवनीयरूपमिति विशेषतोऽवगतिः नक्तंगार्हपत्यमादधाति दिवाहवनीयमिति गुणवाक्याधीनैवेति विलम्बोपस्थितिकत्वं, तत्र तु साक्षादेव विनियोजकवाक्येन आहवनीयोत्पादकत्वमिति भावः। **आहिताग्निपदवाच्यत्वोपपत्तेरिति**। "वर्षासु रथकारोऽग्नीनादधीत" इति विधौ अग्नीनामुत्तरक्रतुषूपयोगाभावात् अग्निकर्मकाधानविध्यनुपपत्तेः अवश्यं सक्तुन्यायेन करणत्वलक्षणया अग्निगुणकमेवाधानं विधीयत इति प्राचां सिद्धान्ते आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति

यत्तु निदर्शनमुक्तं तत् तूष्णींहोमस्य आधानाङ्गभूतस्य स्तुत्यर्थं नाग्निहोत्रस्य पूर्वप्रवृत्तिसूचकम्। तूष्णींहोमो हि नाग्निहोत्रहोमः प्रमाणाभावात्। नाप्यग्निहोत्रधर्मकः, अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात्। एतद्धोमस्याप्याधानद्वाराऽग्निप्रयोजकस्या-

---

प्रतिपत्तिविधौ अग्नीनां दाहे उपयोगसत्वात् न लक्षणा, अपि तु कर्मत्वान्यथानुपपत्त्या अग्निकर्मकाधानविधिरेव युक्त इति पूज्यपादैः षष्ठे दूषणं दत्तम्। नत्वाहिताग्निपदस्याधानसंस्कृताग्निमद्वाचित्वात् त्रैवर्णिकानां तत्कृताधानसंस्कृताग्नीनामुपयोगसत्वेन तत्पदवाच्यत्वेपि रथकारस्य एतत्प्रतिपत्तिवाक्यप्रवृत्तेः पूर्वमाधानसंस्कृताग्निमत्वासिद्धेर्न तत्पदवाच्यत्वमिति न दाहे उपयोग इति यत् कैश्चिदभिहितं तदनेन निरस्तं वेदितव्यम्। नहि आहिताग्निपदप्रवृत्तिः उत्तरक्रत्वनुष्ठानानन्तरमेव। अपि तु आधानोत्पादिताग्निमत्वमात्रेण। नहि चयनस्येव अग्निकार्यनिष्पादनेन साहाय्यजनकत्वमाधानस्य किं तु अग्निगतादृष्टोत्पादकत्वमात्रम्। तच्च रथकारस्यापि तत्सत्वात् अस्त्येवाहिताग्निपदवाच्यत्वमिति न बाधकमिति। तूष्णींहोमस्येति। "होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः यद्यजुषा जुहुयात् अयथापूर्वमाहुतीर्जुहुयात् यन्न जुहुयात् अग्निः परापतेत् तूष्णीमेव होतव्यं" इति वाक्यविहितस्येति शेषः। अत्र च तन्त्ररत्नकृता अग्निहोत्रशब्दस्यापूर्व एव तूष्णींहोमे प्रयोगमभिधाय "नन्वपूर्वस्य कथमसत्याहवनीये प्रवृत्तिः" इत्याशंक्य "स च तूष्णींहोमोऽग्न्यर्थः प्रयोजनवदग्निसंयोगात् स्वयं निष्फलत्वात् यन्न जुहुयात् अग्निः परापतेदिति वाक्यशेषात्। अतः पवमानहविर्वत् अग्न्यर्थो भवति। अत एव पूर्वं प्रवर्तते" इत्युक्तम्। तदयुक्तं—यदाहवनीये जुहोतीति पवमानेष्टिप्रकरणाम्नातवाक्यवत् तादृशवाक्याभावेन अग्न्यङ्गत्वे प्रमाणाभावात्। प्रत्युताधानप्रकरणपाठेन प्रकरणादाधानाङ्गत्वस्यैव युक्तत्वात्। अग्निः परापतेदिति वाक्यशेषस्य तूष्णींहोमरूपाङ्गव्यतिरेकेण केवलमाधानोत्पादितोप्यग्निः परापतेदित्यर्थेनाप्युपपत्तेः प्रकरणबाधकत्वायोगात्। अतो भाष्यकारवार्तिककारमतयोरपि तूष्णींहोमस्याधानाङ्गत्वमेवेत्यभिप्रायेणाह—आधानाङ्गभूतस्येति। स्पष्टमेवाधानद्वारा अग्निप्रयोजकस्य इत्येवमग्रे अनुपदमेव वक्ष्यते। न अग्निहोत्रस्येति। नैमित्तिकस्येति शेषः। यदपि नैयमिकाग्निहोत्रधर्मानुष्ठानं तदतिदेशेनास्मिन् होमे याज्ञिकानां तदप्ययुक्तमिति दर्शयति—नापीति। अर्थवादगतस्येति। यथैवामिक्षानुनिष्पन्नवाजिनप्रतिपत्तिकर्मणि वाजिनयागे सोमो वै वाजिनमित्यर्थवादे सोमशब्दश्रवणेपि प्रकृष्टफलस्वरूपसिद्धसादृश्येनापि तच्छब्दप्रयोगोपपत्तेः न गौण्याश्रयणेन नामातिदेशकत्वमिति न सोमधर्मातिदेशः। अपि तु दार्शिकस्यैवाति

अग्निसम्बन्धित्वाविशेषात् प्रायणीयादिपदवदनतिदेशकत्वाच्च । अतोऽपूर्वस्यैव होमस्येयं स्तुतिरिति नाग्निहोत्रस्य पूर्वप्रवृत्तौ लिङ्गम् । भिन्नप्रयोगपरिगृहीतानामपि च पौर्वापर्यमात्रं प्रसङ्गान्निरूपितम् । व्यवहिताव्यवहितसाधारण्येन पौर्वापर्यमेवाध्यायार्थ इत्यपि ध्येयम ॥ ९ ॥

---

(१०)—सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥ क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥ अग्नेः कर्मत्वानिर्देशात् ॥ २८ ॥

'अग्निचित् वर्षति न धावेत्' इत्यादीन्यग्निचिद्व्रतान्यामरणं वर्षमात्रं वा चयने निमित्ते पुरुषार्थतया आधाने निमित्ते आहिताग्निव्रतवदेव विहितानि । अत्र व्रतपदश्रव-

---

देश इति साधितमष्टमद्वितीयपादाद्याधिकरणे तद्वदिहापि द्रष्टव्यमिति भावः । अग्निसंबन्धित्वाविशेषादिति । अग्निसन्धुक्षणार्थत्वेन होमस्य अग्नये होत्रं होम इति योगेन प्रवृत्तोऽर्थवादेऽग्निहोत्रशब्दो यौगिक एव । नहि यौगिकानि दण्ड्यादिपदानि नामधेयमित्युच्यन्ते नामधेयत्वाभावाच्च प्रायणीयपदस्य यथा न धर्मातिदेशकत्वं सप्तमद्वितीयपादे वक्ष्यते तद्वदिहापि यौगिकस्यानामधेयस्य न धर्मातिदेशकत्वमिति भावः । भिन्नप्रयोगेति । पवमानेष्टीनामुत्तरक्रतूनां चेति पूर्वत्र शेषः । प्रसङ्गादिति । छिद्रपूरणार्थत्ववचनात् आगन्तूनां चित्रिण्यादीनां प्राप्तेऽप्यन्तेऽनुष्ठाने तद्बाधेन लोकंपृणायाः प्रागेवानुष्ठानं युक्तं न तु तदन्तेपि । एवमिह पवमानेष्टीनामुत्तरक्रतुभ्यः पूर्वमनुष्ठानबोधकवचनाभावात् तेषां तत्पूर्वं करणे किं बाधकमिति प्रसङ्गः । अथवा पूर्वत्र क्रमे चिन्तिते बुद्धिस्थतया पौर्वापर्यनिरूपणस्य प्रसङ्गो द्रष्टव्यः ॥

---

॥ संचिते त्वग्निचिद्युक्तम् ॥

आमरणमिति । आपस्तम्बसूत्रे संवत्सरं न कञ्चन प्रत्यवरोहेत न रामामुपेयात् न पक्षिणोऽश्नीयात् इत्यन्तानि व्रतानि संवत्सरपर्यन्तं विहितानि । तथा यावज्जीवं मस्तिष्कस्य नाश्नीयात् न च वर्षति धावेत् इत्यादीनि च यावज्जीवं विहितानीत्यर्थः । आहिताग्निव्रतवदिति । आहिताग्निर्न क्लिन्नं दार्वभ्यादध्यात् इत्यादिविधिविहिताहिताग्निव्रतवदित्यर्थः । अत्र भाष्यकारेण सिद्धान्ते "न चैषां क्रत्वर्थत्वमस्ति पुरुषार्था ह्येते कथं प्रतिषेधे पुरुषः श्रूयते वर्षति न धावेत् न स्त्रियमुपेयात् इत्येवमादि" एतदभिप्रायमाह—

णादेवोभयत्रापि सङ्कल्पलक्षणा। पुरुषार्थत्वं च वाचनिकफलश्रवणात् द्रष्टव्यम्। तदिदमग्निचिद्व्रतं भूतचयनमात्रस्यैव भूताधानवन्निमित्तत्वाच्चयनमात्रे कृते कर्तव्यमाहिताग्निव्रतवदिति प्राप्ते—

कर्मणि, भूत इति चानुवर्तमाने 'अग्नौ चेः' इति सूत्रेण कर्तरि चिनोतेः क्विप्प्रत्ययविधानात् कर्मत्वाद्यन्यथानुपपत्त्या च भावनाक्षेपादग्निकर्मकचयनकरणकभावनाया एव भूताया निमित्तत्वावगतेरग्निशब्दवाच्यस्य च ज्वलनाख्यस्याग्नेः स्वरूपेण चयनकर्मत्वाभावाच्चयननिष्पादितस्थण्डिलाधारत्वद्वारा कर्मत्वावगतेराधारतायाश्च साङ्गयागसमाप्ति

---

पुरुषार्थत्वं चेति। वाचनिकफलश्रवणादिति। यद्यपि वाचनिकफलं स्पष्टं नोपलभ्यते तथापि अयमर्थः—न तावत् क्रतुवैगुण्यजनकक्रियाविषयत्वरूपक्रत्वर्थत्वसंभवः भूताया एव चयनभावनायाः निमित्तत्वप्रतीत्या तद्वैगुण्याप्रसक्तेः। अतो वैमृधन्यायेन उपस्थिताग्निचयनवाचकपदान्तरकल्पनया तदङ्गत्वं वाक्यात् कल्पनीयम्। तदपेक्षयाप्रधानभूताग्निचित्पुरुषवाचकपदकल्पनया तदर्थत्वमेव युक्तं कल्पयितुं भूतजननादौ[1] निमित्ते जातेष्टिवत् तत्तदार्थवादिकफलकल्पनया पुरुषार्थत्वम्। अर्थवादाश्च "अपरुद्धं ह्यस्यान्नं अन्नमिव खलु वै वर्षं" इत्यादयः तैत्तिरीयशाखायां द्रष्टव्याः। नन्वत्र चयनस्वरूपनिर्वृत्तिः निमित्तं, तत्करणिका त्वग्निकर्मिका भावना, भूता निमित्तमिति शास्त्रदीपिकायां भावनापर्यन्तं निमित्तत्वं दर्शितं तत्र भावनाप्रतीतिः केत्यपेक्षायामाह—कर्मत्वाद्यन्यथानुपपत्त्येति। अयमर्थः—आख्याते भावनाप्रतीतिः शक्त्या, तदाक्षेपाल्लक्षणया कर्त्रादिबोधः। तत्रापि भावनायाः प्राधान्यं, कर्त्रादीनां विशेषणत्वं कारकाणां च भावनयैवान्वयः। कृदन्ते वैपरीत्येन बोधेपि कारकान्वयार्थं भावनाप्रतीतिरावश्यिकीति। अग्निगतकर्मत्वान्वयार्थं भावनाया आक्षेपो युक्तः। एतादृशप्राचीनग्रन्थदर्शनाभिप्रायेणैव पूज्यपादैस्तत्र तत्र कृदन्तेष्वपि भावनाप्रतीतिः उपपादिता आक्षेपशब्दश्च लक्षणापरः इतरथा अशाब्दायां तस्यामितरान्वयानापत्तेरिति। निमित्तत्वावगतेरिति। अत्र च निमित्तत्वावगतिः अग्निचिद्विशेषणान्यथानुपपत्त्या आर्थी न तु शाब्दी सप्तम्याद्यभावात्। आधारतायाश्चेति। अयमर्थः—अग्नेस्तावत् सिद्धस्य नोत्पाद्यत्वेन कर्मत्वम्। अपि तु संस्कार्यत्वेन, तथा चाग्निना भाव्युपयोगिना स्वकार्यं यावन्निष्पादनीयं तावत्पर्यन्तं चयनेन स्थण्डिलरूपाधारसंपादनद्वारा अग्नौ तदुपरिस्थापनरूपसंस्काररूपोपकारेण

---

1. A. जीवनादौ

यावदनिष्पत्तेः क्रत्वन्त एवाग्निकर्मकचयनकरणकभावनाया भूतत्वावगतेस्तदन्ते एवाग्निचिद्व्रतानि। आहिताग्निपदे तु यद्यपि क्तप्रत्ययेन तथैव लक्षणया भावनावगतेस्तस्या एव भूताया निमित्तत्वावगमः तथाऽपि ज्वलनाख्यस्याग्नेराधानकर्मत्वस्य स्वजन्यावान्तरापूर्वाधारत्वेनैव वाच्यत्वात्तादृशस्य चाधानान्त एव निष्पत्तेस्तदन्त एवाहिताग्निव्रतानि। न ह्यत्राहवनीयत्वादिना कर्मत्वं श्रुतं येन पवमानेष्ट्यन्ते तन्निष्पत्तिरशङ्क्येत ॥ १० ॥

---

(११)—परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसम्बन्धात् ॥ २९ ॥ इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसम्बन्धात् ॥ ३० ॥ समाख्यानं च तद्वत् ॥ ३१ ॥

'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः, इति दीक्षणीयेष्टेस्तावद्दीक्षार्थत्वं लृट्प्रत्ययस्य क्रियार्थायां क्रियायामुपपदे विहितस्य श्रवणादवगम्यते। 'दण्डेन दीक्षयति मेखलया दीक्षयति कृष्णविषाणया दीक्षयति' इत्यादिना तृतीययैव दण्डादीनां दीक्षार्थत्वम्। न च दण्डादीनामभिव्यक्त्यर्थत्वं, दीक्षाऽभिव्यक्तेरश्रुतत्वात् अनेकेषु दीक्षयतिपदेषु

---

साहाय्यं कर्तव्यम्। तथा च चयनकरणिकाया अग्निकर्मिकाया भावनाया यावदग्न्युपकाररूपभाव्यानिष्पत्तिः तावन्न भूतत्वं भवति भावनानां फलापवर्गित्वात्। अग्न्युपकारश्च क्रतुं साधयतोऽग्नेर्धारणरूप एव। स तु आक्रतुसमाप्तेः वितत एवेति तस्या भूतत्वं साङ्गक्रतुसमाप्त्यनन्तरमेव भवतीति तदनन्तरमेव तत्प्रयुक्तानि व्रतानीति। नह्यत्रेति। व्रतविधिगताहिताग्निपदे इत्यर्थः।

---

॥ परेणावेदनाद्दीक्षितः ॥

श्रवणादिति। तथा च दीक्षिष्यमाणपदसमभिव्याहाररूपाद्वाक्यात् इष्टेर्दीक्षार्थत्वमित्यर्थः। सिद्धान्ते दण्डादीनां दीक्षाभिव्यञ्जकत्वं शास्त्रदीपिकोक्तमनूद्य दूषयति—न चेति। यमनियमपरिग्रहस्य दीक्षात्वे तस्य दृष्टरूपत्वात् "अदृष्टो हि दीक्षासंस्कारः। तं च दण्डेन निर्वर्तयेदित्युक्ते क्रियाविशेषे चानुक्ते किमिव प्रतिपत्तव्यं" इत्यादिना तन्त्ररत्ने स्वयमुक्तमदृष्टस्व-

तल्लक्षणायां प्रमाणाभावाच्च। किञ्चादृष्टरूपयमनियमपरिग्रहानुकूलयोग्यतारूपाया दीक्षाया अभिव्यक्तिर्न तावदनुमित्यात्मिका, दण्डादीनां व्यभिचरितत्वात्। नापि स्मरणात्मिका सम्बन्धित्वस्य प्रागज्ञानात्। अस्तु वा दीक्षणीयाया एव दीक्षोत्पादकत्वं, तथाऽपि न तदन्ते दीक्षितधर्मा यमनियमादयः। तत्र 'त्वं दीक्षितोऽसि दीक्षितवादं वद सत्यमेव वद नाऽनृतम्' इत्याद्यावेदनप्रैषेण दण्डादिदानोत्तरमेव यमनियमपरिग्रहविधानात्। इतरथा आवेदनस्यादृष्टार्थत्वापत्तेः। अत एव यमनियमपरिग्रह एव दीक्षेति पार्थसारथि-लेखनमप्यपास्तम्। आवेदनप्रैषे दीक्षासम्बन्धोत्तरकालं यमनियमपरिग्रहाभिधानात् स्वयमेव दीक्षाया अदृष्टरूपत्वाभिधानाच्च। अतो दण्डादीनामपि दीक्षार्थत्वात्सर्वान्ते सा। न चैवं नैरपेक्ष्यश्रवणाद्विकल्पापत्तिः अदृष्टार्थतयैकप्रयोगविधिपरिग्रहेण समुच्चयावगतौ अवान्तरकार्ये नैरपेक्ष्योपपत्तेरिति प्राप्ते—

---

रूपत्वमनुपपन्नं स्यादित्यभिप्रेत्याह—**स्वयमेवेति**। दीक्षासाधनानां सर्वेषां विकल्पे हि तेषां पाक्षिकप्राप्तेः सर्वान्ते दीक्षेत्यनुपपन्नं इत्यतो विकल्पमाशंक्य दूषयति—**न चैवमिति**। व्रीहीणां यवानां च न दृष्टोपकारित्वात् निरपेक्षतया कार्यजनकत्वाच्च विकल्पः। समुच्चयेनापि पुरोडाशरूपदृष्टकार्यनिष्पत्तेः संभवात्। अपि तु यवनैरपेक्ष्येण व्रीहीणां व्रीहिनैरपेक्ष्येण यवानां साधनत्वं प्रतिपादयन्ती करणविभक्तिः समुच्चये सति बाध्येनेति कारणाद्विकल्पः। एवमिहापि दण्डादीनां प्रत्येकं करणविभक्तिनिर्देशात् विकल्पः स्यादिति आशङ्काभिप्रायः। व्रीह्यादिशास्त्रं हि नियमविधिः। स च यथाप्राप्ति भवति पुरोडाशरूपदृष्टप्रकृतितया च सर्वेषां व्रीह्यादीनामनियमेन प्राप्तिः। न तु तदेकदेशप्रकृतितया। शक्यते च सकलः पुरोडाशः एकैकेन निर्वर्तयितुमिति तन्निर्वर्तकत्वेन निरपेक्षाणामेवानियमेन प्राप्तानां द्रव्याणां व्रीह्यादयो नियम्यमाना निरपेक्षा एव साधनं भवन्ति। ततश्च द्रव्यान्तरनिवृत्तिर्भवति। एवं यवा अपि अस्मिन्नेवांशे नियम्यन्त इति द्वयोरप्येकेनैव प्रकारेण साधनत्वाद्विकल्पो भवति। तथा च दृष्टार्थत्वपुरस्कारेणैव तत्र विकल्पः इह तु तदभावात् न स इत्यत आह—**अदृष्टार्थतयेति**। यथाहुर्भट्टपादाः।

नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी।
प्राप्ते चान्यनिवृत्त्यंशः फलमर्थात् प्रतीयते॥
व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम्।
यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते॥ इति

दीक्षणीयावाक्ये 'दीक्षिष्यमाणः' इति लृट्प्रत्ययश्रवणेन तस्या दीक्षार्थत्वं तावदवगतम्। दण्डादीनां हि णिजन्तदीक्षयतिपदश्रवणान्न दीक्षार्थत्वमवगम्यते अपि तु तदनुकूलव्यापारार्थत्वमेव प्रथममवगम्यते पश्चात्तु तत्सम्बन्धात् प्रयोज्यव्यापाररूपदीक्षार्थत्वं, दण्डेन घटं कारयतीत्यादिवत् कथञ्चित्कल्प्येत। न च शीघ्रावगतदीक्षणीययैव कृतार्थत्वात् दीक्षाया दण्डादिजन्यत्वकल्पनावसरः। सिद्धरूपत्वाच्च दण्डादीनां न क्रियाव्याप्यत्वज्ञानमन्तरेण दीक्षार्थत्वज्ञानसम्भवः। न च प्रथमावगतप्रयोजकव्यापारार्थत्वमेव वचसैव कारयतीत्यादिवत् तर्ह्यस्त्विति वाच्यं, तथात्वे साक्षाद्दीक्षणीयार्थत्वाङ्गीकारे अदृष्टार्थत्वापत्तेः तद्वरं दीक्षाफलीभूतयमनियमपरिग्रहोपयोगिदीक्षितत्वज्ञानजन-

---

दण्डादीनां त्वनवगतं तादर्थ्यं करणविभक्त्या तदानीमपूर्वं क्रियते। तच्च तादर्थ्यमदृष्टविषयमिति सर्वैः क्रियते। यदि दृष्टविषयमेषां तादर्थ्यं स्यात तच्च निरपेक्षैरेव क्रियमाणं गम्येत ततो निरपेक्षाणामेवानियमेन प्राप्तानां नियमनाद्विकल्पः स्यात्। न त्वेतदस्तीति भावः। तथापि कथं समुच्चयः कथं वा निरपेक्षकरणत्वाभिधायिश्रुतिनिर्वाह इत्यत आह—प्रयोगेति। सर्वेषां दीक्षारूपादृष्टसाधनत्वेपि एकप्रयोगविधिना सर्वेषां सहितानां प्रयोगविधानात् तत्र इतरनिरपेक्षाणां प्रयोगविधाने विकल्पापत्त्या साहित्यबाधापत्तेः अवान्तरप्रकारभेदेनैव एषां साधनत्वं एकदीक्षारूपे फल इति समुच्चयसिद्धिः कल्प्यते। तादृशावान्तरकार्ये प्रत्येकं नैरपेक्ष्येण च करणविभक्त्युपपत्तिः। अत एव यत्र नैकप्रयोगविधिः तत्र क्रत्वन्तराणामेकफलसाधनानामपि फलकामे पुरुषे विकल्पः। आधानपवमानहविषां तु असत्यपि एकप्रयोगवचनपरिग्रहे वचनादेव समुच्चय इत्युक्तमेवेति भावः। दण्डादीनां दीक्षाभिव्यञ्जकत्वेन सिद्धान्तोपपादनं पार्थसारथेः दीक्षयतिपदे अभिव्यक्तिलक्षणया न, किंतु प्रकारान्तरेणेति मत्वा स्वयं सिद्धान्तमारचयति—दण्डादीनां हीति। तदनुकूलव्यापारार्थत्वमिति। स च दीक्षोत्पत्त्यनुकूलत्वेन क्लृप्तः दीक्षणीयेष्टिरूप एव। अत एव तस्य प्राप्तत्वात तदनुवादेन दध्ना जुहोतीतिवत् अत्र उपपदार्थस्यैव विधानमित्यप्येतन्मते ध्येयम्। प्रथममिति। आपाततः प्रथममदृष्टद्वारेत्यर्थः। तत्संबन्धात् दीक्षणीयासंबन्धात। घटङ्कारयतीत्यादिवदिति। दण्डस्य प्रयोजककुलालपितृनिष्ठदानादिरूपव्यापारार्थद्वारा प्रयोज्यकुलालनिष्ठघटानुकूलव्यापारार्थत्वं शाब्दबोधमर्यादया अभासमानमपि यथार्थिकं कल्प्यते तद्वदिहापि दण्डादीनां दानक्रियाविशिष्टानां अदृष्टद्वारा दीक्षणीयोपकारकत्वेन तद्द्वारा दीक्षायां तज्जन्यत्वकल्पनं विलम्बोपस्थितिकमित्यर्थः। अस्तु वा कथञ्चित् तत्कल्पनं तथापि दीक्षार्थत्वं न संभवतीत्याह—सिद्धरूपत्वाच्चेति। वचसैवेति। वचसः परिवेषरूपप्रयोजकव्यापारार्थत्वमेव न तु भोजनादिरूपभोक्तृव्यापारार्थत्वं तद्वदित्यर्थः।

कतयैव दीक्षणीयार्थत्वं दीक्षार्थत्वमेव वाऽङ्गीकर्तुमुचितं अगन्मेति मन्त्रस्य यागफलप्रकाशकतया यागाङ्गत्वमिव। अत एव परम्परासम्बन्धस्य सम्बन्धविधयैव बोधोपपत्तेर्न लक्षणाऽपि। ज्ञानजनकत्वं च स्मारकविधया। सम्बन्धस्य च मानान्तरादनवगमेऽपि विध्यन्यथानुपपत्त्यैवावगमात् स्मारकत्वोपपत्तिः। तत्तद्विध्यन्तरैरेव च दण्डादीनां धारणकण्डूयनादिरूपक्रियाविधानात्तत्क्रियाविष्टानां न स्मारकत्वसम्भव इति शङ्कनीयम्। अत एव तत्तत्क्रियार्थानामप्येषां दीक्षाभिव्यञ्जकत्वमप्यानुषङ्गिकम्। अत एव दण्डादीनां दीक्षाभिव्यक्तौ समुच्चयः। अत इष्यन्त एव दीक्षितधर्माः 'दीक्षितो न जुहोति, न दीक्षितस्यान्नमश्नीयात्' इत्यादयः। न चैवमात्रेदनवैयर्थ्यमभिव्यक्तिवैयर्थ्यं चेति वाच्यं, तद्विध्याज्ञानबलेन तत्प्रैषपठितधर्माणामेव तदुत्तरत्वप्रतीतेः॥ ११॥

---

तद्व्यात्मेति। अयमर्थः। सिद्धरूपाणां तेषां स्वतो दीक्षणीयार्थत्वं दीक्षार्थत्वं वा न संभवति तेषां सर्वदा स्वरूपेण सत्वेन तत्कार्यजननापत्तेः। तथा च यद्यपि धारणकण्डूयनादिरूपव्यापाराविष्टत्वेन तज्जनकत्वं युज्यते तथापि दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् दण्डादिजन्यत्वं दृष्टद्वारा परंपरयैव स्वीकर्तुमुचितम्। तथा च दीक्षणीयाफलं यमनियमपरिग्रहानुकूलयोग्यता तत्फलं यमादिपरिग्रहः। तदुपयोगि यत् यजमाननिष्ठं अहं दीक्षावानिति ज्ञानं तज्जनकत्वद्वारा तदर्थत्वं युक्तमेव। यमादिपरिग्रहोपयोगित्वं तज्ज्ञानस्य दीक्षितोसि दीक्षितवादं वदेत्यावेदनप्रैषादेवावगतमिति नानुपपत्तिः। यथैव यज्ञेन दानेन विविदिषन्तीति वाक्ये यज्ञादीनां ज्ञाने इष्यमाणे तदिच्छायां वा अन्वय इति मतभेदः। तद्वदिहापि संभवतीत्यभिप्रायेण दीक्षार्थत्वमेवेत्युक्तम्। संबन्धस्य चेति। दीक्षायाः दण्डादीनां मिथ इति शेषः। ननु च दीक्षितधर्माणां इष्यन्त एव प्रवृत्तावग्रे आवेदनकरणं दण्डादिभिः अभिव्यक्तिकरणं च व्यर्थं तयोर्दीक्षितधर्मप्रवृत्त्यर्थत्वेन तेषां धर्माणां पूर्वमेव इष्टयन्ते अनुष्ठाने सति तत्प्रयोजनाभावात् इत्याशंक्य दण्डादिविधिश्रवणानुपपत्त्या अभिव्यक्तेर्दीक्षोत्पत्त्यनन्तरं, तथा आवेदनप्रैषानन्तरं सत्यवदनादिविधिश्रवणानुपपत्त्या सत्यवदनादियावत् पठितधर्माणां च आवेदनोत्तरमनुष्ठानेऽपि होमदाननिषेधरूपाणां धर्माणां इष्टयव्यवधानेन प्रवृत्तावपि आवेदनाभिव्यक्त्योः न वैयर्थ्यमित्याशयेन परिहरति— न चैवमिति। तत्तद्विध्याज्ञानेति। दण्डेन दीक्षयतीत्यादिविध्याज्ञानेत्यर्थः। तत्प्रैषः आवेदनप्रैषः तस्माद्धारणादिक्रियाव्याप्त्या दण्डादयो यजमाननिष्ठदीक्षावत्त्वज्ञानजननद्वारा दीक्षणीयार्था दीक्षार्था वेति दण्डेन दीक्षयतीत्येवमादिवचनैर्बोध्यत इति सिद्धान्तः।

(१२)—अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ नवाऽसम्बन्धात् ॥ ३३ ॥ काम्यत्वाच्च ॥ ३४ ॥ आनर्थक्यान्नेति चेत ॥ ३५ ॥ स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

**काम्यानामुद्भित्सौर्यादीनां नैमित्तिकानां च भेदनहोमादीनां समिदादिवदेव पाठक्रमात् क्रमे प्राप्ते; उपायप्रवृत्तित्वावच्छिन्नं प्रति फलेच्छायाः कारणत्वात् नैमित्तिकानुष्ठानस्य च निमित्ताधीनत्वात्तदनुरोधेनैव क्रमावगतेर्न पाठस्य नियामकता। वस्तुतस्तु यत्रैकप्रयोगविधिपरिग्रहोऽनेकेषां तत्रैव क्रमापेक्षायां पाठादीनां नियामकता। न तु यत्र भिन्नप्रयोगविधिपरिग्रहः। अत एव तादृशस्थले पाठः पारायणादावुपयुज्यते ॥ १२ ॥**

---

**इदन्त्विह विचारणीयं**—दीक्षानुकूलव्यापारत्वेन प्राप्तां दीक्षणीयामुद्दिश्य दण्डकरणत्वविधाने तस्या यजमानकर्तृकत्वेन प्रयोज्यनिष्ठत्वेपि प्रयोजकस्याध्वर्योः दीक्षानुकूलव्यापारस्याप्रतीतेः कथमध्वर्युकर्तृकत्वसिद्धिरिति। उक्तं च स्वयमपि संस्कारास्त्विति तार्तीयाष्टमपादगताधिकरणे, इहाध्वर्युव्यापारान्तरस्याप्युपपादनात् अध्वर्युकर्तृकत्वं; अतः स्वरूपेण दण्डादीनां दीक्षाकारणत्वानुपपत्तेः दीक्षामस्य करोतीत्यर्थः इति पूर्वपक्षभाष्ये सूचितस्य तत्करोति तदाचष्टे इति **पाणिन्यनुशिष्टस्य** तत्करोतीत्यर्थकस्य णिचः प्रयोगासंभवात् प्रयोजकव्यापारार्थ एव णिजत्र विवक्षितः। स च प्रयोजकव्यापारोऽध्वर्युनिष्ठः दानादिरूप एव वक्तव्यः। नहि तस्य दीक्षानुकूलत्वं प्रमाणान्तरावगतम्। अतोऽत्रैव तस्या विशिष्टविधिरूपेण विधाने अदृष्टार्थत्वापत्तेः लाघवाद्दीक्षापदेन अभिव्यक्तिलक्षणया दीक्षाभिव्यक्त्यनुकूलव्यापारं दानादि दण्डेनाध्वर्युः कुर्यात् इत्येवार्थः **शास्त्रदीपिकादिसूचितो** युक्तः। **अथवा** जटाभिस्तापस इति इत्थम्भूतलक्षणे तृतीयया दण्डादीनामभिव्यञ्जकत्वप्रतीतेः अर्थादेव दीक्षाभिव्यक्त्यर्थत्वसिद्धौ नाभिव्यक्तिलक्षणापि। तथा च दण्डादिज्ञाप्यदीक्षानुकूलव्यापारं दानादि अध्वर्युः कुर्यादित्यर्थः। ततश्चाभिव्यक्त्यर्थत्वे दृष्टार्थता लभ्यते। तदिदमुक्तं **शास्त्रदीपिकायां** अभिव्यक्तिस्तु दृष्टार्थत्वात् प्रमाणान्तरदृष्टसंयोगवशेन शक्यते संपादयितुमिति। एकं दीक्षाकरणं, अन्यैर्दीक्षितं संपादयतीति गम्यत इति भाष्योक्तेः दण्डेन दीक्षितं संपादयति संयुनक्तीत्यर्थः इति **तन्त्ररत्नकृते** व्याख्याने, संयोजनरूपं संपादनं अध्वर्युकर्तृकं स्पष्टं प्रतीयते। अतो दीक्षणीयारूपव्यापारार्थकणिजन्तत्वेन सिद्धान्तोपपादनं **पूज्यपादानां** कथमिव संगच्छत इति दिक्।

## (१३)—य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥ लिङ्गाच्च ॥ ३८ ॥

स्थिते भिन्नप्रयोगविधिपरिगृहीतानां क्रतूनां नियमे क्वचिद्वचनात्पौर्वापर्यं यथा "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तद्भवति" इति। तत्रैतच्छब्दो यद्यपि ज्योतिष्टोममात्रपरामर्शी, तथाऽपि न सर्वसंस्थस्य ग्रहणं, अपि तु अग्निष्टोमसंस्थस्यैव, संस्थान्तराणामन्यशब्देनाभिधानस्याग्रिमाधिकरणे वक्ष्यमाणत्वेन तास्वपि ज्योतिष्टोमोत्तरत्वस्यावश्यकत्वात् परिशेषादेवाग्निष्टोमसंस्थस्य पूर्वं करणसिद्धेः। अत एवातिरात्रसंस्थाकस्य 'अतिरात्रमेके प्रथममाहरन्ति' इति वचनादेव प्रथमं करणम्। अस्तु वाऽग्निष्टोमसंस्थाकज्योतिष्टोमपरमर्शकत्वमेवैतच्छब्दस्य, अग्निष्टोमसंस्थामभिप्रेत्यैव ज्योतिष्टोमे सकलधर्मविधानात्। अत एव 'तस्य नवतिशतं

---

॥ अङ्गवत् क्रतूनामानुपूर्व्यं ॥

स्पष्टार्थमेतत्

य एतेनेत्यग्निष्टोमः प्रकरणात्

अत्र च भिन्नप्रयोगक्रतूनां पाठस्य न क्रमनियामकत्वमिति पूर्वाधिकरणे उक्तस्य दीक्षावाक्यवदनन्यपरश्रौतक्रमविधानसत्त्वेऽपवादोऽग्रिमाधिकरणे वक्ष्यते। तदुपोद्घातार्थत्वेनैतच्छब्दार्थनिरूपणमिहेति प्रकाशकारैरुक्तं तद्दीक्षावाक्ये अव्यवहितानन्तर्यरूपक्रमविधानेऽपि इह तदभावादयुक्तं श्रौतक्रमत्वाभिधानमित्यभिप्रेत्य पौर्वापर्यमात्रविधानेनैव एतदपवादं सूचयति— **पौर्वापर्यमिति। अपि त्विति।** एतच्छब्दः पूर्वप्रकृतसर्वसंस्थज्योतिष्टोमवाची परं तु अन्यशब्दानुरोधेनाग्नीषोमसंस्थस्य परिशेषात् पूर्वं करणमिति पक्षे अतिरात्रप्रथमाहारेपि ज्योतिष्टोमोत्तरत्वानुग्रहस्य उद्भिदादिषु संभवात् अग्निष्टोमसंस्थायाः प्रथममकरणेपि अतिरात्रसंस्थज्योतिष्टोमानन्तरं भवत्येवोद्भिदाद्यनुष्ठानमिति फलभेदः। नन्वन्यशब्दार्थनिश्चयस्य एतच्छब्दार्थज्ञानानन्तरं प्रवृत्तेः तस्य च ज्योतिष्टोममात्रवाचित्वनिश्चये सति अन्यशब्दस्य सर्वसंस्थज्योतिष्टोमातिरिक्तेतरकाम्ययज्ञादिपरत्वमेव स्यादिति कथमन्यशब्दार्थानुरोधेन अग्निष्टोमसंस्थस्य ग्रहणं परिशेषात्। कथं वा तस्यैव प्रथमानुष्ठानं इत्यर्थसिद्धिरित्यस्वरसादाह—**अस्तु वेति।** य एतेनानिष्ट्वेति सिद्धवद्वाक्यशेषनिर्देशान्यथानुपपत्त्या एतेनेष्ट्वा अन्येन यजेतेति कल्पितविधावेतच्छब्दार्थकरणकभावनोत्तरकालस्य उत्तरक्रतुषु विधानप्रतीतेः इतरसंस्थज्योतिष्टोमस्याश्रयत्वेनान्वयेपि करणत्वेनान्वयाभावात् अग्निष्टोमसंस्थस्यैव करणत्वात्तस्यैव एतच्छब्देन ग्रहणमित्यपि युक्त्यन्तरं द्रष्टव्यम्।

स्तोत्रीयाः' इत्युपपद्यते, अग्निष्टोमसंस्थाकज्योतिष्टोम एव हि तावत्यस्स्तोत्रीयाः न संस्थान्तरयुक्ते। एवं चातिरात्रप्रथमाहारोत्तरमपि अग्निष्टोमसंस्थां कृत्वैवोद्भिदादयः कार्या इति द्रष्टव्यम्॥

(१४)—अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥ तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥ प्रशंसा वा विहरणाभावात् ॥ ४१ ॥ विधिप्रत्ययाद्वा न ह्यकस्मात् प्रशंसा स्यात् ॥ ४२ ॥

एतच्छब्दार्थे निरूपिते अन्यशब्दार्थो निरूप्यते। अन्यशब्दस्य पूर्वप्रकृतादितरद्यत्सन्निहितं तद्वाचित्वात् संस्थानां च सन्निहितत्वेन तास्वेवाग्निष्टोमोत्तरत्वस्य विधिरिति प्राप्ते—

---

तावत्यः स्तोत्रीया इति। तत्संख्याविवृत्तिश्चात्र भाष्यकारेणैव दर्शिता—त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि चत्वारि इत्येकोनसप्ततिऋचः, पञ्चदशो माध्यन्दिनपवमानः तेन चतुरशीतिः, सप्तदशानि पृष्ठानि चत्वारि सोष्टषष्टिः चतुरशीत्या सह द्विपञ्चाशच्छतं, सप्तदशआर्भवः पवमानः तेन एकोनसप्तत्यधिकं शतं एकविंशं यज्ञायज्ञीयमिति नवत्युत्तरशतसंख्या स्तोत्रीयर्चामग्निष्टोमे इति। अस्मिंश्च पक्षे फलभेदं दर्शयति—एवं चेति। यद्यप्यतिरात्रमेके प्रथममाहरन्तीति वचनात् एतेनेष्ट्वा अन्येन यजेतेति वचनाच्च अग्निष्टोमातिरात्रयोः प्राथम्ये विकल्पप्रतीतेः अतिरात्रप्रथमाहारोत्तरमितरयज्ञानुष्ठाने अग्निष्टोमानुष्ठानं मध्ये अनावश्यकमेव प्रतीयते तथापि अयमेवाभिप्रायः—नातिरात्रप्राथम्यविधिना अतिरात्रोत्तरत्वं अग्निष्टोमोत्तरत्वबाधेन इतरयज्ञादिषु विधीयते। अष्टदोषदुष्टविकल्पापत्तेः। किं तु इतरसंस्थासाधारण्येन यदतिरात्रे अग्निष्टोमोत्तरत्वमासीत् तन्मात्रबाधेन अग्निष्टोमे अतिरात्रोत्तरत्वमेव विधीयत इत्येतावन्मात्रेणातिरात्रस्य प्राथम्यं ततश्च उद्भिदादिषु उक्थ्यादिषु च अग्निष्टोमोत्तरत्वरूपधर्मबाधे प्रमाणाभावात् अतिरात्रप्रथमाहारेपि अग्निष्टोमं कृत्वैव उद्भिदाद्यनुष्ठानं युक्तम्। अतिरात्रे तु अग्निष्टोमोत्तरत्वस्य अतिदेशतः प्राप्तावपि अतिरात्रप्राथम्येनोपदिष्टेन बाधात् अग्निष्टोममकृत्वापि अनुष्ठानं युक्तमेवेति।

---

**न तावत्संस्थानां प्रकरणेन सन्निधानं विकृतित्वात्। अधिकारोपि ज्योतिष्टोमस्यैव 'एष वाव' इत्यादिवाक्यशेषे तस्यैव सङ्कीर्तनाच्च। यज्ञानां ज्योतिष्टोमोद्भिदादीनां मध्येऽग्निष्टोमसंस्थाक एव प्रथममित्युक्ते अन्येषामप्युद्भिदादीनां यज्ञपदेनोपादानाच्च। न चैवं संस्थानामयज्ञत्वादग्रहणं तास्वप्याश्रयस्य यज्ञत्वात्। अतश्चाग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तरकालत्वविधिः। न च ज्योतिष्टोमे यज्ञान्तरापेक्षया प्राथम्यमेव प्रकरणानुग्रहाय विधीयतामिति वाच्यं 'एष वाव' इत्यस्यार्थवादत्वेनाविधायकत्वात्। 'अथान्येन' इत्यनेन तृतीयविधिप्रकारलिप्सया यागान्तरेष्वेवाग्निष्टोमपूर्वकालकत्वस्य तदुत्तरकालत्वसमनियतस्य विधानसंभवे प्रकरणबाधस्यादोषत्वाच्च। न च प्रकरणान्तरन्यायेनात्र कर्मान्तरत्वशङ्का 'एष वाव' इत्यनेनार्थवादेनोद्भिदादीनां यज्ञान्तराणां सन्निहितत्वात्। न च तत्रैव कर्मान्तरत्वशङ्का, तस्योत्तरकालत्वाक्षिप्तप्राथम्यस्तावकत्वेनोपादेयत्वसामानाधिकरण्येन विधेयत्वानाक्षेपकतया कर्मान्तरानाक्षेपकत्वात्। अतस्सिद्धमग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तरकालत्वविधिरिति ॥ १४ ॥**

---

॥ अथान्येनेति संस्थानां सन्निधानात् ॥

**सन्निहितत्वेनेति।** अग्निष्टोमेन समाप्तिमता समाप्तिरुपस्थाप्यते, धर्मधर्मिणोरभेदात न धर्म्यन्तराणीति तासां सन्निहितत्वमित्यर्थः। **तास्वेवेति।** ततश्चोक्थ्यादयोऽग्निष्टोमसंस्थं ज्योतिष्टोमङ्कृत्वैव पश्चात् कार्याः। एकाहाहीनसत्रादीनि तु पूर्वं पश्चाद्वा कर्तव्यानीत्यनियम इत्यर्थः संस्थानामेवान्यशब्देन ग्रहणमिति पूर्वपक्षे प्रकृतादितरमात्रवाचित्वं हेतुरसाधक एव, केवलं सन्निहितवाचित्वमेव तत्साधकमिति सन्निहितत्वमेवादौ दूषयति—**न तावदिति।** संस्थानां सन्निधानं प्रकरणात् आर्थवादिकयज्ञपदोपादानाद्वा नोभयथापि संभवतीत्याह—**विकृतित्वादिति।** विकृतीनां प्राकृतक्लृप्तोपकारैरङ्गैर्नैराकाङ्क्ष्यात उभयाकाङ्क्षालक्षणं प्रकरणं न संभवत्येव अथापि तत्स्यात् तथापि नात्र तासां तत्। अपि तु अग्निष्टोमसंस्थज्योतिष्टोमस्यैव इत्याह—**अधिकारोऽपीति। उपादानाच्चेति।** तथाचार्थवादतः शाब्दयुपस्थित्यपेक्षया आक्षेपजन्योपस्थितेर्दुर्बलायाः बाध एव युक्त इत्यर्थः। "एष वाव प्रथम" इत्यर्थवादकल्पितविधौ प्रकारत्रयमवभासते-अग्निष्टोमं प्रथमं कुर्यात्, **अथ** वा अन्यं प्रथमं न कुर्यात्, अथ वा एतेनेष्ट्वा अन्येन यजेतेति। तत्र गर्तपत्यमेव भवतीति निन्दोन्नीतस्य एतेनानिष्ट्वा अन्येन न यजेतेत्येवंरूपस्य निषेधस्य कल्पनमपि संभवति तथापि तदेतेनेष्ट्वान्येन यजेतेति विधिकल्पनपर्यवसाय्येव, एतेनानिष्ट्वेत्युपादानात। ततश्चाग्निष्टोमप्रतियोगिकमुत्तरकालत्वमेव तदन्ययज्ञमात्रे विधीयते कल्पितविधिनेत्यभिप्रेत्याह—**तदुत्तरकालत्वविधिरिति।** ननु एष वावेत्युपक्रमे अग्निष्टोमगत-

(१५)—एकस्तोमे वा क्रतुसंयोगात् ॥ ४३ ॥ सर्वेषां वा चोदनाविशेषात् प्रशंसा स्तोमानाम् ॥ ४४ ॥

ननु "यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशः स तं यस्सप्तदशः स तं य एकविंशः स तम्" इति वाक्यशेषे एकस्तोमकानामेव सङ्कीर्तनात्तेषामेवान्यशब्देन ग्रहणात्तत्रैवोत्तरकालत्वविधिः अक्ताधिकरणन्यायेनोचितेति चेन्न, वाक्यशेषस्यान्यथाऽप्युपपत्तेः। यो हि त्रिवृत्स्तोमः प्रकृतावनुष्ठितश्चोदकेनान्यं यज्ञक्रतुमापद्यते प्राप्नोति स स्तोमस्तं यज्ञक्रतुं अभ्यस्तत्वाद्दीपयतीति तस्यार्थः। सम्भवति च स्तोमान्तरसत्त्वेऽपि त्रिवृदादेरपि सत्वात् अनेकस्तोमकक्रतुदीपकत्वं, पुत्रान्तरसत्त्वेऽप्येकस्य गुणवत्त्वविवक्षया पितृदीपकत्ववत्।

---

प्राथम्यश्रवणात् तदेवाग्निष्टोमाङ्गत्वेन विधीयतामिति शङ्कते—न चेति। अस्मिंश्च पूर्वपक्षे अग्निष्टोमस्य प्राथम्यरूपाङ्गाभावात् वैगुण्यापत्त्या द्वितीयवारमकरणमेवेति फलभेदः। ननु एष वावेति सिद्धवन्निर्देशान्यथानुपपत्त्या प्राथम्यविधेरेव कल्पनमस्त्वित्याशङ्कामन्येन यजेतेत्युपसंहारे एतेनेष्ट्वा अन्येन यजेतेति विधिपर्यवसानतात्पर्यप्रतीतेः तदनुरोधेन तृतीयविधिप्रकारतालाभाय अग्निष्टोमपश्चाद्भावविधानस्य इतरयज्ञादिषु कथञ्चित् स्वीकारात् न एष वावेत्यस्य तदुपपादकस्यानुपपत्तिरित्यभिप्रायेण परिहरति—अथान्येनेति। तदेतदभिप्रेत्यैव नाप्यन्येषां प्राथम्यप्रतिषेधः प्रतिषेधवाचकस्य शब्दस्याभावादित्युक्तं वार्तिकतन्त्ररत्नयोः। शास्त्रदीपिकायां तु स्पष्टमेव पूर्वाधिकरणे एतेनेष्ट्वा अन्येन यजेतेत्येव कल्पितं वाक्यमुदाहृतम्। अनुपस्थितदूरस्थयज्ञान्तरोद्देशेन उत्तरकालस्यानुपादेयस्य विधाने प्रकरणान्तरात् कर्मभेदमाशङ्कते —न चेति। तत्रैव यज्ञानामित्यस्मिन् वाक्य एव ॥

---

॥ एकस्तोमो वा क्रतुसंयोगात् ॥

यदि आर्थवादिकयज्ञपदोपादानबलात् न संस्थामात्रस्य ग्रहणं अपि तु तत्साधारण्येन यज्ञमात्रस्येति निर्णीतं तर्हि अर्थवादान्तरानुरोधादेव कतिपययागानामेव ग्रहणमापद्यत इति आक्षेपं सूचयन् पूर्वपक्षं दर्शयति—नन्विति। एकस्तोमकानामेवेति। त्रिवृदादीनामन्यक्रतुदीपकत्वे यदि प्रकृतावनुष्ठानकृताभ्यासेनाभ्यस्तत्वमादायोच्येत तदा स्तोमान्तराणामपि तदविशेषात् त्रिवृदादिष्वेवासाधारण्येन दीपकत्वं नोपपद्यते। अतो यत्रैव स्तोमान्तरबाधेन त्रिवृदादिविधानं तत्र तत्स्तोमानां स्थाने त्रिवृदादिस्तोमानां पुनः पुनरभ्यासात् अभ्यस्तत्वेन

**वस्तुतस्तु** गुणविशेषस्य **प्रकृतेऽविद्यमानत्वात् त्रिणवादिमात्रस्तोमकक्रतौ च त्रिवृदादेरभावेन दीपकत्वानुपपत्तेर्वाक्यशेषस्य क्रतुविशेषोपस्थापकत्वेऽपि विधौ प्रतिप्रधानावृत्तिन्यायेन सर्वविषयत्वप्रतीतेः सन्देहाभावेनाक्ताधिकरणन्यायाभावान्न वाक्यशेषस्य विधिसङ्कोचकत्वकल्पनावसरः। अतस्त्रिवृदादिग्रहणं ज्योतिष्टोमीयाङ्गमात्रोपलक्षणं तदङ्गमात्रस्य तद्विकृतावभ्यस्तत्वेन तद्विकृतिदीपकत्वात् तदुत्तरकालत्वस्तुत्युपपत्तेः। अत एवान्यपदेन न सौर्यादिग्रहणं तत्र सौमिकाङ्गाभ्यासाभावात्, अतस्तद्विकृतिमात्रस्य तदुत्तरकालतेति सिद्धम्॥ १५॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**

**पञ्चमस्याध्यायस्य तृतीयः पादः**

---

दीपकत्वसंभवात् तादृशानामेव युक्तं वाक्यशेषाद्ग्रहणम्। अतस्त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः एकविंशः षोडशीनि षड्रात्रादिष्वहीनेष्वाम्नातानामेकस्तोमानामेवेत्यर्थः। **गुणविशेषस्येति**। स्तोमान्तरयुक्तान्यक्रतुषु त्रिवृदादीनामभ्यस्तत्वरूपगुणविशेषस्याविद्यमानत्वात् न तमादाय दीपकत्वसंभवः। नापि प्रकृतावनुष्ठानेन पुनरिहानुष्ठानात् अभ्यस्तत्वेन तत; तथात्वे यत्र न पुनरनुष्ठानप्रसक्तिः तेषां क्रतूनां तद्दीपकत्वासंभवात् ग्रहणानापत्तिरित्याह—**त्रिणवेति**। त्रिणवेनौजस्कामममिति विहितत्रिणवादिमात्रस्तोमके क्रतावित्यर्थः। **क्रतुविशेषाः** त्रिवृदादिस्तोमरूपाः। **विधौ** अग्निष्टोमोत्तरत्वविधौ। यतस्त्रिणवादिमात्रस्तोमकक्रतुषु न त्रिवृदादेस्सत्वेनाभ्यस्तत्वमादाय दीपकत्वसंभवः तत इत्याह—**अत इति**। **अत एवेति**। येषामग्निष्टोमे प्रथमङ्कृते तत्राभ्यस्तैः तैः स्वप्राप्त्यनन्तरं यतो दीपनं संभवति अत एवेत्यर्थः। **यद्यपि** अग्निष्टोमोत्तरत्वविधौ प्रतिप्रधानं गुणावृत्तिन्यायेन अग्निष्टोमातिरिक्तयज्ञसाधारण्येन सौर्यादिष्वपि निस्सन्दिग्धतया संभवत्प्राप्तिकमग्निष्टोमोत्तरत्वं न वाक्यशेषेण नियन्तुं शक्यते तथाप्यन्यशब्दस्य प्रकृतातिरिक्तप्रकृतसदृशवाचित्वात् सादृश्यस्यानियतधर्मावच्छिन्नत्वेन सन्देहे सादृश्यविशेषनियमनद्वारा भवत्येव वाक्यशेषस्यापेक्षितनिरूपकत्वमिति विशेषसादृश्यानालिङ्गितेषु सौर्यादिषु नान्यशब्दवाच्यत्वप्रयुक्ताग्निष्टोमोत्तरत्वप्राप्तिरिति ध्येयम्।

**इति श्रीशम्भुभट्टविरचितायां भाट्टदीपिका-**

**प्रभावल्यां पञ्चमस्य**

**तृतीयः पादः**

---

# अथ पञ्चमाध्यायस्य चतुर्थः पादः

## (१)——क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

**तदेवं निरूपितेषु क्रमप्रमाणेषूत्तरस्य दौर्बल्यं प्रागेवास्माभिर्निरूपितम्। सुबोधत्वात्तु न सूत्रकारेणोच्यते। शिष्यानुग्रहार्थं तु क्वचिदुच्यते। श्रुतिविरोधे पाठस्य दौर्बल्यं यथा—'आश्विनो दशमो गृह्यते तं तृतीयं जुहोति' इत्यत्र पाठात् "ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति" इत्येवंविधादाश्विनग्रहणस्य तृतीयस्थाने प्राप्तस्य दशमश्रुत्या दशमस्थाने अनुष्ठानम्। 'तं तृतीयम्' इति तु पाठप्राप्तानुवाद एव, प्रवृत्तेः पाठेन वाधात्। एवमर्थेनापि पाठस्य वाधः। यथा—'अग्निहोत्रं जुहोति, यवागूं पचति' इति। व्याख्यातपूर्वमिदम् ॥ १ ॥**

---

॥ क्रमकोपोऽर्थशब्दाभ्याम् ॥

पाठस्थले विधेः पदार्थविधायकत्वेन सावकाशत्वात् श्रौतक्रमविधेश्चान्यपरत्वाभावेन केवलक्रमविधायकत्वात् पाठापेक्षया प्राबल्यमित्येवं विधिरूपश्रुतिगतप्राबल्ययुक्तेः वषट्कर्तृवाक्यविहितप्राथम्यक्रमस्य पदार्थविशेषणतया विधाने सति केवलक्रमपरत्वस्य तद्विधिश्रुतावसंभवेनाव्यापकत्वमित्यभिप्रेत्य क्रमपरशब्दस्यैवात्र श्रुतित्वं सूचयति—**दशमश्रुत्येति**। दशमशब्दस्य संख्यावाचित्वेन क्रमश्रुत्येत्यर्थः। ननु दशमस्थाने आश्विनग्रहणे सति तत्प्रवृत्त्या तत्स्थान एव होमप्राप्तौ तद्बाधनार्थं तन्तृतीयमिति विधिना तृतीयस्थाने होमविधानमावश्यकमिति कथमनुवादत्वमित्याशङ्कां निराकरोति—**प्रवृत्तेरिति**। अङ्गभूतहोममन्त्राणामाश्विनदेवत्यानां मैत्रावरुणग्रहहोमाङ्गमन्त्रानन्तरं पाठेन तस्य प्रवृत्तिबाधकत्वात तदनुरोधेन तृतीयस्थाने होमानुष्ठानं प्राप्तमेवेति तस्यानुवादकत्वं युक्तमेवेति भावः। **व्याख्यातपूर्वमिति**। यद्यपि **प्रकृतौ तु स्वशब्दत्वात्** इत्यधिकरणे अर्थविरोधे पाठस्य वक्ष्यते दौबल्यमित्युक्तं, तेनात्र तद्विरोधे प्राबल्यदौर्बल्ये स्पष्टं निरूपणीयत्वेन वक्तुमुचिते तथाप्यर्थक्रमनिरूपणावसर एव तयोः प्रदर्शनस्य कृतत्वात तदभिप्रायेणेदम्। श्रुत्यर्थयोर्विरोधे तु अर्थस्यैवान्यथाकल्पनात् दौर्बल्यमित्युक्तं प्रागेव। तदुक्तं—

श्रुत्यर्थयोर्विरोधस्तु नैव क्वचन संभवी।
यथाश्रुत्येव हि न्याय्यं अर्थस्य परिकल्पनम् ॥
कृत्वाग्निहोत्रं पक्तव्या यवागूरिति हि श्रुतिः।
पाको दृष्टार्थ एव स्यादनुष्ठानं तु पश्चिममिति ॥

**(२)—अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ यथा-प्रधानं वा तदर्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥**

**एवं मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधः। यथा—दध्नः पाठादर्थाच्च पूर्वं धर्मा दोहनादयः। पश्चादाग्नेयस्य निर्वापादयः। तत्प्रवृत्तिक्रमेण च हविरासादनप्रयाजशेषाभिघारणस्विष्टकृदवदानादीन्यपि कर्तव्यत्वेन प्राप्तानि मुख्यक्रमात् प्रथममाग्नेयस्य कार्याणि पश्चाद्दध्नः, प्रधानानां हि पाठादेव प्रथममाग्नेयस्य पश्चात् सान्नाय्यस्यानुष्ठानम्। यद्यपि च आसादनादीनां याज्यापुरोनुवाक्याप्रवृत्तिक्रमात्तादृशानुष्ठानमपि प्रसज्यत इति भूतभाविप्रवृत्तिक्रमा-**

---

अत्र "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्याद्युदाहृतं **तन्त्ररत्ने** श्रुतिपाठविरोधे; **तदयुक्तं**, प्रकृतौ यजमानसंस्कारार्थाया अपि दीक्षायाः सत्रे गृहपत्यादिसंस्कारार्थत्वेन प्राप्तावपि तत्तद्दीक्षाणां पाठस्य श्रुतिविरुद्धस्य प्रकृतौ विकृतौ वा क्लृप्त्या तेन सह विरोधस्याप्रसक्तेः इत्यभिप्रायेण भाष्यकृता केवलमाश्विनो दशमो गृह्यत इत्येवोदाहरणं दर्शितं तदेव **पूज्यपादैः** धृतमिति ज्ञेयम्।

---

॥ **अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात्** ॥

**अर्थाच्चेति**। दधिनिष्पत्तिप्रयोजनरूपसामर्थ्यादित्यर्थः। **पूर्वं** पूर्वेद्युः **पश्चात्** परेद्युः। **यद्यपि** निर्वापादयो धर्माः पूर्वं पाठादाग्नेयस्य पश्चाद्दध्न इत्येवं यावत् पाठपौर्वापर्यप्रवृत्तिदर्शनात् तत्प्रवृत्तिक्रमेण हविरासादनादीन्यप्याग्नेयस्य पूर्वं दध्नः पश्चादित्येवं क्रमेणैव भवितुमर्हन्तीति सिद्धान्तसिद्ध्या कथं पूर्वपक्षसिद्धिः **तथापि** पूर्वेद्युस्तनदधिधर्मानन्तरं परेद्युरपि तत्प्रवृत्तिक्रमेण दधिधर्मा एव कर्तव्यत्वेन प्राप्ता अपि न क्रियन्ते आग्नेयनिर्वापादिधर्माणां तदुत्तरं पाठात् तस्य च बलवत्त्वात्। तथा च यावत्पाठं पूर्वेद्युस्तनदधिधर्मप्रवृत्तिबाधेपि हविरासादनादौ बाधकपाठाभावे उत्सर्गप्रवृत्तेर्न्याय्यत्वात् स एव प्रवृत्तिक्रमो नियामक इति दध्याद्यासादनानन्तरमेव आग्नेयादिहविरासादनादीनीति पूर्वपक्षसिद्धिरित्यभिप्रेत्याह—**तत्प्रवृत्तिक्रमेण चेति**। हविरासादनप्रयाजशेषाभिघारणस्विष्टकृदवदानादीन्यपि इत्यत्र हविस्संबन्धीनि यानि आसादनप्रयाजशेषाभिघारणस्विष्टकृदवदानादीनीति समासः। हविस्संबन्धः क्रमेण कर्मत्वाधिकरणत्वापादानत्वरूपो द्रष्टव्यः। **पाठादेव** मन्त्रपाठादेव। **तादृशानुष्ठानमिति**। आग्नेयहविरासादनादि पूर्वं

**भ्यामनियमप्रसक्तौ मुख्यक्रमस्य नियामकत्वमात्रमिति नेदं विरोधोदाहरणं संभवति। तथाऽप्यन्यदेतादृशोदाहरणं मृग्यम्। दूषकताबीजं तु मुख्यक्रमे प्रधानप्रत्यासत्त्यनुग्रहः। प्रवृत्तिक्रमे त्वङ्गानां परस्परप्रत्यासत्तिः। अतस्तस्य बाधः। अत्र न प्रधानावदानमुदाहरणं तस्य प्रदानेनैकपदार्थत्वस्य स्थापितत्वात्॥ २॥**

---

पश्चात् दध्यासादनादीत्येवंरूपमित्यर्थः। **नेदं विरोधोदाहरणमिति**। यद्यपि मुख्यक्रमस्य नियामकस्यापि नियमनद्वारा भूतप्रवृत्तिबाधकत्वमस्ति फलतः तथापि ययोर्विरोधः तयोरेव बाध्यबाधकभावो भवति। भूतप्रवृत्त्या सह विरोधस्तु भाविप्रवृत्तेः, न तु मुख्यक्रमस्य साक्षाद्विरोधः। किन्तु भाविप्रवृत्त्या पूर्वतनाङ्गक्रमानुष्ठाने अनुष्ठितानां तेषां भाव्यङ्गप्रत्यासत्तिवत् मुख्यप्रत्यासत्तिरप्यधिका लभ्यत इति प्राबल्यादुत्तरयैव पूर्वस्याः प्रवृत्तेर्बाध इति अनुग्राहकत्वमात्रं मुख्यक्रमस्य। ततश्च प्रवृत्त्योर्विरोधे प्राबल्यदौर्बल्यविषयोदाहरणमेतदस्तु नाम। न तु मुख्यक्रमस्येति नेदं विरोधोदाहरणं इति **विरोधपदेन** सूचितम्। **वस्तुतस्तु** प्रयाजशेषाभिघारणादीनामेव मुख्यक्रमासङ्कीर्णोदाहरणत्वस्य स्वयं प्राचीनैश्चोक्तत्वात् तत्र भूतप्रवृत्तिविरोधस्यापि तेन सह संभवेन तद्बाधोदाहरणत्वमपि संभवत्येवेति द्रष्टव्यम्। साङ्गे प्रधाने विधीयमाने प्रधानसाहित्यमङ्गानां प्रतीयते परस्परसाहित्यं तत्तद्द्वारेण; अतः प्रधानप्रत्यासत्तिः परस्परप्रत्यासत्तितो यतो बलीयसी अत आह–**अतस्तस्येति**। **अयमर्थः**। यदि हि आसादनादिषु मुख्यक्रमः तदा प्रथमं दधिधर्माः शाखाहरणादयः। ततः आग्नेयनिर्वापादयः। ततः सान्नाय्यनिर्वापः। तदनन्तरमाग्नेयासादनम्। ततः सान्नाय्यासादनं, तत आग्नेयधर्मः। ततः सान्नाय्यधर्म इत्येवं प्रधानपर्यन्ता धर्माः। ततः आग्नेयप्रधानं, ततः सान्नाय्यप्रधानमिति स्थितिः। तत्र सान्नाय्यधर्माणां पूर्वमनुष्ठितानां शाखाहरणादीनां सान्नाय्यासादनादिधर्माणामुत्तरमनुष्ठीयमानां च मध्ये आग्नेयासादनेन व्यवधानात विप्रकर्षो जायत इत्यङ्गानां परस्परं प्रत्यसत्तिः यद्यपि बाधिता भवति, परंतु परेद्युः क्रियमाणानां सान्नाय्यासादनादीनां बहूनां धर्माणां तदुत्तरकर्तव्यान्निमयत्किंचिदाग्नेयधर्माग्नेयप्रधानाभ्यां द्वाभ्यामाग्नेयसहत्वशास्त्रानुमतव्यधानेऽपि मध्ये अग्नेयासादनस्य शास्त्राननुमतव्यवधायकस्याधिकस्य प्रवेशात् सान्नाय्ययागेन प्रधानेन स्वीयाङ्गानां सान्नाय्यासादनादीनां प्रत्यासत्तिरनुगृहीता भवति। शाखाहरणादिकतिपयाङ्गानामेव प्रधानविप्रकर्षः। प्रवृत्तिक्रमाश्रयणे तु सान्नाय्याङ्गानामन्योन्यं प्रत्यासत्त्यनुग्रहेऽपि सान्नाय्यासादनोत्तरं सान्नाय्यायागानुष्ठानं यावन्मध्ये आग्नेयासादनस्याधिकस्य प्रवेशात् अधिकक्षणव्यवधानप्रयुक्तप्रधानप्रत्यासत्तिबाधः स्यात्। अतो मुख्यानुग्रह एव युक्त इति। सूत्रे अवदानपदं प्रधानावदानपरमपीति भ्रमं निरस्यति— **अत्र चेति**। **प्रधानेन**। प्रदानरूपेण सहेत्यर्थः। **स्थापितत्वादिति**। अत्रैव द्वितीयपादे–**संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वादित्यधिकरणे** इति शेषः। तथा चावदानादिप्रदानान्तस्यैकपदार्थत्वेन

(३)—वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् ॥ ६ ॥ तदन्तेनानर्थकं हि स्यात् ॥ ७ ॥ तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥ ८ ॥ अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशात् आनन्तर्याद्धिशङ्का स्यात् ॥ ९ ॥ इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम् ॥ १० ॥

आधानप्रकरणे "यस्सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्रम्' इति श्रुतम्। न च तेन सोमस्याधानानन्तर्यं विधातुं शक्यं, आनन्तर्यस्याश्रवणात् वाक्यभेदप्रसङ्गाच्च। अतो विहितकालानादरमात्रमाधानोद्देशेन विधीयते। 'सोमेन यक्ष्यमाणः' इति त्वनुवादः। तेन 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्येतद्वाक्यविहितदर्शपूर्णमासोत्तरकालत्वमेव सोमस्येति प्राप्ते—

आधानमात्रोद्देशेन विहितकालानादरविधाने 'सोमेन यक्ष्यमाणः' इत्यस्य वैयर्थ्यापत्तेः। आधानकर्तुश्च सर्वस्यापि सोमयागाधिकारित्वात् विशेषणस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः सोमेनाधानानन्तरं यक्ष्यमाणोऽग्निमित्यर्थावगतिः। न च रथकाराधानव्या-

---

अवदानादेः पृथग्भावासंभवेन तेषामवदानानां परस्परं क्रमविचारायोग्यत्वात्। अतः स्विष्टकृदवदानस्य प्रधानहविर्भ्यः सकृत्सकृत् ग्रहणेन तदन्ते प्रदानस्य तन्त्रेणानुष्ठानेऽपि सकृदवदानस्य कः क्रम इति विचारसंभवात् तस्यैवोदाहरणत्वमिति भावः।

---

॥ वचनादिष्टिपूर्वत्वम् ॥

सोमे दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति विधिना इष्टिपूर्वत्वमस्त्येव। यः सोमेनेति वाक्येनाधानाव्यवहितानन्तर्यं सोमे विधीयत इत्यर्थात् आधानाव्यवधानेन सोमे कृते पश्चादेव दर्शपूर्णमासेष्टिर्भवतीति सोमपूर्वत्वमिष्टेः सिद्धान्तिना अङ्गीक्रियते तदेवाधानानन्तर्यं विधातुमशक्यमित्याह—**न चेति**। वाक्यभेदप्रसङ्गाच्चेति। आनन्तर्यविहितकालानादरयोः उभयोर्विधानादिति शेषः। सोमेन यक्ष्यमाण इति विशेषणवैयर्थ्यापत्त्या सोमेनानन्तरं यक्ष्यमाण इत्यर्थात् आधानानन्तर्यलाभः।सोमे इति प्राचां सिद्धान्तकरणमयुक्तं सोमेनायक्ष्यमाणरथकाराधाने कालानादरव्यावृत्त्यर्थं विशेषणसार्थक्यादिति शङ्कते—**न चेति**। अद्यतनवाचीति।

**वृत्त्यर्थं विशेषणोपपत्तेः नानन्तर्यकल्पना युक्तेति वाच्यं; 'यक्ष्यमाणः' इत्यद्यतनवाचिप्रत्ययश्रवणेनानन्तर्यस्याकल्पनीयत्वात् रथकाराधानस्यादृष्टार्थत्वेनाग्निमिति द्वितीयानुपपत्तेश्च।**

---

न वयं सोमेन यक्ष्यमाण इति विशेषणानुपपत्त्या आनन्तर्यं कल्पयामः। किंतु लटोऽद्यतनभविष्यद्वाचित्वात् आधानकर्तव्यतादिनात् भिन्नदिने सोमङ्करिष्यमाण इत्यर्थावगतेः एकदिनकरिष्यमाणसोमसमानकर्तृकाधानोद्देशेन ऋतुनक्षत्रानादरविधानस्य दर्शपूर्णमासेष्ट्यनन्तरं क्रियमाणकालान्तरभाविसोमसमानकर्तृकाधाने अनुपपत्तेः तादृशोद्देश्यप्रसिद्ध्यर्थं आधानाव्यवधानेन सोमस्य कर्तव्यतायामेव पर्यवसानमिति अद्यतनवाचिलृट्प्रत्ययानुरोधेन आनन्तर्यं क्लृप्तमेवेति भावः। अत एव भाष्यकारेणोक्तं "अपि च विस्पष्टा चात्राद्यतनी विभक्तिः सोमेन यक्ष्यमाण इति सा च नेष्टिपूर्वत्वमनुज्ञाय विवक्ष्यते न तदा अद्यतनकालविवक्षा। तत्रायं शब्दो विप्रतिषिध्येत। तस्मादानन्तर्यविवक्षेत्यवगम्यते" इति।

ननु अन्वारम्भणीया प्रतिप्रयोगमावर्तते उत सकृत् कृतैव सर्वान् प्रयोगान् उपकरोतीति विचारे नवमे लृटो भविष्यतीति च क्रियायां क्रियार्थायां इति चानुवृत्तौ लृट्शेषे चेति सूत्रेण विधानात् भविष्यत्सामान्यमेवार्थः नाद्यतनकाल इति प्रतिपाद्य सोमेन यक्ष्यमाण इत्यत्र नाद्यतनवाचित्वेनाधानानन्तर्यलाभः। किंतु सोमेन यक्ष्यमाण इति वाक्यानर्थक्यबलादेव। यदि एतद्वाक्यमानन्तर्यं न कुर्यात ततोऽनर्थकमेव स्यात्। तस्मादानन्तर्यं विधीयते। तेन यद्यपि लृट्सामान्येनोत्पन्नः तथापि सोमाधानानन्तर्यसामर्थ्यात् लक्षणया अद्यतने कल्प्यते प्रमाणान्तरवशात्। दर्शपूर्णमासावारप्स्यमाण इत्यत्र तु नास्ति प्रमाणं येनाद्यतने लृटं प्रकल्प्य आरंभसमानदिनकरिष्यमाणप्रयोगमात्रार्थत्वं स्यादिति विशेषतो निरूपितं तन्त्ररत्नवार्तिकयोः। यद्यपि नायमद्यतनप्रत्यय इत्यनेन अत्रापि तन्त्ररत्ने स्पष्टमुक्तम्। ततश्च सोमेन यक्ष्यमाण इत्येतद्वैयर्थ्योपजीव्येव लाक्षणिकमद्यतनार्थकत्वकल्पनम्। तस्मिंश्च रथकाराधानव्यावृत्त्यर्थत्वेन परिहृते आरप्स्यमाण इत्यत्रेव प्रमाणाभावात् कुतः अद्यतनवाचित्वकल्पनं? येन तन्मूलमानन्तर्यं प्रतीयेत इत्यस्वरसात् रथकाराधानस्यान्यथापि वारणात् सोमेन यक्ष्यमाण इत्यस्य व्यावर्त्याभावात् वैयर्थ्यापत्तिरस्त्येवेत्यभिप्रायेण दूषणान्तरमाह—**रथकाराधानस्येति**। तथा चाग्निकर्मकाधानस्योद्देश्यत्वात् तदनाक्रान्ते रथकाराधाने कालानादरप्राप्त्यभावादेव निवारणसंभवात् यस्सोमेनेत्यस्य वैयर्थ्यं स्फुटमेवेति अद्यतनवाचित्वकल्पनं भाष्यकारोक्तं प्रमाणवदेवेति भावः। ननु रथकाराहिताग्नेरपि दाहे उपयोगेन तत्रापि अग्निकर्मकाधानविधानस्य स्वयमेव षष्ठे वक्ष्यमाणत्वात्

**रथकाराधाने कालानादरस्य 'यदहरेवैनम्' इति वचनेनैव सिद्धतया तस्य प्रसक्त्यभावेन**

---

कथं न तदाधानस्योद्देश्यतावच्छेदकरूपाक्रान्तत्वमित्यस्वरसात् दूषणान्तरमाह-**रथकाराधान इति। तस्य प्रसक्त्यभावेनेति**। नानेन निवारणीयस्य कालानादरस्य प्रतीयोगिविधया प्रसक्त्यभावेन निवारणीयत्वं संभवतीत्येतत्प्रतिपाद्यते। एतद्वाक्येनैव आधानसामान्येन रथकाराधाने प्राप्तस्य तस्य सोमेन यक्ष्यमाण इति पदेन निवारणसंभवात्। किंतु सोमेन यक्ष्यमाण इति पदेनार्थात् रथकाराधाने विहितकालनियमानादरो निवारणीयः तेन रथकारो वर्षास्वेवादधीत। अन्यस्तु यदा कदाचिदपीति वाक्यार्थपर्यवसाने यदहरेवैनमिति वाक्येन रथकारसाधारण्येन कालानादरविधानात् तस्यापि कालानादरस्यावश्यकत्वेन विहितकालनियमप्रसक्त्यभावात् कालानादरनिवारणं कालादररूपं बोधयितुं न शक्यते। यदहरेवैनमिति वचनेन कालानादरे विहिते सति अनेन तदनादराभावोऽशक्यो बोधयितुमिति यावदित्याशयः।

**यदहरेवैनमिति वचनेनैव सिद्धतयेत्यनेन** एतदपि सूचितं—आधानमात्रोद्देशेन विहितकालानादरविधाने यदहरेवैनं श्रद्धोपनमेदथादधीत इत्येकशाखास्थवचनेनैव प्राप्तेः वाक्यानर्थक्यम्। न च सर्वाधाने यदहरेवैनमिति वचनप्राप्तस्य तदनादरस्यानेन सोमेन यक्ष्यमाणस्यैवेति परिसंख्या विधीयत इति न वचनानर्थक्यमिति वाच्यं; तथा च विशिष्टोद्देशे वाक्यभेदापत्तेः। यस्सोमेनेति यत्तच्छब्दावगतोद्देश्यविधेयभावभङ्गापत्तेश्च। **अत एवैतदधिकरणसिद्धान्तभाष्ये** अग्न्याधेयस्य ऋतुनक्षत्रातिक्रमवचनात् यस्सोमेन यक्ष्यमाणोऽग्नीनादधीत नर्तुं प्रतीक्षेन्न नक्षत्रं यः सोमयागङ्कर्तुमादधीत स न प्रतीक्षेत नक्षत्रं नाप्यृतुं तावत्येवादधीत इत्यानन्तर्यमुच्यते। इतरथा तु नक्षत्रातिक्रमवचनमनर्थकं स्यात्। आनन्तर्येण यक्ष्यमाणे **यस्यैवर्तुनक्षत्रे उक्ते तस्यैव तयोरनादरः कीर्तितः स्यादिति** ग्रन्थादाधानकालबाधप्रतीतिरित्य**पास्तम्**। आधाने कालबाधस्य च वचनान्तरसिद्धत्वेनैव तद्वाक्यवैयर्थ्यापत्त्यैव सोमकालबाधस्य भाष्यकारेणैवोत्तराधिकरणे प्रतिपादनात्। अतो वाक्यवैयर्थ्यान्यथानुपपत्त्या आधानानन्तरं सोमः कर्तव्यः। तत्र सोमे विहितकालानादरः कार्य इत्यर्थपर्यवसानं वाच्यं; तत्र सोमेन यक्ष्यमाणोऽग्नीनादधीत इति भिन्नवाक्यमङ्गीकृत्य तेन वसन्तादिवाक्यप्राप्ताधाने सोमाव्यवहितपूर्वकालता विधीयते नर्तुं पृच्छेदिति भिन्नेन वाक्येन विहितकालानादरः सोम इति **केषांचिन्मतं** यत्तच्छब्दावगतैकवाक्यताबाधे प्रमाणाभावादयुक्तमिति वक्ष्यते। एकवाक्यतया अर्थद्वयविधानेऽपि **यद्यपि** वाक्यभेदापत्तिरस्त्येव **तथापि** यच्छब्दस्य कर्तृसमानाधिकरणस्य निमित्तत्वपरत्वात् तच्छब्दान्तभागस्य निमित्तपरत्वमुत्तरभागस्य विधेयपरत्वमिति न बाधकम्।

**निवारणीयत्वानुपपत्तेश्च। अतोऽत्र सोमान्यवहितपूर्वकालीनाधाने निमित्ते विहितकालानादरो विधीयते। कर्तृसमानाधिकरणेन भाष्यकारोदाहृतेन यच्छब्देन निमित्तत्वावगतेः सकलकारकाणामन्वयस्य व्युत्पन्नत्वाच्च न विशिष्टोद्देशे वाक्यभेदः। अतश्च सिद्धवन्निर्देशान्यथानुपपत्त्या कल्पितेन विध्यन्तरेण 'उपरि हि देवेभ्यो धारयति' इतिवत् सोमाङ्गतया आधानानन्तर्यं विधीयते।**

**अथवा "अपहतपाप्मानो वा ऋतवः असौ खलु वाव आदित्य उद्यन्नेषां पाप्मानमपहन्ति तस्माद्यदहरेवैनं श्रद्धोपनमेत् अथादधीताथ यजेत" इति वचने 'अथ यजेत' इत्यनेन**

---

निमित्तत्वं च **यद्यपि** आधानानन्तरकरिष्यमाणसोमयागानुकूलकृतेरपि संभवति तस्याश्च वाक्यान्तराविधेयायाः प्रागनिर्ज्ञातरूपायाः सिद्धवन्निमित्तत्वानुपपत्तेः तन्निर्देशान्यथानुपपत्त्या कल्पितेन विध्यन्तरेण आधानानन्तर्यं सोमे अनायासेनैव विधातुमपि शक्यते **तथापि** भूतस्यैव निमित्तत्वेन भविष्यत्कालीनसोमयागकृतेर्भूतत्वासंभवात् भूताया एव तस्या निमित्तत्वाङ्गीकारे च भविष्यत्त्वानुपपत्तेः तथाभूतायां तस्यां कालानादरविधिवैयर्थ्याच्च न तस्या निमित्तत्वमपि तु यक्ष्यमाण इत्यस्यादधीतेति भावनायां विशेषणत्वात् विशेष्यगामित्वेनैव निमित्तत्वप्रतीतेश्च अर्थात् सोमयागाव्यवहितपूर्वकालीनत्वेन रूपेणाधानभावनाया एव तद्युक्तमुक्तम्। तथा चाग्रे व्यवधानेन सोमयागङ्करिष्यता पूर्वमाधाने कृते तस्य भूतत्वेन निमित्तत्वोपपत्तेः अग्रे सोमयागे कर्तव्ये अपेक्षितः तत्र कालानादरो विधातुं शक्यत इत्यभिप्रेत्य स्वाभिमतं सिद्धान्तानुकूलं वाक्यार्थमाह—**अतोऽत्रेति**। **यद्यपि** विशिष्टाधाने निमित्ते विधीयमानः कालानादरः स्पष्टं आधान एव भाति **तथापि** विशेष्ये आधाने तस्य वचनान्तरप्राप्तत्वेन तदसंभवे विशेषणे सोमे पर्यवस्यतीति यस्सोमेन यक्ष्यमाणोऽग्नीनादधीत स सोमेनायक्ष्यमाणो नर्तुं पृच्छेत् इत्यन्वयसंभवादिति भावः। **विहितकालानादर इति**। नर्तुं न नक्षत्रमिति वारद्वयं नञः प्रयोगेण अनास्थायाः द्योतनात् प्रत्येकं निषेधे वाक्यभेदापत्त्या लक्षणया विहितकालानादरविधाने तात्पर्यादिति भावः। भाष्यकारोदाहृतेनेत्येतत् वक्ष्यमाणकेषाचिन्मतखण्डने प्रमाणोपन्यासार्थम्। **व्युत्पन्नत्वाच्चेति**। आदधीत इत्युपात्तभावनायां सोमेन यक्ष्यमाण इत्युपात्तकर्तुरन्वयस्येत्यर्थः। **यत्तु प्रकाशकारैः** यस्सोमेनेत्यस्यस्वमत इव यैरपि यस्सोमेन यक्ष्यमाणोऽग्निमादधीत इत्यन्तस्यानुवादत्वमुच्यते तैरपि सिद्धवदनुवादानुपपत्त्या "उपरिहि देवेभ्य" इतिवत् वाक्यं भित्वा पृथग्विधिद्वयमङ्गीकर्तव्यमेव इत्युक्तं तद्विध्यन्तरकल्पनेनायुक्तमिति सूचयन् श्रुतस्य न पृथग्विधित्वमिति दर्शयति—**कल्पितेनेति**। अत एव वाक्यभेदापत्तिभियैव उपरिधारणस्य कल्पितविध्यन्तरेणैव विधानं तृतीये तदधिकरणे स्वयं साधितमिति भावः। **आधानानन्तर्यमिति**। **यद्यपि** सोमाव्यव-

हितपूर्वकालीनाधाने सिद्धवन्निमित्तत्वनिर्देशान्यथानुपपत्त्या कल्पितो विधिः आधाने सोमाव्यवहित-पूर्वकालत्वविधाने तद्विशिष्टाधानविधान एव वा पर्यवस्यतीति नाधानानन्तर्यं सोमे विधातुं शक्नोति तथापि दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति विधेः प्रथमतः पूर्वकालतावाचिक्त्वाप्रत्ययानुरोधेन सोमपूर्वकालत्वविधानस्य दर्शपूर्णमासयोः प्रतीतावपि दर्शपूर्णमासोत्तरमेव सोमानुष्ठानं तत्तयोस्संभवतीति अवश्यं दर्शपूर्णमासोत्तरत्वविधायकत्वं फलतस्सिद्ध्यति। तस्मिंश्च बोधितेऽर्थप्राप्तं पूर्वकालत्वमनूद्यते क्त्वाप्रत्ययेन। एवमिहापि सोमाव्यवहितपूर्वकालत्वमाधानोत्तरमव्यवधानेनैव सोमानुष्ठाने संभवतीति अवश्यमाधानानन्तर्यविधान एव तात्पर्यकल्पनादर्थात् प्राप्तस्य तदव्यवहित-पूर्वकालत्वस्यानुवादमात्रमित्यभिप्रायेणाधानानन्तर्यमित्युक्तम्। ततश्चार्थतः पर्यवसितयोराधानानन्तर्येष्ट्यानन्तर्ययोः एकस्मिन् सोमे निवेशायोगात् विकल्पसिद्धौ तदनु इष्टिपूर्वत्वसोमपूर्वत्वयोरनुष्ठाने विकल्पो द्रष्टव्यः।

ननु यः सोमयागङ्कर्तुमादधीत स न प्रतीक्षेत नक्षत्रं नाप्यृतुमिति भाष्यात्, तथा यक्ष्यमाण इति च दीक्षिष्यमाण इतिवत् क्रियार्थायां क्रियायां उपपदे लृट्प्रत्ययः सोमेन यष्टुमित्यर्थ इति वार्तिकतन्त्ररत्नाच्च सोमयागार्थमाधानान्तरविधिप्रतीतेः तस्य यागार्थस्य सोमयागप्रत्युक्तत्वे शूद्रस्यापि अधिकारापत्तेः एतदाधानसिद्धाग्नीनामव्यवहितसोमकरणमात्रेण लौकिकत्वादुत्तरक्रत्वर्थं पुनराधानापत्तिरिति चेत्।

उच्यते, नात्राधानान्तरविधानं प्रमाणाभावात्। आधानप्रकरणबाधापत्तेश्च। किन्तु यदैवैनं श्रद्धोपनमेत् अथादधीत, अथ यजेतेति शाखान्तरवचने प्रसिद्धाधानानन्तर्यविधिदर्शनात् वचनान्तरप्राप्तसोमयागोद्देशेन वसन्तादिवाक्यप्राप्ताधानाव्यवहितानन्तर्यं वाक्यवैयर्थ्यापत्त्या विधीयते। तदिदमुक्तं तन्त्ररत्ने "प्रागपि दर्शपूर्णमासाभ्यां सोमः कथं सोमेन यक्ष्यमाणोऽग्निमादधीत इत्याधानोत्तरकाले सोमः श्रूयेत नात्राधानं विधीयते वसन्तादिवचनैरेव प्राप्तत्वात्" इति सोमयागङ्कर्तुमिति च। अनन्तरांकर्तुमित्यानन्तर्यसंपादनद्वारा सोमयागार्थता प्रदर्श्यते, न तु साक्षात् सोमयागार्थता तस्या इतरक्रतुसाधारण्येनैव सिद्धतया पुनर्विशेषणवैयर्थ्यापादनस्य सिद्धत्वात्।

अत एव तस्मात् सोमेनाधानानन्तरं यक्ष्यमाणोऽग्नीनादधीत इति वाक्यार्थ इति स्पष्टं तन्त्ररत्नकृतो वाक्यार्थोपपादनं दृश्यते। एवं च आधानानन्तरं सोमेन यक्ष्यमाणोऽग्निमादधीतेति वचनव्यक्त्या तदेवाधानमनन्तरंसोमं कर्तुं कर्तव्यमित्यर्थात् तदाधानस्याग्न्यर्थस्यैव यत्पूर्वमनुष्ठानं तस्य फलमानन्तर्यरूपकालसंपादनमेवेति सूक्ष्मदृशा अवधेयम्। न त्वाधानस्य सोमयागार्थत्वे वाक्यतात्पर्यम्।

**आधानानन्तर्यं सोमे विधीयते 'यजेत' इत्यनेन सोमस्यैव परामर्शात्। अत एव 'अथादधीत' इत्यनेनाधान एव कालबाध इति वक्ष्यते। अतश्च न निमित्तश्रुत्यन्यथानुपपत्त्याऽपि विध्यन्तरकल्पना। अत एवेष्टिपूर्वत्व एव यदेष्ट्युत्तरमग्निविनाशादिनिमित्ताधानाव्यवहितोत्तरसोमकरणं तदा सोमे कालनादरविधानोपपत्तेर्न विध्यन्तरकल्पनया विकल्पाङ्गीकरणं युक्तमित्यपास्तम्। प्रत्यक्षविधिनैवापूर्वाधानानन्तर्यस्य विहितत्वात्। न हि 'अथादधीत' इत्यत्र पुनराधानप्रसङ्गोऽस्ति तस्य निमित्तवशवर्तित्वेन तत्र कालानादरविधिवैयर्थ्यात्। अतश्चापूर्वाधानानन्तर्य एव कालानादरविधानादिष्टिपूर्वत्वस्य सोमपूर्वत्वेन युक्त एव विकल्पः।**

---

**एतेन** दर्शपूर्णमासावारप्स्यमाणोऽन्वारंभणीयेष्ट्या यजेतेति विहिताया अन्वारंभणीयायाः क्रियार्थायां क्रियायां विहितलट्प्रत्ययानुरोधेन दर्शपूर्णमासारंभार्थत्वं लङुपात्तशानजनुरोधेन पुरुषसंस्कारद्वारा। ततश्च अन्वारंभणीया दर्शपूर्णमासारम्भाधिकारसंपादद्वारा आरंभार्था, एवमिहाप्याधानं सोमयागाधिकारसंपादनद्वारा सोमयागार्थमित्य**पास्तम्**। आधानविधेरत्राभावात् इतरयज्ञसाधारण्येनैव सोमयागाधिकारसंपादनद्वारा सोमयागार्थत्वस्य आधानविधेरेव प्राप्तेः। अग्निमत एवोत्तरकर्मस्वधिकारात्। अतः अग्न्यर्थस्याधानस्य पूर्वमनुष्ठानं स्वानन्तर्यसंपादनद्वारा सोमोपकारीति कृत्वा आधानकर्तुः आधानाव्यवहितोत्तरमपि दर्शपूर्णमासावप्रतीक्ष्यैव सोमेऽधिकारो लभ्यत इत्येवं अर्थसिद्धसोमयागाधिकारसिद्धिद्वारा यत् पुरुषार्थत्वं लब्धं तदादाय यक्ष्यमाण इति शानजनुवाद एव, न तु तत्र विधेस्तात्पर्यम्। आधानस्य स्वरूपेण विध्यभावेन निर्ज्ञातपारार्थ्यस्य तस्य पुरुषार्थत्वकल्पने प्रमाणाभावात्। अतश्च ऋतुनक्षत्रादरवचनं दर्शपूर्णमासोत्तरानुष्ठेये वसन्ताद्यवरुद्धे सोमप्रयोगे अनिविशमानमाधानाव्यवहितसोमप्रयोगानुष्ठानबोधन एव सार्थकमित्यलं विस्तरेण।

**वस्तुतस्तु** आधानानन्तर्यविधेः स्पष्टस्यैवोपलंभात् अर्थसिद्धसोमाव्यवहितपूर्वकालीनाधानावगतिमङ्गीकृत्य निमित्तत्वनिर्देशोपपत्तेः तदन्यथानुपपत्त्या आधानानन्तर्यविधिपर्यवसायिसोमाव्यवहितपूर्वकालीनाधानविधानरूपविध्यन्तरकल्पनापि नास्तीत्याह—**अथवेति**। **सोमस्यैवेति**। प्रकरणेनेति शेषः। **अत एवेति**। यतो यसोमेनेति वाक्येन सोमे कालानादरो विधीयते अत आधाने अपेक्षितः कालानादरः, अत एवेत्यर्थः। विकल्पाङ्गीकरणं सोमे आधानानन्तर्येष्ट्यानन्तर्ययोरित्यर्थः। **अपूर्वाधानानन्तर्ये इति**। सत्येवेति शेषः। **इष्टिपूर्वत्वस्येति**। इष्टिपूर्वत्वं इष्टेः पूर्वत्वं प्राथम्यं, सोमपूर्वत्वं सोमस्य पूर्वत्वं प्राथम्यं च इष्टि-

**केचित्तु ‘सोमेन यक्ष्यमाणः’ इति भिन्नं वाक्यं ‘नर्तुं पृच्छेत्’ इति भिन्नं, तत्राद्येन प्रकरणात् तृतीयविधिप्रकारे लाघवाच्चाधानोद्देशेन सोमाव्यवहितपूर्वकालता विधीयते सोमपूर्वकालत्वमात्रविधाने वाक्यवैयर्थ्यात्। अतश्च वाचनिकेन सोमपूर्वत्वेनेष्टिपूर्वत्वस्य विकल्प इत्याहुः। तन्न; वाक्यभेदे प्रमाणाभावात् आधानाङ्गभूतसोमपूर्वत्वेन सोमाङ्गभूतेष्टिपूर्वत्वस्य विकल्पापादनायोगाच्च। किञ्चैवमस्मिन्नेव वाक्ये विशिष्टाधानविधिः आधानमात्रविधिर्वाऽस्तु ‘सोमेन यक्ष्यमाणः’ इत्यस्य ‘ऐन्द्रवायवाग्रान्’ इतिवदनुवादोपपत्तेः। न चेष्टापत्तिः वसन्तादिवाक्यानां निमित्तार्थत्वापत्तेः। न च यच्छब्दस्य धात्वर्थांश एव विधिप्रतिबन्धकत्वं न विशेषणांशे इत्यत्र प्रमाणमस्ति प्राप्तमात्र एव**

---

पूर्वत्वसोमपूर्वत्वपदाभ्यां उच्यते। तथा चाधानाव्यवधानेन उत्तरक्रतुभ्यः पूर्वं इष्टिकरणमथवा सोमकरणं इति विकल्प इत्यर्थः। **अथ वा** एकस्मिन्नाधाने सोमपूर्वत्वेष्टिपूर्वत्वयोर्विकल्पः इष्टिसोमापेक्षया पूर्वत्वमिति पञ्चमीसमासादित्यर्थः। अत्र **प्रकाराकारैः** यथा पूर्वपादे एतेनेष्ट्वा अन्येन यजेतेति विधौ क्त्वाप्रत्ययोक्तपूर्वत्वेनार्थाद्गमितमानन्तर्यमेवान्येषु विधीयते प्रकरणबाधेनापि, तथा सति तृतीयविधिप्रकारो लभ्यते। इतरथा परपदार्थयोरेव संबन्धविधानात् अत्यन्तं वाक्यार्थविधानापत्तेः। एवमिह प्रकरणानुग्रहेणैव आधाने सोमपूर्वताविधानं युक्तमेवेत्युक्तं, तदनूद्य दूषयति—**केचित्त्विति**। **वाक्यभेदे इति**। यत्तच्छब्दावगतैकवाक्यत्वबाधेनेति पूर्वशेषः। **विकल्पापादनायोगाच्चेति**। भिन्नविषयत्वादिति भावः। एतच्च प्रौढिवादमात्रम्। स्वमतेप्यर्थलभ्याधानानन्तर्यविकल्पानुनिष्पादित्वस्यैव इष्टिपूर्वत्वसोमपूर्वत्वविकल्पेऽङ्गीकारात्। **ऐन्द्रवायवाग्रानिति**। यथा ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात यः कामयेतेति वाक्ये पाठप्राप्तैन्द्रवायवाग्रता अनूद्यते तद्वदित्यर्थः। **निमित्तार्थत्वापत्तेरिति**। तत्रापीष्टापत्तौ शूद्रस्याप्यधिकारापत्तिः। यत्त्वत्रान्यैराधानविधित्वखण्डनायोक्तं—यच्छब्देन हि लिङो विधिशक्तिबाधो जातः स यावत्येव विषये प्राप्तिर्न संभाव्यते तावत्येव विषये अन्यथानुपपत्त्या अपोद्यते। आधानांशे च गौरवेणापि संभाव्यते प्राप्तिरिति तामभ्यनुजानात्येव अनुवादत्वबुद्धिं कुर्वन् यच्छब्द इत्यनुपपत्त्यभावात् न तदंशे विधिशक्तिप्रतिबन्धोऽपोद्यत इति तत् आशङ्क्यैवानूद्य दूषयति—**न च यच्छब्दस्येति**। य एवं विद्वानितिवत् सोमेन यक्ष्यमाण इत्येतावति विशेषणांशे प्राप्तमात्र एव विधिप्रतिबन्धोपपत्तेः आधानपर्यन्तमपि तत्कल्पनं व्यर्थमित्यभिप्रेत्याह—**प्राप्तमात्र एवेति**। सिद्धवत् प्रमाणान्तराधिगतार्थाभिधायी यच्छब्दः तेनावगतस्या-

**तस्य प्रतिबन्धकत्वात्। न चास्याधानोत्पत्तिविधित्वे अग्निमित्येकवचनादाधानस्यैकाग्न्युत्पादकत्वापत्तिः अग्निगतस्यैकत्वस्य बहुत्वस्य वोद्देश्यगतत्वेन प्रमाणान्तरसिद्धस्योपलक्षणार्थत्वात् अनेकाग्न्युत्पादकत्वं तु 'आयतनेषु सम्भारान् निदधाति' इत्यायतनबहुत्वविवक्षाबलादित्युक्तं ग्रहैकत्वाधिकरणे कौस्तुभे। किञ्चैवं विहितकालानादरः शुद्धाधानेऽपि स्यात् न सोमाव्यवहितपूर्वाधान एव। उत्तराधिकरणवक्ष्यमाणरीत्या कालानादरस्य सोमाङ्गत्वेऽपि च इष्टिपूर्वत्वपक्षेऽपि स्यात् न सोमपूर्वत्वपक्ष एव। अतश्चास्मदुक्तप्रकार एव श्रेयान्। आधानानन्तर्येऽपि न पवमानेष्टिभिर्न वाऽधिकारपशुना व्यवधानं तेषां सोमोपकारकत्वात्। अत एव सोमाधानपक्षे पवमानेष्टीनां सद्य एव करणं सोमेनायक्ष्यमाणस्यैव संवत्सरादिकालानादरात् ॥ ३ ॥**

---

पूर्वतया विधानसंभवात् विधिशक्तिप्रतिबन्धकत्वं तस्य। सा चावगतिः क्लृप्तकल्प्यान्यतरप्रमाणेन भवतीति सोमयागांशमादायापि न क्षतिरित्यर्थः।

यत्तु प्रकाशकारैरत्राधानविधित्वापत्तिनिरासायोक्तं तदनूद्य दूषयति—**न चास्याधानेति। उपलक्षणार्थत्वादिति।** अत एव भाष्यकारेणेदं वाक्यमग्निमादधीतेत्येकवचनान्तपाठेन पठितमपि बहुवचनान्तपाठेनापि विवृतम्। ननु अग्निगतबहुत्वैकत्वयोः अविवक्षायां कथमाधानस्यानेकाग्न्युत्पादकत्वमित्याशङ्कां परिहरति—**अनेकेति।** आयतनानामुपादेयत्वेन तद्गतसाहित्यबहुत्वयोः विवक्षितत्वात् तेष्वग्न्याधानविधानसामर्थ्यादेवानेकाग्न्युत्पादकत्वसिद्धिरित्यर्थः। यथैव पूर्ववाक्येन आधानप्रकरणात् आधानोद्देशेन सोमाव्यवहितपूर्वकालत्वं विधीयते एवमुत्तरवाक्येनापि विधीयमानः कालानादरः प्रकरणात्तव मते शुद्धाधान एव स्यादिति दूषणान्तरमाह—**किञ्चैवमिति।** उत्तराधिकरणे आधानाङ्गत्वेन कालानादरस्य वचनान्तरसिद्धत्वादनेन सोमाङ्गत्वेन तदनादरविधानस्य वक्ष्यमाणत्वात् नाधाने तत्संभव इत्येवमङ्गीकारेपि दूषणमाह—**उत्तराधिकरणे इति। सोमोपकारकत्वादिति।** अधिकारपशोः उपैनं सोमपीथिनं सन्नयति इति वाक्यशेषादधिकारसिद्ध्यर्थत्वेन सोमोपकारकत्वं, पवमानेष्टीनां तु आहवनीयादिसिद्धिद्वारा स्पष्टमेव तत्। आनन्तर्यं च कर्मान्तराव्यवायः। न च तद्द्वयमुपकारकं कर्मान्तरं सत् व्यवधायकं भवति। अतस्तद्द्वयमेव कर्तव्यं, नान्तरा अग्निहोत्रादिकमित्यर्थः। ये तु इष्टिपूर्वकत्वपक्ष एव व्रात्यपशुं मन्यन्ते तेषां किं मूलमिति न विद्म इति **तन्त्ररत्न** एवोक्तम्। **कालाज्ञानादिति।** यस्सोमेन यक्ष्यमाणोऽग्निमादधीतपुरा संवत्सरात् हवींषि निर्वपेदिति भाष्योदाहृतवचनेनेति शेषः। भिन्नप्रयोगविधिपरिगृहीतानां वचनात् पौर्वापर्यमिव वचनादानन्तर्यरूपः क्रमः अस्ति न वेति विचारात् लक्षणसङ्गतिः।

(४)—उत्कर्षात् ब्राह्मणस्य सोमस्स्यात् ॥ ११ ॥ पौर्णमासी वा श्रुतिसंयोगात् ॥ ११ ॥ सर्वस्य वैककर्म्यात् ॥ १२ ॥ स्याद्वा विधिस्तदर्थेन ॥ १३ ॥ प्रकरणात्तु कालस्स्यात् ॥ १४ ॥

एवं स्थिते कल्पद्वये "आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति यदेवादः पौर्णमासं हविः तत्तर्ह्यनु निर्वपेत्" इति वचनेन ब्राह्मणकर्तृकत्वे निमित्ते एकदेशोत्कर्षेण समस्तदर्शपूर्णमासोत्कर्षप्रतीतेः ब्राह्मणस्य सोमपूर्वत्वमेव । न हि समस्तयागसाध्यत्वेन श्रुतं फलमेकदेशाद्भवितुमर्हति । न च सोमोत्तरं तन्त्रेण सकृत्क्रियमाणोत्कृष्टहविर्मात्रसहकृतपूर्वयागेभ्यः फलसिद्धिः 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन' इत्यनेन दर्शपूर्णमासपदवाच्यसर्वयागोत्तरत्वस्यैव सोमे विहितत्वेन तथा कल्पनानुपपत्तेः । दर्शपूर्णमासाभ्यां' इति तृतीयाबलेन परमापूर्वोत्पत्तेरप्यवगतत्वाच्च । अतः इतरयोः क्षत्रियवैश्ययोः कल्पद्वयं इष्टिपूर्वत्वमेव वेति प्रथमः पक्षः ॥

द्वितीयस्तु नैकदेशोत्कर्षेण सर्वदर्शपूर्णमासोत्कर्षः प्रमाणाभावात् । सान्नाय्यानधिकारिणः ऐन्द्राग्नविध्यनुपपत्त्या फलवाक्ये सर्वसाहित्यस्याविवक्षितत्वाच्च । अतो यस्य यावत्स्वधिकारस्तस्य तावद्भ्य एव फलसिद्धिः । अतश्च ब्राह्मणस्याप्युत्कृष्टहविर्भिन्नदर्शयागकरणोपपत्तेः कल्पद्वयं,, उत्कर्षः परं पौर्णमासीस्थहविर्मात्रस्य, विधावविशेषश्रुतस्योद्देश्यपरस्य पौर्णमासपदस्यार्थवादेन सङ्कोचानुपपत्तेः यदेवेत्यनेन साकल्यप्रतीतेश्चेति प्राप्ते—

---

॥ उत्कर्षात् ब्राह्मणस्य सोमः स्यात् ॥

अत्र च सर्वोत्कर्षपूर्वपक्षे ब्राह्मण एव सोमानन्तरं दर्शपूर्णमासौ कुर्यात् । अथ वा ब्राह्मणः सोमानन्तरमेव तौ कुर्यात् , अथ वा सोमेन यक्ष्यमाण इति सामान्यविधिप्राप्तो दर्शपूर्णमासोत्कर्षः ब्राह्मणविशेषे उपसंह्रियते इत्येवं पक्षत्रयस्यापि संभवात् इतरयोः सोमपूर्वत्वपक्षः सर्वथा व्यावर्त्यते इत्यभिप्रेत्य पक्षान्तरमाह—**इष्टिपूर्वत्वमेव वेति**। तथा च मध्यमे पक्षे इतरयोः कल्पद्वयं, आद्योत्तमपक्षयोस्तु इष्टिपूर्वकत्वमेव तयोः, न तु सोमपूर्वकत्वेन विकल्प इति भावः । सर्वोत्कर्षपक्षदूषणेनैव उक्तवाक्यार्थत्रयदूषणं सूचयन्नेव द्वितीयं पक्षमाह—**द्वितीयस्त्विति**। **विधाविति**। "पौर्णमासं हविः तत्तर्हि" इति विधावित्यर्थः। **अर्थवा-**

**पौर्णमासीमन्त्रस्थत्वेनात्र पौर्णमासपदव्यपदेशादाग्नेयस्योभयत्र विद्यमानत्वेन विशिष्य तात्पर्यग्राहकाभावे व्यपदेशानुपपत्तेः प्रत्युतोपक्रमस्थार्थवादस्यैवाग्नीषोमीयहविरुत्कर्ष-तात्पर्यग्राहकस्य सत्त्वेन तस्यैवोत्कर्षः। यदेवेत्यनेकापेक्षं तु वचनं उपांशुयाजस्याप्य-ग्नीषोमदेवताकत्वात् तदभिप्रायेण न विरुद्ध्यते। अत्र च सोमोत्तरकालत्वविधौ उद्देश्य-समर्पकं पदं समभिव्याहृतसर्ववाचितच्छब्द एव। न त्वदःपदम्, अग्नीषोमपदं हविः**

---

**देन** अग्नीषोमीयो भवतीति पूर्वतनेन। **उभयत्र विद्यमानत्वेनेति।** ब्राह्मणो देवतया आग्नेयः सन् सोमेनेष्ट्वा पौर्णमासं हविरनुनिर्वपेदिति वाक्यार्थे हेतुभूतस्याग्नेयत्वस्यामावास्यायामपि सत्त्वेना-मावास्याहविर्निर्वापं विहाय पौर्णमासहविष एव तद्विधाने तात्पर्यग्राहकाभावः। यदि तात्पर्यग्राहकं सोमेनाग्नीषोमीयो भवतीत्यर्थवादस्थमग्नीषोमीयपदं वक्तव्यं तदा तत्पर्यालोचनायां चाग्नीषोमीयमेव हविरुपस्थितं पौर्णमासपदेन ग्रहीतुमुचितं इति भावः। **अग्नीषोमदेवताकत्वादिति।** यद्यपि उपांशुयाजस्य नोत्कर्षः सोमात् प्रागपि विष्णुप्रजापतिदेवत्ययागसंभवात् अतोऽग्नीषोमीयपुरोडाश-स्यैवोत्कर्ष इति **पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात्** इत्यधिकरणान्तररचनया सूत्र-भाष्यकारादिभिः प्रपञ्चितमिति नोपांशुयाजाभिप्रायं यदेवेत्यनेकापेक्षं वचनं वक्तुं शक्यते तथापि यदेवादोऽग्नीषोमीयमिति परामर्शादग्नीषोमदेवताकाज्यद्रव्यकोपांशुयाजस्यापि सोमोत्तरं विधान-प्रतीतेः तद्देवताकाज्यद्रव्यकोपांशुयाजाभिप्रायं तत्कथनमिति भावः।

अत्र न सकलपौर्णमास्युत्कर्षः किंतु अदश्शब्दपरामृष्टमग्नीषोमीयमेव हविरुत्कृष्यत इति **शास्त्रदीपिकायां** अदःपदमुद्देश्यपरं प्रतीयते, यस्मात् सोमादूर्ध्वं ब्राह्मणस्याग्नीषोमीयत्वं अग्नीषोमीयहविस्त्यागार्हत्वं तस्मात् तद्धविः तदेव निर्वपेत् इत्युक्ते अग्नीषोमीयमेव प्रतीयते इति। **तन्त्ररत्ने** तच्छब्दः तत्समर्पकः। तत्र किं युक्तमिति विविनक्ति—**अत्र चेति।** अत्र चार्थ-वादपदस्योद्देश्यसमर्पकत्वेपि पुरुषस्याग्नीषोमीयत्वं तद्देवत्यहविः प्रदातृत्वं, तदेव चार्थवादार्थत्वाय लक्ष्यं यस्मात् सोमादूर्ध्वं विप्रोऽग्नीषोमीयहविस्त्यागार्हः तस्मात् तद्धविस्तदेति अदश्शब्देनाग्नीषो-मीयहविःपरामर्शो युक्तः। न च विशिष्टोद्देशे वाक्यभेदः हविर्मात्रोद्देशेन उत्कर्षविधावपि अर्थवादादेव ब्राह्मणकर्तृकाग्नीषोमीयहविषो लाभसंभवादिति **प्रकाशकारैरुक्तं** तत् अदश्शब्देन पूर्वप्रतीतविशेषणीभूतहविः परामर्शे सति श्रूयमाणहविः पदेनान्वयायोगात् श्रूयमाणहविः पदमात्र-स्यैव उद्देश्यसमर्पकत्वेन पूर्वतनार्थवादेन विशेषनिर्णयकल्पनापेक्षया सन्निहिततरपौर्णमासपदेनैव सामान्यपरेणापि तद्विशेषकल्पनालाभोक्तेः युक्तत्वेन एतदनुरोधेनाग्नीषोमीयपदस्यैव सामान्य-परत्वापत्तेः नाग्नीषोमीयहविः परत्वसिद्धिः। अतः श्रूयमाणेन हविः पदेन अग्नीषोमीय-

**पदं वा। तस्यार्थवादस्थत्वेन पौर्णमासपदवत्तच्छब्दार्थतात्पर्यग्राहकत्वात् विशिष्टोद्देशे वाक्यभेदप्रसङ्गाच्च। उद्देश्यतावच्छेदकमपि च नाग्नीषोमदेवताकहविष्ट्वं, तथात्वे यागे उत्तरकालतायां अङ्गताऽनापत्तेः। नापि तद्देवताकयागत्वं तद्देवताकप्रकृतयागत्वं वा तद्देवताकत्वस्य विशेषणत्वे तद्विकृतौ देवतान्तरयुक्तायां सोमोत्तरत्वस्यातिदेशानापत्तेः। उपलक्षणत्वे च विष्णुप्रजापतिदेवत्यस्याप्युपांशुयाजस्य सोमोत्तरत्वापत्तेः। किन्त्वग्नीषोमदेवतानिष्ठकारणतानिरूपितकार्यतावच्छेदकीभूतो यस्तदपूर्वसाधनतावच्छेदकव्याप्यो धर्मस्तद्वत्त्वम्। अस्ति हि व्रीहियवादिवैकल्पिकसाधनस्थले व्यभिचारपरिहारायाग्नेय-**

---

विशेषणान्वयावश्यकत्वात् विशिष्टोद्देशे वाक्यभेदापत्तेः अयुक्तमित्यभिप्रेत्याह—**विशिष्टोद्देशे इति**। **देवतान्तरयुक्तायां**—मित्रावरुणादिदेवतान्तरयुक्तायां, अग्नीषोमीयत्वं यदि द्विदेवत्यविकृतिसंग्रहाय द्विदेवत्ययागोपलक्षणं तदा ऐन्द्राग्नयागेऽप्युत्कर्षापत्तिः। तद्वारणायाग्नीषोमीयदेवतोपलक्षितयागोपलक्षणं चेत् तदा द्विदेवत्यविकृतौ सोमोत्तरत्वानापत्तिदूषणे विद्यमानेऽपि दूषणान्तरं प्रकृतावप्यापद्यत इत्याह—**उपलक्षणत्वे चेति**। **कौस्तुभ इति**। तत्र हि एतदुक्तं भवति—व्रीहिभिर्यजेत यवैर्यजेतेत्यत्र साधनतावच्छेदकभेदात् शब्दान्तरात् गुणाद्वा व्रीहियवनिष्ठयोः करणतयोः अवश्यं भेद एव। सा च विधीयमानाऽपूर्वसाधनीभूताग्नेयादीन् तत्त्वेन यजिपदेनोद्दिश्य विधीयते।

**यद्यपि** च नेदमुद्देश्यतावच्छेदकं **अतिप्रसक्तत्वात्** व्रीहिनिष्ठकरणतानिरूपितकार्यतावच्छेदकं भवितुमीष्टे **तथाप्यपूर्वसाधनीभूताग्नेयत्वादिसामानाधिकरण्येन** व्रीह्यादिकरणे विदिते पश्चात् व्यभिचारपरिहारार्थं कार्यकारणभावकल्पनायां आग्नेयत्वादिव्याप्यस्य[1] वैजात्यस्य कार्यतावच्छेदकत्वं कल्प्यते, तदपि व्रीह्यादिनिष्ठकारणतानिरूपितकार्यताया एवावच्छेदकं न त्वपूर्वस्वर्गादिवृत्तिकार्यतानिरूपितकारणतावच्छेदकमपि। आग्नेयत्वादिरूपव्यापकधर्मावच्छिन्नस्यैव तयोः कारणत्वसंभवात्, अन्यथा उभयोः कारणत्वकल्पनायां गौरवापत्तेः। अत एव संस्कारविधिषु आग्नेयत्वादिव्याप्यधर्मावच्छिन्नकारणताया अपूर्वनिष्ठकार्यतानिरूपितत्वेन न प्रवेशः। एवमनेकदेवत्योपांशुयाजेऽपि तृतीयदेवताकयागोत्तरं तदपूर्वोत्पत्तेः तज्जनकतावच्छेदकतया दर्शपूर्णमासत्वादिव्याप्यस्य उपांशुयाजत्वादिरूपस्य कल्पनेपि विष्णुप्रजापत्यग्नीषोमदेवतानिष्ठकारणतानिरूपितं उपांशुयाजत्वव्याप्यं धर्मान्तरं तत्तत्कार्यताव-

1. A. त्वाद्यव्याप्यस्य

स्वोपांशुयाजत्वादिव्याप्यो धर्म इत्युक्तं तेषामर्थाधिकरणे कौस्तुभे। तस्य यद्यपि नान्यत्रावघातादिसंस्कारविधावुद्देश्यतावच्छेदककोटिप्रविष्टत्वं गौरवात् तथाऽप्यत्रार्थवादवशात् तस्योद्देश्यतावच्छेदकत्वाविघातः। अतश्च विष्णुप्रजापतिजन्यतावच्छेदकव्याप्यधर्मयोर्व्यापकधर्मोपांशुयाजत्वस्य च स्वव्याप्यस्याप्यग्नीषोमजन्यतावच्छेदकत्वाभावात् नोद्देश्यतावच्छेदकत्वम्। अग्नीषोमीयपुरोडाशे तु अपूर्वसाधनतावच्छेदकीभूतस्याग्नीषोमीययागत्वस्यैवाग्नीषोमजन्यतावच्छेदकत्वात्स्वव्याप्यत्वाच्च नोद्देश्यतावच्छेदकत्वव्याघातः। तत्तद्विकृतौ देवतान्तरयुक्तायां तु तत्तद्विकृतित्वस्यैव तत्तद्देवताजन्यतावच्छेदकस्य तत्तद्व्याप्यधर्मस्थानापन्नतयोक्तविध व्याप्यत्वसत्त्वान्नोद्देश्यतावच्छेदकत्वव्याघात इति ध्येयम्। अत्र चानुपादेयगुणयोगेऽपि न कर्मान्तरत्वाशङ्का, दर्शपूर्णमासप्रकरणपठितत्वात्॥ ४॥

---

च्छेदकमवश्यं स्वीकार्यमेव। अन्यथा व्यभिचारापत्तेः। एवं च द्रव्यविकल्पस्थले देवतासमुच्चये च व्याप्यधर्मावच्छिन्नं धर्मान्तरं कल्पनीयम्। यत्र तु अग्नीषोमीयादौ एकैव देवता तत्र तद्देवतानिष्ठकारणतानिरूपितकार्यतावच्छेदकीभूतो धर्मोऽग्नीषोमीययागत्वरूपः स्वापूर्वसाधनतावछेदकत्वेन क्लृप्तः एक एव कल्प्यते व्यभिचाराभावेन तद्व्याप्यवैजात्यान्तरकल्पने मानाभावादिति।

तदिह अग्नीषोमीयदेवतानिष्ठकारणतानिरूपितकार्यतावच्छेदकीभूतो यः स्वापूर्वसाधनतावच्छेदकीभूतधर्मव्याप्यः तद्वत्त्वमुद्देश्यतावच्छेदकम्। यद्यप्यत्र अग्नीषोमीययागत्वादिरूपो धर्मः स्वापूर्वसाधनतावच्छेदकः देवताकार्यतावच्छेदक एव तथाप्यभेदेऽपि स्वस्मिन् स्वव्याप्यत्वस्यापि संभवात न बाधकम्। एवमग्नीषोमदेवताकोपांशुयाजेपि अग्नीषोमदेवतानिष्ठकारणतानिरूपितकार्यतावच्छेदकवैजात्यस्य स्वापूर्वसाधनतावच्छेदकोपांशुयाजत्वव्याप्यस्य पूर्वमुपपादितत्वात् तदवच्छिन्नत्वेन उद्देश्यत्वाविघातः। स्वापूर्वसाधनतावच्छेदकव्याप्यो धर्म इत्युपादानं देवताकार्यतावच्छेदकधर्मस्वरूपज्ञापनार्थं नतु तस्योद्देश्यतावच्छेदककोटिप्रविष्टत्वं प्रयोजनाभावात्। अत्र पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् इति सूत्रान्तराश्रयणेन भाष्यकारादिभिः सर्वस्याप्युपांशुयाजस्य उत्कर्षाशङ्कानिरासपरत्वेनाधिकरणान्तररचनया योऽर्थः प्रतिपादितः सोऽत्र 'अतश्च विष्णुप्रजापती' इत्यनेन ग्रन्थेन प्रसङ्गादुक्त इति न पृथक् पूज्यपादैः सूत्रलिखनेन प्रदर्शितः। यस्त्वत्र प्राचां ग्रन्थेषु कर्मान्तरत्वपूर्वपक्षः कृतः स सिद्धान्त्येकदेशित्वेन सिद्धान्त एव। अत्र चानुपादेयगुणयोगेत्यनेनाशङ्क्य निराकृतः॥

(५)—स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥ अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥ १६ ॥ पौर्णमास्यूर्ध्वं सोमाद्ब्राह्मणस्य वचनात् ॥ १७ ॥ एकं शब्दसामर्थ्यात् प्राक् कृत्स्नविधानात् ॥ १८ ॥

एवं 'यस्सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्रम्' इत्यनेन विधीयमानः कालानादरोपि प्रकरणादाधानोद्देशेनैव विधीयते न तु सोमोद्देशेन अङ्गगुणविरोधन्यायेनोपकारके आधान एव कालबाधस्य न्याय्यत्वाच्च। तेन स्वकाले सोमं कुर्वता अव्यवहितपूर्वमाधाने क्रियमाणे नाधानकालप्रतीक्षा कार्या इति प्राप्ते—

अस्यामेव शाखायां 'यदहरेवैनं श्रद्धोपनमेदथादधीत' इति वचनान्तरेणाधानमात्रे कालानादरस्य विहितत्वात्तत एव सोमाव्यवहितपूर्वाधानेऽपि कालानादरप्राप्तेरनेन वाक्येन स्ववाक्योपस्थितस्य सोमस्यैवोद्देश्यवाचकपदकल्पनयोद्देश्यत्वमिति तस्यैव कालानादरः। यत्तु शतपथे 'अपहतपाप्मानो वा' इत्यादिवचनेनोभयोरपि कालानादरविधानं तच्छाखान्तरत्वादाधानकालबाध इव न दोषः।

वस्तुतस्तु तत्र 'अथ यजते' इति वचनेनाधानानन्तर्यमेव सोमस्य विधीयते 'अथादधीत' इति पूर्ववचनेन त्वाधान एव कालबाध इत्युक्तमेव। अत्र च 'अर्धम-

---

॥ स्वकाले स्यादविप्रतिषेधात् ॥

कालानादरोऽपीति। अपिशब्देनास्मिन् पूर्वपक्षे पूर्वोक्तकेचिन्मतेन सोमाव्यवहितपूर्वकालस्याधान एव विधानं सूच्यते। साक्षादाधानस्य सोमाङ्गत्वाभावात् उपकारकेत्युक्तम्। स्ववाक्योपस्थितस्येति। तेन वैमृधाधिकरणन्यायेन प्रकरणबाधो वाक्येन युक्त एवेत्यर्थः। आधानकालबाध इवेति। यथा यदहरेवैनमिति शाखान्तरवचनेनाधाने कालबाधे विद्यमानेपि शतपथवाक्यं तस्मिन्ननादरविधायकं शाखान्तरीयत्वेन न व्यर्थमेवं सोमेऽपिकालानादरविधायकं वचनद्वयं शाखान्तरीयत्वेन न व्यर्थमितिभावः। इत्युक्तमेवेति। प्रागेकान्तरिताधिकरण इति शेषः। ततश्च सोमे आधानानन्तर्यप्राप्तावपि कालानादरः शाखान्तरेण प्राप्त एवात्र

**न्तर्वेदि' इतिवत् लक्षणया विहितकालमात्रस्यानादरविधानात् पौर्णमास्यादिपर्वणोऽप्यनादर इति केचित् ।**

---

विधीयत इति भावः । **इति केचिदिति ।** इदमत्र केचिन्मतं सोमेन यक्ष्यमाणो नर्तुं पृच्छेत् न नक्षत्रमितिसूत्रव्याख्यानावसरे **वृत्तिकृता** ऋतुनक्षत्रनिरपेक्षवचनं पर्वणोऽपि प्रदर्शनार्थमित्युक्तोपलक्षणार्थत्वे किं प्रमाणमित्याशङ्क्य, अस्य च सूत्रस्य मूलं यदहरेवैनमिति श्रुतिरित्युक्तं पर्वणोऽपि प्रदर्शनार्थमित्येवं वदतो वृत्तिकारस्य विहितकालमात्रोपलक्षणार्थमित्येवाभिप्रायः । पर्वमात्रोपलक्षणार्थत्वे प्रमाणाभावात् । यदि ह्यस्य मूलभूतायां यदहरेवैनमिति श्रुतौ ऋतुर्नक्षत्रं पर्वेति त्रयमेवोपात्तं स्यात् तदा पर्वमात्रोपलक्षणार्थत्वं न तु श्रुतौ त्रितयमेवोपात्तम् । तथा च श्रुतिः सर्वकालपरेति वृत्तिस्वरससिद्धोऽर्थः ।

यद्यपि आधानगतसर्वकालानादरप्रतिपादकयदहरेवैनमिति श्रुतिमूलकत्वं वदतो वृत्तिकारस्याधान एव कालबाधो नर्तुमित्यनेनाभिमतः प्रतीयते न सोम इति सोमे कालबाधवादिनो ऋतुनक्षत्रमात्रातिक्रम एव यावद्वचनमायाति, न सर्वकालानादरः । तथा च "वसन्ते ज्योतिष्टोमः उदगयनपूर्वपक्षपुण्याहसन्निपाते यज्ञकालानादेश" इति **छन्दोगसूत्रविहितयोः ऋतुनक्षत्रयोः** आधानानन्तरसोमे अनङ्गत्वेऽपि उदगयनपूर्वपक्षपर्वादीनामनङ्गत्वे प्रमाणाभावात् तत्रैवाधानानन्तरं सोमस्य ऋतुनक्षत्रमात्राभावेपि अनुष्ठानमिति दक्षिणायनेपि तस्यानुष्ठानं दुर्घटं, **तथापि** अपहतपाप्मानो वा ऋतवः" इत्युपक्रम्य यदा क्वचन कदाचन उपनमेत् अथादधीत अथ यजेत इति शतपथवाक्यं सोमकालबाधे प्रमाणत्वेन उपन्यस्तवता **तन्त्ररत्नकृता** आधानसोमयोः एकेनैव वाक्येन तुल्यकक्ष एव विहितकालप्रतिषेधः प्रतिपाद्यते । ततश्च शतपथवाक्ये स्पष्टतयैवाधाने सर्वकालबाधप्रतीतेः । तथा सति यदहरेवैनमिति एकवाक्यतालाभाच्चाधाने सर्वकालबाधे सिद्धे तत्समतया सोमेपि सर्वकालबाधस्यैव प्रतीतेः नर्तुमिति सूत्रस्याप्येकमूलश्रुतिकल्पनालाघवानुरोधेन न ऋतुनक्षत्रमात्रनिषेधकत्वं अपि तु सर्वकाललक्षणया तन्निषेधकत्वमेव युक्तम् ।

अत एव एतदधिकरणसिद्धान्ते **तन्त्ररत्नग्रन्थः पूर्वपक्षखण्डनार्थः स्पष्टं दृश्यते**—स्यादेवं यद्याधानस्य वचनान्तरेणास्यामेव शाखायां सर्वकालत्वं न प्रतिपादितं स्यात् । तत्तु यदहरेवैनमित्यनेनैव प्रतिपादितमिति व्यर्थस्तस्य कालप्रतिषेधः । **यद्यपि** सोमकालोऽपि अपहतपाप्मानो वा ऋतवः इत्युपक्रम्य यदा क्वचन कदाचनोपनमेत् अथादधीताथ यजेत इति **शतपथे** प्रतिषिद्धः **तथापि** अस्यां शाखायां तत्प्रतिषेधाभावात् तदर्थमेवेदं वचनमिति । अनेन च यदि

**नञ्द्वयाम्नानवैयर्थ्यात्तु वाक्यभेदमप्यङ्गीकृत्य ऋतुनक्षत्रमात्रानादर एव। अन्यथा पञ्चाहुत्वादेरपि बाधापत्तेरिति तत्त्वम्॥ ५॥**

---

आधाने सर्वकालत्वं वचनान्तरेण प्रतिपादितं न स्यात् तदा तत्र तद्भवेदेव। तत्तु प्रतिपादितमेव अतो व्यर्थः सः सोमे सर्वकालत्वं प्रतिपादयतीत्यर्थो दृश्यते, न ऋतुनक्षत्रातिक्रममात्रम् यद्यपि सोमकालोपि प्रतिषिद्ध इति अनेनापि सोमकालमात्रस्यैव प्रतिषेधप्रतीतिः। अत एव यदहरेवैनं यदा कचन कदाचनोपनमेत इति श्रुतिसमानरूपयदहरेव विरजेत् तदहरेव प्रव्रजेदिति श्रुतिबलादेव सन्न्यासः सर्वकालीनः सर्वैरनुष्ठीयते। अतः पर्वोदगयनाद्यप्रतीक्ष्यापि आधानानन्तरं सोमःकार्य एव।

अत एव **उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनादिति** षाष्ठसूत्रस्थदैवपदं भाष्यकारेण उपनयनादिपरं व्याख्यातम्। दैवपदमुपनयनादिविशेषपरं किमर्थं कृतमित्याशङ्क्य **वार्तिककारेण** इष्ट्य्रेत्यादिवाक्यविहितकालाङ्ककानां सर्वानुष्ठेयत्वेन तथा कृतमित्युक्तम्। य इष्ट्य्रेत्यादिवाक्ये सोमोऽप्यस्तीति **वार्तिककारस्य** दक्षिणायने सोमानुष्ठानं संमतं दृश्यते। अतोऽर्धमन्तर्वेदि मिनोति इत्यत्र देशविशेषलक्षणावत् इहापि ऋतुनक्षत्रपदेन विहितकालमात्रलक्षणात् सर्वस्यापि अनादरः आधानाव्यवहितसोम इति तदिदमौपाशुक्लदीक्षितमतं निरस्यति—**नञ्द्वयाम्नानेति**। स्पष्टोऽर्थः। **यत्तूक्तं** सर्वकालानादरपरशातपथवाक्यानुरोधेन ऋतुनक्षत्रवाक्यस्य विहितकालमात्रनिषेधकत्वमिति तत्तु आधान एव शातपथवचनेन विहितकालानादरविधानस्यानुपदमेव वस्तुतस्त्वित्यादिना उक्तत्वात् आधानानन्तर्यमात्रस्यैवाथ यजेतेत्यनेन विधानात् सोमे अपेक्षितः प्रागनवगतः अपूर्व एव ऋतुनक्षत्रमात्रानादरो विधीयत इति निरस्तं वेदितव्यमिति भावः।

**मम तु प्रतिभाति।** अर्धमन्तर्वेदीत्यत्र जातपुत्रः कृष्णकेश इत्यादौ वाक्यद्वयपदद्वयवैयर्थ्ये विद्यमानेपि वाक्यगतवाक्यभेददोषापेक्षया पदगतलक्षणादोषस्य लघुत्वमङ्गीकृत्य देशविशेषावस्थाविशेषलक्षणा सर्वत्राङ्गीक्रियते। एवमिहापि विहितकालमात्रलक्षणायां न किञ्चिदपि बाधकमस्ति। अपि च नञ्द्वयाम्नानबलादेव विहितकालमात्रलक्षणा प्रतीयते इतरथा न ऋतनक्षत्रे पृच्छेत् इत्येकेनैव निषेधेन उभयनिषेधसंभवात। अतोऽत्रानास्थाद्योतकमेव नञ्द्वयं ऋतुनक्षत्रपदस्य विहितकालमात्रलक्षणायां तात्पर्यग्राहकम्।

(६)—पुरोडशास्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥ आज्यमपीति चेत् ॥ २० ॥ न मिश्रदेवतत्वादैन्द्राग्नवत् ॥ २१ ॥*

(७)—विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिः तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥ वचनाद्वैककाल्यं स्यात् ॥ २४ ॥

---

अपि च पूर्वोक्तशातपथवाक्येन अथ यजेतेत्यनेन भवदुक्तरीत्या आधानानन्तर्यमेव विधीयतां तथापि पूर्वतनवाक्येन आधान एव कालनिषेधात् अनियतकालीनाधानाव्यवहितानन्तर्यमेव विधीयत इत्यव्यवहितत्वानुरोधेन अर्थादेव सोमे ऋतुनक्षत्रानादरप्राप्तेः तद्विधानं व्यर्थमेव सत् कदाचित् सोमे आधानानन्तर्यरूपाङ्गसिद्ध्यर्थं पूर्वमाधानानुष्ठाने कर्तव्ये प्रधानभूतसोमाङ्गऋतुनक्षत्रादिकालानुरोधेन पञ्चदिनेभ्यः पूर्वमेव षष्ठेऽह्नि अनुष्ठानं कर्तव्यं तावताप्यनियतकालविहिताधानस्य कालाबाधाप्रसक्तेः न तु यदाकदाचिदप्याधाने कृते अव्यवहितानन्तर्यलाभात् सोमेच्छुना तदनुष्ठानं कर्तव्यमित्येवमनुष्ठानप्रसक्तिः । तत्र प्रधानत्वेनापि ऋतुनक्षत्रादरो न कार्यः । किंतु आधानेच्छयैवानुष्ठानेन तदव्यवहितानान्तर्यं संपादनीयमित्यर्थस्यैव ज्ञापकं वाच्यम् । तथा च ऐच्छिकाधानकालाबाध एव नर्तुमित्यस्य तात्पर्यदर्शनात् सोमाङ्गयावद्विहितकालानादरपरत्वमेव लक्षणया आश्रयितुमुचितं, इतरथा ऋतुनक्षत्रमात्रानादरेण ऐच्छिकाधानकालानुग्रहेपि पर्वाद्यनुरोधेन तद्बाधस्यावश्यकत्वेन अर्धजरतीयापत्तेः । अतो युक्तमेव सर्वकालोपलक्षकत्वम् ।

यत्तूक्तं पञ्चाहत्वादेरपि बाधापत्तेरिति तदपि शिथिलमेव, सर्वविहितकालमात्रानादरविधानेपि अह्नोऽनुग्रहस्य ममापि सत्वेन तद्गतपञ्चत्वबाधस्य कालानादरविधानशास्त्रेण कर्तुमयोग्यत्वात् । नहि कालानादरशास्त्रेण पञ्चत्वबाधः संभवति । इतरथा आधानेपि सर्वकालानादरशास्त्रात् द्व्यहकालत्वबाधापत्तेः । अत एव य इष्ट्येत्यादौ पर्वगतैकत्वविवक्षया प्रकृतिप्राप्तद्व्यहकालत्वबाध उक्तः नतु पर्वमात्रविधानेन । तस्मात् विहितकालमात्रानादरस्य सोमे विधानात् ऋतुनक्षत्राप्रतीक्षयेव उदगयनपर्वाद्यप्रतीक्षयापि अनिषिद्धेकाले यदाकदाचिदपि आधानं कृत्वा तदव्यवधानेन सोमानुष्ठानमविरुद्धमेव । विहितकालानादरस्य उभयत्र विधानेपि निषिद्धकालप्रतिप्रसवकरणे प्रमाणाभावात् । यद्यपि दीक्षणायाद्यङ्गानुष्ठानेन सोमे अव्यवहितानन्तर्यासंभवः तथापि प्रागुक्तरीत्या व्रात्यपशुपवमानेष्टिवत् सोमोपकारकस्याव्यवधायकत्वात् यावदनुमतव्यवधानेपि सोमानुष्ठाने न बाधकमिति दिक् ॥

'य इष्ट्या' इति वचनेन न तावत्प्रकृतीष्टौ पौर्णमास्यादिकालविधिः 'पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः' इत्यादिवचनैस्तस्याः प्रतिपत्कालत्वविधानात्। अत एव 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिवचनेषु पौर्णमास्यादिशब्दावपि आरम्भद्वारकौ पर्वप्रतिपत्समुदायलक्षकौ वा। अत एव प्रकृतौ द्व्यहकालत्वं प्राकरणिकम्। अतश्चेदमनारभ्याधीतं वचनं विकृतीष्टिविशेषपरम्। विकृतिपशुपरं च। अग्नीषोमीयस्यौपवसथ्येऽहनि विहितत्वात्। अतिदेशप्राप्तोऽपि च विकृतौ पौर्णमास्यादिकालो यथा पौर्णमासीविकाराणां पौर्णमास्यां करणं अमावास्याविकाराणां चामावास्यायां करणमित्येवं व्यवस्थया प्राप्तानामव्यवस्थार्थं, तथा साङ्गानां तासां पौर्णमास्यादिकालविधानादातिदेशिकद्व्यहकालत्वबाधनार्थमपि। न च तत्तद्विकृतीनां तद्विधावेव प्रयोगस्य प्राप्तत्वादत्र प्रयोगविध्यभावेन प्रधानमात्र एव पौर्णमास्यादिकालविधानोपपत्तेः प्रतिपत्कालत्वादिबाधेऽपि चतुर्दश्यामन्वाधानकरणेन प्राकृतद्व्यहकालत्वबाधे प्रमाणाभाव इति वाच्यम्। कालस्य प्रयोगान्वयितया प्राप्तप्रयोगसम्बन्धित्वेन विधानादन्वाधानेऽपि पौर्णमास्यादिकालकत्वस्यौपदेशिकत्वात्। अतस्साङ्गमपि विकृतिप्रधानं पौर्णमास्यादिकाले कर्तव्यम्। तत्र पूर्णपर्वणि अपराह्णसन्धौ वा विकृतिं कृत्वा प्रकृतेरन्वाधानं निर्विवादमेव। अन्वाधाने प्रातः कालस्तूपदिष्टोपि अङ्गगुणत्वादातिदेशिकेनापि विकृतिप्रधानाङ्गप्रातः कालेन बाध्यते। पूर्वाह्णसन्धावपि औदयिकपर्वणः प्रकृत्यवरुद्धत्वात् पूर्वपर्वण्येवोपदिष्टपर्वकालत्वानुरोधेनातिदेशप्राप्तप्रातः कालं द्व्यहकालत्वं च बाधित्वा विकृत्यनुष्ठानं ततः प्रकृत्यन्वाधानमिति बोध्यम्। एवं सोमेऽपि पूर्वेद्युरेवाधिककालव्याप्तिलाभात्।

---

॥ विकृतेः प्रकृतिकालत्वात् ॥

विकृतीष्टिविशेषपरमिति। ननु दीक्षणीयादिरूपविकृतिपरमपि, तासां प्रधानभूतसोमयागकालानुरोधेन अनुष्ठानादिति भावः। अत्र च यजेतेति प्रत्ययेन सकलभावनानुवादात् न तत्त दनेकत्वकृतो वाक्यभेदः पदद्वयेन च पर्वलक्षणात् वाशब्दस्य च निपातत्वेन भावनान्वयं विनापि कालान्वयोपपत्तेः विकल्पविशिष्टकालविधानात् न तदनेकत्वकृतोऽपि वाक्यभेद इति प्रकरणान्तराधिकरणकौस्तुभोक्तरीत्या वाक्यभेदपरिहारेण पूर्वविहितकर्मभावनानुवादेन कालविनियोगमात्रं क्रियत इति ध्येयम्।

नन्वेवं औदयिकपर्वणः प्रातःकाले प्राकृतेरारम्भस्य कृतत्वात् तन्मध्ये च न कर्मणि कर्मान्तरारम्भ इति निषेधेन विकृतेरारंभायोगेन प्रकृतिसमाप्तिरावश्यिकी तस्याश्च प्रतिपदन्त-

यत्तु धूर्तस्वाम्यादिभिर्याज्ञिकैरावर्तनतत्पूर्वसन्ध्योः प्रकृत्यनुष्ठानानन्तरं सन्धिदिन एव विकृत्यनुष्ठानं पौर्णमास्यादिशब्दानां पर्वान्त्यक्षणवचनत्वात्। "यः परमो विप्रकर्षस्सूर्याचन्द्रमसोस्सा पौर्णमासी। यः परमस्सन्निकर्षस्सा अमावास्या" इति गोभिलसूत्रात्। अतश्च सन्निकर्षविप्रकर्षक्षणावच्छिन्नाहोरात्रस्यैव पौर्णमास्यमावास्यापदवाच्यत्वात्तस्य च पूर्वाह्णसन्धौ द्वितीयदिन एव सत्त्वात् तत्रैव विकृत्यनुष्ठानं, तदपि न प्रकृतेः पूर्वं तस्याः द्व्यहकालत्वेन विकृतौ प्रसङ्गसिद्ध्यापत्तेः। अतोऽगत्या प्रातः कालबाध एवेत्युक्तम। तन्न, "सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन्तासाममावस्यां च पौर्णमासीं च नोपैत्" इत्याद्यर्थवादादापामरप्रसिद्धेः ज्योतिश्शास्त्रादिवशाच्च पौर्णमास्यादिशब्दानां तिथिवचनत्वात्। न हि सूर्याचन्द्रमसोः परमसन्निकर्षविप्रकर्षक्षणावच्छिन्नाहोरात्रवाचित्वे पौर्णमास्यादिशब्दानां "पर्वणो यश्चतुर्थांशः आद्याः प्रतिपदस्त्रय" इत्यादेर्व्यवहारस्य द्वैधे पूर्वविद्धापरविद्धाग्राह्यत्वत्याज्यत्वादिव्यवहारस्य च कथमप्युपपत्तिस्सम्भवति, द्वैधस्यैवाप्रसक्तेः। अतस्तिथिपरा एवैते शब्दाः। तिथिर्नाम अमासंज्ञकचन्द्रकलाव्यतिरिक्तचन्द्रकलानां मध्ये एकैकस्याः कलायास्सूर्यमण्डलेनाद्यावयवविप्रकर्षादारभ्य अन्त्यावयवविप्रकर्षः आद्यावयवसन्निकर्षादारभ्यान्त्यावयवसन्निकर्षो वा यावता कालेन जायते तावान्कालो यथाक्रमं शुक्लकृष्णपक्षगतः प्रतिपद्द्वितीयादिशब्दप्रतिपाद्यः॥

---

रेण करणे प्रतिपदि अप्रविष्टायां यदीष्टिः समाप्यते "पुनः प्रणीय कृत्स्नेष्टिं दण्डं दद्यात् द्विजातये" इति विहितप्रायश्चित्तापत्तेः प्रतिपत्प्रतीक्षया तस्यामनुष्ठाने तदनन्तरपौर्णमास्यादिकालाभावे कथं विकृत्यनुष्ठानमित्यत आह—**पर्वान्त्यक्षणवचनत्वादित्यादि**। **द्वैधस्यैवेति**। सन्धिमदहोरात्रस्यैकस्यैव संभवादिति भावः। अतश्च पूर्वाह्णावर्तनयोः सन्धौ पूर्वपर्वण्येव विकृत्यनुष्ठानमिति मीमांसकमतम्। यत्तु "प्रकृतेः पूर्वत्वात् अपूर्वमन्ते स्यात्" **इत्यापस्तंबवचनं** तत् न्यायमूलकत्वान्न्यायस्य च मीमांसान्यायविरोधे अप्रमाणमिति भावः।

**कालतत्वविवेचनकारास्तु** एतच्च मीमांसकमतं

आवर्तनात् प्राग्यदि पर्वसन्धिः, कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः।
तदैव यागः परतो यदि स्यात तस्मिन् विकृत्याः प्रकृतेः परेद्युः॥

इति **कात्यायनवचनस्य** श्रुतिमूलकत्वाभावे। यद्वा तु तत् श्रुतिमूलं तदा वचनादेव सन्धिदिने प्रकृत्यनन्तरं तदनुष्ठानं याज्ञिकानां युक्तमेवेत्याहुः।

अमा षोडशभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः।
तिथयस्तास्समाख्याताः षोडशैव वरानने॥
तत्र पक्षावुभौ मासश्शुक्लकृष्णौ क्रमेण हि।
चन्द्रवृद्धिकरश्शुक्लः कृष्णश्चन्द्रक्षयात्मकः॥
पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदशैव ताः।
दर्शान्ताः कृष्णपक्षे तु पूर्णिमान्ताश्च शुक्लके॥

इत्यादिवचनात्। अत एव तिथिशब्दः प्रतिपदादिशब्दाश्च कलास्वेव शक्ताः। काले तु निरूढलक्षणयेति ध्येयम्। एवं च पौर्णमास्यमावास्याशब्दावपि न योगेनान्तिमक्षणवचनौ तदवच्छिन्नाहोरात्रविषयौ वा। गोभिलसूत्रमप्युक्तविधसन्निकर्षविप्रकर्षकालोपलक्षणमेव व्याख्येयम्। तत्सिद्धं न विकृतीनां द्व्यहकालत्वमिति॥ ७॥

---

यत्त्वत्र मयूखकृता पूर्वोक्तकात्यानयवाक्यस्य श्रुतिमूलकत्वमप्यङ्गीकृत्य वाक्यार्थवर्णनं कृतम्। तथा हि—य इष्ट्येत्यादिश्रुत्या साङ्गायाः विकृतेः पर्वणि विधानादावर्तनपूर्वसन्धावपि पर्वणोऽधिकरणत्वश्रुतेः "कर्मणो यस्य यः कालः तत्कालव्यापिनी तिथिः" इति स्मृतेश्च प्रकृतिविकृतिपर्याप्तपर्वसत्त्वेन तद्दिन एवोभयोः प्रकृतिविकृत्योः कर्तव्यत्वेन प्राप्तयोः क्रमः पूर्वार्धे विधीयते। प्रकृतेः पूर्वत्वादपूर्वमन्ते स्यादित्यापस्तंबवचनमपि एतदभिप्रायमेव। प्रयोगद्वयापर्याप्तपर्वसत्त्वेपि एतद्वचः प्रवृत्त्यङ्गीकारे तु श्रुतपर्वाधिकरणत्वबाधः। न च "कृत्वा तु तस्मिन् प्रकृतिं विकृत्या" इति प्रकृतिप्रयोगसमाप्त्युत्तरमेव विकृतेः कर्तव्यत्वावगमेन प्रतिपदधिकरणप्रकृत्यन्त्यपदार्थोत्तरमेव विकृतिः न ततः प्रागिति वाच्यम्; श्रुतपर्वाधिकरणत्वबाधापत्तेः। किं चान्त्यपदार्थव्यतिरिक्ताया एव प्रकृतेः पर्वाधिकरणत्वेन विकृत्यैककालत्वात् तादृश्या एवाकाङ्क्षितक्रमविधिः सन्धिमभितो यजेतेतिवचनात् प्रकृतिसमाप्तेः प्रतिपदि कर्तव्यत्वेन तन्मध्ये विकृतिप्रसङ्गेपि न किंचाद्बाधकम्। न कर्मणि कर्मान्तरारंभ इत्यत्र तु न श्रुतिर्मूलम्; किंतु प्रयोगप्राशुभावभङ्गप्रसङ्गः स च प्रतिपत्प्रतीक्षया विकृत्यनुष्ठानेप्यावश्यकः।

' विवा एतद्यज्ञस्य छिद्यते यदन्यस्य तन्त्रे वितते अन्यस्य तन्त्रं प्रतायते ' इत्यादि— राणकोदाहृतलिङ्गदर्शनमप्येवं व्याख्येयम्। अथवास्य दर्शस्य पूर्णमासस्य वा प्रयोगस्य मध्ये अग्निहोत्रानुष्ठानं न स्यात्, न स्याच्चान्ततः पर्वद्वयमसाध्यतन्महाप्रयोगमध्ये काम्यादीनामन्येषामपि कर्मणाम्। अतः तादृशपर्वसत्व एव क्रमविविः। तदभाव आवर्तनप्राक्सन्धावपि पूर्वदिन एव विकृतिः सन्धिदिने तु प्रकृतिमात्रम्। तत्र ग्रन्थोप्येतत्पर एव उत्तरार्थे तु न कोऽपि विरोध इति।

अत्रेदमवधेयम्। तत्र प्रकृत्यन्वाधानस्य पूर्वमुपक्रान्तत्वेन निशीष्टिवत् अनन्यगतिकवचनान्तराभावे अन्वाधानसंबद्धपदार्थान्तराणां यावद्वचनं विलंबसहिष्णुत्वेपि तदुत्तरं तत्सहिष्णुत्वे बद्धक्रमबाधापत्तेः अत्यन्तप्रधानविप्रकर्षापत्तेश्च न तन्मध्ये द्वितीयदिवसे प्रकृत्यनुष्ठानतःपूर्वं कथमप्यनियमेन विकृतिप्राप्तिरस्ति येन तत्राकाङ्क्षितक्रमो विधीयेत प्रवृत्तिक्रमेणैव प्रकृत्यङ्गानुष्ठानक्रमस्य सिद्धत्वेनाकाङ्क्षाशान्तेः। आशङ्कितमेव प्रवृत्तिक्रमेण सान्नाय्यधर्माणामग्नेयधर्मेभ्यः पूर्वमनुष्ठानं परदिवसे अत्रैवाध्याये पूर्वत्र। अत एव तत्र न्यायत एव प्रकृत्यनन्तरमेव विकृत्यनुष्ठानं सिध्यतीति नैतद्वचस्तत्रार्थवत्। नवा प्रतिपत्कर्तव्यप्रकृत्यन्त्यपदार्थक्रमबाधभिया न प्रकृतिमध्ये विकृतिः कर्तव्येति ब्रूमः। तद्बाधस्य प्रतिपत्प्रतीक्षयैव सिद्धत्वात्। किन्तु बद्धक्रमकान्वाधानतदुत्तरपदार्थबाधभियेति ब्रूमः। अन्यथा देशकालकर्त्रैक्ये प्रकृतिविकृत्योः तन्त्रत्वापत्तौ क्रमापेक्षायास्तवापि मते भावात् आकाङ्क्षितविधित्वानुपपत्तिः। न कर्मणि कर्मान्तरारंभ इत्यस्य क्रमभङ्गभयमूलत्वात् पदार्थगुणक्रमबाधेन नित्याग्निहोत्ररूपपदार्थानुष्ठानं वेदवेदिकरणयोरन्तराले आचमनादीनामिव नैव विरुद्धयते। न वा क्रमबाधे दर्शपूर्णमासमहाप्रयोगान्तराले काम्येष्टीनाम्। अतो द्व्यहकालसाध्यप्रकृतिमध्ये विकृत्यनुष्ठानाप्रसक्तेः नानेन तत्र क्रमो विधीयते इति तस्याः प्रकृत्यनन्तरानुष्ठाने प्राप्ते मीमांसकमते याज्ञिकैकदेशिमते वा तिथिवाचित्वपक्षे पौर्णमास्यमावास्याकालानुरोधेन पूर्वत्रैवानुष्ठाने, अथवा याज्ञिकमते सन्धिमदहोरात्रवाचित्वे तस्यैवाधिकरणत्वेन विधानात् तस्य च प्रकृत्यनन्तरं प्रतिपद्यपि पिण्डपितृयज्ञस्येव विकृतेरनुष्ठाने नैव किञ्चिद्बाधकम्। एतेन श्रुतपर्वाधिकरणत्व-

## (८)—साम्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ॥ २५ ॥

**'नासोमयाजी सन्नयेत्' इत्यसोमयाजिनस्सान्नाय्यपर्युदासः तेन तस्याप्यग्नीषोमीयवत् सोमोत्तरत्वमेव। अतस्तदुभयविकारेष्वपि तद्देवत्येष्वन्यदेवत्येषु वा सोमोत्तरत्वमेव। न ह्यत्रासोमयाजिनोऽधिकारपर्युदासो येन विकृतौ नातिदिश्येत। कर्तृसामा-**

---

बाधापत्तेरिति निरस्तम्। न च यत्रैव सद्यस्कालप्रकृतौ प्रकृतिविकृतिपर्याप्तपर्वलाभात् उभयानुष्ठानप्रसक्तिः तत्रैव क्रमाकाङ्क्षायामाकाङ्क्षितक्रमविधानं भवत्विति वाच्यं; एकप्रयोगविधिपरिगृहीतानां क्रमापेक्षणेपि भिन्नप्रयोगविधिपरिगृहीतयोः प्रकृतिविकृत्योः क्रमानपेक्षतन्त्रानुष्ठानस्यैव न्यायतः प्राप्तेः तदनपेक्षणात्। न्यायसिद्धतन्त्रानुष्ठानबाधयैव तद्वाक्यस्य श्रुतक्रमविधायकत्वे कालार्थसम्बन्धे वा स्वीक्रियमाणे प्रकृतिविकृत्योस्तन्त्रानुष्ठानस्य सकलयाज्ञिकसम्मतस्य विरोधापत्तेः। अतो द्व्यहकालसाध्यप्रकृतिमध्ये प्राप्ताया विकृतेः मीमांसकमते पर्वानुरोधेन पूर्वत्रानुष्ठानप्राप्तौ श्रुतिमूलत्वेन श्रद्धातव्यत्वात् एतस्माद्वचसः तद्बाधेन परत्र प्रकृत्यनन्तरमेवानुष्ठानमङ्गीकर्तव्यम् तिथिवाचित्ववादिनां केषांचित् याज्ञिकानामपि तथा। येषां तु याज्ञिकानां सन्धिमदहोरात्रवाचित्वेन न्यायप्राप्तार्थानुवादकत्वात् तद्वचनमविधिरूपमुत्तरार्थैकरूप्येणेति वा अङ्गीकर्तव्यम्। उभयथापि आवर्तनपूर्वसन्धिदिने उभयपर्याप्तपर्वलाभे अन्त्यपदार्थानुष्ठानरहितां प्रकृतिमनुष्ठाय ततो विकृतिं कृत्वा प्रतिपदि प्रकृत्यन्त्यपदार्थानुष्ठाने उभयपर्याप्तपर्वालाभेपि सन्धिदिने प्रतिपद्येव तदनुष्ठाने वा न कोपि विरोधः। न त्वेतावता कदाचित् सन्धिदिने कदाचित्पूर्वेदिने तदनुष्ठानमित्येवमर्धजरतीयं युक्तमाश्रयितुमित्यलं प्रसङ्गागतचिन्तयेति दिक्।

---

**॥ सान्नय्याग्नीषोमीयविकाराः ॥**

**सान्नाय्यपर्युदास** इति। असोमयाजी सान्नाय्यव्यतिरिक्तं कुर्यादित्येवंरूपः। **तदुभयविकारेष्विति।** यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदिति सान्नाय्यविकाराः अग्नीषोमीयमेकादशकपालं निर्वपेत् वसन्ते ब्रह्मवर्चसकामः इत्यग्नीषोमीयविकारा द्रष्टव्याः। **नह्यत्रेति।** असोमयाजिभिन्नोऽधिकारीत्येवं पर्युदासे सति सान्नाय्ये सोम-

नाधिकरण्यात्तु यागकर्तृत्वपर्युदास एव। अतश्च युक्तोऽतिदेशः। अत्र च दैक्षस्य नोदाहरणत्वं औपदेशिकसोमप्राक्कालत्वविधानात्। तद्विकाराणां च प्रकृतावनङ्गत्वान्न सोमोत्तरत्वनियमः। न चान्वाहार्यस्येव प्रकृतावभावेऽपि प्रकृतिप्रकृतितो ग्रहणमिति वाच्यम्। अपेक्षितविषय एव तथाग्रहणेन सोमोत्तरत्वस्यानपेक्षितत्वात्। वस्तुतस्तु अपेक्षाया उपायान्तरेणापि निवृत्त्युपपत्तेः नान्वाहार्यांशेऽपि ग्रहणम्। अन्यथा पितृमेधविकारे होतृवरणास्यप्यतिदेशापत्तेः। न चैवं दैक्षविकाराणामनिर्दिष्टकालविशेषाणामौपवसथ्यकालकत्वापत्तिः। तस्याङ्गत्वनिबन्धनतया तदभावेऽप्राप्तेः। अतस्तद्भिन्नविकाराणां सोमोत्तरत्वमेव।

यत्तु याज्ञिकानां प्रागप्यनुष्ठानं तच्छाखान्तरे सान्नाय्याग्नीषोमीययोः प्रागपि

---

याजिनोऽधिकारात् तस्य च तद्विकृतावनतिदेशात् असोमयाजिनो विकृतिः सोमात् पूर्वमुत्तरं वेति अनियमः प्राप्नुयात् न तु सोमोत्तरत्वमेवेत्याशङ्कार्थः। **कर्तृसामानाधिकरण्यादिति।** सान्नाय्ये असोमयाजिभिन्नः कर्तेति फलतः पर्युदासाद्विकृतौ सोमयाजिकर्तुः अतिदेशात् असोमयाजिनः विकृतिरिति भावः। अत्र भाष्यकारेण सान्नाय्यविकाराःआमिक्षापशुरित्युदाहृतं तत्र पशुग्रहणमयुक्तमिति दर्शयति—**अत्र चेति। औपदेशिकेति।** स एष औपवसथ्येऽहन्यालब्धव्यः इति वचनादित्यर्थः। **वस्तुतस्तु** दर्शपूर्णमासाभ्यामिष्ट्वा इष्टिपशुचातुर्मास्यैः अथ सोमेन यजेतेत्याश्वलायनसूत्रेणोत्तरोत्तराधिकारक्रमविधायकेन चातुर्मास्यानां सोमपूर्वत्वविधानस्यापि औपदेशिकत्वेन सान्नाय्यविकारसर्वामिक्षायागप्रकृतिभूतवैश्वदेव्यामिक्षायागस्य चातुर्मास्यान्तर्गतस्य सोमात् प्रागेवानुष्ठानात् आमिक्षोदाहरणमप्ययुक्तमेव। औपदेशिकेन सोमपूर्वत्वेन आतिदेशिकसोमोत्तरत्वस्य बाधादेव नाग्नीषोमीयमात्रवत् आमिक्षायागमात्रस्यैव उत्कर्षः। एतेन चातुर्मास्यानां दर्शपूर्णमासेष्टिवत् पूर्वकर्तव्यतावचनाभावात् सान्नाय्यविकृत्यामिक्षायागगर्भितत्वेन तेषां सोमोत्तरमेवानुष्ठानं **प्रकाशकारोक्तमपास्तम्। प्रकृतावनङ्गत्वादिति।** दैक्षे सोमोत्तरत्वस्यानङ्गत्वादित्यर्थः। **प्रकृतावभावेपीति।** सोमार्थदक्षिणयैवानतिसिद्धेः अन्वाहार्यदक्षिणायाः दैक्षे अभावात् यथा दैक्षविकारेषु दक्षिणापेक्षायां दैक्षस्य प्रकृतिभूतात् सान्नाय्यादन्वाहार्यस्य ग्रहणमेवं सोमोत्तरत्वस्य तत एव ग्रहणमित्याशङ्कार्थः। **अन्यथेति।** पित्र्येष्टौ न होतारं वृणीत इति निषेधात् तद्विकारे अपेक्षायामपि न होतृवरणस्यातिदेशः अपेक्षाया अन्यतोपि शमनादिति भावः। **अङ्गत्वनिबन्धनतया**—सोमाङ्गत्वनिबन्धनतयेत्यर्थः। **तद्भिन्नविकाराणां।** दैक्षभिन्नविकाराणाम्। **शाखान्तरेति।** तदु सन्नयेत् तथा अग्नीषोमाविति

विधानादवगन्तव्यम्। एवमैन्द्राग्नविकाराणामपि सोमप्राक्कालत्वमेवेति सूत्रं तस्याप्युपलक्षणमिति केचित्। वस्तुतस्तु 'असन्नयतः' इत्यस्य षष्ठ्यन्तस्य कर्तृसामानाधिकरण्याभावादधिकारिविशेषणत्वस्यैव प्राधान्यावगतेस्तस्य चानतिदेशात् युक्तं तद्विकाराणामनियतकालत्वम् ॥ ८ ॥

---

## (९)—तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥

सोमे इष्टिपूर्वत्वमाधानाव्यवहितोत्तरत्वं च वैकल्पिकमङ्गम्। अतस्तद्विकारेषु तथैवातिदेशप्राप्तावपि इष्टिपूर्वत्वमेव। 'एष वाव प्रथमः' इति वाक्यविहितज्योतिष्टोमोत्तरत्वबलेनाधानाव्यवहितोत्तरत्वस्य तेषु कर्तुमशक्यत्वात्। अतश्चाधानानन्तर्यस्य

---

पौर्णमासास्यामित्याश्वलायनसूत्रे सोमयाज्यसोमयाजिसाधारण्येन च सान्नाय्याग्नीषोमीययोः विधानादित्यर्थः। तत्र येषामाश्वलायनकात्यायनहिरण्यकेशिबोधायनानां सूत्रेऽविशेषेणाम्नानं तेषामेवासोमयाजिनोऽग्नीषोमीयानुष्ठानम्। येषां त्वापस्तंबानां सोमयाजिब्राह्मणस्याग्नीषोमीयः पुरोडाश इत्यापस्तंबसूत्रात् असोमयाजिनो निषेध एव तेषामसोमयाजिनो न तदनुष्ठानम्। अथवा सर्वेषामेव विकल्प इति तु वादान्तरम्। **सूत्रमिति**। असन्नयत ऐन्द्राग्न इति वचनेन असन्नयत ऐन्द्राग्नविधानात् सोमयाजिनश्च सान्नाय्याधिकारे सति ऐन्द्राग्नानधिकारस्य सिद्धत्वात् अर्थात् ऐन्द्राग्नस्य नियमेन सोमप्राक्कालत्वमेवेति तद्विकाराणामपि तत्प्राक्कालत्वमेव। सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवदिति सूत्रं समानन्यायतया ऐन्द्राग्नविकाराणां सोमप्राक्कालत्वनियमस्याप्युपलक्षणमिति भावः। **असन्नयत इत्यस्येति**। असन्नयत ऐन्द्राग्न इति वाक्यस्थासन्नयतइत्यस्येत्यर्थः। **तद्विकाराणां**। ऐन्द्राग्नविकाराणाम्।

---

॥ तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥

**एष वावेति**। एष वावेति वाक्येनाग्निष्टोमे प्राथम्यरूपाङ्गविधानाभावपूर्वकं तदुत्तरत्वमात्रविधानस्य पूर्वमुपपादितत्वात् औपदेशिकेनाग्निष्टोमोत्तरत्वेन आतिदेशिकाधानाव्यवहितोत्तर-

प्रकृत्यवरुद्धत्वेनानतिदेशादिष्टिपूर्वकत्वमेवातिदेशिकं तेष्विति सिद्धं क्रमस्य षट्प्रमाणकत्वम् ॥ ९ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
पञ्चमाध्यायस्य चतुर्थः पादः.
अध्यायश्च समाप्तः.

---

त्वस्य बाधादित्यर्थः । अध्यायार्थमुपसंहरति—इति सिद्धमिति ।

इति श्रीखण्डदेवान्तेवासिकविमण्डनशंभु—
भट्टविरचितायां भाट्टदीपिकाप्रभावल्यां
पञ्चमस्य चतुर्थः पादः
अध्यायश्च समाप्तः

---

# अथ षष्ठाध्यायस्य प्रथमः पादः

(१)—द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥ असाधकं तु तादर्थ्यात ॥ २ ॥ प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धः तस्मात्कर्मोपदेशस्स्यात ॥ ३ ॥

---

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्णं पितरं नमामि ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥

यद्यप्यत्रगुरोः कृतावपि मयाप्युद्भाव्यते काचना-
ऽसंभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्वियं मे मतिः ॥

॥ **द्रव्याणां कर्मसंयोगे** ॥

पूर्वाध्यायार्थोत्तराध्यायार्थनिरूपणयोरवसरसङ्गतिं हेतुहेतुमद्भावसङ्गतिं च दर्शयति—**एवमिति** । एवं प्रमाणलक्षणसापेक्षैः भेदाभेदशेषशेषिप्रयोजकाप्रयोजकैवंक्रमनिरूपणपरैश्चतुर्भिरध्यायैरित्यर्थः । तथा च वक्ष्यमाणलक्षणाधिकारविचारस्य यद्यपि अनुष्ठेयपदार्थे कोऽधिक्रियत इत्येवंरूपेण द्वितीयतृतीयसहितचतुर्थाध्यायानन्तरमेव करणमुचितम् । अत एव शास्त्रदीपिकायां—

"भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ।
कोऽनेनाधिक्रियेतेति सांप्रतं संप्रधार्यते ।"

इत्यनेनापाततः क्रमलक्षणनिरपेक्षत्वमेव प्रतीयते तथाप्यधिकारस्य शक्त्यपेक्षत्वाच्छक्तेश्च कर्तुरशक्येप्यनुष्ठेये पदार्थसमूहे अक्रमे अनियतक्रमे वा एकस्य कर्तुरसंभवेन नियतक्रमविशिष्टानुष्ठेयपदार्थविषयशक्त्यपेक्षस्याधिकारस्य द्वितीयतृतीयचतुर्थपञ्चमैः संपादितोत्पत्तिविनियोगविषयानुष्ठेयवर्गज्ञानोत्तरमेव अवसर इति शक्त्यपेक्षत्वेन हेतुना प्रतिबन्धकीभूतजिज्ञासानिवृत्त्युत्तरमवश्यवक्तव्यत्वरूपावसरः पञ्चमानन्तरमेव । उत्तरषट्कात्पूर्वभावस्तु उपदेशात्मकत्वादेव स्पष्ट इति द्योतयितुं सक्रमके इत्युक्तम् । अधुनेति ।

यथैव पूर्वोपपादितोऽवसरः अधुनापदेन विवक्षितस्तथैव हेतुहेतुमद्भावोऽपि ।

"भारो येन हि वोढव्यः स प्रागान्दोलितो यदि ।
तदा कस्तस्य वोढेति युक्तं कर्तृनिरूपणम् ॥

"कार्ये ज्ञातेऽधिकारः स्यात्" इति न्यायात् । एवं च चतुर्थान्तैरध्यायैः[1] प्रयोज्यवर्गस्तावन्निरूपितः । तदनन्तरमेव तु नाधिकारनिरूपणं शक्यते कर्तुं, अक्रमस्यानियतक्रमस्य वा तस्याशक्त्याऽनुष्ठानासंभवेऽधिकारनिरूपणस्यैव अनपेक्षणात् । अतो न यावदशक्यानुष्ठानताज्ञानस्य प्रतिबन्धकस्य निराकरणं भवति न तावदधिकारनिरूपणं संभवतीति पञ्चमाध्यायेन नियतक्रमे निरूपिते शक्यानुष्ठानताज्ञानोत्पत्त्या प्रतिबन्धकाशक्यानुष्ठानताज्ञानाभावसंपादनद्वारा शक्यमेवाग्रेऽधिकारनिरूपणमित्येतस्य पञ्चमाध्यायार्थनिरूपणस्य हेतुत्वं युक्तमेवेति न बाधकम् ।

एतेन द्वितीयतृतीयचतुर्थपञ्चमाध्यायानां सर्वेषामेवाधिकारनिरूपणं प्रति हेतुत्वमुररीकृत्य तन्त्ररत्नकृता "नचात्रैकोऽध्यायो हेतुर्भवति, न तु बहव इति राजाज्ञाऽस्ति, पूर्वषट्कस्यैवोपदेशनिरूपणात्मना एकीभूतस्योत्तरषट्कं प्रतीव पञ्चाध्याय्याः कार्यवर्गनिरूपणरूपेणैकीभूताया अधिकारनिरूपणं प्रति हेतुभावसंभवात् । किं चैकस्याप्यध्यायस्य नानानयनिकायात्मनः कार्यैक्याधीनमेवैक्यं तदध्यायसङ्घातस्याप्यविशिष्टम्, इत्याशङ्कापरिहारौ दर्शितौ । तत्क्लेशोऽपि नापद्यते इत्यर्थः सर्वोऽपि सक्रमके इति पृथग्विशेषणपदोपादानेन पूज्यपादैस्सूचितः । अत्र चाधिकारी निरूप्यते इत्यनेन विशेषणप्राधान्यविवक्षया अध्यायार्थस्य निरूपणीयस्य प्रतिज्ञा कृता तन्निरूपणं च तिर्यगधिकरणप्रभृति करिष्यते तदुपोद्धातत्वेनेदमाद्यमधिकरणम् । यावद्ध्यधिकारस्वरूपं सप्रमाणं नावगतं भवति न तावत्तदुपोद्धातताऽस्य सिद्ध्येत् इत्यवश्यं विवेचनीयं तत्स्वरूपम् । यद्यप्यधिकारीति कर्मणामुपरिभावेन स्वामीत्यर्थः अधिरुपरिभावे, स च स्वाम्यपर्यायः यो यस्य स्वामी स तस्योपरि भवतीत्येतदधिकरणान्ते वार्तिककृता सूचितं, शास्त्रदीपिकायां सन्देहकोटौ कर्मजन्यफलभोक्तृत्वस्वरूपेण विवेचितं तथापि तदेवार्तिव्याप्त्यान्निरूपण-

1. B. चतुर्थसहितै

एवं सक्रमे प्रयोज्यवर्गे निरूपिते अधुना तत्राधिकारी निरूप्यते—तत्राधिकारो नाम फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम्। श्राद्धादौ पित्रादेः ऋत्विजां चाधिकारव्यावृत्त्यर्थं विशेषणद्वयम्। न चैवं जातेष्टौ पितुः फलभोगाभावादधिकारानापत्तिः, सत्यप्यकरणे प्रत्यवाये करणस्य पूतत्वादिफलकत्वेन पापक्षयफलकत्वाभावादिति वाच्यम्। प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणकर्तृत्वस्यैव विवक्षितत्वात् जातेष्टिश्राद्धादावपि फलस्यान्यनिष्ठत्वेऽपि तदिच्छाया यजमाननिष्ठत्वादधिकाराविघातः। ऋत्विजामपि यजमानस्य फलं भूयादितीच्छायास्स्वनिष्ठकर्तृकत्वसमानाधिकरणत्वादधिकारापत्तिरतः प्रवृत्तीत्युक्तं दक्षिणाप्राप्तिर्मे भूयात् इतीच्छाया एव ऋत्विक्प्रवृत्तिजनकत्वेनोक्तविधेच्छायाः प्रवृत्तिप्रयोजकत्वाभावात्। अयं चाधिकारो विध्याक्षिप्तस्वेष्टसाधनत्वसमानाधिकरणस्वकृतिसाध्यत्व-

---

परिहारेण स्वयं निष्कर्षयति—तत्राधिकारो नामेति। विशेषणद्वयमिति। यद्यपि प्रधानमात्रे यजमानस्यैव कर्तृत्वात्तस्यैवाधिकारो नतु ऋत्विजां कर्तृत्वस्यैवाभावादिति कर्मकर्तृत्वं यस्य तस्य तदधिकृतत्वमित्येवं विवक्षयापि ऋत्विजां निवारणं सुकरं, तथापि निरूपिते सक्रमप्रयोज्यवर्ग एवाधिकारजिज्ञासायाः संभवन्त्याः शमनार्थमारंभणीयेऽधिकारलक्षणे केषुचित्सक्रमकेषु अवहननाद्यङ्गेषु प्रयोज्यवर्गान्तःपातिषु ऋत्विजामपि कर्तृत्वात्तेषु तदधिकारव्यावृत्त्यर्थं फलभोक्तृत्वसमानाधिकरणेति विवक्षणीयमेव। तथा च यजमाने यद्यपि अवहननाद्यङ्गजन्यापूर्वद्वारा पार्यन्तिकं फलमस्ति इत्यस्ति फलभोक्तृत्वं नतु तत्समानाधिकरणेति विवक्षणीयम् साक्षात्तत्कर्तृत्वं, साक्षात्परंपरासाधारणस्यैव लक्षणे निवेशान्न काचित् क्षतिः। नन्वकरणे प्रत्यवायोत्पत्तौ करणस्यान्यनिमित्तक इव तत्परिहारफलकत्वापत्त्या तस्य पित्रादिगतत्वादविकल एवाधिकार इत्याशङ्कामपनुदन्नाह—पूतत्वादिफलकत्वेनेति। यद्यप्यन्यत्र[1] नैमित्तिके कर्तृगतप्रत्यवायपरिहारोऽस्तु नाम फलं इह तु यस्मिन् जात इत्युपक्रमात् पूत एव तेजस्वीत्युपसंहाराच्च पुत्रगतपूतत्वादिकमेव करणफलं लाघवादिति तत्फलस्य पितृगतत्वाभावो युक्त एवेति भावः॥ एवमधिकारस्वरूपे उक्ते अधुना तत्र प्रमाणं दर्शयति—अयं चाधिकार इति। विधिवशादयं यागो मदिष्टसाधनं मत्कृतिसाध्यश्चेत्येवं यदाऽऽक्षिप्तं तदा मत्कृतिसाध्ययागजन्यफलभोक्ताप्यहं भविष्यामीत्यपि समानसंवित्संवेद्यतया यज्ज्ञातं तदपि विधिप्रमाणादेवेति फलसंबन्धबोधकाधिकारविधिप्रमाणगम्य एवाधिकार इत्यर्थः। यद्यपि कर्मणां फलवत्त्वप्रसाधनपरमेतदधिकरणमुक्तोच्यमानवक्तव्यसमस्तार्थोपयोगि भवति अन्यथा फलाभावे वेदबोधितश्रेयःसाधनत्वरूपधर्मस्वरूपस्यैवासंभवे तत्प्रमाणनिरूपणपरप्रथमलक्षणस्य तत्पूर्वभेदाभेदादिविचारपरस्य सर्वस्यैव

---

T. 1. यद्यप्यत्र

**बललभ्यत्वाद्विधिप्रमाणकः। अयमेवाधिकारविधिरित्युच्यते। तत्र चाधिकारस्य इष्टरूपप्रवृत्तिफलघटितत्वात्** तदेवेष्टरूपं फलं **भावनायामस्ति न वेति प्रथमं विचार्यते। तत्र भावनाया भाव्यापेक्षायां** पदश्रुत्या **धात्वर्थस्यैव** सर्वत्र **भाव्यत्वं** न स्वर्गादेः, अपि तु **तस्य साधनत्वमेव योग्यत्वात्** पश्वादेरिव **स्वर्गशब्दस्यापि 'चन्दनं स्वर्गः' इत्यादिप्रयोगात्** द्रव्यवाचि-

---

शास्त्रस्य च शिथिलत्वापत्तेः अतः सर्वोपोद्धातत्वेनैवेदमधिकरणमारब्धुमुचितं, **तथाप्यस्मिन्नध्याये** अधिकारविशेषनिरूपणार्थे अधिकारसद्भावप्रतिपादनेन फलवत्त्वप्रसाधनं साक्षादुपयुज्यत इत्यस्यैवाध्यायस्यादाविदमधिकरणमारब्धव्यमित्यभिप्रेत्य वक्ष्यमाणाधिकारोपोद्धाततां दर्शयति—**तत्रचेति। शास्त्रदीपिकायां** सत्यधिकारे कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्यमिति तत्सिद्ध्यर्थमधिकारसद्भावः प्रतिपाद्यते दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत चित्रया यजेत पशुकाम इत्यादिषु किं पुरुषस्याधिकारःस्वाम्यं कर्मजन्यफलभोक्तृत्वमस्ति न वेति चिन्त्यते। तदर्थमिदं विचार्यते—येयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भाव्यः प्रधानं स्वर्गादि तु साधनं तस्य गुणभूतमुत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यः तत्साधनं च धात्वर्थ इति। ततोप्येतद्विवेक्तव्यं योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः संबन्धः तत्र किं क्रिया प्रधानतः पुरुषो गुणतः ततो विपरीतं वेति। तत्रापि स्वर्गकामोदाहरणे इदमपि चिन्तनीयं—स्वर्गशब्दोऽत्र द्रव्यवचनः प्रीतिवचन इत्यादिप्रकारेण सन्देहचतुष्टयोद्भावनं कृतं तदेतदैन्द्रजालिकमात्रमित्युपेक्ष्याधिकारस्वरूपसिद्ध्यर्थं यावन्मात्रं लघुभूतं विचारकरणमुपयुज्यते तावन्मात्रमेवोद्दिशति—**तदेवेष्टरूपं फलमिति। पदश्रुत्येति।** एतच्च वस्तुगत लिङ्गस्याप्युपलक्षणं, असाधितस्य साधनत्वासंभवादेकेनैव वाक्येन यागे कर्मत्वस्य फलनिरूपितकरणत्वस्य च युगपद्बोधने वाक्यभेदापत्त्या सामर्थ्याद्यागस्य भाव्यत्वमेव युक्तं न करणत्वमिति भावः। **सर्वत्र भाव्यत्वमिति।** सर्वत्रेतिपदेन च दर्शपूर्णमासभ्यां स्वर्गकामो यजेतेत्याद्यधिकारवाक्यानुल्लेखप्रयुक्तन्यूनतादोषः परिहृतो द्रष्टव्यः। अधिकारवाक्यमात्रस्यैवात्र विचारविषयत्वात्। यतः पदश्रुतिवस्तुसामर्थ्याभ्यां भाव्यमानो याग एवातो न स्वर्गादेर्भाव्यत्वमित्याह—**न स्वर्गादेरिति।** तथात्वे उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्यापत्तेरिति भावः। स्वर्गादेर्भाव्यत्वाभावे स्वर्गकामादिपदवैयर्थ्यं परिहर्तुमाह—**अपि त्विति।** साधनत्वे योग्यतां दर्शयति—**पश्वादेरिवेति।** चित्रया यजेत पशुकाम इत्याद्यधिकारवाक्यगतपश्वादिशब्दानां द्रव्यपरत्वमसन्दिग्धमुभयमतेऽपीति न दृष्टान्तासिद्धिः। पश्वादेरित्यत्र पशुपदं शब्दस्वरूपपरम्। **द्रव्यवाचित्वमेवेति। एतेन** प्रीतिमद्द्रव्य एव स्वर्गशब्दप्रयोगादाकृत्यधिकरणोक्तान्वयव्यतिरेकन्यायेन प्रीतेरेव वाच्यत्वं न तु

त्वमेव सुखविशेष**भोगयोग्यदेशविशेषवाचित्वग्राहकस्य न्यपरत्वाच्च। कामशब्दस्त्वार्जन-कामनानुवादः।**

---

**द्रव्यस्येत्यपास्तम्।** दण्डवत्त्वनिमित्तेन दण्ड्यादिशब्दानां दण्डमात्रानभिधानेन पुरुषवाचित्व-वत् स्वर्गादिशब्दानामपि प्रीतिनिमित्तेन सामानाधिकरण्यात् द्रव्यवाचित्वोपपत्तेः। न च चन्द-नादिषु स्वर्गशब्दो गौण इति वाच्यं, लोके मुख्यस्यार्थान्तरस्य प्रसिद्ध्यभावेनेह गौणत्वे माना-भावात्। ननु लोके प्रसिद्धोविशिष्टे देशे यस्मिन्नोष्णं न शीतं न क्षुत्तृष्णा नवाऽरतिर्न ग्लानिः पुण्यकृत एव तत्र प्रेत्य गच्छन्ति नान्ये इत्यादिना प्रसिद्धेरिति चेत्; परिहृतमेतद्भाष्यकारेण यदि तत्र केचिदमृत्वा गच्छन्ति तत आगच्छन्ति अजनित्वा ततःप्रत्यक्षो देशः एवंजातीयकः। न चानुमानाद्गम्यते। अन्ये सिद्धाः केचित् दृष्टवन्तस्ते चाख्यातवन्त इति चेन्न, तत्रापि प्रमाणा-भावात्। सिद्धा एवंजातीयकास्सन्ति ते च दृष्ट्वा आचक्षीरन्। तस्मादेवंजातीयको देश-एव नास्तीति। अथ लोकादाख्यानेभ्यो वेदाच्चावगम्यते एवंजातीयकः स्वर्ग इति चेन्न; पुरुषाणामेवंविधेन देशेन संबन्धाभावेन तद्वचसामविश्वसनीयत्वात्। पौराणिकाख्याना-मपि पुरुषप्रणीतत्वेन प्रामाण्यानिश्चयात्। वैदिकाख्यानस्य तु अविधिरूपत्वेनान्यस्तुति-परत्वे सति स्वार्थे अप्रमाण्यान्न शक्तिग्राहकत्वमित्याह—**-सुखविशेषेति। एतेन** विधिवाक्य-गतस्वर्गशब्देन प्रीतिफलत्वमवगम्यते। न च तस्याः परिमाणमुपात्तं महत्वमात्रं त्वर्थापत्त्याऽ-क्षिप्यते तद्विशेषस्तु सन्दिग्ध इति। तत्र

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

इति वाक्यशेषे संवत्सरशतादिषु नैरन्तर्येण दुःखासंपृक्तप्रीत्यनुभवत्वेन संकीर्तनात् तादृशप्रीतिपरत्वं स्वर्गशब्दस्यावगम्यते सन्दिग्धेषु वाक्यशेषादिति न्यायात्। तादृशी च प्रीतिर्न विशिष्टदेशादृते अनुभवितुं शक्येति तत्सिद्ध्यर्थं देशान्तरकल्पनमिति युक्तमेव सुख-वाचित्वं देशवाचित्वं चेति परास्तम्। सुखानुभवान्यथानुपपत्त्या तादृशदेशकल्पनायामपि तस्य स्वर्गपदवाच्यत्वे प्रमाणाभावात्। चन्दनं स्वर्ग इत्यादिसामानाधिकरण्यबलात् प्रीतिमद्द्रव्य-वाचित्वे निश्चिते स्वर्गशब्दस्य सन्दिग्धत्वाभावेनान्यपरस्यापि वाक्यशेषस्य निर्णायकत्वकल्पना-योगाच्च। अतो न सिद्धान्त्यभिमतं प्रीतिवाचित्वं स्वर्गशब्दस्य, नवा प्रीत्यनुभवान्यथनुपपत्त्यापि कल्प्यमानदेशान्तरवाचित्वं, अपि तु चन्दनादिद्रव्यपरत्वमेवेति धात्वर्थस्यैव भाव्यत्वं युक्तमिति भावः। **अर्जनकामनातुवाद इति। अयमर्थः** क्रियासाधनस्य कर्तुः क्रियाक्षेपादेव साधनभूत-

द्रव्येच्छा या प्राप्ता सा स्वर्गाख्यद्रव्यविषयतया नियम्यते। सा च दृष्टेनैव साधनोपायोपादानोपकारेण क्रियाक्षेपात् प्राप्त्या[1] तादृश्येव स्वर्गे नियता सती तं साधनतयोपपादयति। ततश्च स्वर्गकामपदेन स्वर्गस्य साधनत्वमात्रं विधीयते। कामशब्दोपात्तकामना तदुत्तरप्रत्ययोपात्तः कर्ता च प्राप्तत्वात् अनुवादमात्रमिति। न च चन्दनादिद्रव्याणां यागसाधनत्वेन विधानमयुक्तं उत्पत्तिवाक्यशिष्टपुरोडाशसोमादिद्रव्यावरोधेन तेषां विकल्पसमुच्चयाभ्यां निवेशासंभवात्, विषमशिष्टत्वेन बाधासंभवाच्चेति वाच्यम्। उत्पत्तिशिष्टेष्वेव पुरोडाशादिषु रूपरससौरभ्यादिसंपादनेन स्वर्गशब्दवाच्यत्वोपपत्तेः। स्वर्गादिशब्देन पुरोडाशातिरिक्तद्रव्याणां साधनत्वेन विधानाभावादेव बाधकाभावात्। अत्र **प्राचां** ग्रन्थेषु द्विप्रकारः पूर्वपक्षः कृतः। एकस्तावत् स्वर्गशब्दाभिधेयस्य द्रव्यस्य साधनत्वेनान्वयो भाव्यत्वं तु धात्वर्थस्यैवेति। द्वितीयस्तु स्वर्गेच्छाविशिष्टस्यैव यागे कर्तृत्वेनान्वयात् राजसूये राजत्वजातिविशिष्टस्यैव कर्तृत्वेनान्वयेनातद्विशिष्टब्राह्मणादेरनधिकारवदिहापि अतद्विशिष्टस्यानधिकार इति स्वर्गादिकामनाया अदृष्टद्वारा यागाङ्गत्वमिति। अस्मिंश्च पक्षे स्वर्गशब्देन द्रव्यमेवाभिधेयमित्यत्र नाग्रहः। अन्यतरवाचित्वेपि एकतरविशिष्टस्यैव कर्तृत्वेनान्वये बाधकाभावात्।

एवं द्विप्रकारे पूर्वपक्षे कर्मणां सर्वथा निष्फलत्वसिद्धावपि **तन्त्ररत्न**कृताप्यनन्तरोपन्यस्तपक्षात् साधनविधानपक्ष एव श्रेयान्। अस्मिन् पक्षे अदृष्टार्थत्वेन विधानात् तदपेक्षया साधनत्वविधानपक्षे दृष्टार्थत्वस्य नियमविधिलाघवस्य च लाभादित्युक्तम्। एवं सत्यपि वक्ष्यमाणसिद्धान्तयुक्तिभिः भाव्यमानफलकामनावत्पुरुषपरत्वमेव स्वर्गकामादिपदानां सुदृढं यदा तदैतदधिकरणपूर्वपक्षस्याद्यस्यासंभवापत्तेः स्वर्गकामादिपदानां भाव्यमानप्रीतिरूपस्वर्गादिफलपरत्वमेवाश्रयितुं युक्तम्। तद्वशाच्च न्यायागतं अदृष्टार्थत्वं नियमविध्यभावकृतं गौरवं चापतन्न दोषायेत्यभिप्रेत्य पूर्वपक्षात् द्वितीयं पक्षमेव युक्तं सूचयन् चरमत्वेनाह—**अथवेति**। तथा च स्वर्गादिशब्दानां द्रव्यवाचित्वात् साधनत्वेन विधानमिति पूर्वस्मात्पक्षान्न स्वर्गादिशब्दानां द्रव्यवाचित्वं येन साधनत्वेन विधानमङ्गीक्रियेत। अपि तु भाव्यमानप्रीतिवाचित्वमेवेत्येवमेव पक्षान्तरत्वेन कथ्यते। तावतापि स्वर्गादेर्नैव भाव्यत्वमिति पूर्वपक्षसिद्धौ तात्पर्यं पूज्यपादानां द्रष्टव्यम्। अन्यथा तन्त्ररत्नादिग्रन्थालोचने सति निर्युक्तिकस्यास्य पक्षस्य पूर्वमेवाभिधानौचित्येन सयुक्तिकाद्यपक्षे अस्वरसाभावे तदनन्तरत्वेनै-

1. A. प्राप्तायाः

अथ वा **स्वर्गकामशब्दः** कर्तृविशेषमेव **यागाङ्गत्वेन विदधत् विशेषणीभूतां कामनामपि तदङ्गत्वेन विधत्ते इति न कश्चिद्विरोधः। न च विधिश्रुत्यनुरोधादिष्टभाव्यकत्वावगमः।** विधेः **प्रवृत्तिजननस्वरूपयोग्यत्वस्यैव वाच्यत्वेन फलोपधाननैयत्याभावात् प्रवृत्तिविरहेऽप्यरण्यस्थदण्डवत् विधेः प्रवृत्तिजनकत्वोपपत्तेः। न हि फलोपहितप्रवृत्तिजनकत्वं विध्यर्थः, विधिशतश्रवणेऽपि केषां चित्प्रवृत्त्यदर्शनात्। अत एव प्रवृत्तिविषयस्येष्टसाधनत्वाक्षेपकत्वमपि विधेर्न प्रामाणिकः।** यदि तु **प्रवृत्तिस्वरूपयोग्यत्वमात्रोक्तौ वाक्यस्य वैयर्थ्यापत्तिरशङ्क्येत, ततो यागस्य समानपदश्रुत्या भाव्यत्वावगमेऽपि यागे भ्रमप्रमासाधारणप्रवृत्तिकारणेष्टसाधनत्वज्ञानस्यैवाक्षेपात् भ्रमात्मकेष्टसाधनताज्ञानादेव प्रवृत्तिसिद्धे-**

---

तत्पक्षोपपादनस्यासामञ्जस्यापत्तेः। **कर्तृविशेषमेवेति। यद्यपि** प्रथमतः स्वर्गकामकर्तृकयागकर्मकभावनाया एव विशिष्टाया विधानं तथापि क्रियाक्षेपात् प्राप्तेपि कर्तृसामान्ये विशेषापेक्षायां कल्प्यमानविशेषणविधिना स्वर्गकामवत्पुरुषविशेषविधानं यथा क्रियते तथैव प्राप्ताप्राप्तविवेकेन पुरुषनिष्ठस्वर्गकामनामात्रस्यैव विधानं लोहितोष्णीषादिवदङ्गीक्रियते। अर्थाच्च स्वर्गकामनारूपे विशेषणे एव विधिशक्तिसङ्क्रमात् कामपदोत्तरप्रथमोपात्तपुरुषांशे अनुवाद एव। अत एवैकादशाद्ये भाष्यकारो वक्ष्यति "स्वर्गकामादिशब्दा हि पुरुषवचनतया पुरुषस्यैव क्रियासंवन्धं प्रतिपादयन्तोऽपि न तत्पराः किं तु तदनुवादेन लोहितोष्णीषादिवत् विशेषणपरा" इति। अतो युक्तमेव कर्तृविशेषविधानद्वारा कामनाया अप्यङ्गत्वेन विधानमिति भावः। ननु विधेः प्रवृत्त्यनुकूलव्यापारवाचिनः प्रवर्तकत्वमफलेऽपुरुषार्थे प्रवृत्त्ययोगेन न संभवतीत्यगत्या प्रवृत्तिविषयस्येष्टभाव्यकत्वाक्षेपकत्वमावश्यकमेव, न च दुःखाकरस्य यागस्य तत्संभवतीत्यवश्यमिष्टभाव्यान्तरकल्पनमापद्यते इत्याशङ्कते—**न चेति।** समाधत्ते—**विधेरिति।** अफले कर्मणि प्रवृत्त्यभावेपि प्रवृत्तिजननस्वरूपयोग्यतयैव विधेः प्रवर्तकत्वोपपत्त्या इष्टभाव्यत्वाक्षेपकत्वमेव दूरापास्तम्। न च विधेरप्रामाण्यापत्तिः प्रवर्तनाबोधकत्वमात्रेणैव प्रामाण्यस्वीकारे बाधकाभावात्। फलसाधनत्वानवबोधात् धर्मे प्रामाण्यं न स्यात् इति तु पूर्वपक्षवादिनः इष्टमेवेति भावः। अत्र शास्त्रदीपिकायां अफले कर्मणि प्रवृत्त्यभावे विधेः प्रवर्तकत्वायोगात् व्यर्थ एव विधिरिति विधिवैयर्थ्यापादनपर्यन्तमेवाधिकरणपूर्वपक्षसमाप्तिः कृता। तत्र वैयर्थ्यं परिहृत्यापि पूर्वपक्षसिद्धिं दर्शयति—**यदि त्विति।** विधिना हि स्वप्रवर्तकत्वनिर्वाहाय स्वविषये नेष्टसाधनत्वमाक्षिप्यते किन्तु धात्वर्थस्य न्यायावगतभाव्यत्वानुरोधेन तस्मिन्निष्टसाधनत्वज्ञानं भ्रमप्रमासाधारणमनुमित्यात्मकमेव जन्यते। तथा च इष्टसाधनत्वस्य वस्तु-

नेष्टसाधनत्वाक्षेपकत्वम्। अथवाऽस्तु 'स्त्रीकामः प्रायश्चित्तं कुर्यात्' इतिवत् स्वर्गकामनाया अपि निमित्तत्वम्। ततश्च निमित्ते नैमित्तिकाकरणे प्रत्यवायमात्रं न तु करणे किञ्चिदिष्टम्। अकरणे प्रत्यवायभियैव च पुरुषप्रवृत्तिसिद्धेर्न विधिवैयर्थ्यमपि। सर्वथा यागस्यैव भाव्यत्वेनेष्टसाधनत्वाभावात् न प्रवृत्तिप्रयोजकप्रवृत्तिविषयजन्यफलेच्छासमानाधिकरणकर्तृत्वरूपाधिकारसिद्धिरिति प्राप्ते—

न प्रवृत्तिस्वरूपयोग्यत्वमात्रं विध्यर्थः वैयर्थ्यापत्तेः। नापीष्टसाधनत्वानुमितेर्भ्रमत्वं ज्ञानानां स्वतः प्रमाणत्वेन बाधकं विना भ्रमत्वानुपपत्तेः, अतश्चोत्सर्गसिद्धप्रमात्वनिर्वाहार्थं यागे इष्टसाधनत्वं विषयोऽपि वक्तव्य एवेति भाव्यत्वेनेष्टभाव्यकत्वं अनपभ्रष्टमेव। यदपि कामनाया निमित्तत्वमङ्गीकृत्य विधेरकरणजन्यप्रत्यवायाक्षेपकत्वेन प्रवर्तकत्व-

---

तोऽभावान्न प्रमात्मकेष्टसाधनताज्ञानादुत्पत्स्यत एव प्रवृत्तिरिति विधेः प्रवर्तकत्वाक्षतेर्न विधिविषयस्येष्टसाधनत्वाक्षेपकत्वं येन यागातिरिक्तफलं कल्प्येतेति भावः॥ प्रवृत्तिस्वरूपयोग्यत्वमात्रोक्तावित्यत्र मूले प्रवृत्तिपदादग्रे जननपदं प्रक्षेप्तव्यम्। पक्षान्तरेणेष्टफलसिद्धिं द्रढयति—अथ वेति। स्त्री कामवाक्ये च स्त्री परकीया द्रष्टव्या। वैयर्थ्यापत्तेरिति। आख्यातोपात्ता भावना तावत् स्वभावादेव भाव्यमात्राविनाभूता सती भाव्यविशेषमपेक्षमाणा पदश्रुत्या यागंभाव्यत्वेन गृह्णीयात् यदि पुरुषार्थत्वेन भाव्यकाङ्क्षिणी न भवेत्। यागान्वयात् पूर्वमेव समानाभिधानश्रुत्या चेतनप्रवर्तनात्मकविध्यन्विता सती यत्किञ्चित्पुरुषार्थभाव्यविशेषमपेक्षितं स्वर्गकामादिशब्दैरेव स्वर्गपश्वादिरूपं पूरयितुं शक्यं न यज्यादिशब्देन, तदर्थस्यापुरुषार्थत्वात्। यदि तु प्रवृत्तिजननस्वरूपयोग्यत्वमात्रं प्रवर्तनासामान्यं विधिप्रत्ययार्थः तदा वैयर्थ्यं स्फुटमेवेति भावः। बाधकं विनेति। बाधकं हि द्वेधा भवति विषयस्य याथार्थ्याभावेनोत्तरकालमपरं जायमानं ज्ञानमेव पूर्वज्ञानस्य भ्रमतानिश्चायकं, यथा-नेदं रजतमिति, यथा वा शङ्खादौ श्वैत्यनिश्चयेऽपि चक्षुर्निष्ठकामलादिदोषेण पूर्वं जातस्य शङ्खनिष्ठपीतिमज्ञानस्य भ्रमतानिश्चयोऽपरः। न ह्यत्रोभयविधं बाधकमस्ति यागे इष्टसाधनत्वस्याबाधात्, वेदस्य विश्वसनीयत्वाच्च। अतो निर्दोषात् वेदाज्जायमानं इष्टसाधनत्वज्ञानं प्रमात्मकमेवेत्यवश्यं यागे इष्टसाधनत्वं वास्तवं बोधयन् विधिरेव स्वप्रवर्तकत्वानुपपत्त्या यागातिरिक्तपुरुषार्थेष्टफलान्तरसद्भावं गमयतीति भावः। ननु काम्यस्थले अकरणेप्रत्यवायाक्षेपकत्वापेक्षया लाघवादिष्टसाधनत्वमात्रमेवाक्षिप्यतां, नैमित्तिकस्थले तु निमित्तत्वानुरोधेनाकरणे प्रत्यवायाक्षेपकत्वस्यावश्यकत्वादकरणे प्रत्यवायजनकत्वमेव कल्प्यतां; न तु करणस्य पापक्षयजनकत्वमित्या-

अथ वा स्वर्गकामशब्दः कर्तृविशेषमेव यागाङ्गत्वेन विदधत् विशेषणीभूतां कामनामपि तदङ्गत्वेन विधत्ते इति न कश्चिद्विरोधः। न च विधिश्रुत्यनुरोधादिष्टभाव्यकत्वावगमः। विधेः प्रवृत्तिजननस्वरूपयोग्यत्वस्यैव वाच्यत्वेन फलोपधाननैयत्याभावात् प्रवृत्तिविरहेऽप्यरण्यस्थदण्डवत् विधेः प्रवृत्तिजनकत्वोपपत्तेः। न हि फलोपहितप्रवृत्तिजनकत्वं विध्यर्थः, विधिशतश्रवणेऽपि केषां चित्प्रवृत्त्यदर्शनात्। अत एव प्रवृत्तिविषयस्येष्टसाधनत्वाक्षेपकत्वमपि विधेर्न प्रामाणिकम्। यदि तु प्रवृत्तिस्वरूपयोग्यत्वमात्रोक्तौ वाक्यस्य वैयर्थ्यापत्तिरशङ्क्येत, ततो यागस्य समानपदश्रुत्या भाव्यत्वावगमेऽपि यागे भ्रमप्रमासाधारणप्रवृत्तिकारणेष्टसाधनत्वज्ञानस्यैवाक्षेपात् भ्रमात्मकेष्टसाधनताज्ञानादेव प्रवृत्तिसिद्धे-

---

तत्पक्षोपपादनस्यासामञ्जस्यापत्तेः। कर्तृविशेषमेवेति। यद्यपि प्रथमतः स्वर्गकामकर्तृकयागकर्मकभावनाया एव विशिष्टाया विधानं तथापि क्रियाक्षेपात् प्राप्तेपि कर्तृसामान्ये विशेषापेक्षायां कल्प्यमानविशेषणविधिना स्वर्गकामवत्पुरुषविशेषविधानं यथा क्रियते तथैव प्राप्ताप्राप्तविवेकेन पुरुषनिष्ठस्वर्गकामनामात्रस्यैव विधानं लोहितोष्णीषादिवदङ्गीक्रियते। अर्थाच्च स्वर्गकामनारूपे विशेषणे एव विधिशक्तिसङ्क्रमात् कामपदोत्तरप्रथमोपात्तपुरुषांशे अनुवाद एव। अत एवैकादशाद्ये भाष्यकारो वक्ष्यति "स्वर्गकामादिशब्दा हि पुरुषवचनतया पुरुषस्यैव क्रियासंबन्धं प्रतिपादयन्तोऽपि न तत्पराः किं तु तदनुवादेन लोहितोष्णीषादिवत् विशेषणपराः" इति। अतो युक्तमेव कर्तृविशेषविधानद्वारा कामनाया अप्यङ्गत्वेन विधानमिति भावः। ननु विधेः प्रवृत्त्यनुकूलव्यापारवाचिनः प्रवर्तकत्वमफलेऽपुरुषार्थे प्रवृत्त्ययोगेन न संभवतीत्यगत्या प्रवृत्तिविषयस्येष्टभाव्यकत्वाक्षेपकत्वमावश्यकमेव, न च दुःखाकरस्य यागस्य तत्संभवतीत्यवश्यमिष्टभाव्यान्तरकल्पनमापद्यते इत्याशङ्कते—न चेति। समाधत्ते—विधेरिति। अफले कर्मणि प्रवृत्त्यभावेपि प्रवृत्तिजननस्वरूपयोग्यतयैव विधेः प्रवर्तकत्वोपपत्त्या इष्टभाव्यत्वाक्षेपकत्वमेव दूरापास्तम्। न च विधेरप्रामाण्यापत्तिः प्रवर्तनाबोधकत्वमात्रेणैव प्रामाण्यस्वीकारे बाधकाभावात्। फलसाधनत्वानवबोधात् धर्मे प्रामाण्यं न स्यात इति तु पूर्वपक्षवादिनः इष्टमेवेति भावः। अत्र शास्त्रदीपिकायां अफले कर्मणि प्रवृत्त्यभावे विधेः प्रवर्तकत्वायोगात् व्यर्थ एव विधिरिति विधिवैयर्थ्यापादनपर्यन्तमेवाधिकरणपूर्वपक्षसमाप्तिः कृता। तत्र वैयर्थ्यं परिहृत्यापि पूर्वपक्षसिद्धिं दर्शयति—यदि त्विति। विधिना हि स्वप्रवर्तकत्वनिर्वाहाय स्वविषये नेष्टसाधनत्वमाक्षिप्यते किन्तु धात्वर्थस्य न्यायावगतभाव्यत्वानुरोधेन तस्मिन्निष्टसाधनत्वज्ञानं भ्रमप्रमासाधारणमनुमित्यात्मकमेव जन्यते। तथा च इष्टसाधनत्वस्य वस्तु-

पादयिष्यते। इतरथा स्वर्गपश्वादिपदानां द्रव्यपरत्वाङ्गीकारेण तदर्जनकामनापरत्वे कामपदोपादानवैयर्थ्यापत्तिः। द्रव्यादिविषये कामपदोच्चारणमन्तरेणापि कामनाया अर्थलभ्यत्वात्। फलपरत्वे तु कामशब्दो यदि नोच्चार्येत ततः पशवोऽस्याभिप्रेताः समीहिता इति नैव विज्ञायेतेत्यवश्यं पश्वादीनां साध्यत्वप्रतिपादनार्थं तदावश्यकम्। किं च द्रव्यपरत्वे उत्पत्तिशिष्टपुरोडाशादिकरणत्वादिबाधापत्तिः। न च रूपरससौरभ्यादिसम्पादनेन तेषामेव स्वर्गता सम्पादनेनाविरोध इति युक्तं, तव मते स्वर्गशब्दस्य द्रव्यवाचित्वेन तस्यैव पुरोडाशादेः पुनर्विधानायोगेन द्रव्यान्तरस्यैव विधानापत्त्या विरोधस्य दुष्परिहरत्वात्। न हि तव स्वर्गादिशब्दस्य प्रीतिमद्द्रव्यवाचित्वं येन विशेष्यस्य पुरोडाशादेः प्राप्तत्वात् दण्डीप्रैषानितिवत् विशेषणपरतास्वीकारेण विशेष्ये द्रव्ये प्रीतिमात्रविधायकत्वेन पुनर्विधानं सार्थकमुच्येत। प्रकृतिप्रत्ययविशिष्टेन दण्डिशब्देन विशिष्टार्थाभिधानेपि स्वर्गशब्देन तत्स्थां प्रीतिं निमित्तीकृत्य द्रव्यमात्रस्यैव चन्दनादेरभिधानेनाशब्दार्थप्रीतेरविशेषणीभूताया: विधानायोगात्। अतो द्रव्यविशिष्टदर्शपूर्णमाससंज्ञककर्मान्तरविधाने विशिष्टविधिगौरवसन्निधिबाधयोरापत्तेः फलान्तरकल्पनाप्रसङ्गाच्च सन्निहितयागोद्देशेन द्रव्यविधानापेक्षया अन्योद्देशेन धात्वर्थविधाने द्वितीयविधिप्रकारलाभाच्चापेक्षितस्वर्गाद्याख्यभाव्यपरत्वमेव स्वर्गकामादिपदानामिति तदुद्देशेनैव कर्मणो विधानमिति।

अत्र च यागातिरिक्तस्वर्गादिभाव्यसद्भावेऽपि न तावत् स्वर्गकामो यागं कुर्यादित्यापाततः प्रतीयमानो वाक्यार्थः असम्बद्धत्वात्। तदुक्तं **भाष्यकारेण**, यस्य स्वर्ग इष्टः स्यात् स यागं निर्वर्तयेदित्यसम्बन्धमिवान्यदिच्छत्यन्यत् करोति, इति। अतः काम्यमानत्वेन साध्ये स्वर्गादावपेक्षितं साधनविधानं तस्मिन् वाक्यार्थः उपपद्यते। न च काष्ठान्याहर्तुकामोऽरण्यं गच्छेदिति वाक्यादरण्यगमनकाष्ठाहरणयोः साध्यसाधनप्रतीतिवदिहापि स्वर्गयागयोस्तत्प्रतीतिरुपपद्यत एवेति वाच्यं; अरण्यगमने काष्ठाहरणजनकत्वस्य प्रत्यक्षप्रमाणसिद्धत्वेन तत्र तत्प्रतीतावपि इह प्रमाणान्तरागोचरशब्दैकप्रमाणकसाध्यसाधनभावस्य शब्दमन्तरेण कल्पनायां प्रमाणाभावात्। न च स्वर्गकामस्य यागसाधनवैयर्थ्यानुपपत्त्या अर्थाद्यागस्वर्गयोस्साध्यसाधनभावप्रतीतिरिति युक्तम्। अनर्थकत्वप्रसङ्गमात्रात् प्रमाणमन्तरेण यागस्य फलार्थत्वकल्पने प्रमाणाभावात्। न हि दिधक्षोरुदकोपादानमसति दाहेऽनर्थकमित्युदकोपादानस्य दाहार्थत्वं शक्यं कल्पयितुम्। अतो यथाश्रुते वाक्यार्थे यागस्वर्गयोः साध्यसाधनभावप्रतीत्यसिद्धेर्द्वेधा प्राचीनैरत्र वाक्यार्थ उपवर्णितः। प्रत्ययोपात्तां स्वर्गकामनिष्ठां भावनामनूद्य प्रकृत्यर्थो यागः

सित्युक्तं, तन्न—कामनायाः प्रवृत्तिजनकत्वेऽपि निमित्तत्वे प्रमाणाभावात्। 'स्त्रीकामः' इत्यादावपि न तस्याः निमित्तत्वं प्रायश्चित्ताकरणे प्रत्यवायान्तरप्रसङ्गात्। अपि तु प्रमाणान्तरसिद्धकामनाजनितप्रत्यवायनाशार्थत्वमेवेति तत्रापीष्टसाधनत्वाक्षेपकत्वमेव विधेः। अत एव सर्वत्र अनैमित्तिकस्थले अकरणे प्रत्यवायाक्षेपकत्वापेक्षया लाघवादिष्टसाधनत्वमेव विधिनाऽऽक्षिप्यते इति तद्वशाद्भावनाया इष्टभाव्यकत्वसिद्धिः। यथा चैवं सति नैमित्तिकस्थले पापक्षयभाव्यकत्वं तथा यावज्जीवाधिकरणे निरूपितम्। तच्चेष्टं स्वर्गपुत्रादि स्वर्गकामादिपदैस्समर्प्यते योग्यत्वात् कामशब्दयोगाच्च। कामनाहि

---

शङ्कानिराकरणायाह—यथा चैवमिति। यावज्जीवाधिकरण इति। यद्यपि प्राभाकरमते अकरणस्याथवा निमित्तसमानकालीनान्यकरणस्य प्रत्यवायजनकत्वं तथापि प्रत्ययवाच्यभावनाया भाव्याकाङ्क्षा फलविशेषान्वयं विना नैव शाम्यतीत्यवश्यं करणफलं कल्पनीयमेव। तत्रापि न्यायसुधाकाररीत्या अकरणनिमित्तप्रत्यवायप्रागभावपरिपालनरूपं यदि कल्प्येत तदा तस्य प्रागभावस्याजन्यत्वान्न तत्फलत्वमित्यतो 'धर्मेण पापमपनुदति' 'यद्राज्या पापमकार्ष' इत्यादिवचनावगतपापक्षयस्यैव तत्कल्पनं युक्तमिति तदधिकरणे उपपादितमिति भावः। एवं सतीष्टसामान्यभाव्यकाया भावनाया विशेषाकाङ्क्षोपशामकत्वेनापेक्षितः इष्टविशेष एव श्रुतैरध्याहृतैर्वा फलविशेषप्रतिपादकैः स्वर्गकामादिपदैः समर्पयितुमुचितः प्रधानाकाङ्क्षयाऽन्वीयमानार्थपरत्वस्याभ्यर्हितत्वादित्यभिप्रेत्याह—तच्चेष्टमिति। कामना हीति।

अयमर्थः स्वर्गकामवाक्ये तावत् स्वर्गशब्दो न द्रव्यवचनः क्षणभङ्गुरे अल्पद्रव्यसाध्ये अनियतप्रीतिविषये द्रव्यादौ स्वर्गपदव्यवहारस्य केषामप्यभावात्। अत एव स्वर्गशब्दश्चानुभूयमानं सुखं मे भूयादित्येवोत्कटेच्छा विदुषामिति व्यवहाराविरोधिवैदिकवाक्यशेषादिना अन्वयव्यतिरेकाच्च प्रीतिवचन एव। प्रीत्यै च सर्वो हि पुरुषो यतते, न तु तामन्यार्थं कश्चिदनुमन्यते। अतः प्रीतिस्तावत् साध्यैव वस्तुसामर्थ्यात् यदेव च साध्यं तदेव हि पुरुषेण काम्यते मुख्यतया तत्सिद्धये च तत्साधनमिति कामपदमपि मुख्यार्थं भवति। पशुकामवाक्ये तु यद्यपि स्वर्गशब्दवत् पशुकामादिशब्दानां न प्रीतिवाचित्वं येन साध्यतयैव काम्यतोपपाद्येत, तथापि पुरुषार्थत्वेनेप्सिततमस्यैव मुख्यतया काम्यमानत्वादसति बाधकप्रमाणे तत्त्यागेन तत्साधनयागसाधनद्रव्यविषयगौणकामनापरत्वाङ्गीकारे प्रमाणाभावात्तेषां कामपदोपात्तानां फलत्वमेव युक्तमाश्रयितुम्। एवं च योग्यतया कामपदोपात्तत्वेन स्वर्गादीनां भाव्यत्वेपि यागस्यापि तत्स्वीकारे, वाक्यभेदापत्तेः करणत्वमेवेत्यनुपदमेवोप-

**द्वितीयान्तपदाध्याहारेण तदन्वय इति केचित्। तन्न—फलापेक्षायाः** प्राथमिकत्वात् **लक्षणाया अध्याहारापेक्षया लघुत्वाच्च। एवं च बलवत्तरविधिश्रुत्याद्यनुरोधेन स्वर्गादेरेव**

---

स्तद्वतः पुरुषस्य कर्तृत्वेनार्थात्प्राप्तेरविशेषकरं स्वर्गकामादिपदं व्यर्थं सत् विशेषणभूतस्वर्गपरमेव लक्षणयाङ्गीकृत्य भाव्यविशेषसमर्पकमेव। तथा च स्वर्गभाव्यिकायां भावनायां परिशेषात् योग्यतया यागस्य करणत्वेनान्वयात् यागेन स्वर्गं कुर्यादित्यर्थे स्वर्गमात्रस्यैवोद्देश्यत्वं यागानुरक्ताया भावनायाश्च विधानेन तमिति शब्दत एव साध्यसाधनभावप्रतीतिस्सुलभैवेति। अत्र **भाष्यवार्तिकतन्त्ररत्नादौ** प्रत्ययार्थभावनाया अनुवाद्यत्वमुक्तमपि स्वर्गमात्रस्यैव लक्षणयोद्देश्यत्वोक्त्या अयुक्तमिति सूचितमपि अत्रैव द्वितीयाधिकरणे निराकरिष्यत इति। **यत्तु मतं** स्वर्गमिति द्वितीयान्तपदाध्याहारेण तदन्वय इति तन्निरस्यति—**तन्नेति। प्राथमिकत्वादिति। अयमर्थः**—यदि इष्टविशेषान्वयात् पूर्वमेव स्वर्गकामस्याधिकारित्वेनान्वयः तदा स्वर्गकामो यागेनेष्टं भावयेदिति प्रथमबोधे स्वर्गातिरिक्तेष्टस्यैव भाव्यत्वावगतेस्तद्वाचकपदान्तरस्यैव विशेषबोधायाध्याहारापत्तिः। यदि तु प्रथमतः इष्टसामान्यावगतावेतद्विशेषाकाङ्क्षोपशमनाय द्वितीयान्तस्वर्गपदाध्याहारेण स्वर्गरूपविशेषस्य भाव्यत्वान्वयोत्तरं स्वर्गकामस्याधिकारित्वेनान्वयः स्वीक्रियते यागेन स्वर्गं भावयेत् स्वर्गकाम इति तदा स्वर्गकामपदस्य वैयर्थ्यम्। अतः करोत्यर्थभूतायाः प्रत्ययोपात्ताया भावनाया नित्यं सकर्मिकायाः प्रथमतः कर्मविशेषाकाङ्क्षैव स्वारस्यादुत्पद्यमाना कर्मविशेषान्वयं विना नैवोपशाम्यतीति कर्मविशेषसम्बन्धार्थं स्वर्गकामपदस्यैव लक्षणया स्वर्गविशेषपरत्वं युक्तम्। न हि भावयेदित्यनन्तरं किमित्यकाङ्क्षोदयवत् कः केन कुत्रेत्याकाङ्क्षा उदेति येनेतरकारकाणां कर्मान्वयात् पूर्वमेवान्वयः स्वीक्रियेतेति। दूषणान्तरमप्याह—**लक्षणाया इति।** अधिकरणार्थमुपसंहरति—**एवं चेति।** यागस्याभाव्यत्वे यदि पदश्रुतिलिङ्गयोरस्ति विरोधः तदा ततोऽपि बलीयस्या समानाभिधानश्रुत्या तयोर्बाध एव युक्त इति स्वर्गादीनामेव भाव्यत्वम्। **वस्तुतस्तु** विरोध एव नास्ति। पदश्रुत्या हि प्रकृत्यर्थस्य प्रत्ययार्थेनान्वयमात्रं प्रमितं न तद्गतं भाव्यत्वमपि। ततश्च भावनापेक्षितत्र्यंशमध्ये पुरुषार्थत्वात् स्वर्गादिना किमंशे पूरितेऽर्थादपेक्षितकरणांशपूरकत्वेन योग्यतया यागस्य करणत्वेनान्वयेनापि समानाभिधानश्रुत्यविरोधेन पदश्रुतेरुपपत्तेरिति बाधाबाधप्रयोजकौ विरोधा-

**भाव्यत्वावगतेस्सामान्यप्रवृत्ता पदश्रुतिरपि यागादेः करणत्वमेव** लक्षणया **प्रतिपादयतीति सिद्धः उक्ताधिकारः। अत्र चोक्तविधेच्छाफलान्यतरसमानाधिकरणं कर्तृत्वमधिकार इति बोध्यम्। तेन नित्यस्थले पापक्षयेच्छायाः प्रवृत्तिप्रयोजकत्वाभावेऽपि नाधिकार-विघातः॥ १॥**

---

विरोधौ **बलवत्तरसामान्यप्रवृ**त्तेति पदाभ्यां सूचितौ। **लक्षणया प्रतिपादयतीति**। यद्यपि यागस्य करणत्वसम्बन्धेनैव भावनायामन्वयान्न करणत्वबोधार्थं लक्षणापेक्षा। अत एव यागस्वर्गगतकरणत्वकर्मत्वबोधयोर्नृत्यनपेक्षत्वमभिप्रेत्यैव समाहितं वार्तिककृता "यद्यपि यागे तृतीया न श्रुता नापि स्वर्गे द्वितीया तथापि स्वर्गस्य स्वरसादेव भाव्यत्वात् परिशेषाद्यागस्य करणता।

न कर्मकरणत्वे हि विभक्ती सन्नियच्छतः।
प्रमाणान्तरगम्ये ते तद्विरुद्धं न किंचन॥"

इति।

**तथापि** प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति स्मृतिवशाद्यजेतेत्येकपद-श्रुतेर्यागविशिष्टभावनाप्रतिपादकत्वेऽपि भावनागतकेनेत्याकाङ्क्षायाः केवलं यागवैशिष्ट्यमात्रेणा-नुपशमात् तदुपशमनार्थं यागकरणत्वस्य विशेषतो बोध आवश्यक इति तदर्थं करणत्वलक्षणा आवश्यिकीत्यभिप्रायेणेदं बोध्यम्। एवमेव कामपदोत्तरप्रथमाया अपि कर्मत्वलक्षणोपपादनं द्रष्टव्यम्। करणत्वमेवेत्येवकारेण चासतः करणत्वानुपपत्तेः सामर्थ्याद्यागस्यैव भाव्यत्वमिति शङ्का निरस्ता वेदितव्या। स्वरूपेण सतोऽपि परश्वादेः पुरुषव्यापारव्याप्यत्वेनैव द्वैधीभावकरणत्व-वदसतोपि यागस्य पुरुषव्यापारनिष्पन्नस्यापूर्वद्वारा करणत्वोपपत्तेः। तथा च करणत्वेन श्रुतस्यापि यागस्यासाधितस्य करणत्वानुपपत्तेः अर्थाक्षिप्तं साध्यत्वमपीति न कश्चिद्विरोधः। ननु पूर्वोक्ताधिकारलक्षणं नैमित्तिकाधिकारेऽव्याप्तं तत्र निमित्तस्यैव प्रवृत्तिप्रयोजकत्वेन पापक्षये-च्छायाः प्रवृत्तिप्रयोजकत्वाभावेन प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणकर्तृत्वाभावादित्या-शङ्कां सिंहावलोकनन्यायेन परिहरति—**अत्र चोक्तविधेति**।

---

(२)—फलार्थत्वात् कर्मणश्शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥ कर्तुर्वा श्रुतिसंयोगात् विधिः कार्त्स्न्येन गम्यते ॥ ५ ॥

सिद्धे अधिकारे स केषामिति चिन्त्यते। तत्र स्वर्गकामत्वाविशेषाच्चेतनमात्रस्याधिकारः। न च तिरश्चां स्वर्गादिकामनाऽसम्भवः, परकीयेच्छाया अप्रत्यक्षत्वेन तदभावनिश्चयानुपपत्तेः। श्येनादीनामष्टम्युपवासादिदर्शनेन तदनुमानाच्च। न च साङ्गकरणासामर्थ्यादनधिकारः, शक्यमात्रस्यैव करणोपपत्तेरिति प्राप्ते—

भावनाया अंशत्रयान्वयोत्तरं पश्चाद्विधिबलेनाधिकारिकल्पनात् पूर्वावगतसाङ्गप्रधानानुष्ठानसमर्थ एवाधिकारी अतश्चासमर्थत्वादविद्वत्वादद्रव्यत्वान्न तिरश्चामधिकारः।

---

॥ फलार्थत्वात् कर्मणाम् ॥

शक्यमात्रस्यैवेति। अयमर्थः—यथैव प्रवर्तनात्मकस्य विधेः स्वविषयस्य कर्तृसमीहितसाधनत्वाक्षेपकत्वं तथैव स्वविषयस्य कृतिसाध्यत्वाक्षेपकत्वमपि असमीहितसाधन इवाकृतिसाध्येपि प्रवर्तनानुपपत्तेः। अतश्च स्वर्गकामो यजेतेति प्रधानवाक्येनाविशेषेण स्वर्गकामनावन्मात्रस्यैव फलसाधनं शक्यं च कर्म प्रतिपादितं सर्वाधिकारमवग[illegible]। सद्यथाधिकारमेवाङ्गानि गृह्णाति पङ्गुं प्रति विष्णुक्रमणरहितं अन्धं प्रति आज्यावेक्षणरहितं इत्यादि। इतरथा पङ्ग्वादेर्विष्णुक्रमणादिविशिष्टस्याशक्यत्वेन फलसाधनत्वाभावात्। प्रधानवाक्यावगतः सर्वेषां शक्यकर्मण्यधिकारः। यद्यपि तिरश्चां पशूनां च लौकिकानपादिनिवृत्तिरूपदृष्टफलार्थित्वसम्भवेपि वेदाध्ययनाभावे आमुष्मिकफलस्वरूपस्यैवाज्ञानान्नामुष्मिकफलार्थित्वं सम्भवति तथापि अष्टमीचतुर्दश्युपवासादिकर्मणो नियमेनानुष्ठानदर्शनेन फलेच्छामन्तरेण तत्प्रवृत्त्ययोगात् फलकामनावत्त्वमनुमानेन शक्यत एव निश्चेतुमिति। नाज्यावेक्षणादि पुरुषं प्रति शेषः येन यस्मिन् कर्तरि यदङ्गं योग्यतामापद्यते तं प्रत्येव तदङ्गमिति कल्प्येत प्रकरणादिना तु तेषामितिकर्तव्यताकाङ्क्षयाऽमङ्गत्वेन बोधनात् प्रथमतः साध्यसाधनेतिकर्तव्यतान्वितभावनास्वरूपप्रतिपादनोत्तरमेव तत्राधिकारजिज्ञासायां तद्विधायकेन विधिना प्रागवगतसाङ्गकर्मानुष्ठानसमर्थानामेवाधिकारबोधनाद्यथाविनियोगमेवाधिकार इति न फलकामानामपि तदसमर्थानां नियोज्यत्वमित्यभिप्रेत्य सिद्धान्तमाह—**भावनाया इति**। अत एव यत्र प्रधानवाक्यविरोधस्तत्र सर्वाङ्गोपसंहारासमर्थस्याप्यधिकारो यथा यावज्जीवचोदनाविहिते। तत्र यथाशक्तिप्रयोगादपि फलं वक्ष्यते। प्रकृते तु प्रधानवाक्यविरोधाभावात् सर्वानुष्ठानसमर्थस्यैवाधिकार इत्यर्थः। **अतश्चासमर्थत्वादिति**। तिरश्चामविद्वत्त्वं प्रसिद्धमेव असामर्थ्यमपि मन्त्रपाठादिपूर्वकदेवता-

**विष्णुक्रमणाद्यसमर्थत्वाच्च न पङ्ग्वन्धबधिरमूकादीनाम्। देवादीनां तु** विग्रहाद्यभावादेव **नाधिकारः। ऋष्यादीनां तु अनादित्वात्संसारस्य प्रवरवरणादौ ऋष्यन्तरस्यापि सम्भवा-द्धिकारोऽस्त्येवेति भाष्योक्तमनधिकारप्रतिपादनम**नादरणीयम्॥ २॥

---

वाचकशब्दोच्चारणकालीनद्रव्यत्यागादेरसंभावात्। **अद्रव्यत्वादिति**। यस्तु हस्तिग्रामो देव-ग्राम इत्यादिव्यवहारः स त्वौपचारिक एवेत्यर्थः। **विष्णुक्रमणाद्यसमर्थत्वाच्चेति**। पङ्ग्वादि-कर्तृकप्रयोगे विष्णुक्रमणाद्यङ्गाभावेन विगुणात् क्रतोः फलस्यैवानुत्पत्तौ न फलस्वाम्यापर-पर्यायोऽधिकारस्तेषां सम्भवतीति मनुष्येष्वन्धादीनां नाधिकार इत्यर्थः। अत्र देवादीनाम-नधिकारसाधनाय भाष्यकारोक्तं 'न देवानां देवतान्तराभावात् न ह्यात्मानमुद्दिश्य त्यागस्सम्भवति त्याग एवासौ न स्यात्' इति तदेतद्भाष्योक्तं शब्ददेवतात्वपक्षे देवानामधिकारो दर्शित इव भाति। तन्निराकर्तुं शब्दस्य देवतात्वाङ्गीकारेप्यर्थदेवतात्वपक्ष इव देवानामनधिकारे साधारणहेतुमाह— **विग्रहाद्यभावाच्चेति। अयं भावः** यथैव हि ऋषीणामार्षेयाभावान्न भृग्वादयो भृग्वादिसगोत्रा भवन्तीत्यृषीणामनधिकारप्रतिपादनपरं भाष्यमयुक्तम्, कुतः? अनादिः कालोऽस्माकं मीमांसकानां तेन भृगोरपि पूर्वं भृग्वन्तरसम्भवात् ततः पूर्वमप्येवमेवेति सम्भवत्येव भृगोर्भार्गवत्वमित्यस्त्येव ऋषीणामप्यधिकार इत्युक्तं तन्त्ररत्नकृता। तथैवार्थस्य देवतात्वपक्षेपि अनादित्वात्संसारस्य देवता-न्तरस्येन्द्रादेरपि सम्भवेन तदुद्देशेन हविस्त्यागस्य कर्तुं शक्यत्वाद्देवतान्तराभावादित्यादिभाष्य-स्यायुक्तत्वं दुष्परिहरमेव। तस्मादुभयपक्षेऽपि भाष्यानुपपत्तौ स्फुटायामन्यतरदेवतात्वपक्षेपि विग्रहाद्यभावेनैवानधिकारप्रसाधनं देवानां युक्तं, यथा वाऽर्थस्य चेतनस्याचेतनस्य वा विद्यमान-त्वेपि न तस्य विग्रहादिमत्त्वं न वा देवतात्वं किन्तु शब्दस्यैव देवतात्वं तथोपपादयिष्यते विस्तरेण **नवमे देवताधिकरणे**। **एतेन** शब्ददेवतात्वपक्षेऽप्यत्रत्यतन्त्ररत्नग्रन्थाद्देवादीना-मापाततो भासमानं विग्रहादिमत्त्वं **निरस्तं** वेदितव्यम्। भाष्यमपि कथञ्चित्सम्भवार्थमेतद-भिप्रायेणैव **योज्यम्**। यदा देवादीनां तत्तत्प्रमाणप्रमितविग्रहस्वीकारेपि देवतात्वं शब्दस्यैवेति मतं तदापि ब्राह्मणत्वादिजातौ मानाभावात्तत्प्रयुक्ताभिविद्ययोरसम्भावाद्देवानभिकारस्तिरश्चामिवेत्यादि-पदेन सूचितम्। **अनादर्तव्यमिति**। एतच्च **तन्त्ररत्नकाराद्यनुरोधेनोक्तम्**॥ **वस्तुतस्तु**— देवादिविग्रहप्रतिपादकेतिहासार्थवादादीनामिव ऋष्यादिविग्रहप्रतिपादकानामपि तेषां स्वार्थ-परत्वतात्पर्यकल्पने प्रमाणाभावाद्विग्रहाद्यभावेनैव तेषामनधिकारो भाष्यारूढो युक्त एवेति ध्येयम्। अत्राधिकरणविचारप्रयोजनस्य पूर्वपक्षसिद्धान्तपक्षोपपादनेनैव स्पष्टमुपलब्धेर्न पृथक् प्रदर्शनं कृतम्। किंचास्मिन् पक्षे विश्वसृजामयने सहस्रसंवत्सरसाध्ये दिवसकल्पना नापद्येत

(३)—लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥ ७ ॥ जातिं तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ ॥ चोदितत्वाद्यथाश्रुति ॥ ९ ॥ द्रव्यवत्त्वात्तु पुंसां स्याद्द्रव्यसंयुक्तं क्रयविक्रयाभ्यां, अद्रव्यत्वं स्त्रीणां द्रव्यैस्समानयोगित्वात् ॥ १० ॥ तथा चान्यार्थदर्शनम् ॥ ११ ॥ तादर्थ्यात्कर्मतादर्थ्यम् ॥ १२ ॥ फलोत्साहाविशेषात्तु ॥ १३ ॥ अर्थेन च समवेतत्वात् ॥ १४ ॥ क्रयस्य धर्ममात्रत्वम् ॥ १५ ॥ स्ववत्तामपि दर्शयति ॥

क्रतुषु पुंस एवाधिकारः ? उत स्त्रिया अपीति चिन्तायां 'स्वर्गकामः' इति पुल्लिङ्ग-

---

तदायुषां देवानामधिकारसत्वात । सिद्धान्ते तु मनुष्याधिकारित्वाद्दिवसकल्पनेत्यपि प्रयोजनान्तरं द्रष्टव्यम् ।

---

॥ लिङ्गविशेषनिर्देशात् ॥

अत्र तन्त्ररत्ने फलकामस्योद्देश्यत्वं पूर्वाधिकरणे प्रसाधितमिति तद्विशेषणस्य पुंस्त्वस्याविवक्षितत्वात् स्त्रिया अप्यधिकारः प्राप्नोत्येव । अतः कथं पुंस एवाधिकारो न स्त्रिया इति पूर्वपक्षोत्थानमित्याशङ्क्य परिहृतं-पुंस्त्वादेः प्रातिपदिकार्थत्वात् प्रातिपदिकार्थस्य पुंस्त्वादेश्चमसाधिकरणन्यायेन ग्रहत्ववद्विवक्षितत्वेन न स्त्रिया अधिकार इत्येवं पूर्वपक्षं प्रापय्य पुंस्त्वादेः प्रातिपदिकार्थत्वेपि चमसाधिकरणे उद्देश्यरूपप्रातिपदिकार्थविवक्षाया एव प्रसाधितत्वात् तद्विशेषणत्वेनाविवक्षोपपत्तेर्न युक्तः स्त्रिया अधिकार इति सिद्धान्तः कृतः ॥

तदुभयमप्ययुक्तम् । तथा हि—यथैव पूर्वाधिकरणे स्वर्गकामस्योद्देश्यत्वोक्तेः तद्विशेषणपुंस्त्वाविवक्षणान्न पूर्वपक्षोत्थानमेवमेव शतशः स्थलेषु विभक्तिविकाराणां टाबादीनां च लिङ्गमभिधेयं न प्रातिपदिकस्येति साधितमेवेति न प्रातिपदिकार्थत्वेन तद्विवक्षया तदुत्थानं सम्भवति ।

सिद्धान्तेऽपि यदि विशिष्टस्य प्रातिपदिकार्थत्वेपि विशेषणत्वमात्रेणैवाविवक्षा तदा पुरुषविशेषणत्वेन प्रतीयमानस्वर्गविषयकामनाया अपि सा दुर्वारा अतः पुत्रकामस्याप्यधिकारापत्तिः। अतो यस्मिन्पदे एकता पर्याप्ता तादृशैकपदोपस्थाप्येऽर्थे एवोद्देश्यताविश्रान्तिस्तत्र पदान्तरोपात्तार्थस्य विशेषणत्वाभावान्नाविवक्षा विशेषणस्येत्येव वाच्यम्। अत एवाश्वाभिधान्या उद्देश्यत्वे हविरार्तेश्च निमित्तत्वे न वाक्यभेदापत्तिप्रयुक्ता अश्वसम्बन्धाद्यविवक्षा, एकेनैव पदेन विशिष्टार्थप्रतिपादनात्। नहि ग्रहं सम्मृज्यात् तंचैकमित्यत्रेव शक्त्या लक्षणया वा विशिष्टार्थस्योद्देश्यत्वे वाक्यावृत्तिः प्रसज्यते सकृदेव पदान्तरनैरपेक्ष्येण विशिष्टार्थोद्देशेन विधेयार्थविधानात्। यथा चैवं सत्येकपदोपादानप्रतीतसाहित्यावच्छिन्नस्यार्थस्योद्देश्यत्वेपि तद्विशेषणस्य साहित्यस्याविवक्षा तथोपपादयिष्यते पार्वणाधिकरणे नवमे।

यत्त्वेतादृशे विषये ग्रहैकत्वाधिकरणे कौस्तुभे उक्तं-सर्वत्र हि प्रातिपदिकेन स्ववाच्यबोधजननोत्तरं साहित्यस्य लक्षणया बोधजननाद्युगपद्बोधानुपपत्तेः पश्चात्प्रतीयमानस्याप्यसमस्तप्रातिपदिकार्थत्वात् प्रधानान्वयस्याभ्यर्हितत्वाच्च शक्यार्थवत्कारकान्वयस्यैवोपपत्तेस्समासवद्विशिष्टोद्देशायोगाच्चाविवक्षा। अत एव सर्वेभ्यो दर्शपूर्णमासावित्यादौ फलानेकत्वकृतानेकोद्देश्यताऽभावेपि साहित्यकृतानेकोद्देश्यतासत्वात्तदविवक्षा नानुपपन्नेति। तच्छक्यार्थबोधलक्ष्यार्थबोधयोः पौर्वापर्यानुभवात् प्रत्युत द्विबहुवचनादितात्पर्यग्राहकसत्वे सकृदेव विशिष्टार्थबोधानुरोधेन विशिष्टलक्षणयापि युगपद्वृत्तिद्वयविरोधस्य परिहर्तुं शक्यत्वान्नानेकोद्देश्यताप्रसक्तिस्तादृशस्थल इति प्रौढवादमात्रमित्युपेक्ष्यम्। अत एव ये यजमानस्ते ऋत्विज इत्यनेनार्त्विज्योद्देशेन यजमानविधाने यजमानपदस्य स्वामित्वाश्रयकर्तृत्वाश्रयोभयवाचकत्वेनोभयविधानाद्वाक्यभेदापत्तिमाशङ्क्यैकेन यजमानशब्देनोभयोपादानान्न विधेयार्थानेकत्वनिमित्तो वाक्यभेद इति परिहृतं सत्रे कर्तृप्रतिनिधिविचारे तन्त्ररत्ने। एवं चैकशब्दोपादानाद्विधेयार्थानेकत्वाभाववत् समानन्यायादेकशब्दोपादानान्नोद्देश्यार्थानेकत्वमिति अर्थात् सिद्धं भवतीति। अत एवैकपदोपादानावगतसाहित्यस्य विशेषणत्वाभावेन विवक्षायामपि एकवाक्योपादानावगतसाहित्यस्य तत्तत्पदार्थोपस्थित्यनन्तरं प्रतीयमानस्य पाश्चात्योद्देश्यविशेषणत्वकल्पने भवत्येवाविवक्षेति सुधीभिरूह्यम्। अतः पूर्वपक्षसिद्धान्तपक्षयोः शैथिल्यान्न तद्रीत्या तत्करणं युक्तमिति तदुक्तमुपेक्ष्य पूर्वाक्षेपेणाधिकारित्व-

**श्रवणात् पुंस एव। न हीदमधिकारिविशेषणं कर्तृसमानाधिकरणत्वेन तद्विशेषणस्यास्याश्रुताधिकारिविशेषणत्वानुपपत्तेः। अतश्चाख्यातोपात्तैकत्ववदेव पुंस्त्वस्याप्यस्य विवक्षा नानुपपन्ना। किञ्चाद्रव्यत्वादपि स्त्रिया नाधिकारः**

**भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।**
**यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥**

**इति वचनात्। 'शतमतिरथं दुहितृमते दद्यादार्षेयविवाहे गोमिथुनम्' इत्यादिना पित्रा भर्त्रे मौल्येन दासवत् विक्रीतत्वाच्च। अत एव 'गर्भेणाविज्ञातेन हतेन भ्रूणहा' इति यज्ञसाधनपुङ्गर्भहननशङ्कया भ्रूणपदवाच्ययज्ञहन्तृत्वलिङ्गमवकल्पते। अन्यथा स्त्रीत्वेन विज्ञातेऽपि यज्ञहन्तृत्वाविशेषात् अविज्ञातपदमनर्थकं स्यात्। तथा आत्रेयीं हत्वा भ्रूणहेति लिङ्गम्। आत्रेयी सगर्भा अतः पुमानेवाधिक्रियते इति प्राप्ते—**

---

प्रयुक्तोद्देश्यत्वाभावमेव स्वयं साधयति—**नहीदमिति**। यदि यः स्वर्गकामः स यजेतेति वचनव्यक्त्या स्वर्गकामोद्देशेन यागो विधीयेत तत उद्देश्यत्वात्तद्विशेषणं प्रत्ययोपात्तत्वेन पुंस्त्वमविवक्षितं भवेत् किन्तु स्वर्गकामकर्तृका यागकरणिका भावना स्वर्गभाव्यिका विधीयते इति पशुना यजेतेत्यत्रेवोपादेयकर्तृगतत्वाद्विवक्षितमेव पुंस्त्वमिति भावः। ननु कर्तनेन[1] दायादिना वा लब्धं धनमस्त्येव तस्या इति कथमद्रव्यत्वमित्यत आह—**भार्या पुत्रश्चेति**। भार्यादयो ह्यन्यस्य स्वभूताः स्वामिनः कर्म विहाय न स्वीयं कर्तनादिकर्म कर्तुमर्हन्ति यदि कदाचित् स्वामिकर्माविरोधेन कर्तनादि कुर्युस्तदा 'यस्यैते तस्य तद्धनं' इति स्मृतेः पत्यादीनामेव तद्धनम्। तथा 'शतमतिरथं' इत्यादिवचनात् दृष्टानत्यर्थत्वेन पित्रे दानविधाने सति पित्रा दासवद्विक्रीतैवेति दायोऽपि पत्युरेवेत्युभयथापि तस्या अद्रव्यत्वमित्यर्थः। **अन्यथा स्त्रीत्वेनेति**। स्त्रीगर्भं निश्चित्य यो गर्भं हन्ति न तस्य भ्रूणहन्तृत्वं, तस्य गर्भसामान्यवधप्रयुक्तपातकान्तराधिकारित्वेपि भ्रूणहन्तृत्वप्रयुक्तपातकाभावेन तत्प्रयुक्तप्रायश्चित्तं न भवति। यस्तु स्त्रीगर्भमनिश्चित्यैव गर्भपात्रमेव हन्ति तस्य कदाचिद्यज्ञसाधनपुरुषहन्तृत्वसम्भवात् भ्रूणहन्तृत्वमिति भवति तन्निमित्तं प्रायश्चित्तमित्यविज्ञातेनेत्यस्यार्थः। यदि च सिद्धान्ते स्त्रिया अप्यधिकारस्तदा स्त्रीगर्भनिश्चयेन गर्भं हतवतोऽपि भ्रूणहन्तृत्वं समानमित्यविज्ञातपदं व्यर्थं स्यादिति भावः। **तथात्रेयीमिति**। एतच्च पूर्वपक्षसाधकत्वेनोपन्यस्तमपि भाष्यकारेण लिङ्गदर्शनं चिन्त्यं, आत्रेयीशब्दस्यात्र कुक्षौ अस्या विद्यते इत्यर्थेनासन्नगर्भपरत्वे प्रमाणाभावात्। प्रत्युत आसन्न-

---

१. कर्तनं तन्तुसर्जनम्।

**यद्यपि कर्तृविशेषणं पुंस्त्वं तथाऽपि प्रमाणान्तरेण स्त्रियाः अपि अधिकारावगतेर्विधिलाघवानुरोधेन साधुत्वार्थमवयुत्यानुवाद एव पुंस्त्वं, यथा 'वसन्ते ब्राह्मणः' इत्यादौ। प्रकृते त्वनपेक्षितत्वाच्चास्य कर्तृविशेषणत्वं अपितु योग्यत्वादधिकारिविशेषणत्वमेव। ततश्च तस्य फलं प्रत्यपि प्राधान्यादुद्देश्यत्वेन तद्विशेषणाविवक्षा।**

वस्तुतस्तु **प्रथमापेक्षितत्वात् स्वर्गकामादिपदस्य फलपरत्वमेवेति क्व पुंस्त्वस्य विवक्षाप्रसक्तिः। न चाद्रव्यत्वं, कर्तनादिभिरर्जनसम्भवात् पित्रादिदत्तस्य दायस्य वा स्मृतिषूक्तत्वाच्च। 'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मृत्या पत्यार्जितस्याप्युभय-**

---

गर्भाया हनने यज्ञसाधनस्त्रीपुरुषहन्तृत्वाद्भ्रूणहेति सामान्यतः कथनेन स्त्र्यधिकारस्यापि प्रतीतेस्सिद्धान्तसाधकमेवेदम्। अत एव सूत्रकारेण पूर्वपक्षे **तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते** इति लिङ्गदर्शनपरे सूत्रे अविज्ञातपदप्रयोगादविज्ञातलिङ्गमेव पुंमात्राधिकारे साधकत्वेनोपन्यस्तमिति। **विधिलाघवानुरोधेनेति।** पुंस्त्वविशिष्टकर्तृविशिष्टयागकरणत्वविशिष्टभावनाविधौ विशेषणविधिकल्पनावेलायां प्रमाणान्तरावगतस्त्र्यधिकारनिवृत्तिफलकपुंस्त्वविशेषणविधिकल्पनाभावाद्विधिलाघवमित्यर्थः। **यथा वसन्ते इति।** **यद्यप्ययं** दृष्टान्तो नोभयवादिसिद्धः तत्रापि पुंलिङ्गश्रवणात् पुंस एवाधिकारस्यास्मिन् पक्षे साधनात् **तथापि** वक्ष्यमाणाधिकरणसिद्धोभयाधिकारित्वमुभयसम्प्रतिपन्नं मत्वा तत्प्रदर्शनमिति न बाधकम्। तथा च यथा क्षौमे वसानाविति वचनान्तरबलादाधाने उभयाधिकारे सिद्धे तदनुरोधेन वसन्ते ब्राह्मणोऽग्नीनादधीतेति वाक्यगतब्राह्मणपदोत्तरप्रथमोपात्तमेकत्वं साधुत्वमात्रार्थं तद्वदिहापीत्यर्थः। **अनपेक्षितत्वादिति।** दर्शपूर्णमासाभ्यां यजेतेत्येतावतापि अग्निविद्यानुगृहीतपुंविशेषरूपकर्तृलाभो भवत्येवेति स्वर्गकामस्य विशेषतः कर्तृत्वेनान्वये नैव किञ्चिदस्ति प्रयोजनम्। राजत्वादिजातेरिव कामनाया विशेषणत्वपक्षस्य पूर्वमेव निरस्तत्वात्। अतोऽधिकारिसमर्पकमेव स्वर्गकामपदमिति यःस्वात्मानमुद्दिश्य स्वर्गं सम्बद्धुमिच्छन् तत्साधनप्रयत्नं करोति स यजेतेत्येवं फलं प्रत्यपि तस्योद्देश्यस्य विशेषणं पुंस्त्वमविवक्षितम्। न च पुंस्त्वादि प्रातिपदिकार्थो, येनैकपदोपात्तत्वेनाविवक्षा न भवेत् किन्तु विभक्तिविकाराणां टाबादीनामेव वाच्यमिति तत्र तत्र साधितमेवेति भावः। एतच्च प्राचामनुरोधेनोक्तम्। **परमार्थतस्तु** नाधिकारिविशेषणत्वं न वा कर्तृविशेषणत्वमित्यभिप्रेत्याह—**वस्तुतस्त्विति। स्मृतिष्विति।** "पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात्" "स्त्रीधनं दुहितॄणां" इत्यादिस्मृतिषु दायस्य स्मरणात् पित्रादिदत्तस्य च स्त्रीधनत्वेन भर्तु-

साधारणत्वञ्च। 'भसदा वा एताः परगृहाणामैश्वर्यमवरुन्धते' इति स्मरणाच्च। 'सं पत्नी पत्या सुकृतेन गच्छताम्' इत्यादिमन्त्रवर्णात् 'पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु' इति स्मरणाच्च पत्न्या अप्यधिकारः। 'पत्युर्नो यज्ञसंयोगे' इति स्मृतेः पत्नीशब्दस्य स्वामित्वाभावेऽनुपपत्तेश्च। यत्तु 'भार्या पुत्रश्च' इति वचनं क्रीतत्वादिवचनं च तत् 'न स्त्री स्वातन्त्र्यमर्हति' इति वचनान्तरानुसारादस्वातन्त्र्यपरम्। मौल्यदानं त्वदृष्टार्थम्। कन्यायां कन्यात्वातिरिक्तस्वत्वाभावस्य वक्ष्यमाणत्वेन तद्दानस्याप्यौपचारिकत्वाच्च। आत्रेयी च अत्रिगोत्रोत्पन्ना न त्वासन्नगर्भा। सत्यपि च स्त्रियाः क्वचित् कर्माधिकारेऽसति गमकान्तरे जपादिसकलवैदिककर्मानधिकारादविज्ञातलिङ्गदर्शनं पुंवधे प्रायश्चित्तविशेषविधानार्थम्। तस्मात्सिद्धस्स्त्रिया अप्यधिकारः ॥ ३ ॥

---

ग्रहणेऽनधिकारादस्त्येव धनं तस्या इत्यर्थः। भसदा इति। भसच्छब्दो हि नितम्बवाचीति तेन नितम्बवत्य इत्यर्थः। अदृष्टार्थमिति। भार्यात्वोत्पादकं तत् न त्वानतिसाधनत्वेन क्रयजनकमित्यर्थः। किञ्च द्रव्यग्रहणपूर्वकस्वस्वत्वनिवृत्तिजनकः परस्वत्वापादको हि व्यापारः क्रयपदार्थः न च स कन्यायां सम्भवति जन्यत्वसमानाधिकरणस्त्रीत्वरूपकन्यात्वातिरिक्तस्य स्वत्वस्य कन्यायामभावेन कन्यात्वस्य च दानोत्तरमपि निवृत्त्यभावात्। अत एव विवाहे दत्तकविधौ च गौणमेव कन्यापुत्रादीनां दानम्। अतो द्रव्यदानस्यानर्थत्वेऽपि न मुख्यः क्रयोऽस्तीत्याह—कन्यायामिति। न त्वासन्नगर्भेति। अत्र कुक्षावस्था गर्भो विद्यते साऽऽत्रेयीत्यर्थे अत्रशब्दादसमर्थात्तद्धितोत्पत्त्यसम्भवादत्रेरपत्यार्थ एव तद्धित इति तद्वधे प्रायश्चित्तविशेषापादिका भ्रूणहत्या भवद्रीत्या भवतीत्यर्थे तात्पर्यं लिङ्गस्येति भावः। क्वचित्कर्माधिकार इति। अत्र च यद्यपि पाणिग्रहणाद्धि सहत्वमित्यादिस्मृतिभ्यः कर्ममात्रेपि स्त्रियाअधिकारोऽविशेषेण प्रतीयते। अत एव हेमाद्रिणा गृहस्थस्य श्राद्धेऽपि भार्यया सहैवाधिकारात् तस्यां च रजस्वलायां अशुचित्वेनानधिकारे व्यासज्यवृत्तेः भर्तृगतस्याप्यधिकारस्य विघातात् तस्यास्तद्दशापगम एव श्राद्धमुचितमिति न्यायोपन्यसनं कृतं तथाप्युभयसंयोगेनोत्पन्नानामग्नीनामधिकारिविशेषणीभूतानां यत्र सम्भवः उभयसाध्यकर्मघटितप्रयोगकत्वं वा तत्रैवाग्निसाध्येष्वेव श्रौतस्मार्तेषु कर्मस्वधिकारो न्याय्यो न तु सर्वत्र। अत एवेष्टापूर्तेष्विव श्राद्धेपि मिताक्षराकारोक्तरीत्या निरग्निकानामप्यधिकारात पत्नीसाध्यकर्माघटितत्वाच्च पृथगधिकार एव युक्तो न तु पत्न्या सहाधिकारः प्रमाणाभावात्। अग्निसाध्येष्वपि स्वतन्त्रविद्याक्षेपशक्तिकल्पनागौरवापत्त्या न स्वातन्त्र्येण तस्या अधिकारः। किन्तु क्लृप्तविद्यपुरुषाधिकारिषु कर्मसु साहित्यमात्रेणैवेति त्वनुपदमेव वक्ष्यते। एवं चैतादृशन्यायसिद्धार्थानुवादकमेव हिशब्दघटितपाणिग्रहणाद्धि सहत्व-

मित्यादिवचनं, न त्वपूर्वतया सर्वत्राधिकारप्रतिपादकमिति तदनुरोधेन धर्मे चेत्यादिसामान्यवाक्यमपि धर्मविशेषपरतयैव द्रष्टव्यम् । अतश्चाग्निसाध्यमात्रे न पत्न्याः सहाधिकारकल्पनं प्रमाणवत् ।

**एतेन** साग्निककर्तृके अग्निसाध्ये निरग्निककर्तृके अनग्निसाध्ये गयाश्राद्धे पत्न्या सहाधिकारप्रतिपादनं हेमाद्र्युक्तं **परास्तम्** । पित्रादिगततृप्त्युद्धारादिरूपफलार्थे मृतपित्रादिकस्यामावास्यावच्छिन्नजीवनवतोऽकरणे प्रत्यवायपरिहारार्थे वा श्राद्धे पितृत्वाद्यनिरूपिकायास्तस्याः फलभागित्वाभावात् फलस्वाम्यापरपर्यायाधिकारानुपपत्तेः । न च श्राद्धाङ्गपाकस्य पत्नीकर्तृकत्वादुभयसाध्यप्रयोगत्वमात्रेण पत्न्याः सहाधिकार इति शङ्क्यम् । आत्मादेः कर्त्रन्तरस्यापि विधानात् तस्या अप्यध्वर्य्वादिवत् कर्तृत्वमात्रेणैव तद्घटितप्रयोगकत्वोपपत्तेः । अत एवैतादृशविषये क्वचिच्छ्रूयमाणोऽपि पत्नीशब्दो भार्यामात्रविषय एव । किञ्चास्तु वा तस्या एतादृशेपि विषये सहाधिकारस्तथापि अविभक्तेषु भ्रातृषु व्यासज्यवृत्त्यधिकारे एकस्य पातित्यादिना अशुचित्वेऽपि तं विनैव वचनादितरेषामधिकारवद्दर्शपूर्णमासयोस्तामपरुद्ध्य यजेतेति वचनबलाद्यजमानमात्रे यथाधिकारः तथैव तस्यां रजस्वलायां श्राद्धेपि

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्यात् हेम्ना चामेन च क्वचित् ।

इति वचनबलात्तां विनापि केवलभर्तुरप्यधिकारो न व्याहन्यत इति तस्या अनधिकारे भर्तृगतस्याप्यधिकारस्य विघातात् तस्यास्तद्दशापगमे एव श्राद्धमुचितमित्ययुक्तमेव । अतश्च यथैव पत्युराहवनीयत्वादिकामनयोत्तरक्रतुजन्यफलेष्वपि कामनया अधिकार इव पत्न्या अपि तादृशकामनया अधिकारः प्रमाणायातस्तदा क्लृप्तपतिविद्ययैव कर्मनिर्वाहे तस्या अक्लृप्तविद्याकल्पनापरिहारार्थं सहाधिकारःकल्प्यते न तु आहवनीयत्वादेस्तदुत्तरक्रतुजन्यफलस्य वा कामनायामपि अधिकारस्यैवाभावे सहाधिकारकल्पनाया असम्भवात् । किन्तु पत्नीकर्तृकपदार्थेषु तस्याःपतिकर्तृकप्रधानप्रयोगे कर्तृत्वमात्रं ; तथैवाग्निसाध्येष्वपि । नित्यनैमित्तिकश्राद्धेष्वपि पत्न्यास्तज्जन्यफलभागित्वासम्भवेन तज्जन्यफलार्थमधिकारस्यैवाभावे कुतःसहाधिकारितेति तत्प्रयोगे तत्कर्तृकपदार्थेषु कर्तृत्वमात्रमेव । अत एव पुत्रकामार्थश्राद्धादौ फलस्योभयगामित्वसम्भवात् भवत्येव सहाधिकारः । यत्र त्वन्यतरगाम्येव फलं तत्रान्यतरस्यैवाधिकार इति वक्ष्यते **पूज्यपादै**रग्निमाधिकरणे । तथा सन्ध्यावन्दनश्राद्धादौ न पत्न्या अधिकार इत्यत्रैव द्वितीयपादे । अतः

(४)—स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥ फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २० ॥ फलवत्तां च दर्शयति ॥ २१ ॥

सिद्धे द्वयोरप्यधिकारे किं दम्पती पृथक्पृथक् यजेयातां उत सहेति चिन्तायां स्वर्गकामपदोपात्तस्यैकत्वस्य पुंस्त्ववदविवक्षितत्वेऽप्याख्यातोपात्तस्य तस्य गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकशः प्रयोग इति प्राप्ते—

प्रत्येकप्रयोगे अन्यतरकर्तृकाज्यावेक्षणान्वारम्भणादिपदार्थलोपेन वैगुण्यापत्तेरन्यतरेणान्यतरस्य परिक्रयादिनोपादाने च फलभोक्तृत्वाभावात् स्वामित्ववाचिपत्नीयजमानशब्दप्रयोगानुपपत्तेरङ्गसाकल्यार्थं सहैव प्रयोगः। न ह्याज्यावेक्षणादीनां कर्तृसंस्कारकत्वं येन तत्प्रयोग व्यवस्था लभ्येत क्रतुधर्मत्वात्तूभयकर्तृकमेवेक्षणद्वयमदृष्टविधया क्रतोरङ्गम्। यत्र त्वन्यतररोगनिवृत्त्यर्थमेव दर्शादिप्रयोगः तत्रेतरस्य पत्नीत्वाद्यभावेऽपि गुणलोपे चेति न्यायेन परिक्रयाद्युपात्तेतरकर्तृकाज्यावेक्षणेऽपि न सर्वत्र तथा कल्पनायां

---

क्वचिदेवाध्ययनियामकसत्वे स्त्रिया अधिकारेऽपि गमकान्तराभावे भर्तृकर्तृककर्ममात्रे अग्निसाध्ये तद्भिन्ने वा नाधिकार एव तस्या इति किमिति सहाधिकारकल्पनं आश्रयणीयमिति क्वाचित्कपदेन सूचितम्।

अत्र भाष्यकारेणाविज्ञातलिङ्गदर्शने अविज्ञातपदमज्ञानतोऽपि गर्भहनने पापं भवति किमुत जानतो हनने इति प्रशंसार्थमित्युक्तं तदपेक्षया स्वयं यौक्तिकमविज्ञातपदप्रयोजनं दर्शयति—असति गमकान्तरे इति। यद्यपि स्त्रीपुंसयोरुभयोरपि यज्ञादौ सहाधिकारात् स्त्रीपुंससाधारण्येन गर्भहननेपि भ्रूहणत्या समाना तथापि स्त्रियाः क्वचिदेवाधिकाराद्बहुतरवैदिकस्मार्तकर्ममात्राधिकारिणः पुंसोऽप्यविज्ञाते हननप्रसक्तेरधिकपातकप्राप्तौ तत्परिहारार्थप्रायश्चित्तविशेषप्राप्त्यर्थमविज्ञातपदमिति भावः।

---

॥ स्ववतोस्तु ॥

**गुणलोपे चेति।** पत्नीयजमानशब्दौ हि यज्ञजन्यफलभोक्तृत्वसमानाधिकरणस्त्रीत्वपुंस्त्वाश्रयवाचकाविति यद्यप्यन्यतरकर्तृकप्रयोगे अन्यतरस्य फलभोक्तृत्वाभावान्न तत्समा-

**प्रमाणमस्ति साहित्यस्य पुण्यफलेष्वपि** स्मृत्यादिप्रमितत्वात्। 'धर्मे च' इत्यादि**वाक्यपर्यालो-**

---

नाधिकरणस्त्रीत्वपुंस्त्वाश्रयकर्तृकाज्यावेक्षणादि सम्भवति, तथापि गुणलोपेपि कथंचिद्विशेष्य-भूतस्त्रीत्वपुंस्त्वाश्रयव्यक्तिमात्रकर्तृकत्वसम्भवे त्यागायोगात् सत्रे कस्मिंश्चिद्यजमाने नष्टे प्रतिनिध्युपादानेन सप्तदशयजमानकर्तृकपदार्थानुष्ठान इव परिक्रयाद्युपात्तान्यतरकर्तृकपदार्थानुष्ठाने नैव किञ्चिद्बाधकम्। नचाग्निस्वामिगतफलप्रतिपादकाधानवाक्यगतात्मनेपदस्यैतादृशे विषये विरोधः; आत्मनेपदेनान्यस्वामिगतफलाभावप्रतिपादनेऽपि तस्य यावदग्निस्वामिगतफलप्रतिपाद-कत्वे प्रमाणाभावेन बाधकाभावात्। एवं च परिक्रयाद्युपात्तयोः पत्नीयजमानयोस्तत्तत्कर्तृक-पदार्थानुष्ठानोपयोगिसंस्काराणां करणेपि फलोपयोगिनां योक्त्रसन्नहनब्रह्मचर्यादिरूपाणां फलिसंस्कारापरपर्यायाणां फलभागित्वाभावादेव नानुष्ठानमित्यपूर्वाधिकरणकौस्तुभे दर्शितरीत्या अविवादमेव। सत्रे तु यदि सत्राय दीक्षितानां प्रमीयेत तस्य यो नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वेति वचनबलादेव प्रतिनिधितयोपात्ते नेदिष्ठे दीक्षामात्रफलिसंस्कारकरण-मिति विशेषो वक्ष्यते प्रतिनिधिविचारे। **स्मृत्यादिप्रमितत्वादिति।** यद्यप्यध्वर्य्वादिभिस्सह यजमानः क्रतुं करोतीतिवत् परिक्रयाद्युपात्तपत्नीयजमानयोरपि परस्परसाहित्यं सम्भवति, तथापि तत्कर्तृत्वांशमात्रे एव न तु कर्मजन्यफलभोगेपीति स्मृत्या बोधितं पुण्यफले परस्परसाहित्यं बाधित-मेवास्मिन् पक्षे आपद्यते। अतः पुण्यजन्यफलभोक्तृत्वे परस्य साहित्यावगतिनिर्वाहाय तज्जनककर्मसु सहाधिकारावश्यम्भावकल्पनेन पत्नीयजमानशब्दगतमुख्यार्थसम्भवे न परिक्रया-दिना तत्कल्पनं युक्तम्। येषु तु फलेषु नैव तयोस्साहित्यसम्भवः तत्र तज्जनककर्मस्वामि-नैव सहाधिकारकल्पनं प्रमाणवत्। तत्तत्कर्तृकपदार्थमात्रानुष्ठानञ्च मुख्यार्थत्यागेनापि परिक्रयाद्युपात्ताभ्यां ताभ्यां सम्भवतीति न तदनुरोधेनापि तत्राधिकारकल्पनं स्त्रिया इति भावः।

अत्र च स्त्रियास्सहाधिकारे यथान्यतरकर्तृककतिपयपदार्थलोपात् क्रतुवैगुण्यापत्तिर्युक्तिः तथा अक्लृप्तविद्याक्षेपकल्पनापत्तिरपि युक्तिः कैश्चिदुक्ता, साऽयुक्ता, प्रमाणावगतस्त्र्यधि-कारानुरोधेन तत्कर्तृकसमन्त्रककतिपयपदार्थानुष्ठानायाक्लृप्ततावन्मात्रविद्याक्षेपस्येव प्रमाणाव-गतसमग्राधिकारानुरोधेनापाततः समग्रकर्मविषयविद्याक्षेपस्यापि निषादस्थपतिरथकारयोरिव कल्पने बाधकाभावेन तत्कृतगौरवस्य प्रमाणसिद्धस्यादोषकरत्वादतस्तां सहाधिकारकल्पने युक्तिमुपेक्ष्य युक्त्यन्तरमाह—**धर्मेचेत्यादि। वाक्येति।** तथाचैतादृशवाक्यपर्यालोचनया संसृष्टद्रव्यत्वात्

**चनया च तयोस्संसृष्टद्रव्यत्वात् विभागप्रतिषेधाच्च सहैव प्रयोगः।** अत एवोभयस्वत्वस्य

---

'**न भर्त्रा सह विभजेत्**' इति वचनेन विभागप्रतिषेधाच्च तस्यास्सहाधिकारे सिद्धे अक्लृप्त-विद्याक्षेपकल्पनाभावकृतं लाघवमपि भवतीति लाघवमनुग्राहकमात्रमेवास्मत्पक्षे इत्येवं वैलक्षण्य-मात्रं न तु तस्य स्वतन्त्रयुक्तित्वमिति भावः ।

ननु सहाधिकारे स्त्रियाः अविद्यत्वात् कथमधिकारः सिद्ध्यति, विदुष एव कर्माधि-कारात् । न च यजमाने विद्वत्तयैव पत्न्या अपि कार्यसिद्धिरिति सिद्धान्तकरणं युक्तं, परकीय-विद्वत्तया अन्यस्याविदुषोऽधिकारकल्पने शूद्रस्यापि ब्राह्मणादिना सहाधिकारापत्तेः । कुलाय-यागे राजपुरोहितयोरन्यतरस्याविदुषोऽप्यधिकारापत्तेश्चेति चेत् ।

**अत्रोच्यते** ॥ यदि हि शूद्रस्य केनचिद्वचनेन साहित्यं प्रयोगे प्राप्नुयात् तदा भवेदेतत् । इह तु पूर्वोक्तवचनैः स्त्रियाः साहित्यावगतेस्साङ्गप्रधानप्रयोगज्ञानवता पुंसा साङ्गे प्रधानप्रयोगे कर्तव्ये स्त्रियाः सहभावेन कर्तृत्वे तस्याः स्वातन्त्र्येण तत्प्रयोगज्ञानाभावेपि एकस्य मार्गज्ञाने इतरस्य तज्ज्ञानाभावेपि गमने साहित्यवन्न किञ्चिद्बाधकम् । अत एव यदंशे पुरुष-विद्वत्तया न निर्वाहस्तत्र पत्नीमात्रकर्तृके मन्त्रपाठादावाक्षिप्यत एव तदुपयुक्ता विद्यापि । कुलाययागे तु सत्रे पृथक् पृथक् स्वतः सिद्धज्ञानद्रव्यवतां यजमानानां साहित्यवत् स्वतःसिद्ध-ज्ञानद्रव्यवतोरेव राजपुरोहितयोस्साहित्यसम्भवाद्वचनान्तराभावे नाविद्वदधिकारकल्पनं प्रमाण-वदिति वैषम्यमिति ।

अत्र भाष्यकारेण केवलयोरेव स्त्रीपुंसयोः प्रयोगो न तु सह, यजेतेत्येकवचनस्य विवक्षितत्वदिति पूर्वपक्ष्युक्तमनुभाष्योत्तरमुक्तम्—प्रतिकारकं स्वस्वव्यापारभेदात् अध्वर्य्वादि[1] प्रवेशवत् पत्न्या अनुप्रवेशेपि नैकवचनविरोधः । यस्य च कारकस्य य आत्मीयो व्यापारः स एकवचनेन विवक्षित एकेन कर्तव्यो भवति । एवं च यावान् व्यापारो यजमानस्य तावान्न सम्भूय कर्तव्यः । एकैनैको याजमानोऽपरेणापरः द्वादशशते एकेन षट्पञ्चाशद-परेणापि षट्पञ्चाशदिति । पत्नीव्यापारस्त्वन्य एव । न तत्र पत्नी प्रवर्तमाना यजमानस्यै-कत्वं विहन्ति । यथाऽध्वर्युराध्वर्यवे प्रवर्तमान इति । अस्माच्च भाष्यग्रन्थात् पृथग्भूत एव स्वस्वव्यापारे पृथक्पृथगेव दम्पत्योःकर्तृत्वमिति भाति । तन्निराकर्तुमाह—**अत एवोभयस्वत्व-स्येति** । उभयोरेव कर्तृत्वं संसृष्टं न तु दक्षिणादानद्रव्यत्यागादिरूपे याजमानव्यापारे विभागेन

---

1 T Adds शब्द

**संसृष्टत्वाद्द्रव्यत्यागे दक्षिणादानादौ चोभयोरेव कर्तृत्वम्।** यत्तु भाष्ये **द्वादशशते षट्पञ्चाशदेकेनापरेणापि तावदेवेत्येवं विभागः कथितः स द्वादशशतस्यैव विहितत्वात्तत्राप्युभयोः संसृष्टस्वत्वोपपत्तेरुपेक्षितः। द्वादशशतद्वयनिवृत्तौ वा भाष्यतात्पर्यम्।** यदपि **तत्स्वारस्यात्पुंस एव त्यागे कर्तृत्वं तस्या अप्यनुमतिद्वारा तदिति केषांचिन्मतं तत्**

कर्तृत्वं पृथगित्यर्थः। नाध्वर्य्वादेर्व्यापारान्तरे कर्तृत्ववत् पत्न्या व्यापारान्तरे कर्तृत्वं, किन्तु पत्नीयजमानयो ऋत्विगानमने देवतोद्देशेन द्रव्यत्यागे च यो व्यापारस्स एक इति तस्मिन् द्वाभ्यां सह क्रियमाणे सत्येकसङ्ख्याविरोधः स्फुट एव। यदि ह्येकः पुमान् द्रव्यत्यागं कुर्यादितरा तु पत्नी अध्वर्य्वादिवत् याजमानं[1] नैवं विरोधः स्यादतो द्वयोः कर्तृत्वं तुल्यमपि न पृथक् किन्तूभयोर्मिलितयोरेवेति। उभयाधिकारिके कर्मणि यजमानेनेव पत्न्यापि कर्मसङ्कल्पोऽग्नय इदं न ममेति त्यागश्च कर्तव्य इत्युक्तं भवति। अत एव स्वामिनः प्रतिनिधिविचारे उभयाधिकारिके कर्मण्यन्यतरस्य प्रतिबन्धे सत्यन्यतरस्याध्वर्युवद्वाचनिकतत्तत्पदार्थकर्तृत्वनिर्वाहेपि उभयकर्तृकसङ्कल्पस्य विशेषतस्तत्राङ्गत्वेनाविधानात्तत्रान्यतरस्यैव कर्तृत्वं दक्षिणादानद्रव्यत्यागयोस्तु संसृष्टद्रव्यत्वात् प्राप्तमेव कर्तृत्वमुभयोरिति। एवं श्राद्धादावपि तथापि पत्न्यैवानुमतं क्रियते इत्यादि भाष्योदाहृतलिङ्गदर्शनेन स्त्र्यनुमतिमात्रेणैव पत्युस्तस्याश्च पत्यनुमतिमात्रेण कर्माधिकारसिद्धेर्न पृथक् पृथक् दक्षिणादाने द्रव्यत्यागे च तत्। अद्यावधि शिष्टाचारोऽप्येवम्। उभयाधिकारिके तु नानुमतिद्वारा तदित्यनुपदमेव वक्ष्यते। यदपि भाष्यकारेण द्वादशशतं विभागेन दक्षिणादानमित्युक्तं, तदप्ययुक्तमित्याह—**यत्तु भाष्ये इति।** यद्यपि च दक्षिणावयवभेदः स्यात् तथापि दक्षिणादानद्वारेणाध्वर्य्वादीन् प्रति यः प्रयोजकरूपो व्यापारः तस्य भेदे प्रमाणाभावात् एकस्मिंस्तादृशे व्यापारे मिलितयोरेव कर्तृत्वं भवति न पृथक्। वस्तुतस्तु दक्षिणावयवभेद एव प्रमाणाभावादेकस्मिन्नेव विहिते द्वादशशते उभयोरपि संसृष्टस्वत्वात् सकृदेवोभाभ्यां तस्य दानं कर्तव्यमिति न विभागो नवा तदनुरोधेन व्यापारभेदः शास्त्रार्थ इति भावः।

अत्र च एवं चेद्याजमानो व्यापारो यावांस्तावान्न सम्भूय कर्तव्यः एकेनैको याजमानोऽपरेणापरः, द्वादशशते एकेन षट्पञ्चाशदपरेणापि षट्पञ्चाशदिति। पत्नीव्यापारस्त्वन्य एवानुमतिलक्षणः दाता तु यजमान एव कृत्स्नस्यापि द्वादशशतस्य। तथा हविःप्रदानमपि पुंस एव पत्न्यास्तु तत्राप्यनुमतिरेवेत्युपस्कारेण व्यापारभेदपरं व्याख्यायैतादृशभाष्यग्रन्थस्वारस्यात् सर्वत्रैव पत्न्याः अनुमतिद्वारमेव कर्तृत्वमिति **केषांचिन्मतं** तदनूद्य दूषयति—**यदपीति।** **अयमर्थः**

1. A. अयाजमानं

येषु कर्मसु कर्मजन्यफलभागित्वरूपोऽधिकारः पत्न्याः सम्भवति तत्र भोक्तृत्वसमानाधिकरण-कर्तृत्वानुरोधेन पत्नीव्यापारस्यापि फलवाक्ये यद्युपादानं भवेत्तदा तस्य फलजनकत्वं भवेत्। न ह्यत्र कथञ्चिद्वचनान्तरेण पत्न्या अनुमन्तृत्वसिद्धावपि अनुमतिरूपो व्यापारः फलवाक्ये उपात्तः, यागरूपव्यापारस्यैवोपादानात्।

यदि तु पुंव्यापारस्यैव यजिपदेनाभिधानं न स्त्रीव्यापारस्येत्युच्येत तदा फलवाक्येऽनुपात्तस्य फलार्थत्वाभावात् वचनान्तरविहिताया अप्यनुमतेः क्रत्वङ्गत्वस्यैवापत्तिरिति नाधिकारसिद्धिः। न च वचनान्तरेणैव तस्या अधिकारो न तु फलवाक्येनेति युक्तं; तथात्वे स्वर्गकामपदगतपुंस्त्वाविवक्षया प्रागुपपादिताधिकारप्रसाधनस्य वैयर्थ्यापत्तेः। अतोऽवश्यमुभयाधिकारिकेषु फलवाक्येषु यजिनोभयनिष्ठो व्यापारः फलजनकीभूतस्स एक एव स्वरूपेण तन्त्रेणाभिधीयते इति तज्जन्यफलमुभयगामि भवतीति नानुमतिव्यापारस्य फलजनकत्वसिद्धिः। यत्र त्वन्यतरगाम्येव फलं तत्र फलवाक्ये अन्यतरनिष्ठयजमानव्यापारस्यैव फलजनकत्वेनोपादानात् द्रव्यत्यागादावन्यतरानुमतिसम्भवेनान्यतरस्यैव कर्तृत्वात्तज्जन्यफलस्यान्यतरगामित्वसिद्धिरिति भावः।

आधुनिकास्तु याज्ञिकाः पत्न्याः वचनान्तरसिद्धमधिकारमङ्गीकृत्यैव दक्षिणादाने द्रव्यत्यागे चानुमतिमात्रं, पुंस एव तु कर्तृत्वमिति पृथक् पत्नीसङ्कल्पं द्रव्यत्यागं च नेच्छन्ति।

तेषामयमाशयः सङ्कल्पो हि न मानसव्यापारमात्रं यो यक्ष्य इत्युक्त्वा न यजते स त्रैधातावीयेन यजेतेति त्रैधातवीयानिमित्तैकदेशत्वेन तादृशशब्दप्रयोगानुवादात्। "अथोपव्याहरणं" इत्युपक्रम्य मनसा त्रिस्सङ्कल्पयेत् त्रिरुच्चैरिति बोधायनसूत्राच्च। अतो मानसव्यापारविशेषपूर्वको यक्ष्ये होष्यामि इत्याकारकः शब्दप्रयोगविशेषः। न हि सङ्कल्प्यमानार्थविशेषज्ञानं विना सोमेन यक्ष्ये ज्योतिष्टोमेनाग्निष्टोमेन रथन्तरसाम्ना द्वादशशतदक्षिणेन स्वर्गलोकमवाप्नवानीत्येवं सङ्कल्पानुष्ठानं सम्भवति। अध्ययनजन्यज्ञानाभावे तस्यास्तद्विशेषणविशिष्टज्ञानासम्भवात्। नाप्ययं पत्नीपुरस्कारेण विशिष्य विहितो येनाज्यावेक्षणादिवत्तन्मात्रौपयिकं ज्ञानमाक्षिपेत्। न च पत्न्याः कर्माधिकारे सर्वकर्मादौ कर्मसङ्कल्पसामान्यविधिरेव तदाक्षेपक इति वाच्यं, पुंविद्धत्तयैवेतरसामान्यपदार्थानुष्ठानवदस्यापि तद्विद्धत्तया तत्कर्तृकत्वमात्रेण निर्वाहे तदाक्षेपे प्रयोजनाभावात्। इतरथा परस्परानुमत्या विभक्तानेकभ्रातृकर्तृकश्राद्धे अनेकभ्रातृकर्तृकसपिण्डीकरणेऽपि च सर्वेषां पृथक् सङ्कल्पापत्तेः। अत एव सत्राहीनेष्वप्यनेकविद्धत्कर्तृकत्वेपि सर्वे द्वादशाहेन यक्ष्यामहे इत्येवमेवाश्वलायनप्रयोगदर्शनमुपपद्यते, सर्वत्रापि च याज्ञिकग्रन्थे अग्नीनाधास्ये यैरधिकृत इत्यादिषु पुंस एव सङ्कल्पे उल्लेखः।

यत्तु कैश्चित्

मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥

इत्यादिवचनेन सङ्कल्पस्य फलिसंस्कारत्वावगमात् उभयानुष्ठेयः सङ्कल्प इत्युक्तम् ॥

**तद्युक्तं**॥ तस्य यज्ञोपवीतधारणशिखाबन्धनवत् कर्माङ्गाबोधे तात्पर्येण फलिसंस्कारत्वे मानाभावात्, "न तस्य फलभागित्वं" इत्यस्य आवश्यकत्वबोधकतयाऽर्थवादत्वेन फलपरत्वे वाक्यभेदापत्तेश्च । **अस्तु** वैतस्य तत्संस्कारत्वं तावतापि यस्मिन् यस्मिन् सङ्कल्पे येषामुल्लेखनं तस्य सङ्कल्पस्य यक्ष्ये इत्यादिरूपस्य तत्संस्कारत्वे न मानं, अतो निमित्ताद्युल्लेखस्य क्रत्वङ्गसङ्कल्पाश्रितस्य गुणस्य फलसम्बन्धबोधनेऽपि सङ्कल्पस्य क्रत्वङ्गत्वादितराङ्गानामिव पुंकर्तृकमेव तदनुष्ठानं युक्तम् । अत एव सर्वदेशेषु सर्वशाखिनां सर्वश्रौतस्मार्तकर्मसु शिष्टाचारोऽप्येवमेवेति । तदेतदस्मत्पितृचरणगुरूणां मतमिति नात्र युक्तायुक्तत्वविचारणेऽभिनिवेशः क्रियते । **वस्तुतस्तु** पृथक् सङ्कल्पपक्षे तद्वदेवाध्वर्यवादिवरणस्यापि पृथगनुष्ठानं तुल्यत्वाद्दुर्निवारमेव । सङ्कल्पोऽपि द्वादशाहवत्सहत्वनिर्वाहाय उभौ दम्पती यक्ष्यावहे इत्येवं कार्य इति मम **भाति** ।

ननु यजेतेत्येकवचनेन पूर्वोक्तयाजमानव्यापारस्यैकेन कर्तव्यता बोधिता, द्वाभ्यां सह क्रियमाणे तस्मिन् बाधिता स्यादित्याशङ्कामनूद्य दूषयति—**यत्त्वाख्यातेत्यादिना** । अत्र च **तन्त्ररत्ने** वार्तिके च एकवचनोपपत्तिर्द्विधा कृता अग्नीषोमयोरिव देवतात्वं भिन्नयोरपि दम्पत्योः संसृष्टद्रव्ययोः पृथक् स्वतन्त्रीभवितुमप्रभवतोरेकमेव स्वातन्त्र्यलक्षणं कर्तृत्वं न तु सत्रिवत् कर्तृत्वभेद इति युक्तमेकवचनम् । सत्रिणां हि पृथग्द्रव्यतया पृथगेव द्रव्यवत् शक्तिः, वाचनिकानेककर्तृकत्वसिद्ध्यर्थं तु कर्तॄणां साहित्यमिह तु सहैव कर्तृत्वमिति विशेषः । तस्मात् संसर्गाभिप्रायकमेकवचनम् । **अथवा** मिथुनकारकत्वाभिप्रायमेकवचनं; एकं हि मिथुनं दम्पती मिथुनपरं च स्वर्गकामपदमितिकर्तव्यतालोचनायावगतमिति तदभिप्रायकमेकवचनमिति । **तद्युक्तं** ॥

अशाब्देन संसर्गेण शब्दावगतैकत्वान्वयासम्भवात् शाब्दं शाब्देनैवान्वेतीति न्यायात् । प्रकरणालोचनयैव स्वर्गकामपदस्य व्यक्तिद्वयपरत्वावगमेऽपि मिथुनपरत्वे प्रमाणाभावेनैकवचनानुपपत्तेः तदवस्थत्वाच्च । अतः शाब्दत्वसिद्ध्यर्थमवश्यं संसर्गे मिथुने वाऽनुपस्थिते लक्षणास्वीकारापत्तिः, तदपेक्षया आवश्यके कर्तृत्व एवोपस्थिते तामङ्गीकृत्यैकत्वस्य तत्रैवान्वयो युक्त

**अनुमतेः फलसम्बन्धाश्रवणात् [illegible] प्रमाणाभावेन पूर्वाधिकरणव्युत्पादिताधिकारभङ्गापत्तेरुपेक्षितम्। यत्त्वाख्यातोपात्तमेकत्वं सहाधिकारे नावकल्पत इति; तन्न—एकवचनश्रवणादेव दम्पत्योर्व्यासज्यवृत्त्येकस्यैव कर्तृत्वस्य कल्पनात्। इतरथा कर्तृभेदात् सक्तवद्द्विवचनाद्यापत्तेः।** अत एव क्रियाक्षिप्तयोः **कर्तृत्वतदाश्रययोर्मध्ये आवश्यकत्वात् कर्तृत्वांश**

---

इत्यभिप्रेत्याह— **अत एव क्रियाक्षिप्तयोरिति। अयमर्थः**—यजेतेत्युक्ते क इति जायमानसंशयात्पूर्वमवश्यं धर्मिज्ञानसिद्ध्यर्थं कर्तृत्वविशिष्टकर्तृज्ञानं भवतीति निर्विवादम्। तच्च क्रिया कर्तारं विनाऽनुपपन्ना कर्तारमाक्षिपतीत्याक्षेपलभ्यमप्येकत्वस्य शब्दोपात्तस्यान्वयार्थोपस्थित्यर्थं लक्षणाजन्यमेवान्यत्र स्वीक्रियते। प्रकृते तु कर्तृत्वाश्रयस्य द्वित्वात् तत्रैकत्वान्वयासम्भवादेव न तत्र लक्षणा। अपि तु विशेषणीभूते तदन्वययोग्ये व्यासज्यवृत्तित्वेन कल्पिते कर्तृत्वे एव, तथाचान्यत्र समानाभिधानश्रुत्या एकत्वस्य भावनायां प्रथमतः सामानाधिकरण्यसम्बन्धेनान्वयेऽपि लक्षिते कर्तर्यन्वयस्य पार्ष्ठिकस्य स्वीकारेऽपीह तस्य प्रथमतो भावनायां स्वाश्रयनिरूपकत्वसम्बन्धेनान्वयेपि योग्यत्वात् कर्तृत्व एव लक्षिते पार्ष्ठिकान्वयस्वीकारे न बाधकम्। अत उपस्थितलक्षितकर्तृत्वान्वयेनैकवचनोपपत्तौ नानुपस्थितसंसर्गमिथुनाभिप्रायकत्वकल्पनं प्रमाणवदिति।

**अत्रेदमवधेयम्॥** यत्रापि कर्तृत्वाश्रये एकत्वान्वयोऽङ्गीक्रियते तत्र न तावत् प्राथमिकबोधसिद्ध्यर्थं तल्लक्षणाऽऽवश्यिकी। तां विनाप्याक्षिप्यमाणकर्तृघटितसामानाधिकरण्यसम्बन्धेन भावनान्वयोपपत्तेः। न हि सम्बन्धघटकपदार्थानामुपस्थित्यर्थं क्वचिदपि लक्षणा आश्रीयते। इतरथा सामानाधिकरण्यांशेऽपि तदापत्तेः। नापि पार्ष्ठिकबोधसिद्ध्यर्थं पार्ष्ठिकबोधस्य मानसत्वेन तत्र शब्दवृत्त्यपेक्षाभावात् प्रथमतः स्वाश्रयवृत्तित्वरूपसम्बन्धविधया जातेनाश्रयवृत्त्येकत्वबोधेनैको न वेति संशयव्युदाससम्भवेन तदर्थमपि लक्षणायां प्रयोजनाभावाच्च। अतो भावनान्वयनैरपेक्ष्येणैव प्रथमतः प्रतीयमानाश्रयान्वयानुभवानुरोधेनैककार्यकारणभावलाघवमप्युपेक्ष्य कर्तर्येकत्वान्वयार्थं तस्मिन् लक्षणेति वक्तव्यं तर्हि निष्प्रयोजनमेव पार्ष्ठिकान्वयकल्पनम्। एवमिहापि प्रथमत एवैकत्वस्य लक्षिते कर्तृत्वेऽन्वयस्वीकारे बाधकाभावान्न पार्ष्ठिकान्वयकल्पनं प्रयोजनवत्।

**वस्तुतस्तु**—"लः कर्मणि" इति सूत्रानुशिष्टायाः सर्वत्र क्लृप्ताया आश्रयलक्षणायास्त्यागे प्रमाणाभावाद्व्यासज्यवृत्तिकर्तृत्वस्वीकारेऽपि नास्त्यातेन तल्लक्षणा। अपि त्वाश्रय-

एव शाब्दत्वसिद्ध्यर्थं लक्षणामङ्गीकृत्य तत्रैव पार्ष्ठिकैकत्वाद्यन्वयः। 'क्षौमे वसानौ' इत्यादौ त्वगत्या क्वचित्तदाश्रयेऽपि। अत्र च कर्तृत्वं कृत्याश्रयत्वसमनियतमखण्डोपाधिरूपं द्रष्टव्यम्। न तु कृत्याश्रयत्वमेव तस्य प्रत्यात्मं कृतिभेदेन भेदात् व्यासज्यवृत्तित्वानुपपत्तेः। तस्मात्सहप्रयोगः ॥ ४ ॥

---

## (५)—द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥ गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥

आधानप्रकरणे 'क्षौमे वसानावग्निमादधीयाताम्' इति श्रुतम्। तेन चाधाने

---

लक्षणैव। तत्रैकत्वन्वयो बाधित इति हेतोः परमाख्यातोपात्तैकत्वस्यैव द्वित्वे लक्षणाश्रयणं बहुवचनान्तपाशमन्त्रे इव युक्तम्। न च लक्षणाद्व्याङ्गीकारापेक्षया एकस्मिन् कर्तृत्व एव लक्षणया एकत्वान्वयो[1] युक्त इति वाच्यं; यजेत स्वर्गकामो देवदत्तः पचतीत्यादौ कर्त्रादिवाचकपदसामानाधिकरण्यानुरोधेनैकार्थप्रतिपादकत्वस्याख्याते अवश्यकल्पनीयस्य कर्तृत्वलक्षणयाऽनिर्वाहादाश्रयलक्षणाया आवश्यकत्वे कर्तृत्वलक्षणाश्रयणे प्रयोजनाभावात्। उक्तं च कर्त्रधिकरणे शास्त्रदीपिकायां भावनामात्रवाचित्वे देवदत्तः पचतीति सामानाधिकरण्यानुपपत्तिमाशङ्क्य "सामानाधिकरण्यं च लक्षणातो गवादिवत्" इति। अतश्च यथैव क्षौमे वसानौइत्यत्र सत्यप्येकस्मिन् कर्तृत्वे व्यासज्यवृत्तिनि द्विवचनमधिष्ठानाभिप्रायेण नीयते एवमधिष्ठानभेदे सति श्रूयमाणमेकवचनं पत्नीमन्त्रे इव प्रत्येकव्यक्त्यभिप्रायेण लक्षणया वा नेतुमुचितमिति न तदनुरोधेनाक्लृप्तलक्षणया कर्तृत्वेऽन्वयाङ्गीकरणमाश्रयणीयमिति दिक्। अतश्च पत्न्याज्यमवेक्षते यजमानश्चेति वचनविहिताज्यावेक्षणस्य स्वामिद्वयकर्तृकस्य समुच्चयेनाङ्गतानुरोधात् द्रव्यसाधारण्याद्विभागप्रतिषेधात् "धर्मे चार्थे च कामे च" इति वचनादक्लृप्तविधाक्षेपशक्तिकल्पनापत्तेः दम्पत्योः सहैव प्रयोग इत्यधिकरणार्थमुपसंहरति—**तस्मात् सहप्रयोग इति**। मृतभार्यस्य तु क्वचित् कर्मविशेषेऽधिकारो वक्ष्यते।

---

॥ द्व्याधानं च द्वियज्ञवत् ॥

यद्यपि वसानावित्यत्र वसानश्च वसानश्चेति विग्रहेण द्वयोः पुंसोरेवाधिकारः सिद्ध्यति,

---

1. T. कर्तृत्वान्वयो

कर्तृत्वद्वित्वविधानात् **द्वौ पुमांसौ सस्त्रीकौ आधानेऽधिकारिणौ** 'एतेन **राजपुरोहितौ साम्राज्यकामौ यजेयाताम्' इतिवत्। न चात्र 'कुक्कुटावानय मिथुनं करिष्यामि' इतिवत् 'पुमान् स्त्रिया' इत्याद्यनुशासनानुरोधेन स्त्रीसद्वितीयतया विरूपैकशेषस्याप्युपपत्तेः वाक्यस्य क्षौमविधिमात्रपरत्वेनाप्युपपत्तावुत्**पत्तिशिष्टक**र्त्रैकत्वबाधानुपपत्तिरिति वाच्यं, सरूपैकशेषसम्भवे लक्षणापादकविरूपैकशेषस्यान्याय्यत्वात्। तथा हि—औकारस्तावत्** द्वित्वं पुंस्त्वं **चाभिधत्ते इत्यरुणैकहायनीवत् द्वित्वावच्छिन्ने पुंस्त्वं पुंस्त्वावच्छिन्ने द्वित्वमिति**

---

तयोश्च प्रत्येकं पत्नीसाहित्यानुरोधेन स्त्रीद्वित्वेपि[1] स शक्यत एवोपपादयितुमिति सस्त्रीकौ द्वौ पुमांसावाधानेऽधिकारिणावित्यधिकरणपूर्वपक्षारम्भस्य एतावतापि सम्भवात् कर्तृत्वद्वित्वविधानादित्युक्तिर्व्यर्थैव **तथापि** सङ्गतिप्रदर्शनार्थं व्यासज्यवृत्तिकर्तृत्वद्वित्वविधानादेव पूर्वपक्षारम्भं प्रदर्शयति—**कर्तृत्वद्वित्वविधानादिति।** पूर्वाधिकरणे आख्यातोपात्तैकत्वसङ्ख्या दम्पत्योः कर्तृत्वाद्दम्पत्यभिप्राया, तन्निष्ठकर्तृत्वाभिप्राया वेति स्थिते तेनैव न्यायेनादधीयातामिति द्विवचनमप्येकस्मिन् मिथुने कर्तृत्वे वा न सम्भवतीत्यवश्यं प्रकृताधानसम्बन्धितया मिथुनद्वयं कर्तृत्वद्वयं वा विदधताऽनेन वचनेन सपत्नीकं पुंद्वयं वसानावित्यौकारान्तपदवाच्यं विधीयत इत्यर्थस्य प्रसक्तस्यापवादार्थमधिकरणारम्भ इत्यधिकरणसङ्गतिसिद्ध्यर्थं कर्तृत्वद्वित्वविधानस्य पूर्वपक्षहेतुत्वमुक्तमित्यर्थः। द्व्याधानं च द्वियज्ञवदिति पूर्वपक्षसूत्रोक्तं द्वियज्ञवदिति दृष्टान्तं विवृणोति—**एतेन राजेति। उत्पत्तिशिष्टकर्त्रैकत्वेति।** वसन्ते ब्राह्मणोऽग्नीनादधीतेत्युत्पत्तिवाक्ये श्रूयमाणब्राह्मणरूपकर्त्रैकत्वबाधापत्तिरित्यर्थः। **द्वित्वं पुंस्त्वं चाभिधत्ते इति। अयमर्थः,** यथैव हि ब्राह्मणावानयेदित्यत्र औकारो द्वयोः पुंसोः प्रयुज्यते तथैव कुक्कुटावानयेत्यत्र स्त्रीपुंसयोरपि। तत्रोभयत्र शक्तिकल्पने गौरवादुभयाव्यभिचार्यनुस्यूतं पुंस्त्वं द्वित्वमेव चाभिधेयं लाघवात्कल्प्यते। यत्र ह्येकवाक्योपात्तयोरपि तावदरुणैकहायन्योरैककर्म्यान्नियमस्तत्र सुतरामेकपदोपात्तयोर्द्वित्वपुंस्त्वयोर्नियमः। ततश्च द्वित्वस्य गुणस्याश्रयापेक्षायामसति स्त्रीसद्वितीयप्रमाणे स्त्रिया उपस्थापकाभावाद्यावदशब्दार्थभूता स्त्रीं आक्षेपणीया तावत् समानपदोपात्तत्वप्रत्यासत्त्योपस्थितपुंस्त्वाश्रयव्यक्तिरेवाश्रयत्वेन स्वीकर्तुमुचितेति परस्परनियमाद्द्वौ पुमांसावेव ग्राह्यौ। एवं लाघवोपष्टम्भकन्यायेन सर्वत्रौकारान्तेन पुंद्वयप्रतीतिनियमसिद्धौ क्वचित्प्रमाणान्तरेण तात्पर्यावधारणे स्त्रीसद्वितीयपुंवृत्तिद्वित्वप्रतीतिर्लक्षणयैव नेयेति। ये विरूपैकशेषाश्रयणमेव युक्तं तस्मिंश्चाश्रीयमाणे आदधीतपदोपात्ताधानोद्देशेन कर्तृद्वयविधानाच्छ्रुत्यर्थविधानं इतरथा वसन्तो-

---

1. T. स्त्रीतुल्येपि

परस्परनियमात् पुंद्वयप्रतीतिस्सुलभा। विरूपैकशेषे तु पितरावित्यादौ मातृत्वादेः कुक्कुटावित्यादौ स्त्रीत्वस्य च प्रत्यायकाभावाल्लक्षणाऽऽवश्यकीति तस्य ततो दौर्बल्यम्। न च भवन्मतेऽप्युपक्रमस्थक्षौमादेर्मलिनत्वसादृश्याद्गौणी 'टुक्षुशब्दे' इत्यनुशासनाद्वाऽवयवयोग इति जघन्यवृत्त्याश्रयणमनुवादवैयर्थ्यं उत्पत्तिवाक्यस्थैकवचनस्य साधुत्वमात्रार्थत्वमित्यनेकदोषतादवस्थ्यमिति वाच्यं, क्षौमवाक्य एवोभयविशिष्टाधानविधानाङ्गीकारात्। वसन्तादिवाक्ये तु ब्राह्मणादिकर्तृकत्वे निमित्ते वसन्तादिकालविधानम्। अत एव ब्राह्मणः इत्येकत्वं पुंस्त्वं चाविवक्षितम्। आदधीत इत्यपि च। ब्राह्मणो यदि शूद्रसहित आदधीत तदा वसन्त इत्येवं कादाचित्कब्राह्मणैकत्वानुवादः। तस्मात् द्वौ पुमांसौ सस्त्रीकावधिकारिणौ।

---

द्देशेन क्षौमविधाने धात्वर्थस्योद्देश्यत्वेनापि असम्बन्धात् वाक्यार्थविधानापत्तिः। न चाधानोद्देशेनैव क्षौमविधानं युक्तं, तथात्वे क्षौमस्याधानाविकरणत्वापत्तेः। यदि तु आधानाङ्गपरिच्छेदकवसनपरिच्छेदद्वारा तदुद्देशेन क्षौमविधाने नाविकरणत्वप्रसक्तिरिति शङ्क्येत तथापि सरूपैकशेषे लक्षणाभावकृतलाघवेन कर्तृद्वयस्यैव विधानेऽवगते निषादस्थपत्यधिकरणन्यायेनौत्तरकालिकोत्पत्तिशिष्टकर्त्रैकत्वसाधनत्वमात्रार्थत्वकल्पनायां बाधकाभावेन समानाधिकरण्यबाधेन क्षौममात्रविधानं नाङ्गीकर्तुमुचितमिति। ननु पूर्वपक्षेऽपि लक्षणाद्यभावकृतं लाघवं नास्ति किमुत दोषान्तरमस्ति इत्याशङ्क्य निराकरोति—**न च भवन्मते इत्यादिना। जघन्यवृत्त्येति।** टुक्षुशब्दे इति क्षुधातोः परतो मन्प्रत्ययोत्पत्तौ अवयवव्युत्पत्त्या शब्दवत्त्वयोगेन क्षौमशब्दः उपपादनीयस्तत्र "अतसी स्यादुमा क्षुमा" इति कोशात् अतसीवाचकात् विकारार्थप्रत्यये कृते क्षुमाविकारे क्षौमे इत्यर्थलाभेन अतसीमूलत्वङ्निर्मितदुकूले क्लृप्ताया योगरूढेस्त्यागात् गौणीवृत्तेः केवलावयवयोगस्य च तदपेक्षया जघन्यवृत्तित्वमित्यर्थः। **उभयविशिष्टाधानेति।** क्षौमवसनवत्पुंद्वयकर्तृकाधानविशिष्टाया भावना एवास्मिन् वाक्ये विधानेनोत्पत्तिविधित्वाश्रयणान्न प्राप्ताधानानुवादेन पुंद्वयस्य क्षौमस्य च विधाने वाक्यभेदापत्तिर्येन क्षौमपदस्य वैयर्थ्यापत्त्या तदर्थस्यावश्यविधेयत्वाद्वसानावितिपदं यथाप्राप्तानुवादकं सद्विरूपैकशेषतया नेयं भवेदित्यर्थः। **अत एवेति।** ब्राह्मणादेर्निमित्तत्वेनान्वये निमित्तविशेषणत्वादेवेत्यर्थः। यत्तु पुमान् स्त्रियेति पाणिन्यनुशासनं न तत् स्त्रीसद्वितीये पुंसि शक्तिनियमार्थमपि अकारात् परतः श्रूयमाण औकारो एकारीभवति यथा रमे—इति। यत्र तु पुनः स्त्रीपुंसावभिधेयौ विवक्षितौ तदोभयोरपि अभिधेययोः सत्वादौकारैकारयोरपि प्राप्तावौकारः शिष्यते इत्यौकारान्तपदप्रयोगनियमार्थम्। अतोऽनुशासनविरोधाभावाद्द्वौ पुमांसावेवाधिकारिणावित्युपसंहरति—**तस्माद्द्वौ पुमांसाविति। आवश्यिकीति।**

**यत्तु भाष्यादौ सरूपैकशेषसाधकं प्रमाणान्तरमुपन्यन्तं द्वन्द्वापवादत्वादेकशेषस्य द्वन्द्वार्थ एवार्थ इत्यवगम्यते, द्वन्द्वश्च 'युगपदधिकरणे द्वन्द्वो भवति' इति कात्यायनस्मरणात् युगपदधिकरणतावाची। अधिकरणं शब्दप्रतिपाद्योऽर्थः स यत्रानेको युगपदेकेन पदेन बोध्यते तत्र द्वन्द्वः। तथा च धवखदिरावित्यत्र धवपदं लक्षणया खदिरसहितधवपरं इतरसहितधवपरमेव वा। इतरत्तु खदिरपदान्निर्णीयते। एवं खदिरपदमपि। सेयं युगपदधिकरणता। इतरेतरयोगोऽप्ययमेव। अस्मिन्नेवार्थे द्वन्द्वः। चकारस्य हि चत्वारोऽर्थाः समुच्चयान्वाचयेतरेतरयोगसमाहाराः। तत्र विभक्त्यर्थान्वये परस्परनिरपेक्षत्वेऽपि क्रियान्वये दण्डचक्रादिवत् परस्परसापेक्षत्वे सति समत्वं समुच्चयः। अतश्च नेतरेतरयोगे न विकल्पे न वा अन्वाचयेऽतिव्याप्तिः। यथा 'अहरहर्नयमानो गामश्वं पुरुषं च' इत्यादौ। अन्वाचये तु एकस्य प्रयोजकत्वमपरस्य नेति न साम्यं, यथा काष्ठान्याहर शाकं चाहरेति। इतरेतरयोगे तु व्यासज्यवृत्तिविभक्त्यर्थे परस्परसाहित्येनान्वयः। यथा 'अग्निश्च सोमश्च देवता' इत्यादौ। अत्र 'धवं च**

---

यत्र हि समस्यमानयोः सम्बन्धः प्रमाणान्तरावधृतो भवति तत्र सहप्रयोगे विवक्षिते समासो भवति यथा राज्ञः पुरुषस्य च स्वस्वामिभावसम्बन्धेऽवगते पश्चाद्राजपुरुष इति समासः, द्वन्द्वे तु धवखदिरयोर्नैव कश्चित्सम्बन्धः प्रमाणान्तरावधृतो भवति, न ह्येकक्रियान्वयलक्षणः सम्बन्धो वक्तुं शक्यते, तस्य समासोत्तरभावित्वेन समासपूर्वभावित्वानुपपत्तेः। अतो द्वन्द्वेऽपि समासात् प्राक् अवश्यकल्पनीये सम्बन्धे अन्यस्यानुपलब्धेरेकशब्दाभिधेयत्वमेव धवखदिरयोः स कल्प्यते। न चासावपि पृथक् पदोपात्तयोर्धवखदिरयोः सम्भवतीत्यवश्यं द्वन्द्वसमाससिद्ध्यर्थं धवपदस्य खदिरसहितधवपरत्वं खदिरपदस्य च धवसहितखदिरपरत्वमङ्गीकृत्योभयोरुभयपरत्वाद्युगपदधिकरणवचनता आवश्यिकी। अत एवैकैकस्यैव प्रातिपदिकस्य द्व्यर्थत्वात् धवौ च खदिरौ चेत्येव विग्रहः स्वीकार्यः। अत एव व्यासज्यवृत्तिविभक्त्यर्थे परस्परसाहित्येन धवखदिरयोरन्वयः। यदि च धवशब्देन केवलो धवः खदिरपदेन च केवलः खदिरः उच्येत तदा खदिरात्परं द्विवचनानुपपत्तिः एकबुद्धिगोचराश्रयत्वेनैव सर्वत्र द्वित्वस्य प्रतीतेः। खदिरबुद्ध्यवस्थायां धवबुद्धेरतीतत्वात् एकबुद्धिविषयत्वासम्भवात्। तस्मात् द्विवचनबहुवचनानुरोधादेकैकस्य धवादिपदस्यार्थद्वयपरत्वावश्यम्भावाद्विभक्त्यर्थकर्मत्वे च सहितयोरेवान्वयेन प्रत्येकं परस्परनैरपेक्ष्येण विभक्त्यर्थेऽन्वयाभावादेव समुच्चयादितरेतरयोगस्य भेदसिद्ध्यर्थं युगपदधिकरणवचनताऽऽवश्यिकीति भावः। **इतरेतरयोगे द्वन्द्व इति। यत्र द्वयोरेक-**

**खदिरं च' इत्यादावितरेतरयोगविवक्षायां युगपदधिकरणवचनताऽऽवश्यकी। अन्यथा प्रत्येकं विभक्त्यर्थान्वयेनेतरेतरयोगस्य समुच्चयाद्भेदानापत्तेः। अत एव निरपेक्षयोरेकक्रियान्वयित्वं समुच्चय इति तन्त्ररत्नोक्तमपास्तम्। 'अमावास्यायां पौर्णमास्यां वा यजेत' इत्येकवाक्योक्तविकल्पे अतिव्याप्तेः। इतरेतरयोगसमाहारयोस्तु साहित्यस्य पदार्थान् प्रति गुणत्वप्रधानत्वकृतो विशेष इतरेतरयोगत्वं तुल्यम्। एषु चार्थेषु इतरेतरयोग एव द्वन्द्वः। अत एव चार्थानामनेकत्वेऽपीतरेतरयोगरूपचार्थे एव द्वन्द्व इति 'चार्थे द्वन्द्व' इति सामान्यसूत्रं महाभाष्यकारादिभिर्विशेषपरतया व्याख्यातम्। अतश्च युगपदधिकरणतावाचिद्वन्द्वापवादत्वादेकशेषस्यापि** तद्वाचित्वप्रतीतेः **'वसानौ' इत्यत्र पुंद्वयप्रतीतिरिति ॥**

---

क्रियान्वयस्तत्र इतरेतरयोगः। स एव समाह्रियमाणपदार्थप्राधान्ये सति इतरेतरयोग इति संज्ञां, पदार्थगतसमाहारप्राधान्ये सति समाहार इति च सञ्ज्ञां लभते। तत्र चार्थे द्वन्द्व इत्यनुशासनात् यद्यपि चकारार्थचतुष्टयेपि समासः प्राप्तस्तथापि अनेको यः प्रकृतो[1]ऽर्थः तत्र द्वन्द्वसमासविधानादहरहर्नयमानो गामश्वं पुरुषमिति च समुच्चये चकारं विना निरपेक्षयोरप्येकक्रियान्वयदर्शनेन न समासः किन्तु व्यस्तयोरेव प्रयोगः। अन्वाचये च यद्यपि काष्ठान्याहर शाकं चेत्यत्र नैव साहित्यं प्रतीयते तथापि काष्ठशाकयोः प्रयोजकत्वाप्रयोजकत्वप्राधान्याप्राधान्यविशेषणभिन्नकक्षतया सामर्थ्याभावादनेकग्रहणानुवृत्त्या अनेकपदयोश्चकारसम्बद्धयोः समासविधानप्रतीतेरेकस्यैव शाकपदस्य चकारसम्बन्धाच्च[2] न तत्रापि समासः। अतः परिशेषादितरेतरयोगसमाहाररूपचार्थ एव द्वन्द्वः समाहारस्य प्रधानस्यैकत्वात्परं समाह्रियमाणपदादेकवचनप्रयोगः समाहारद्वन्द्वे। इतरेतरद्वन्द्वे तु समाह्रियमाणपदार्थानां प्राधान्यात् द्विवचनबहुवचनप्रयोग इति। **तद्वाचित्वप्रतीतेरिति। अयमर्थः** इतरेतरयोगे चार्थे द्वन्द्वविधानादितरयोगस्य चाभिधानैक्यमन्तरेणाप्रतीतेः पृथगभिहितयोः समुच्चयवत् पृथगेव क्रियान्वयादेकेनैव शब्देन द्वयोरभिधानावश्यकत्वेन तदनुरूपो द्वन्द्वसमासो धवौ च खदिरौ चेति विग्रह एव युक्तस्तथैव तदपवादैकशेषेपि यौगपद्येनार्थद्वयाभिधानानुरोधेन वसानौ च वसानौ चेत्येवं विग्रहावश्यकत्वात् द्वौ

---

1. कॢप्तो
2. चेतनसम्बन्धाच्च

तत्र, विरूपैक**शेषाङ्गीकारेऽपि स्त्रीसहितपुंसः पुंसहितस्त्रियाश्च युगपदभिधानोपपत्तेः। न चैवं पुंद्वयं स्त्रीद्वयं चेति** चतुष्टयापत्तिः **धवखदिरद्वयवत् स्त्रीपुंद्वयोपपत्तेः।**

---

पुमांसावधिकारिणाविति तदेतद्भाष्यकारोक्तं दूषयति— **तत्रेति**। यदि द्वन्द्वे सरूपैकशेषापवादत्वमेव केनचित्प्रमाणेनावगतं भवेत् तदा नियमेन सरूपयोरेव द्वन्द्वप्राप्तौ तदपवादरूपैकशेषोपि सरूपयोरेवेति कल्प्येत न त्वेतदस्ति सरूपयोरिव विरूपयोरपि चार्थे द्वन्द्वसमासप्राप्तौ एकशेषविधिना साधारणतयाऽपवादरूपेणैकशेषो विधीयते; अन्यथा एकशेषमात्रस्य द्वन्द्वापवादकत्वानापत्तेः। अतश्च सरूपासरूपद्वन्द्वसामान्ये यदि युगपदधिकरणवचनताऽऽवश्यिकी तदा तदपवादभूतेष्युभयविधेप्येकशेषे नैव सा बाधिता भवतीत्यवश्यं वाच्यमिति न युगपदधिकरणवाचिद्वन्द्वापवादित्वमात्रेण वसानावित्यत्र सरूपैकशेषाङ्गीकारेण पुंद्वयप्रतीतिः सिद्ध्यतीत्यभिप्रायेण दूषणमाह—**विरूपैकशेषाङ्गीकारेऽपीति। चतुष्टयापत्तिरिति।** तथा च बहुत्वात् बहुवचनापत्तिरित्यर्थः। समाधत्ते— **धवखदिरद्वयवदिति। अयमर्थः।** यद्यप्येकेनैव पदेन प्रत्येकमर्थद्वयं प्रतिपाद्यते तथापि बहुषु बहुवचनमित्यनुशासनस्य न द्विवचनद्वयेन बह्वर्थप्रतिपादने बहुवचनमित्यर्थः। तथात्वे त्रिषु बहुवचनानापत्तेः ब्राह्मणौ शोभनौ विज्ञातावित्यत्रापि बहुवचनापत्तेश्चेति। अपि तु व्यासज्यवृत्तिद्वित्वानाश्रयीभूता यत्रानेकेऽर्था विवक्षितास्तत्र बहुवचनमिति। तथाच धवखदिरावित्यत्रैकेनैव द्वित्वेन द्विवचनात् एकद्वित्वानाश्रयीभूतानेकार्थविवक्षाभावान्न बहुवचनप्रसक्तिरर्थचतुष्टयाभिधाने तथैवेहापि न तत्प्रसक्त्यापत्तिरिति।

**स्यादेतत्।** वसानावित्यौकारान्तं तावत् पदं पूर्वोपपादितरीत्या पुंसि द्वित्वे च प्रवर्तमानमरुणैकहायनीन्यायेन परस्परान्वितार्थाभिधायीति निर्विवादं; तथाच यथा धवखदिरपदे युगपदधिकरणवचनतायामितरसहिततत्तत्पदार्थपरे अपि परस्परतत्तत्पदसमभिव्याहारतात्पर्यग्राहकानुरोधात् तत्तद्विशेषार्थसहितार्थलक्षके एव भवत इति धवपदस्य खदिरसहितार्थपरत्वात् खदिरपदस्य धवसहितखदिरपरत्वं लक्षणया। एवं वसानपदस्य इतरसहितपुंस्त्वाश्रयव्यक्तिपरत्वावश्यके इतरवाचकपदान्तरसमभिव्याहाररूपविशेषतात्पर्यग्राहकाभावे इतरविशेषानध्यवसायादनुपस्थितस्त्रीव्यक्त्यन्तरमादाय विशेषसाहित्योपपादनापेक्षया झटित्युपस्थितपुंस्त्वाश्रयव्यक्तिपरत्वं वाच्यं, तत्र च पुंस्त्वाश्रयव्यक्त्यन्तरसहितपुंस्त्वाश्रयव्यक्तिमात्रपरत्वेपीतरेतरसहितार्थद्वयपरत्वाभावे द्विवचनानुपपत्तेरितरेतरयोगसिद्ध्यर्थं पुंस्त्वाश्रययत्किञ्चिदेकव्यक्त्यन्तरसहितपुंस्त्वाश्रयव्यक्तिपरत्वं लक्षणया वसानपदस्य, तथैवेतरपुंस्त्वाश्रयव्यक्त्यन्तरसहितेतरपुंस्त्वाश्रयव्यक्ति-

**वस्तुतस्तु—कात्यायनोक्तं युगपदधिकरणतावाचित्वं पतञ्जलिभिरेव दूषितम्**। तस्यायमाशयः **धवपदे खदिरपदे च लक्षणायां प्रमाणाभावादितरेतरयोगस्य चशब्देनैव तात्पर्ये सति बोधो**

---

परत्वमप्यावश्यकमेव, तदेव हि युगपदधिकरणवचनना सिद्ध्यति। अत एवैतादृशार्थसिद्धेरितरयोगार्थप्रदर्शकं विग्रहवाक्यमपि द्वन्द्ववद्वसानौ चेत्येवमेवेति पुंद्वयप्रतीतिर्युक्तैव।

एतदभिप्रायक एव "अपि च युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः द्विवचनबहुवचनोपपत्तेश्च प्रमित्रयोर्वरुणयोरिति च दर्शनादितरेतरयोगे चार्थे समासविधानात् द्वन्द्वापवादत्वाच्चैकशेषस्य, यथैव खदिरौ च धवौ चेति निदर्शनं क्रियते एवमत्रापि द्रष्टव्यम्। तस्मात्पुंसि द्वित्वे च वर्तत इति गम्यते। न च स्त्रीत्वे दृष्ट" इति भाष्यग्रन्थः। तथा वार्तिककृतन्त्ररत्नग्रन्थोपि यथा द्वन्द्वे यौगपद्येन द्वावप्यभिधीयेते विग्रहश्च तदनुरूपस्तथैकशेषेऽपि यौगपद्येनार्थद्वयाभिधानं वसानाविति चैकशेषः वसानौ च वसानौ चेत्येवमेव विगृह्यैकशेष इत्यर्थः। तेन विग्रहेऽपि द्वौ पुमांसाविति न विग्रहालोचनयापि स्त्रीसहितिःयपुमभिधानसिद्धिरिति। एतादृशग्रन्थपर्यालोचने च यौगपद्येनार्थद्वयाभिधानकत्वमूलपुंद्वयप्रतिपादनपरविग्रहप्रदर्शनेन पुंद्वयप्रतीतिसाधनं मदुक्तरीत्यैव यौगपद्येन पुंद्वयार्थप्रतिपादकत्वे युज्यते नान्यथेति न विरूपैकशेषाङ्गीकारे युगपदधिकरणवचननासिद्धिः। अतो न भाष्योक्ते दूषणमेतद्युक्तमिति।

एतदस्वरसादेव वा युगपदधिकरणवाचित्वमेव **कात्यायनोक्तं** परमार्थतोऽयुक्तमिति साधयति— **वस्तुतस्त्विति**। किमेकैकपदस्य युगपदर्थद्वयाभिधायकत्वं पर्यायेणाभिधाने द्वित्वबुद्धेरसम्भवेन द्विवचनानुपपत्त्या उत पृथगभिधाने तयोः समुच्चयवत् पृथगेव क्रियान्वयापत्तेः इतरेतरयोगसिद्ध्यनुपपत्त्या वा। नाद्यः समासोत्तरं द्विवचनदर्शनेन समासस्य च द्व्यर्थाभिधायित्वेन द्विवचनोपपत्तेः। न ह्येकैकस्माद्धवखदिरपदात् द्विवचनं येन द्व्यर्थाभिधानाभावात्तदनुपपत्तिः शङ्क्येत। न च पर्यायेणाभिधाने द्वित्वबुद्ध्यसम्भवः।

"एकयैव च बुद्ध्याऽसौ गृह्यते चित्ररूपया।
पदार्थाहितसंस्कारचित्रपिण्डप्रसूतया॥

इति **न्यायेन** क्रमावगतानां एकस्मृत्यारूढानामारुण्यादीनां युगपत्क्रयभावनान्वयानुभववद्धवं खदिरं चानयेति वाक्ये क्रमाभिहितयोरपि धवखदिरयोरेकस्मृत्यारूढत्वेन द्वित्वान्वयानुभववच्च समासेपि धवखदिराभ्यां एकस्मृत्यारूढाभ्यां द्वित्वान्वये बाधकाभावात्। द्वितीये इतरेतरयोगस्य अन्यथापि प्रतीतिसम्भवेन पदद्वये लक्षणायां प्रयोजनाभावात् इत्यभिप्रेत्याह— **तस्यायमाशय इति**। **चशब्देनैवेति**। यद्यपि समासे चशब्दो न श्रूयते तथापि

पपत्तेः। अत एव धवं च खदिरं चेत्यादौ तात्पर्यानुरोधेन धवखदिरवृत्तिव्यासक्तकर्मत्वे

---

वृत्तिवाक्यविवरणरूपे विग्रहवाक्ये चशब्दश्रवणात् तदर्थे द्वन्द्वसमासविधानात् समासेन प्रतीयमानः इतरेतरयोगश्चशब्देनैव उच्यत इत्यभिप्रायेण व्यस्तसमस्तपदयोरपि इतरेतरयोगबोधो भवत्वित्येतदर्थं शब्देनैवेत्युक्तम्। अत एव धवंच खदिरं चेत्यनेनाग्रे व्यस्तप्रयोगेपीतरेतर-योगप्रदर्शनं कृतम्। तथा च यथैव धवं च खदिरं चानयेति व्यस्तप्रयोगे युगपद्वचनताऽ-भावेपि चकारवशादेवेतरेतरयोगावगमः तथैव धवखदिराविति चार्थे विधीयमानद्वन्द्वसमासेनैव तदवगमः सुलभ एवेति न तत्सिद्ध्यर्थं लक्षणामाश्रित्य युगपदभिधानं वक्तव्यम्।

ननु वाक्ये पृथक् चकारश्रवणात्तेन परस्परसाहित्यप्रतीतावपि समासे चकाराश्रवणात्समस्य-मानपदातिरेकेण समासानुपलब्धेः समस्यमानपदानामेवैकविभक्तिकत्वाद्युपाधिना समाससंज्ञा वाच्या। तथाच समासस्य शब्दान्तरत्वाभावाद्धवखदिरशब्दाभ्यामेवेतरेतरयुक्तस्वार्थाभिधाना-यावश्यकं युगपदभिधानमिति चेत्। परिहृतमेतत तन्त्ररत्ने। तथाहि— यद्यपि समासो नाम नैव शब्दान्तरमस्ति तथापि समस्यमाननामपदार्थानां कारकान्वयं विना साक्षात् क्रियान्वया-भावाच्छ्रूयमाणैकविभक्त्युपात्तकारकद्वारेणैवान्वयो वाच्यः। ततश्च समासे विभक्त्येकत्वात् तदभिहितेनैकेन कारकेण प्रधानभूतेन प्रथममन्विताः समासपदार्थाः पदार्था गुणभावेन च कारकं प्रति विवक्षितसाहित्यास्तद्द्वारेणैव सहत्यैव क्रियान्वयमनुभवन्ति विनापि चकारेण। यत्र तु प्रधानभूताः पदार्थास्तत्र द्वन्द्वस्थानामपि साहित्यं नैव विवक्ष्यते। यत्रापि कारकविभक्तिर्न श्रूयते सम्बन्धमात्रप्रतिपादिका तु षष्ठी सङ्ख्यामात्रप्रतिपादिका वा प्रथमा श्रूयते धवखदिरयोः फलानि धवखदिरौ तिष्ठत इत्यादिषु तत्रापि परिपूर्णस्य पदस्य पदान्तरसम्बन्धात् स्वपदस्थेन सम्बन्धसङ्ख्यादिना सम्बध्य पश्चादर्थान्तरसम्बन्धात् सिद्ध इतरेतरयोगः। वाक्ये तु विभक्ति-पृथक्त्वात् पृथगेव सम्बन्धश्चकाराभावे स्यादिति चकारेणैवेतरेतरयोगसिद्धिरिति विशेषस्तेन समासे विनापि चकारेण विनापि च युगपदभिधानेन विभक्त्येकत्वादितरेतरयोगसिद्धेरप्रामाणिकी युगपदधिकरणवचनतेति। एतदेव सर्वमभिप्रेत्याह— अत एव धवं च खदिरं चेति। तात्पर्यानुरोधेनेति। साहित्यविवक्षया प्रयुक्तचकारेण साहित्येऽवगततात्पर्यानुरोधेनेत्यर्थः। व्यासक्तकर्मत्वे इति। यद्यपि द्वितीयाविभक्तिद्वयं श्रूयते। तेन च द्वयोः पृथगेव कर्मत्वान्वयद्वारा क्रियान्वयः प्राप्तस्तथापि इतरेतरयोगार्थस्य चकारस्य तात्पर्यग्राहकत्वाद्द्वितीया-विभक्त्योर्धवखदिरवृत्तिव्यासक्तैकस्मिन् कर्मत्वे लक्षणाङ्गीकारेण समासवदेककारकद्वारेण

**लक्षणेत्यपिध्येयम् । द्वन्द्वे तु विभक्तेरेकत्वादेवेतरेतरयोगो लक्षणां विनैव निरवबाधः ।** यत्तु प्रमित्रयोर्व**रुणयोरिति वेदे क्वाचित्कं विग्रहप्रदर्शनं तच्छान्दसम् ।** अत एव **विभक्तेर्व्यासज्य-**

---

क्रियान्वयादितरेतरयोगसिद्धिः । द्वन्द्वे तु विभक्तेरेकत्वादेवोभयवृत्तिव्यासक्तैककर्मत्वबोधोपपत्तेर्न विभक्तेर्न वा समस्यमानपदयोः लक्षणेति भेद इति भावः । यत्तु मित्रावरुणयोरिति समासस्य वेदे युगपदधिकरणवचनतया मित्रश्च वरुणश्चेत्येकवचनान्तेनाविगृह्य प्रमित्रयोर्वरुणयोरिति विग्रहप्रदर्शनाद्विग्रहवत् समासेपि युगपदभिधानताऽऽवश्यिकीति भाष्योक्तं तदनूद्य परिहरति— **यत्तु प्रमित्रयोरिति ।** अत एव द्यावापृथिव्योस्तथेति चेदिति वक्तव्ये नवमे द्यावोस्तथेति चेदिति पठिते जैमिनिसूत्रे वार्तिककृता एकवचनान्तेनैव सर्वत्र लोके विग्रहदर्शनात् द्यावोरिति द्विवचनान्तविग्रहकरणमयुक्तमाशङ्क्योक्तम् ।

मित्रावरुणयोर्द्वन्द्वे विगृहीते प्रमित्रयोः । तथा वरुणयोश्चेति प्रत्येकं द्वित्वदर्शनात्[1] ।

जैमिनेर्वेदतुल्योक्तिविवक्षोत्सुकचेतसः ।
रूपाणि हि प्रवर्तन्ते शब्दानामीदृशान्यपि ॥

उक्तं च **तन्त्ररत्ने**— न हि लोके धवखदिरावानयेति तमर्थं विगृह्य कथयन् कश्चित् धवौ खदिरौ चानयेति प्रयुञ्जानो दृश्यते । तस्माच्छान्दसमेवैतदिति । नन्वस्तु तादृशविग्रहस्य वेदे छान्दसत्वं तथापि वैदिके प्रयोगे द्विवचनान्तविभक्तिद्वयदर्शनात् प्रत्येकमेव देवतात्वापत्तिरित्याशङ्कां परिहरति— **अत एव विभक्तेरिति ।** अत्र च द्विवचनान्तविग्रहप्रयोगस्य मित्रावरुणयोरिति द्वन्द्वसमासविवरणार्थत्वात् विग्रहवाक्यत्वेन प्रयुक्ते वैदिके तथाविधप्रयोगे प्रत्येकं विभक्तिश्रवणेपि द्वन्द्वसमासवाक्ये एकविभक्तिश्रवणात् तदनुरोधेन तत्रत्यविभक्तिद्वयस्यापि मित्रावरुणोभयवृत्तिव्यासक्तैकदेवतात्व परत्वमेव लक्षणया आश्रयणीयम् ।

ननु प्रमित्रयोर्वरुणयोरित्येतावन्मात्रदर्शनेन प्रमित्रवरुणपदयोः प्रत्येकमेकशेषाश्रयणेन मित्रद्वयवृत्तिदेवतात्वस्य वरुणद्वयवृत्तिदेवतात्वस्यैकस्य व्यासक्तस्य विभक्तिद्वयप्रतिपाद्यत्वाश्रयणं युक्तमित्ययमर्थो द्वन्द्व एव तादृशस्थले इति पदत्रयान्तर्वर्त्त्येवकारेण सूचितः । अतश्च न तादृशवैदिकविग्रहप्रदर्शनलिङ्गेन सर्वत्र नियमेन द्विवचनान्तविग्रहेण युगपदभिधानं युक्तम् । यदुक्तं सर्वेषामपि समासानां सम्बन्धोत्तरकालीनत्वाद्द्वन्द्वसमासे पूर्वमवगतसम्बन्धपदार्थानामेक-

---

1. T. द्वन्द्वदर्शनात्

**वृत्तिधर्मपरत्वे द्वन्द्व एव तादृशस्थले तात्पर्यग्राहक इत्यपि बोध्यम्। किञ्च द्वन्द्वापवादत्वेऽप्येकशेषस्य न तदुत्तरविभक्तेर्व्यासज्यवृत्तिधर्मपरत्वं वचनान्यत्त्व विभक्त्यर्थान्वयो-**

---

शब्दाभिधेयत्वरूपसम्बन्धस्यावश्यवाच्यस्य युगपदभिधानं विना असम्भव इति। तन्न। लोके धवखदिरयोः पर्यायत्वाभावेन शक्त्यैकशब्दाभिधेयत्वायोगेन लक्षणायाश्चाविनाभावादिरूपसम्बन्धनिमित्तायाः धवखदिरयोस्तथाविधसम्बन्धाभावेऽनुपपत्तेरेकशब्दाभिधेयत्वासम्भवात्। यदि तु एकक्रियान्वयसम्बन्धेन विनापि विवक्षारूढेव लक्षणा सम्भवतीत्युच्येत तर्हि तेनैव समासस्यापि सिद्धेरलं युगपदधिकरणवचनतयेति भावः।

अस्तु वा द्वन्द्व इव तदपवादभूतैकशेषेपि युगपदधिकरणवाचित्वं तावतापि द्वन्द्वोत्तर विभक्त्या व्यासक्तोभयवृत्त्येककारकाभिधानवदेकशेषोत्तरविभक्त्योभयवृत्त्येककारकाभिधानं न शक्यमित्याह— किं चेति। पशुभिर्यजेतेत्यत्र बहुत्वस्य यदि प्रथमतः प्रातिपदिकार्थेऽन्वयः स्यात्तदा अनेकार्थपरबहुवचनतात्पर्यग्राहकानुरोधेन एकस्मिन् प्रातिपदिके कथञ्चिदेकशेषः स्वीक्रियेतापि, न त्वेतदस्ति, समानाभिधानश्रुत्या प्रथमतस्तस्य करणत्व एवान्वयेन प्रातिपदिकार्थेऽनन्वयादनेकप्रातिपदिकार्थबोधकत्वस्य पूर्वमसम्भवेनैकशेषतात्पर्यग्राहकत्वानुपपत्तेः तदुत्तरविभक्तेर्व्यासज्यवृत्तिकरणत्वबोधकत्वस्य वक्तुमशक्यत्वात्।

अस्तु वा बहुत्वस्य प्रातिपदिकार्थ एवान्वयस्तथापि प्रकृतिप्रत्ययये रन्विनार्थाभिधायकत्वानुरोधेन प्रथमतः प्रत्ययोपात्तकरणत्व एव प्रातिपदिकार्थान्वयस्यावश्यकर्तव्यतया तस्मिन् काले प्रातिपदिकार्थानेकत्वावगतौ नानेकवृत्तिव्यासक्तकरणत्वबोधस्तदुत्तरविभक्त्या सम्भवति भिन्नशक्तताविच्छिन्नप्रतिपाद्यस्य बहुत्वस्य विभक्त्यर्थान्वयोत्तरमेवान्वयेनानेकार्थप्रतिपादकत्वस्य प्रातिपदिकेऽसम्भवात्। द्वन्द्वे तु पदद्वयेनैव विभक्त्यर्थान्वयात् पूर्वमर्थानेकत्वबोधनेन तदुत्तरैकविभक्त्या एकव्यासक्तकारकबोधो नासुलभः।

एवं च पशुप्रातिपदिकार्थस्य विभक्त्यर्थे इतरनिरपेक्षस्यैकस्यैवान्वयेन तद्वृत्तिकरणत्वबोधानन्तरमन्वीयमानबहुत्वान्वयानुरोधेनार्थानेकत्वावश्यम्भावे सकृच्छ्रुतस्य पशुपदस्य सकृदर्थप्रत्यायकत्वेनेतरानेकपशुव्यक्तिबोधजननेऽसामर्थ्यादवश्यतद्बोधनायेतरं पशुपदद्वयं बहुत्वान्वयपर्याप्तार्थकं प्रकल्प्यते न पदत्रयेण प्रतिपाद्यार्थस्य पार्यन्तिकेरितरयोगसत्वात्पशुश्चपशुश्चपशुश्चेति विग्रहेण पशुपशुपशुभिरिति द्वन्द्वसमासे प्राप्ते एकशेषसमासविधिना पशुपदद्वयलोपेनैकपशुपदस्यावशेषबोधनादवशिष्टस्यैकस्यैव पशुपदस्य लुप्तपदोपस्थापकत्वकल्पनयाऽर्थत्रयपरत्वमङ्गीकृत्य पश्चात्

कल्प्यमानस्त्रयाणां करणत्वेऽन्वयोऽपि पूर्वावगतनिरपेक्षतानुरोधात् प्रत्येकवृत्तिन्येव करणत्वे तृतीयया तन्त्रेणोपात्ते स्वीक्रियते इति तत्तत्पशुव्यक्तीनां तत्तत्करणत्वद्वारा यागभावनान्वयादेक-वाक्योपादानेन चारुण्यादीनामिव समुच्चयात् पार्यन्तिकं साहित्यं सिद्ध्यत्येकशेषसमासे इति न विभक्त्यर्थे करणत्वेऽन्वयार्थमितरेतरयोगापेक्षा। येन द्वन्द्वापवादत्वेन युगपदधिकरणवचनता, नवा तदनुरोधेन एकशेषेऽपि द्विवचनबहुवचनान्तेन विग्रहः स्वीकर्तव्य इति। एतच्च पशु-प्रातिपदिकार्थस्य विभक्त्यर्थान्वयोत्तरं वचनान्वये सत्येकशेषनिरूपणं तदुत्तरविभक्तेरेकशेष-निमित्तत्वाभिप्रायेण द्रष्टव्यम्।

यदि तु वैयाकरणसिद्धान्तमर्यादाऽऽलोच्यते तदा विभक्तेरेकशेषे उपलक्षणत्वमात्रमेव, अन्यथा भिक्षाणां समूहो भैक्षमिति तद्धितानापत्तेः भिक्षाशब्दत्रयादामि एकशेषात् पूर्वमन्तरङ्गत्वे-नामो लोपस्यैवापत्त्या विभक्तेर्निमित्तभूताया: अभावेनैकशेषासम्भवात्। अत एकशेषे द्विवचन-बहुवचनदर्शनेनोपलक्षितार्थबहुत्वं बुद्ध्यारूढं कृत्वा तत्तदनेकार्थपरसरूपपदप्रयोगे प्राप्ते तेषां पदानां प्रत्येकं अर्थत्वे[1]न यावत्प्रत्येकपदोत्तरं प्रत्येकं सुबुत्पत्तिः प्रसक्ता भवति ततः पूर्वमेक-शेषानुशासनेनेतरसरूपपदलोपेनैकपदावशेषे विहिते शिष्यमाणस्यैव पदस्य[2] लुप्यमानानेकार्थपरत्वे-सति प्रातिपदिकसंज्ञया भवति तदुत्तरं द्विबहुवचनपरा विभक्तिः। अत एवैकशेषे पशुश्च पशुश्च-पशुश्चेत्यादि सुबन्तत्वासम्भवात्। एवं च सुबन्तत्वाभावादेव द्वन्द्वाप्रसक्तेः एकशेषस्य द्वन्द्वापवादत्वमपि। यद्येकशेषविधिः स्यात्तर्हि प्रत्येकं विभक्तिः स्यात् द्वन्द्वश्च प्रवर्तेत। आरब्धे त्वेकशेषे अनेकसुबन्तविरहाद्द्वन्द्वस्याप्राप्तिरेव फलिता भवतीत्येवं तार्किकीं प्रसक्तिमादायैव द्रष्टव्यम्।

द्वन्द्वे तु पदद्वयस्य श्रूयमाणत्वादर्थवत्वेन प्रातिपदिकसञ्ज्ञया सुबन्तयोः समासविधान-मिति सुबुत्पत्त्यनन्तरमनेकार्थसाहित्यविवक्षायां द्वन्द्वः, विभक्त्युत्पत्तेः पूर्वमनेकार्थसाहित्य-विवक्षायां एकशेष इत्येव निर्णयः। न च द्वन्द्वसमासोत्तरमेवैकशेषविधिनेतरपदलोपविधानोप-पत्तेः द्वन्द्वे प्रसक्ते एकशेष इत्येवं द्वन्द्वे प्रसक्ते एकशेषविधानं किमित्याश्रयणीयमिति वाच्यम्। तथात्वे द्वन्द्वसमासोत्तरमेकशेषविधानेपि करौकरा इत्यादिषु प्राण्यङ्गत्वेनैकवद्भावापत्तेः। सर्वे सर्वेषामित्यादौ 'द्वन्द्वे' च विभाषा जसि इत्यनयोरापत्तेश्च। अतश्चैकशेषसमासोत्तरमेव विभक्त्युत्पत्तेः ततः पूर्वमनेकार्थानां प्रातिपदिकेनाभिहितानामेव तदुत्तरविभक्त्यन्वयात् द्वन्द्व इव

1. P. अर्थपरत्वेन
2. P. रूपस्य

**त्तरकालीनत्वेन ततः पूर्वमेकशेषत्वग्राहकप्रमाणाभावात्।** वस्तुतस्तु **एकशेषानुशासनमपि** परिभाषामात्रमेव **सरूपद्वन्द्वनिराकरणार्थं, एकप्रातिपदिकार्थस्यैव द्विवचनादिबलेनानेकत्वप्रतीत्युपपत्तेः। विरूपैकशेषे तु तात्पर्यग्राहकानुरोधेनानुशासनिकी औकारे लक्षणेति विशेषः।**

---

संभवत्येवैकशेषोत्तरविभक्तेरपि व्यासज्यवृत्तिधर्मपरत्वमिति दिक्।

अधुनाऽवशिष्टपदस्य न लुप्तपदोपस्थापनेनार्थपरत्वं न तावत्तत्पदलोपेनैकशेषसमासान्तरमर्थान्तरबोधायाश्रयणीयमित्यभिप्रेत्याह—**वस्तुतस्त्विति। परिभाषामात्रमेवेति। यद्यपि** व्यक्तिवादित्वपक्षे न तावद्यावद्व्यक्ति तत्तच्छब्दप्रयोगे प्राप्ते एकस्यैव प्रयोगो यथा स्यादित्येतदेकशेषानुशासनप्रयोजनं संभवति न ब्राह्मणं हन्यादित्यत्रैकेनैव ब्राह्मणपदेनानेकव्यक्तीनां तन्त्रेणाभिधानवदिहापि द्विवचनादिबलादुपस्थितानेकव्यक्तीनामपि तन्त्रेणाभिधानोपपत्त्या यावद्व्यक्ति शब्दप्रयोगप्राप्तिनियमाभावात्। आकृतिपक्षे तु आकृत्यविनाभूतानेकव्यक्तीना सुतरां तन्त्रेणाभिधानोपपत्तेः न तत्रापि तदर्थमनेकपदाप्राप्तावेकशेषानुशासनापेक्षेति व्यर्थमेवैकशेषानुशासनमिति वक्तुं युक्तं; **तथापि** सर्वत्र तन्त्रेणैवैकेन पदेनानेकार्थबोधनं कार्यमिति नियामकाभावात् कदाचित् पर्यायेणार्थद्वयप्रतिपादकपदद्वयपदत्रयप्रयोगे कर्तव्ये रामरामाविति द्वन्द्वसमासान्तप्रयोगोप्यापद्येत तन्निवृत्त्यर्थमर्थवदेव तदनुशासनमित्यभिप्रायेण सरूपैकशेषप्रयोगे द्वन्द्वसमासान्तप्रयोगो न किन्त्वेकसरूपपदप्रयोग एवेत्येवं परिभाषामात्रमेव न त्वनेकार्थप्रतीत्यर्थं एकशेषसमासान्तरविधानार्थमित्यर्थः। **अनेकत्वप्रतीत्युपपत्तेरिति।** यथैव घट इत्येकवचनान्ते प्रातिपदिकस्य तन्त्रेणानेकव्यक्तिबोधकत्वासम्भवेप्येकवचनतात्पर्यग्राहकानुरोधेनैकव्यक्तिपरतैव पर्यवस्यति, तथैवैकव्यक्त्युपस्थापकत्वेनापि सम्भवतोऽपि[1] घटप्रातिपदिकस्यापि घटाविति द्विवचनान्ते द्विवचनादितात्पर्यग्राहकानुरोधेन तन्त्रेणानेकव्यक्तिपरता भविष्यति मध्ये तावता सरूपैकशेषत्वेन तवाभिमते न काचिल्लक्षणा कस्यचिदपि पदस्यास्तीति भावः। **आनुशासनिकीति।** कुक्कुटावानय मिथुनं करिष्याम इत्यत्र तावन्मिथुनादिपदसमभिव्याहारान्न सरूपैकशेषः। विरूपैकशेषे त्वाश्रयितव्ये स्त्रिया सहोक्तौ पुमान् शिष्यते स्त्रीवाचकं तु लुप्यत इत्यर्थकेन पुमान् स्त्रियेत्यनुशासनेन कुक्कुटाविति पुंलिंगप्रयोगस्यैव नियमकरणवशात् कुक्कुटप्रातिपदिकस्य स्त्रीपुंसयोः साधारणतया प्रवृत्तस्य पुम्मात्रवृत्तिद्वित्ववाचकेनौकारेण पुंविशेषमात्रपरत्वं प्राप्तमपनीयौकारस्यैव स्त्रीपुंवृत्तिद्वित्वपरत्वं लक्षणया आश्रीयते। तद्वशाच्च

---

1. P. Omits अपि

अतस्तद्द्विया **सरूपैकशेषस्यैवाङ्गीकारात् पुद्व्याधिकार इति प्राप्ते—**

वसन्तादिवाक्ये **'आदधीत' इत्येकवचनस्य पाक्षिकानुवादत्वापत्तेः ब्राह्मणद्वयकर्तृकाधाने वसन्तप्राप्त्यनापत्तेश्च वसन्तादिवाक्येष्वेवाधानविधानम्।** वसानवाक्ये **तु एककर्तृत्वविशिष्टाधाने कर्तृत्वद्वित्वक्षौमोभयविध्ययोगादानुशासनिकीं लक्षणामङ्गीकृत्य परं विरूपैकशेषोऽ**धिष्ठानलक्षणया। **तस्मिन् द्वित्वान्वयोऽपि पाक्षिको युक्तस्समाश्रयितुम्।** अत

---

कुक्कुटप्रातिपदिकमपि स्त्रीपुंसयोरेवाभिधायकं सम्पद्यते यत्रापि पितरावित्यत्र न साधारणं पितृपदं तत्राप्यौकारे एव मातृत्वादिविशेषधर्मावच्छिन्नसद्वितीयपुंव्यक्तिवृत्तित्वे द्वित्वे लक्षणेति सर्वथा आनुशासनिकी औकारे लक्षणा न तु प्रातिपदिके इपि भावः। पूर्वपक्षमुपसंहरति—**अतस्तद्द्वियेति।** यद्यप्यत्रापि क्षौमे वसानौ जायापती अग्नी आदधीयातामित्येवमेव वचनस्य कल्पसूत्रकारैर्लिखनात् जायादिपदतात्पर्यग्राहकबलात् लक्षणयापि विरूपैकशेषाश्रयणमेव युक्तमिति न पुंद्व्याधिकारपूर्वपक्षसिद्धिस्तथापि जायापतिशब्दपूर्वं द्वन्द्वसमासान्तं व्युत्पाद्य पश्चाज्जायापती च जायापती च जायापती इत्येवं सरूपैकशेषस्यैव लक्षणापत्तिभियाऽऽश्रयणात् सस्त्रीकपुंद्व्याधिकारपूर्वपक्षसिद्धिरित्यभिप्रायः। **वसन्तादिवाक्ये इति। अयमर्थः** न तावत् वसन्तादिवाक्ये ब्राह्मणादिमात्रस्य निमित्तत्वं, अन्यस्मिन्नपि ब्राह्मणादिकर्तृके कर्मणि वसन्तादिकालापत्तेः अतो निमित्तत्वपर्याप्तिसिद्ध्यर्थं हविरार्तिन्यायेनावश्यं लक्षणया ब्राह्मणकर्तृकाधाने निमित्ते वसन्तादिकालविधानं स्वीकर्तव्यं तदा आदधीतेत्येकवचनश्रवणादेकत्वस्य यदि न निमित्तकोटौ निवेशस्तदा नित्यवच्छ्रुतस्यैकत्वस्य पाक्षिकानुवादत्वापत्तिरत एकत्वविशिष्टब्राह्मणकर्तृकाधानस्यैव विशिष्टलक्षणया निमित्तत्वावश्यम्भावे ब्राह्मणद्वयकर्तृकाधाने वसन्तप्राप्त्यनापत्तिरिति। **यदि** वसन्तादिवाक्येष्वेव विशिष्टाधानभावनाविधानं तदा प्राप्ताधानोद्देशेनेह गुणविधानमेव कर्तव्यं तत्र न तावत् कर्तृत्वद्वित्वरूपगुणो विधेयः उत्पत्तिशिष्टकर्तृत्वैक[1]त्वाविरोधे सति तस्मिन्नुत्पत्तिशिष्टगुणनिवेशायोगात्। क्षौमपदानर्थक्यापत्तेश्च। न च मलिनत्वगुणेन शब्दवत्वयोगेन वा क्षौमपदस्य गौणत्वाङ्गीकारेणानुवादकत्वं युक्तं केवलावयवयोगस्य गौण्याश्च रूढ्या बाधात्। नाप्युभयविशिष्टगुणविधान प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदापत्तेः। अतो वाक्यभेदापादकगुणादाधानान्तरविधानाङ्गीकारे प्रकृतप्रत्यभिज्ञानबाधविशिष्टविधिगौरवादृष्टान्तरकल्पनापत्तेः तदपेक्षया विरूपैकशेष एव युक्त इत्यभिप्रेत्याह—**वसानवाक्ये त्विति। अधिष्ठानलक्षणयेति।** यद्यप्यन्यत्र दम्पत्यधिकारिककर्मविधिष्वेकवचनान्तेनाख्यातेन सहाधि-

---

1. P. कर्त्रैकत्व

एव तत्र क्षौममात्रं वसनक्रियोद्देशेन विधीयते। युक्तश्च कृदुपात्तभावनायामपि कारक-सम्बन्धः। विधायकस्त्वादधातिपर एव प्रत्ययः। उपक्रमस्थक्षौमपदे श्रुत्यर्थलाभाय च

---

कारप्रतिपादकवचनानुरोधात् व्यासक्तं कर्तृत्वं लक्षयित्वा तत्रैकत्वान्वयः प्रागुपपादितस्तथापीहोत्पत्तिवाक्यगतैकत्वानुरोधात् कर्तृत्वलक्षणया तस्मिन् द्वित्वान्वयं विहाय कर्तृत्वाधिष्ठान एवान्यत्र सामान्यतः क्लृप्तां लक्षणामारुयातस्याङ्गीकृत्य तथैव द्वित्वान्वयो युक्त इति भावः। अत्र च वार्तिकनन्त्ररत्नादौ धात्वर्थस्योद्देश्यत्वेनापि सम्बन्धो भवत्वित्येतदर्थमाधानोद्देशेन क्षौमविधानमङ्गीकृत्य न च तदा क्षौमस्याधानाधिकरणत्वापत्तिरित्याशङ्क्य परिहृतं— न साक्षादाधानार्थं क्षौमं भवति, किन्तु तत्साधनस्य पुरुषस्य वसनार्थं भवति। न ह्यत्रात्यन्ताप्राप्तं क्षौमं विधीयते किं तु पक्षे प्राप्तं नियम्यते, प्राप्तिश्च पुरुषसंस्कारतयेति तादृशस्यैव नियममात्रं आधानाङ्गतया विधीयत इति नाधिकरणत्वप्रसङ्गः। एवं चाधानाङ्गतया वाक्येन क्षौमप्रातिपदिकार्थमात्रं विधीयते; तद्गता च द्वितीयाविभक्तिः सकलं च वसानपदमनुवाद इति। तदयुक्तम्। व्रीहीनवहन्तीत्यादिनियमविधिषु स्ववाक्योपात्तोद्देश्यसम्बन्धित्वेनैव पक्षे प्राप्तस्य अवहननस्य नियमः क्रियते इत्यर्थस्य क्लृप्तत्वेनेहापि आधानसम्बन्धित्वेनैव पक्षे अधिकरणतया प्राप्तस्य क्षौमस्य नियमकरणापत्त्या पुरुषसंस्कारतया नियमविधानासम्भवात्। यदि त्वायतनान्तरविधानानुरोधेन आधानाधिकरणतया नियमः कर्तुं शक्यत इत्युच्येत तर्हि उद्देश्यसम्बन्धित्वेन नियमविषयस्य पक्षे प्राप्त्यसम्भवे[1]ऽपूर्वतयैवाधिकरणत्वविधानापत्तिर्दुर्निवारैव। न ह्यत्रानर्थक्यतदङ्गन्यायेनापि पुरुषद्वारत्वनियमः प्राप्नोति। अन्येषामपि तदङ्गत्वाविशेषात् इत्यभिप्रायेण तदुक्तद्वितीयपक्षमेव सिद्धान्तपक्षत्वेनानुवदति— अत एवेति। अस्मिन्नपि पक्षे वसनभावनायां यस्य कस्यचिदपि वाससः पक्षे प्राप्तेः तत्र पक्षे प्राप्तस्य क्षौमस्य नियममात्रकरणात्तद्गतकर्मत्वस्य प्राप्तत्वेनानुवादिन्येव विभक्तिरित्यभिप्रेत्य क्षौममात्रमिति मात्रचः प्रयोगः। वसनभावनामात्रस्वरूपे त्वानर्थक्यप्राप्तौ जञ्जभ्यमानपुरुषस्य क्रतुसम्बन्धित्वेनेहापि प्रकरणोपस्थापिताधानापूर्वसाधनीभूताधिकारिगतत्वेनोपस्थितिसम्भवादन्यत्राप्रसक्तेः प्राप्तस्यैवाधानसम्बन्धस्याधिकारिगतद्वित्वस्य चानुवादावेव द्विवचनाधान-

---

1. P. प्राप्तिसम्भवे

**विप्रकृष्टार्थस्यापि विधायकः।** अन्यत्तु सर्वं **प्रकरणप्राप्तत्वादनूद्यते।** यद्यपि **चोत्पत्तौ पुंस्त्वश्रवणात् स्त्रियमादाय द्वित्वं न प्राप्यते। तथाऽपि विशिष्टविधौ गौरवपरिहाराय वसानवाक्ये वाक्यभेदपरिहाराय च ब्राह्मणादेरधिकारित्वेनैवान्वयाङ्गीकारात् तस्य चोद्देश्यत्वेन तद्विशेषणपुंस्त्वस्याविवक्षोपपत्तेः स्त्रियमादाय द्वित्वप्राप्त्यविघातः। द्विवचनं चात्रा**धिष्ठानानेकत्वमात्र**परम्, तेन पत्न्यनेकत्वेऽपि न कश्चिद्विरोधः।** अत एव **पुमान् स्त्रीसद्वितीय आधाने अधिकारी ॥ ५ ॥**

---

## (६)—तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

**स्थिते स्त्रिया सहाधिकारे यत्र तावत्स्वत्वत्यागः श्रुतस्तत्प्रधानं दक्षिणादानादि तत्** द्वाभ्यां कार्यमित्युक्तमेव। **अत एव वरणादिद्वारा आर्त्विज्येष्वप्युभयोरपि प्रयो[illegible]कर्तृत्वम्।**

---

शब्दावित्यभिप्रेत्याह—**अन्यत्तु सर्वमिति।** ननु द्विवचनार्थस्य यथाप्राप्तानुवादकत्वेनाविधेयत्वं वाच्यं, न ह्याधानोत्पत्तिवाक्ये पुंस्त्वे श्रूयमाणे सति आधाने स्त्रियमादाय द्वित्वसम्भवोऽस्ति। अतः प्राप्त्यभावेनानुवादत्वासम्भवात् विधेयत्वापत्तौ स्त्रीसद्वितीयपुंद्वयाधिकारसिद्धिरित्यभिप्रायेणाशङ्क्य निराकरोति—**यद्यपि चोत्पत्ताविति। विशिष्टविधिगौरवपरिहारायेति।** आधानोत्पत्तिवाक्ये कर्तृगतैकत्वपुंस्त्वविशिष्टब्राह्मणकर्तृकाधानस्वीकारे पुंस्त्वांशेपि विशेषणविधिकल्पनापत्तेः विशिष्टविधिगौरवमित्यर्थः। **अधिष्ठानानेकत्वमात्रेति।** नात्र द्विवचनमधिष्ठानद्वित्वाभिप्रायेण नेतुं शक्यं, पत्न्यनेकत्वे सति द्वित्वानुपपत्तेः। अतस्तत्साधारण्येनाधिकारसिद्ध्यर्थं पुमानेकमधिष्ठानं तदतिरिक्तं च भार्यारूपमपराधिष्ठानमित्येवं पुंव्यतिरिक्तत्वेनोपाधिना भार्यात्वसमानाधिकरणेन अपरा कोटिस्तद्द्वित्वमादाय द्विवचनमित्यर्थः। सिद्धान्तमुपसंहरति—**अत एव एवेति।** अत्र च क्षौमशब्दे प्राचीनप्रयोगाभावादेवान्यत्र प्रयोगासिद्धेर्न रूढिकल्पनं युक्तमिति मतखण्डनं **तन्त्ररत्ने** कृतं तद्दूषणमुद्भिदधिकरणे च **कौस्तुभे** पूज्यपादैरुपपादितं तत्रैव द्रष्टव्यम् ॥

---

**॥ तस्याः यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥**

**द्वाभ्यां कार्यमिति।** अत्रापि द्वाभ्यामिति द्विवचनं अधिष्ठानानेकत्वाभिप्रायेणैव नेयं, न तु पत्न्यनेकत्वेन पत्न्यन्तरव्यावृत्त्यर्थं सर्वासामपि पत्नीनां संसृष्टद्रव्यतया समानन्यायेन सहाधिकारस्य

ये च फलिसंस्काराः कर्तृसंस्काराश्च ते फलित्वकर्तृत्वयोरविशेषादुभयोरपि। तत्रापि यत्र 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानम' इत्यादौ प्रतिनियतनिर्देशः तत्र 'अर्धमन्तर्वेदि' इतिवत् लक्षणया पुंस्त्वादेरप्युद्देश्यान्तर्भावाङ्गीकारेण सत्यप्युभयोरेकापूर्वसाधनत्वे व्यवस्थैव। विशेषनिर्देशाभावेऽपि च यत्र 'केशश्मश्रु वपते' इत्यादौ केशश्मश्रुणोश्शरीरसंस्कारार्थवपनं प्रत्युपादेयत्वेन द्वन्द्वावगतसाहित्यविवक्षा, तत्रापि पत्न्याश्श्मश्रुभावेन केशानां न वपनं, न हि तत्केशश्मश्रुसंस्कारकम्, तेषामनुपयुक्तत्वात् अतस्तदपि यजमानस्यैव। अत एव यजमानानेकत्वे पत्न्यनेकत्वे द्विविधस्यापि प्रत्येकं करणम्। यत्र क्रत्वर्थेष्वाज्यावेक्षणादिषु प्रतिनियतनिर्देशस्तत्रोपादेयविशेषणस्य विवक्षितत्वात् तेन

---

प्रमाणायातत्वात्। अत एवाग्रे उभयोरपीत्यादिलिखनमप्येतदभिप्रायकमेव ज्ञेयम्। उक्तमेवेति। स्ववतोरित्यधिकरणे प्रागिति शेषः। अनुपयुक्तत्वादिति। अत एव केशश्मश्रु वपते इत्यत्र सत्यपि कर्मत्वार्थैकवचने लक्षणयैव सक्तूनामिव तयोः करणत्वमिति केशश्मश्रुकरणकवपनं फलिसंस्कारकमित्युपादेयत्वात् तद्गतं साहित्यं नाविवक्षितं, अतो वपनातिरिक्ताः संस्काराः उभयत्रापि संभवन्तीत्यर्थः।

वस्तुतस्तु अञ्जनादिभिः संयोगेन चक्षुरादिसंस्कारस्येव धावनेन दन्तादिसंस्कारस्येव निकृन्तनेन छिन्नावशिष्टनखसंस्कारस्येवेहापि सूक्ष्मरूपतया स्थितछिन्नावशिष्टकेशश्मश्रुसंस्कारस्योपपत्तेरन्यथा शरीरसंस्कारार्थत्वोक्तेरप्यसम्भवापत्तेः। छिन्नसंस्कारार्थत्वेऽपि वा अनुपयुक्तस्थाणुसंस्कारेण तदवयवयूपसंस्कारार्थत्वस्य स्थाण्वाहुतेरिवेहाप्यनुपयुक्तछिन्नसंस्कारेण तदवयविसूक्ष्मरूपकेशश्मश्रुसंस्कारार्थत्वस्योपपत्तेः। फलभोक्तृत्वयोग्यतावच्छेदकविधया संस्कार्यत्वाविघातात् पत्न्याः केशवपननिषेधकं वचनान्तरमेवान्वेषणीयम्। अथवा यदाश्रयत्वेन लोकतो नापितकर्तृकवपनं प्राप्तं तस्यैव फलिसंस्कारार्थत्वेन विनियोगमात्रं क्रियत इत्यर्थस्य तृतीयाष्टमपादे सिद्धान्तितत्वात् पत्न्याश्चाश्रयत्वेन लोके प्राप्त्यभावादेव तत्संस्कारकतया न वपनादीनां प्राप्तिरिति वा समाधेयमिति मम प्रतिभाति।

**तेन प्रतिनियतेनैकेन च कर्त्रा करणम् ।** अत एव पत्न्यनेकत्वे सन्निहितया **ज्येष्ठयैव । यत्र तु याजमानमिति विशेषसमाख्यया कर्तृनियमस्तत्र यजमानप्रातिपदिकस्योभयपरत्वोपपत्तेः विरूपैकशेषाङ्गीकारेण द्विवचनबहुवचनान्तविग्रहेण चोभयोरपि वैकल्पिकं कर्तृत्वमिति प्राप्ते—**

---

यत एव ये संस्काराः संस्कार्यसंस्कार्यकाः तत्र संस्कार्यगतपुंस्त्वैकत्वादेरविवक्षितत्वमत एवाह—**अत एवेति ।** यजमानानेकत्वे सत्रादौ सर्वेषु यजमानेषु फलिसंस्काराः कर्तृसंस्काराश्च भवन्ति, न तु गृहपतित्वेनाभिमते एवेति सत्रे **गृहपतिरसंयोगाद्धौत्रवदिति** द्वादशोपान्त्याधिकरणे वक्ष्यते । तेनैव न्यायेन पत्न्यनेकत्वेपि सर्वत्र कर्तृफलिसंस्काररूपेण द्विविधस्याप्यनुष्ठानमित्यर्थः । अत्र स्ववतोस्तु वचनादैककर्म्यं स्यादित्यधिकरणे भाष्यकारेण यस्य द्वितीया पत्न्यस्ति तत्र क्रत्वर्थानेका करिष्यतीत्युक्तं तत्र विशेषमाह—**सन्निहितया ज्येष्ठयेति ।** तथाचोभयोः सन्निधानं ज्येष्ठत्वं नियामकं ज्येष्ठायाः **स्वरूपेणासन्निधानेन** वा अभावे सन्निधानमात्रमेव नियामकमित्यर्थः । अनेनैव न्यायेन सान्निध्यस्यैव गृहपतित्वादिरूपस्य नियामकस्य सत्त्वे सत्रे गृहपतिनैव क्रत्वर्थपदार्थानुष्ठानमित्यपि वक्ष्यते द्वादशे । अत एव कुलाययागेऽनियम एव तमिमं न्यायसिद्धं सर्वासामपि पत्नीनां सहाधिकारं मत्वा **त्रिकाण्डमण्डनकारिका—**

भार्याः सन्तीह यावत्यस्ताभिः सर्वाभिरन्वितः । इति । प्रायस्त्विदानीमिमं पक्षमुपेक्ष्य लाघवसौकर्यार्थं "यद्वा सवर्णया ज्येष्ठभार्ययैव समन्वित" इति तदुक्तं पक्षमेवाचरन्ति याज्ञिकाः । पक्षान्तरमपि च तेनैवोक्तं 'यद्वाधानादुपर्यूढकामपत्नीविवर्जितः' इति । एवं चानयोः पक्षयोः वाचनिकत्वमेव द्रष्टव्यम् । **वैकल्पिकमिति । अत्रेदमवधेयम् ।** यदि कृतविरूपैकशेषाद्यजमानपदाद्याजमानमिति तद्धितोत्पत्तिर्विवक्षिता तदा अग्नीषोमीयमित्यत्र द्रव्ये सहितयोः देवतात्ववदिहापि तत्तत्पदार्थेषु परस्परसहितयोरेव कर्तृत्वापत्तौ क्व वैकल्पककर्तृत्वप्रसक्तिः? अत एव **वार्तिकतन्त्ररत्नादौ** यथैव याजमानमिति तद्धितोत्पत्तिर्यजमानपदात्तथैव यजमानापदादपि सम्भवति एवमकृतैकशेषे एव केवले यजमानापदे तद्धितोत्पत्तिमङ्गीकृत्यैव याजमानमिति समाख्यातेषु पदार्थेषु उभयोः कर्तृत्वेऽनियम उक्तः । **युक्तं चैतत् ।** निरपेक्षोभयवृत्तिगुणभूतकर्तृत्वानुरोधेन प्रधानभूतपदार्थावृत्तौ प्रमाणाभावात् परस्परसाहित्यस्याप्रतीतेश्च । अत एव सिद्धान्ते केवलपुंपरयजमानपदादेव तद्धितोत्पत्तिप्रसाधनेनानियमपूर्वपक्षं प्रदूष्यान्ते किमिति पुनरन्यतरास्मादेव तद्धितोत्पत्तिर्यावता कृतैकशेषाभ्यां यजमानशब्दाभ्यां तद्धितोत्पत्तिर्युक्तेत्याशङ्क्य प्रमाणान्तराभावे सर्वा हि वृत्तिरेकवचनान्तानामेव स्वरसतो भवतीति समाहितं तत्रैव ।

**यजमानशब्दस्य पुंस्येव प्रचुरप्रयोगाद्विरूपैकशेषद्विवचनान्तादिविग्रहस्यासति तत्तात्पर्यग्राहकप्रमाणेऽनाश्रयणीयत्वात्। प्रत्युत तदाश्रयणे तद्विषये ज्ञानाक्षेपशक्तिकल्पनापत्तेः प्रसिद्धज्ञानवन्तं पुमांसमादायैव समाख्योपपत्तेस्तस्यैव** कर्तृत्वम्।

---

अतो विरूपैकशेषाङ्गीकारेण वैकल्पिककर्तृत्वपूर्वपक्षकरणं न युक्तमिति ॥ **पुंस्येव प्रचुरप्रयोगादिति।** **यद्यप्यत्र** प्राचां ग्रन्थेषु न कचिदपि यजमानपदस्य पुंस्येव प्रचुरप्रयोग इति निर्णीतं प्रत्युत यजमानपदादपि तद्धितोत्पत्तिं वर्णयतां प्राचां स्त्रियामपि प्रयोग अभिप्रेतो दृश्यत इति प्रचुरप्रयोगे प्राचीनव्यवहारस्यैव प्रमाणत्वात्, तदभावे यजमानशब्दस्य पुंस्येव प्रचुरप्रयोगादिति न वक्तुं युक्तं **तथापि** द्वित्वबहुत्वयुक्तं वा चोदनात्तस्येति **सूत्रे** 'युवं हि स्थः स्वःपती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, "एते असृग्रमिन्दव" इति बहुभ्यो यजमानेभ्यः इति वचनविहितप्रतिपदर्चां यजमानगतद्वित्वबहुत्वाभावात् प्रकृतावनिवेशेन कुलायादियागादिषु उत्कर्ष इति सिद्धान्तस्थापनाधिकरणे तृतीयपादे यजमानशब्दस्य पुंस्येव प्रयोग इत्युक्तं **प्राचीनैः।** तदभिप्रायेणवैतत् द्रष्टव्यम्। एवं च तार्तीयाधिकरणे यजमानशब्दस्य पुंस्येव योगरूढिं दर्शयतां प्राचामिह यजमानपदस्य पत्नीपरत्वमप्यभिप्रेत्य यत्पूर्वपक्षोपपादनं यच्च यजमानोऽन्वारभते इत्येवमादिषु पत्न्यां यजमानपदवाच्यत्वमङ्गीकृत्य विवक्षितैकत्वपुंस्त्वादिहेतुना पत्न्यामप्रवृत्तिरिति सिद्धान्तकरणं तदुपहूतेयं यजमानेति पत्नीसयाजाज्ञाज्येडाया मन्त्रवर्णे पत्न्यामपि यजमानपदप्रयोगदर्शनजनितविशेषाशङ्कयैव द्रष्टव्यं इति न पूर्वापरविरुद्धमिति ज्ञेयम्। **तद्विषये इति।** याजमानमिति समाख्याविषये समन्त्रकपदार्थविषये इत्यर्थः। **एतेन** विरूपैकशेषानङ्गीकारेपि केवलं यजमानापदादेव तद्धितोत्पत्त्या पत्न्याः कर्तृत्वमित्यपास्तम्। तथात्वे समन्त्रकपदार्थविषये तस्याः ज्ञानाक्षेपशक्तिकल्पनापत्तेः। विश्वजिति सर्वस्वं ददातीति श्रुतवाक्यगतस्वशब्देनैकस्यैव धनरूपार्थस्य ग्रहणवदिहापि एकनरार्थग्रहणस्यैवापत्तावुभयार्थपरत्वस्य यजमानपदेऽनुपपत्तेश्च। अतोऽवैरूप्याय यजमानपदादेव तद्धितोत्पत्त्यङ्गीकारेण तस्यैव पुंसः सर्वत्र कर्तृत्वं न तु पत्न्या इत्याह—**तस्यैव कर्तृत्वमिति।** अत्र च वार्तिकतन्त्ररत्नादौ स्वाध्यायोऽध्येतव्य इत्यध्ययनविधावविशेषश्रवणादष्टवर्षं ब्राह्मणमुपनयीतेत्युपनयनविधौ ब्राह्मणादेः संस्कार्यत्वेनाविवक्षितलिङ्गैकत्वात् सहैवोपनयनेन स्त्रीपुंसविषयमध्ययनमिति कथमविद्वत्त्वं तस्या इत्याशङ्क्य द्वेधा परिहृतं-ब्राह्मणमुपनयीतेत्यात्मनेपदस्य "सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति पाणिनिसूत्रादाचार्यकरणे विधानादुपनयनं माणवककर्तृकं आचार्यनिष्ठाचार्यत्वफलक-

यद्यपि **स्वाध्यायविधौ लिङ्गविशेषानुपादानेन न स्त्रिया व्यावृत्तिप्रतीतिस्तथाऽप्युपनयनवाक्ये तदुपादानात्तत्र च तस्योद्देश्यविशेषणत्वेऽपि** अष्टवर्षत्वादिवदेव **'तमध्यापयीत' इत्यत्र**

---

मित्यवगतेरुपनयनफलमाचार्यत्वं भजमानस्याचार्यस्य प्राधान्येपि माणवकस्याचार्यार्थेपि नयनं प्रत्युपादीयमानत्वात्तद्गतं लिङ्गं सङ्ख्या च भवत्येव विवक्षिते इति न तावत्तस्या उपनयनप्रसक्तिः। एवं **यद्यपि** तमध्यापयीतेति विधावध्ययनं प्रति माणवकस्यैतयाऽन्नाद्यकामं याजयेदिति विधौ याज्यस्यान्नाद्यकामस्येव प्राधान्यात्तच्छब्दगतलिङ्गसङ्ख्ययोरविवक्षितत्वेन प्राप्नोत्युपनयनाभावेपि तस्या अध्ययनं **तथापि**

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते'

इति स्मृत्यन्तरानुरोधेनाध्ययनस्याप्याचार्यत्वोत्पादकतया अध्यापनशेषत्वेन माणवकस्य तत्राप्युपादीयमानत्वात् तत्रापिविवक्षिते एव ते इति न तस्यास्तत्प्रसक्तिः। नचैतावता अध्ययनस्याध्यापनविधिप्रयुक्तत्वं शङ्क्यं, स्वयमेवाध्ययनस्यार्थज्ञानफलकत्वेनार्थज्ञानस्यैव स्वप्रयोजनभूतस्य प्रयोजकत्वसम्भवे उपकार्यमात्रतयाऽवस्थितस्याचार्यकरणस्य प्रयोजकत्वकल्पनाया अयुक्तत्वात्। तेनोभयोरप्यध्ययनाध्यापनयोः पुंविषयत्वात्तदपेक्षत्वाच्चाध्ययनस्य पुंस एवाध्ययनं विहितं, इतरस्यास्तु स्त्रियाः विधानाभावादवैधता। एवं न्यायादेव स्त्रिया अनध्ययनेनाविद्यत्वे सिद्धेऽपि यद्भाष्यकारस्याध्ययननिषेधस्मृतिबलादेवावैद्यत्वप्रसाधनं तन्निषेधस्मृतेर्न्यायसिद्धार्थानुवादाभिप्रायेणैव ज्ञेयम्।

अथ वा न्यायासम्भवाद्वाचिकप्रतिषेधादेवानध्ययनसिद्धिस्तस्याः यावताऽष्टवर्षस्याध्ययनोपयोगिनो द्वितीयाप्रतिपादितसंस्कार्यत्वेनाविवक्षितलिङ्गसङ्ख्यत्वेन तन्निवारणासम्भवात् माणवकसंस्कारद्वारेणाध्ययनाङ्गमुपनयनमनुषङ्गाद्वाजिनमिवाध्ययनमाचार्यकं निष्पादयतीत्येतावताप्यात्मनेपदोपपत्तौ आचार्यकत्वफलार्थत्वकल्पने प्रमाणाभावाच्च। आचार्यत्वस्य पाचकत्वादिवत्क्रियानिमित्तत्वेनैवोपपत्तौ अदृष्टरूपत्वाभावेन वैधसाधनानपेक्षत्वाच्च। अत एवाध्ययनविधावपि प्रयोजकव्यापाररूपस्याध्यापनस्य दृष्टार्थत्वेनैव प्राप्तेर्विधिवैयर्थ्यापत्तेश्च प्रयोज्यव्यापाररूपाध्ययनस्यैव विधानं याजयेदित्यादिवत्। अत उपनयनस्याप्युभयत्र न्यायेन प्राप्तौ तदधिकारिकाध्ययनस्यापि स्त्रीपुंसयोरनिवारणान्न न्यायेनानध्ययनं तस्याः सिद्ध्यतीति प्रतिषेधस्मृतेरेव तत्साधनं भाष्यकारोक्तं युक्तमिति। **तदेतत्** तन्त्ररत्नाद्युक्तं न्यायासम्भवं न्यायोपपादनेन दूषयित्वा स्त्रिया अध्ययनमाशङ्क्य निराकरोति—**यद्यपीति। अष्टवर्षत्वादिवदेवेति।** यद्युद्देश्यविशेषणत्वादु-

पनयनवाक्ये पुंस्त्वादेरविवक्षोच्यते तर्हि अष्टवर्षत्वादिगुणस्यापि अविवक्षापत्तिरतोऽध्यापनविधौ प्रयोज्यव्यापाररूपाध्ययनविधानस्य प्राचीनैरेवोक्तत्वात् तमध्यापयीतेति विधेः सोऽधीयीतेत्येवं विपरिणामेनोपनीतपरामर्शकतच्छब्दार्थस्याध्ययने कर्तृत्वेन विधेयत्वावगतेरुपादेयत्वेनाष्टवर्षत्वादिवत्तद्गतपुंस्त्वैकत्वयोरपि विवक्षा आवश्यिकीति सिद्धयत्येव न्यायेनानधिकारोऽस्या[1] इति भावः।

अत्र यद्यप्ययमाशयः प्रचीनानां प्रतिभाति—नोपनयनवाक्येऽष्टवर्षत्वादिकमुद्देश्यविशेषणतया भासमानमपि तद्विशेषणं ब्राह्मणपदनिर्दिष्टस्यैवोद्देश्यत्वमात्रेण वाक्यार्थपर्यवसानोपपत्तेः। अतोऽष्टवर्षमिति बहुव्रीहिसमासेनाष्टसङ्ख्याकवर्षसम्बन्धवतोऽभिधानात्तस्य च सम्बन्धस्य द्वादशमासात्मकाष्टवर्षसम्बन्धे सत्येव सम्भवेनार्थाल्लब्धाष्टमवर्षरूपकालपरत्वमेव लक्षणादिनाऽङ्गीकार्यम्। अत एव गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यं षष्ठेऽन्नाद्यकामं सप्तमे ब्रह्मवर्चसकाममित्येवं तत्तद्वर्षाणामधिकरणत्वप्रतिपादकस्मृतिमूलत्वमप्यष्टवर्षमिति पदस्योपपन्नं भवति। यत्तु तत्तत्स्मृतिषु गर्भाष्टमेष्विति बहुवचनं तदष्टमवर्षावयवीभूतद्वादशमासबहुत्वाभिप्रायम्। अत एव द्वादशमासात्मकाष्टमवर्षमध्ये यदाकदापि उपनयनानुष्ठानं सिद्धयति इतरथा गर्भाष्टमे इत्येकवचनोपादाने गर्भाष्टमे इति प्रतीते इत्यस्याप्यापत्तेः। अत एवैतत्साहचर्यात् सप्तमे इत्याद्येकवचनान्तपदान्यपि प्रवृत्ते इत्यध्याहारेण समस्तानामेव द्वादशमासात्मकानां सप्तमादिवर्षाणामधिकरणपरतया व्याख्येयानि। अतोऽष्टमवर्षरूपकालपरत्वे सम्भवति नोद्देश्यविशेषणत्वमङ्गीकृत्योपनयनवाक्ये लिङ्गसङ्ख्यावदविवक्षाऽष्टमवर्षत्वस्य युक्ता।

वस्तुनस्तु कालपरत्वाभावेप्यष्टवर्षत्वस्याप्राप्त्याऽनुवादायोगादर्धमन्तर्वेदीतिवल्लक्षणया विशिष्टोद्देश्यत्वस्य ग्रहैकत्वाधिकरणकौस्तुभे उक्तत्वान्नोद्देश्यविशेषणत्वेन तदंशेऽविवक्षाप्रसक्तिः। किन्तु लिङ्गसङ्ख्यामात्रस्यैव सेति स्थिते सोऽधीयीतेति विपर्यस्ते विधौ तच्छब्देन पूर्वनिर्दिष्टस्योपनयनसंस्कृतब्राह्मणत्वजात्यवच्छिन्नमात्रस्यैवा(?)विवक्षितलिङ्गसंख्याहिताग्निमात्रपरस्तत्र तच्छब्दस्तथैवेहापि। अत एव श्रुतप्रयाजशेषाभिघारणविधानेऽविवक्षितसङ्ख्यहविषामुपस्थितेरेव हेतोः, प्रयाजशेषार्थत्वेन कल्प्ये विधौ उपादेयत्वं तथाभूतानामेव साधितम्। तथा श्रुतहविःशेषभक्षविधिषु उपादेयत्वेन विवक्षितविशेषणानामेव कर्तॄणां उपस्थितहेतोरेव कर्तृसंस्कारार्थत्वेन कल्प्ये विधावपि विवक्षितविशेषणानामेव कर्तॄणामुद्देश्यत्वं साधयिष्यते। अतोऽत्रापि पूर्वोपस्थि-

1. स्त्रिया इति

**तच्छब्देन पुंस्त्वोपादानादध्ययने तद्व्यावृत्तिः। अत्र ह्यध्यापनस्य वृत्त्यर्थत्वेन रागप्राप्तत्वात् लक्षणया प्रयोज्यव्यापाररूपाध्ययन एव कर्तृविधिः। अत एवोपनयनवाक्ये तत्संस्कारकत्वेनाचार्यकर्तृकमुपनयनं माणवककर्तृकमुपगमनमेव वा नियम्यते। तेनाचार्यत्वसिद्धेरानुषङ्गिकत्वात्तामादायैवात्मनेपदोपपत्तेः। न चाचार्यत्वकरणे नयतेर्धातोरात्मनेपदं भवतीत्यनुशासनबलादुपनयनस्याचार्यत्वार्थत्वं** तस्य रागप्राप्तत्वेन **विधिवैयर्थ्यात्। अत उपनयनविधौ लिङ्गस्याविवक्षायामप्यध्ययने तस्य विवक्षितत्वात् न स्त्रिया अधिकारः। 'स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरा' इति प्रतिषेधाच्च।** अतश्च **ज्ञानाक्षेपकल्पनाभिया यजमानस्येदमित्येव विग्रहात् तस्यैव तत्र कर्तृत्वम्॥ ६॥**

---

तस्यैवोपादेयत्वे बाधकाभावात्तत्परामर्शकतच्छब्दोऽविवक्षितलिङ्गसङ्ख्योपनीतब्राह्मणत्वावच्छिन्नपरः सम्भवत्येवेति न न्यायतः स्त्रियाः सहोपनयनेनाध्ययनप्रतिषेधः सम्भवति, **तथापि** प्रत्यक्षविनियोगविध्यभावेप्युद्देश्यगतैकत्वपुंस्त्वादेः पाक्षिकानुवादत्वभियैव कल्प्ये विधौ तत्सङ्ख्यस्यैवोपादेत्ववकल्पने सति सुतरां श्रूयमाणतदनुरोधेनापि तत्सङ्ख्यस्यैव तद्युक्तम्।

अत एव यत्र पूर्वपरामर्शकतच्छब्दाभावेपि संस्कारविध्यनुपपत्त्यैव विनियोगविधिकल्पनम् तत्र 'पुरोहितं वृणीते' इत्यादौ एकवचनत्यागे प्रमाणाभावाद्बहुत्ववदेकवचनान्तेनैव पुरोहितेन वृतेनेष्टं भावयेदिति विधिकल्पनेन विनियोगसिद्धेः न द्विबहुवचनान्ततत्कल्पनम्। तथा चमसाध्वर्यून् वृणीते इति संस्कार्याध्वर्युगतस्य पाक्षिकानुवादत्वभिया तत्सङ्ख्यस्यैवोपादेयत्वकल्पनम्। अतः प्रकृते श्रूयमाणविधिद्वये उद्देश्योपादेयगतैकत्वादेः पाक्षिकानुवादत्वापत्त्या विवक्षितैकत्वपुंस्त्वस्यैवोपादेयत्वम्। स इत्यादौ तु सहत्वानुरोधेन कर्तृत्वगतस्य तस्य स्वीकारान्न कोऽपि दोष इति॥ अत्र हीत्यादिग्रन्थः प्राचीनमतोपपादने व्याख्यातचरः। **तस्य रागप्राप्तत्वेनेति।** आचार्यत्वसिद्ध्यर्थमुपनयनस्येत्यर्थः। **लिङ्गस्याविवक्षायामिति। यद्यप्युपनयनविधौ** लिङ्गस्याविवक्षणात् स्त्रिया मुपनयनमात्रस्यापि प्राप्तिः सम्भाव्यते **तथापि** तत्संस्कृतायास्तस्या अध्ययने उपयोगासम्भवादुपनयनविधावर्थकर्मत्वसंस्कारकर्मत्वकृतवैरूप्यापत्तेश्च न तस्या उपनयनाधिकारित्वम्। **वस्तुतस्तु** एतन्निवारणार्थमेव माणवककर्तृकमुपगमनमेव वा नियम्यत इति पक्षस्य पूर्वमुक्तत्वात्तदा च माणवकस्य कर्तृत्वेन विधानादुपनयनविधावपि विवक्षितमेव लिङ्गम्। ततश्चाध्ययनाधिकारसिद्ध्यर्थं उपगमनमाचार्यनिकटे माणवकेन कर्तव्यमित्यर्थान्न स्त्रियास्तत्प्रसक्तिरिति ध्येयम्। सिद्धान्तमुपसंहरति—**अतश्चेति।** अत्र च

(७)—चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥ निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात् ॥ २७ ॥ अपि वाऽन्यार्थदर्शनात् यथाश्रुति प्रतीयेत ॥ २८ ॥ निर्देशात्तु पक्षे स्यात् ॥ २९ ॥ वैगुण्यान्नेति चेत् ॥ ३० ॥ न काम्यत्वात् ॥ ३१ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥ अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥ ३३ ॥ गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ संस्कारस्य तदर्थत्वात् विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥ अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥

**यद्यपि कामश्रुतयोऽविशेषेण प्रवृत्तास्तथाऽपि तासां लाघवायाधानाध्ययनविधिसिद्धाग्निविद्योपजीवकत्वस्य द्वितीये साधितत्वाच्छूद्रस्य तदाक्षेपकल्पनानुपपत्तेस्तस्य वेदाक्षर**श्रवणप्रतिषेधाच्च **अपशूद्राणां त्रयाणामेवाधिकारो न शूद्रस्या**ग्निसाध्ये **तदसाध्ये च वैदि-**

---

"तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्" इति सूत्रस्थमाशीःपदं संस्कारपरं व्याख्याय क्रत्वर्थेन विहितब्रह्मचर्यस्यापि विहितसंस्काररूपत्वादाशीः पदेनैव सङ्ग्रहलाभात् किमिति पुनर्ब्रह्मचर्यपदोपादानमित्याशङ्कायां **वार्तिकतन्त्ररत्नयोः** परिहृतं–ब्रह्मचर्यपदेन तत्साध्याः कामा लक्ष्यन्ते ते हि पत्न्या अपि भवन्ति तदभावेऽधिकारानुपपत्तेरिति तत्र पत्न्या अधिकारप्रसाधनेन पूर्वमेव कामा भवन्तीत्यर्थस्य सिद्धत्वेनात्र पुनः कथने प्रयोजनाभावात्, प्रत्युताशास्यत्वेनाशीःपदेन कामानां ब्रह्मचर्यपदेनैकदेशपरेण समस्तसंस्काराणामेवाभिधानापत्तेरयुक्तमेतद्व्याख्यानम्। किन्तु गोबलीवर्दन्यायेनैव पुनरुपादानमित्यभिप्रेत्य **पूज्यपादैः** संस्कारा वपनातिरिक्ता भवन्तीत्येतावन्मात्रं ब्रह्मचर्यपरित्यागेनोक्तमिति द्रष्टव्यम्।

---

॥ **चातुर्वर्ण्यमविशेषात्** ॥

**श्रवणप्रतिषेधाच्चेति।** पद्यु ह वा एतच्छ्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्यमित्यादिश्रौतस्मार्तप्रतिषेधादित्यर्थः। **अग्निसाध्ये इति।** अत्राग्निसाध्येष्वाहवनीयादेर-

ककर्मणि। द्वितीयसिद्धस्यैव प्रयोजनार्थमधिकरणमिति नातीवात्र पूर्वपक्षादरः। अत एव सर्वत्र वेदे त्रयाणामेव वर्णानामनुकीर्तनम्। यत्तु 'पयोव्रतं ब्राह्मणस्य' इत्यादि वर्णत्रयमनुकीर्त्य 'मस्तु शूद्रस्य' इति कीर्तनं तत् मस्तु शूद्रस्यानधिकारिणो भक्ष्यमुचितं न तु ब्राह्मणादेरिति तन्निन्दया पयआदिस्तुतिः॥ ७॥

---

## (८)—त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात्॥ ३९॥ अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः॥ ४०॥

अग्निविद्ययोरिव द्रव्यस्यापि प्रतिग्रहादिपुरुषार्थोपायविधिबलादेव लब्धतया क्रतुविधिभिरनाक्षेपात् परप्रयुक्तसिद्धद्रव्यवत एवाधिकारो न त्वसिद्धद्रव्यस्य तदार्जयित्वेति प्राप्ते—

प्रतिग्रहाद्युपायविधेरभ्यनुज्ञाविधिमात्रत्वस्य स्थापितत्वात् द्रव्यस्य स्वतन्त्रविधिप्रयुक्तत्वाभावेन जीवनादिकार्येणेव क्रतुनाऽपि तदाक्षेपोपपत्तेः प्रतिग्रहादेरपि संयोगपृथक्त्वन्यायेन क्रत्वर्थत्वस्य स्थापितत्वात् प्रयाजादिवत् क्रतुनाऽपि तदाक्षेपोपपत्तेश्चाद्रव्योपि द्रव्यमार्जयित्वाऽधिक्रियत एव॥ ८॥

---

भावादनग्निसाध्येषु मन्त्रेषु अध्ययनाभावात् अमन्त्रकेषु वेदाक्षरनिषेधेन विधिज्ञानाभावादनधिकारः शूद्रस्येति भावः। एवं च स्वविधिप्रयुक्ताधानाध्ययनजन्या[1]ग्निविद्यालाभे क्रतुविधयो नाग्निविद्ये तदुपायान् वा प्रयुञ्जत इति न तद्रहितशूद्रादेरधिकार इति प्रयोजनं षष्ठे वक्ष्यते इत्याधानाधिकरणे द्वितीये स्वयमुक्तं, तदेव स्मारयति—द्वितीयसिद्धस्यैवेति।

---

॥ त्रयाणां द्रव्यसम्पन्तः॥

संयोगपृथक्त्वेति। 'न्यायागतेन द्रव्येण कुर्यात्कर्माणि वै द्विज' इति विधेः क्रत्वर्थत्वस्य चतुर्थे द्रव्यार्जनाधिकरणे स्थापितत्वादित्यर्थः॥

---

P. 1. उपनयनजन्याग्नि

(९)—अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥ उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

एवं चक्षुराद्यङ्गहीनोऽपि आज्यावेक्षणादिमति कर्मणि प्रतिसमाधाय चक्षुराद्यङ्गमधिक्रियते। अप्रतिसमाधेयाङ्गवैकल्ये तु काम्ये नाधिक्रियते। नित्ये तु यथाशक्ति—न्यायादधिक्रियत एव। यत्तु पार्थसारथिना आहिताग्निश्चेन्नित्ये अधिक्रियत इत्युक्तं तदाधानस्यापि नित्यत्वेनोपेक्षितम् ॥ ९ ॥

---

॥ अङ्गहीनश्चतद्धर्मा ॥

अत्र अङ्गहीनश्च तद्धर्मा उत्पत्तिनित्यसंयोगादिति सूत्रद्वयेनाधिकरणद्वयं भाष्यकारेण पृथक् व्याख्यातं वार्तिककृता सहैव व्याख्यातं तदभिप्रायेण सहैव विचारं विनैव द्वितीयसूत्रोपन्यासेन दर्शयति— एवमिति। एवमिति पदेन सूत्रस्थतद्धर्मेतिपदं व्याख्यातं तस्य द्रव्यरहितस्य धर्मा यथा अद्रव्यो द्रव्यमुपार्ज्य कर्मण्यधिक्रियते एवमङ्गहीनोऽपीत्यर्थः। अत्र तृतीयपादाद्ये नित्ये यथाशक्त्युपबन्धेनापि प्रधानप्रयोगसिद्धिरिति सिद्धान्तप्रदर्शनानन्तरं तन्त्ररत्ने नित्ये यथाशक्त्युपबन्धे सति अनाहिताग्नेरप्यधिकारापत्तिमाशङ्क्य समाहितम्—यानि प्रयोगविधिना कर्तुरुपादेयत्वेनाङ्गानि चोद्यन्ते तेषामेव शक्तिपरिमितत्वं, यावन्ति शक्नुयात् तावन्ति कुर्यादिति। यानि तु विध्यन्तरप्रयुक्तानि स्वयं सिद्धानि वाङ्गत्वेन गृह्यन्ते तानि स्वरूपत एवाधिकारिविशेषणं, यथाऽग्न्यादीनि। तेषां उपादानस्य प्रयोगविधिनाऽनुपादानात् न यावच्छक्त्युपबन्ध इति तदपेक्षो विधिस्तद्वन्तमेवाधिकरोति। तेन सपत्नीकस्यार्षेयस्याख्यातोपात्तसङ्ख्याविशिष्टस्याग्निमतो विद्यावतः प्रदोषादिकालसंयोगिनोऽधिकारो नान्यस्येति। एवञ्चाप्रतिसमाधेयाङ्गवैकल्योप्यग्न्यादिमानधिक्रियत एव। आधानन्तु न कुर्यात्तस्य नैमित्तिकत्वादित्युक्तं; तेन चाप्रतिसमाधेयाङ्गवैकल्यस्य प्रयोगविधिचोदिताज्यावेक्षणाद्यङ्गहानेनापि नित्यमनुष्ठितवतोऽग्न्यर्थाधानत्यागेन नैवाधिकारो नापि तस्य अग्नीनाधानेन सम्पाद्यापि अधिकार इत्याधानात्पूर्वं अप्रतिसमाधेयाङ्गवैकल्यस्य सर्वथा आधानपूर्वकं नित्येऽनधिकारः। कृताधानस्य अप्रतिसमाधेयाङ्गवैकल्ये तु सर्वथा तत्राधिकार इति फलितम्। तदभिप्रायेण शास्त्रदीपिकायां नित्येषु तु आहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एवेत्युक्तं तदनूद्य दूषयति—यत्तु पार्थेति। अग्न्याधेयस्याष्टाचत्वारिंशत्संस्कारेषु पाठेन पुरुषार्थत्वादगत्या सत्यधिकारेऽनाहिताग्निताया उपपातकेषु गणनादाधानाकरणे प्रत्यवायपरिहारार्थं प्रायश्चित्तविधानेन च नित्यत्वाद्यथैवाग्नीनाधास्ये सर्वक्रत्वर्थं यैरस्म्यधिकृतो यांश्च शक्ष्ये प्रयोक्तुमिति सङ्कल्पेनोत्तरक्रत्वर्थं कृतेनाधानेन नित्यस्यापि प्रसङ्गतः सिद्धेः न पुरुषार्थत्वेन पुनरनुष्ठान-

## (१०)—अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥

दर्शपूर्णमासयोः "**आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिप्रवृणीते" इति श्रुतम्। तत्र तावदेकं विधायकं अन्ये अनुवादा इत्यविवादम्। अन्यथा सर्वेषां विधित्वे वाक्यभेदविकल्पयोरापत्तेः। अतः 'त्रीन् वृणीते' इत्येव विधिः 'एकं**

---

माधानस्य प्राप्नोति, तथैव नित्यतयाऽनुष्ठितेनापि आधानेनाहिताग्नित्वरूपाधिकारिविशेषणलाभेनोत्तरक्रत्वनुष्ठानं सिद्धमेवेति न पुनः क्रत्वर्थमाधानापेक्षा, येन तस्य क्रत्वर्थतया नैमित्तिकस्य नित्यत्वाभावादप्रतिसमाधेयाङ्गवैकल्यस्य न तत्राधिकारः प्राप्नुयात्। नहि रथकाराधानस्येवाग्निगुणकत्वं नित्यस्याधानस्याङ्गीक्रियते। तत्राग्नीनामुत्तरत्रानुपयोगेनाग्निपदोत्तरद्वितीयायाः करणत्वलक्षकत्वेपीह ब्राह्मणादिकर्तृकत्वेन तत्सम्पादिताग्नीनामग्रे उपयोगसम्भवेन तल्लक्षणायां मानाभावात्। एवं चाग्नीनाधास्ये इति सङ्कल्पे सर्वक्रत्वर्थमित्युल्लेखो निष्प्रमाणक एव, तस्य क्रत्वर्थत्वाभावात्। अतो नित्ये आधाने यथाशक्त्युपबन्धेनाप्रतिसमाधेयाङ्गवैकल्यस्यापि अधिकारसम्भवादकृताधानस्य कृताधानस्य वा तस्य नित्येऽस्त्येवाधिकारः। अत एव मण्डनः—आधानं नित्यमेवेष्टं पितृयज्ञोऽपि तादृश" इति।

यत्तु "आधानस्यापि काम्यत्वं बोधायनमताद्भवेत्।
सर्वकामार्थमाधानमिति तेन निरूपितम्॥

इति तेनैव पक्षान्तरमुक्तं तत्र काम्यत्वात्तस्य नाधिकार इति भावः॥

---

**॥ अत्र्यार्षेयस्य हानं स्यात् ॥**

अत्र **तन्त्ररत्ने** उदाहरणप्रदर्शनार्थं दर्शपूर्णमासयोस्तद्विकारेषु च किमत्र्यार्षेयोऽप्यधिक्रियते उत त्र्यार्षेय एवेति चिन्त्यत इत्युक्तं; तत्र प्रकृतौ निर्णीतस्यैवार्थस्य विकृतावतिदेशेन प्राप्तिसम्भवात्प्रकृतावेव चिन्ता कर्तुं युक्तेति अभिप्रेत्य तद्विकारेषु चेत्युपेक्ष्य विषयवाक्यं दर्शयति—**दर्शपूर्णमासयोरिति**। आर्षेयं यजमानपूर्वजभूतो मन्त्रद्रष्टा ऋषिः तस्यापत्यं तस्य

**वृणीते' द्वौ वृणीते इत्यवयुत्यानुवादः** त्रित्वस्तुत्यर्थः। **' न चतुरो वृणीते' इत्याद्यपि नित्यानुवादस्तदर्थ एव। अतश्च त्र्यार्षेयवत्** पञ्चार्षेयोऽपि **त्रीनेव वृणीयात्। एकद्व्यार्षेययोस्तु नास्मिन् पक्षे अधिकारः। अपि तु 'अथ हैके मनुवदित्येवैकार्षेयं सार्ववर्णिकं प्रतिदिशन्ति' इति वचनान्तरविहितम**नुवत्पक्षाश्रयणैयेव। **तदेतद्भगवतो जैमिनेर्मतमृष्यन्तरैरभ्युपगतम्।**

---

होत्रोच्चारणं वरणमुच्यते। **त्रित्वस्तुत्यर्थ इति।** अवयविभूतद्वादशकपालस्तुत्यर्थं अष्टाकपालादिश्रवणवत् इत्यर्थः। आर्षेयं वृणीते इति सामान्यं विशेषं प्रति साकाङ्क्षं सत् त्रीन् वृणीते इति विहितत्रित्वेनैव विशेष्यते। अन्यथा त्रित्वश्रुतेरानर्थक्यान्नित्यवत्प्राप्त्यभावेनानुवादासम्भवात् पाक्षिकानुवादत्वे च नित्यवच्छ्रवणबाधापत्तिः। न चार्षेयवाक्य एव तद्विधिरेकत्वादयः सर्वेऽप्यर्थवादा इति युक्तं, तथात्वे सामान्यविधिनैकत्वादीनामिव चतुः षडादीनामपि प्राप्तौ तस्मिन्निषेधद्वयकरणेन वाक्यभेदतादवस्थ्यात्। त्रित्वमात्रविधाने तु चतुरादीनामप्राप्तत्वादेव निषेधे प्रयोजनाभावात् नान्तरिक्षे न दिवीतिवन्नित्यानुवादस्त्रित्वस्तुत्यर्थ एवेति सर्वस्याप्येकवाक्यत्वं भवतीत्यभिप्रायेणाह— **न चतुर इति। पञ्चार्षेयोऽपीति।** अत्र चतुः षडादीनामिव पञ्चार्षेयस्यापि अप्राप्त एवाधिकारस्तथापि यथा त्रीन् वृणीत इत्यस्य यस्य त्रीण्येवेति नार्थः, परिसङ्ख्याद्यापत्तेः। तथैव यस्य यावन्त्यार्षेयाणि तस्य तानि सर्वाणि वरयितव्यानीत्यपि नार्थः, प्रमाणाभावात्। अतो यः त्रीण्यार्षेयाणि सम्पादयितुं शक्नोतीति तस्य वरणविधानात् पञ्चार्षेयस्यापि त्र्यार्षेयवत् त्रित्वविशिष्टवरणसम्पादेन सामर्थ्यात् यथाधिकारस्तथैव समानन्यायात् चतुः षडार्षेयाणामपि तत्सम्पादने सामर्थ्यात् न्यायागत एवाधिकारः। अतएव **वार्तिककृतन्त्र**योश्चतुरार्षेयपञ्चार्षेयादयस्त्वधिक्रियन्त इत्युक्तम्। एवं सत्यपि पञ्चार्षेयग्रहणमात्रं **पूज्यपादैः** कृतं तस्यायमाशयः—न चतुर इत्यादिनिषेधयोर्वाक्यभेदेनापि निषेधकतया सार्थक्ये सम्भवति न स्तावकतया नित्यानुवादत्वमङ्गीकार्यमिति चतुः षडार्षेयस्यतदन्तर्गतत्रित्वविशिष्टवरणसम्पादनेन प्राप्तयाऽधिकारनिषेधकत्वकल्पनया नैवाधिकारः। पञ्चार्षेयस्य तु आहत्य निषेधाभावादधिकारे शास्त्रायाते यावदर्थात्पञ्चानामपि वरणं प्राप्स्यते तावत् त्रित्वविधिबलात् पञ्चान्तर्गतत्रित्वविशिष्टवरणेनापि तदधिकारनिर्वाहः। अथवा वक्ष्यमाणरीत्या प्रवराध्याये चतुः षडार्षेयाणामाम्नानाभावादेव नाधिकारः। त्र्यार्षेयपञ्चार्षेययोस्त्वाम्नानाद्युक्तोऽधिकारस्तस्य वक्ष्यमाणत्वात्तदभिप्रायेण नास्मिन् पक्ष इत्युक्तम्। **मनुवत्पक्षाश्रयण एवेति।** मनुवद्भरतवदित्येव सर्ववर्णानामुच्चारणमिति पक्षाश्रयण एवेत्यर्थः। एतच्च होत्रध्वर्य्वोरुभयोर्वरणाम्नानेऽपि अध्वर्युविषयमेव। मानवेति होता मनुवदित्यध्वर्युरिति ताण्ड्यब्राह्मणगतवचनेनापस्तम्बसूत्रधृतेन-

तथा च कात्यायनः 'अमुवदिति पुरस्तादर्वाञ्चि त्रीणि' इति। आपस्तम्बोऽपि 'त्रीन्यथर्षि मन्त्रकृतो वृणीते' इति। तैस्तु पक्षान्तराण्यप्युक्तानि—'यावन्तो वा मन्त्रकृतः' इति कात्यायनः। "अपि वैकं द्वौ त्रीन् पञ्च वृणीते न चतुरो वृणीते न पञ्चाति प्रवृणीते" इत्यापस्तम्बः। 'यावन्तस्स्युः परं परं प्रथमम्' इत्याश्वलायनोऽपि। तेषां चायमभिप्रायः 'आर्षेयं वृणीते' इत्ययं विधिरितरेऽनुवादाः तत्स्तुत्यर्थाः। अतश्च 'त्रीन् वृणीते' इत्यप्यनुवाद एव ईदृशोऽयं वरणसामान्यविधिः यत् तत्तदार्षेयं प्रति तत्तत्सङ्ख्याकवरणं प्राप्यते इति स्तुतिः। इतरथा भवन्मते सामान्यवाक्येनैव वरणविधिमभ्युपगम्याप्येकवाक्यत्वलाभाय पञ्चार्षेयस्यैवाधिकारापत्तेस्त्रयाणामप्येषामवयुत्यानुवादत्वापत्तिः। न चैवं चतुष्षडादीनामपि वरणप्रसक्तौ तन्निषेधेन वाक्यभेदापत्तिः; एकद्वित्रिपञ्चार्षेयाणामेव प्रवराध्याये समाम्नानेन चतुष्षडादेरप्रसक्तेः। अतोऽस्मिन्नपि पक्षे वाक्यभेदाद्यनापत्तेरेकद्व्यार्षेययोरप्यधिकारः। पञ्चार्षेयस्य च पञ्चानां वरणं न विरुद्धमिति। यत्तु—द्व्यामुष्यायणानामुभयतः कुलद्वयेऽपि वरणविधानादस्ति चतुष्षडादीनां प्राप्तिरिति; तन्न, आश्व-

---

व्यवस्थाविधानात्। यद्यपि मनुवत्पक्षाश्रयणेनापि एकार्षेयद्व्यार्षेययोरधिकारःसमस्त्येवेति तयोरधिकारानधिकारप्रयोजनं नैव चिन्ताया लभ्यते, तथापि पूर्वपक्षे मनुवत्पक्षाश्रयणेपि ये भार्गवच्यावनेत्यादिविशेषरूपेणापि वरणमाश्रयन्ते तेषां भार्गव इत्येतावन्मात्रं वरणं स्यात् तन्निवृत्त्यर्थमधिकरणं मनुवत्पक्षेपि। यस्याप्येको यस्यापि पञ्च तस्य सर्वस्यापि मनुवदिति सकृदेवोच्चारणं न त्वार्षेयोच्चारणं आर्षेयवरणपक्षे तु आर्षेयवरणमेव न त्वेकार्षेयादीनामिति भावः। अमुवदिति। सर्वेषां यन्नाम तत्स्थानममुवदमुवदिति पदद्वयेन गृह्यते। यजमानसम्बन्धीनि पूर्वजभूतानि परस्तात्परस्तात् तत्पितृस्थानीयादर्वाञ्चि तत्पुत्रपौत्ररूपाणि त्रीणि तत्तन्नाम्ना वृणीत इत्यर्थः। त्रीन् वृणीत इति। अस्मिन्नापस्तम्बवाक्ये त्रयाणामेव वरणाभिधानं त्रयाणामेव मन्त्रद्रष्टृत्वादिगुणख्यापनार्थमुत्तरवाक्यद्वयमित्यर्थः। यावन्तो वेति। यस्य यावन्त एव मन्त्रद्रष्टारो महर्षयस्तान् वृणीत इत्यर्थः। तेन गोत्रप्रवराध्याये मन्त्रद्रष्टृत्वेनाम्नातः कस्यचिदेकः कस्यचित् द्वौ कस्यचित् त्रयः पञ्च वा तावतो वृणीते न त्रीण्येवेति नियम इति भवत्येकार्षेयादीनामप्यधिकारः। आर्षेयं वृणीत इति सामान्यवाक्यस्य वरणविधायकत्वाङ्गीकारे यत्तन्त्ररत्नादौ न चतुर इति वचनयोः पृथक् निषेधकत्वाभ्युपगमापत्तौ वाक्यभेदापत्तिदूषणमुक्तं तदनूद्य दूषयति—नचैवं चतुरिति। याज्ञिकरुद्रदत्तमतमनूद्य दूषयति—यत्तु द्व्यामुष्यायणानामिति। चतुः षडादीनां प्राप्तिरिति। कुलद्वयेपि

लायनेन द्व्यामुष्यायणाननुक्रम्य "तेषामुभयतःप्रवृणीते एकमितरतो द्वावितरतः द्वावेकतरतः त्रीनितरतः" इति आवश्यकश्रुत्यन्तरमूलकेनैव तन्निषेधात्। अतो 'भार्गवच्यावन' इत्यादिविशेषरूपेण वरणपक्षेऽपि मनुवत्पक्षवदेव एकद्व्यार्षेययोरप्यधिकार इति ऋष्यन्तरमतं बोध्यम्॥ १०॥

---

(११)—वचनाद्रथकारस्याधानेऽस्य सर्वशेषत्वात्॥ ४४॥ न्याय्यो वा कर्मसंयोगात् शूद्रस्य प्रतिषिद्धत्वात्॥ ४५॥ अकर्मत्वात्तु नैवं स्यात्॥ ४६॥ आनर्थक्यं च संयोगात्॥ ४७॥ गुणार्थेनेति चेत्॥ ४८॥ उक्तमनिमित्तत्वम्॥ ४९॥ सौधन्वनास्तु हीनत्वात् मन्त्रवर्णात्प्रतीयेरन्॥ ५०॥

त्रयाणां वर्णानामाधानं विधाय 'वर्षासु रथकार आदधीत' इति श्रुतम्। तत्र विध्याक्षेपशक्तिकल्पने गौरवापत्तेः ब्राह्मणादीनामेव रथकरणे निमित्ते आधानोद्देशेन वर्षाविधिरिति प्राप्ते—

---

समं स्यादश्रुतत्वादिति न्यायेन द्व्यार्षेये षट्सङ्ख्यायाश्च प्राप्तिरित्यर्थः। त्रीनितरत इति। इति शब्दोऽत्र मूलकेनैवेत्यनेनाऽभेदेनान्वेति। तन्निषेधात् चतुः षडादीनि तच्छब्दार्थः। अत्र च द्विगोत्रस्य त्रींस्त्रीनेकैकस्माद्गोत्रादिति रुद्रदत्तधूर्तसत्याषाढवचनात् षण्णामप्यार्षेयाणां वरणप्राप्तिसम्भवेन विहितप्रतिषिद्धत्वात्पञ्चातिवरणमपि नानुपपन्नमिति ध्येयम्। मनुवत्पक्षवदेवेति। वतिप्रत्ययेन च मनुवत्पक्षस्यार्षेयवरणपक्षस्य च समतुल्यत्वप्रदर्शनात् आर्षेयवरणपक्षे एवार्षेयवरणं, न तु मनुवत्पक्षाश्रयणेऽपि भार्गवच्यावनेत्यादिविशेषरूपेणापि वरणं केषाञ्चित्सम्मतमपि युक्तम्। मनुवत्पक्षस्यैकार्षेयादिस्थानापन्नतया विधानेन पक्षद्वयस्य समुच्चये प्रमाणाभावादिति सूचितम्। अतो मनुवत्पक्षे यथैकार्षेयादिवरणं न प्राप्यते तथा जैमिनिमते त्र्यार्षेयस्यैव वरणविधानात् आर्षेयवरणपक्षेपि नैतत्प्राप्यते। ऋष्यन्तरमते तु त्र्यार्षेयवदेकार्षेयद्व्यार्षेयपञ्चार्षेयाणामपि आर्षेयवरणपक्षेपि वरणविधानादेकार्षेयादिवरणमपि प्राप्यत एवेत्येवमनुष्ठाने विशेष इति भावः।

रथकारशब्दस्य प्रसिद्धिबलेन सौधन्वनापरपर्याये जातिविशेषे रूढत्वात् तस्यैवायं कालविशिष्टाधानविधिः। न च तत्रापि योगेनैवोपपत्तौ रूढिकल्पनायां प्रमाणाभावः रथमकुर्वत्यपि सौधन्वने प्रयोगेण तद्बाधात्। न च प्रोक्षणीशब्दवद्योग्यतामात्रेण तदुपपत्तिः। योग्ये ब्राह्मणादावप्रयोगेण रूढिकल्पनाया आवश्यकत्वात्। रथकरण-योग्यतावच्छेदकमनुष्यत्वस्य कादाचित्कत्वाभावेन निमित्तत्वानुपपत्तेः रथकारपदवैयर्थ्यप्रसङ्गाच्च। अतः प्रसिद्धिबलात् सौधन्वन एव रथकारः। सुधन्वा च "व्रात्यात्तु जायते वैश्यात्सुधन्वाऽऽचार्य एव च" इत्यादिनोक्तः त्रैवर्णिकात्किञ्चिन्न्यूनो वेदानधिकृतो जातिविशेषः न तु शूद्रः। यद्यपि च रथकारपदं "माहिष्येण करण्यां तु रथकारः प्रजायते। माहिष्योग्रौ प्रजायेते विट्छूद्राङ्गनयोर्नृपात्॥ शूद्रायां करणो वैश्यात्" इत्यनेनोक्तेऽपि रूढं, तथाऽपि "ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्याद-ध्यात्" इति वाचनिके मन्त्रे ऋभुशब्दप्रयोगात्तस्य च 'सौधन्वना ऋभवः' इति मन्त्रान्तरे सामानाधिकरण्यनिर्देशात् सौधन्वन एवात्र रथकारपदेनाभिधीयते। अतश्च तस्या-विद्यत्वाद्विद्याक्षेपं तावन्मात्रविषयमङ्गीकृत्यापि कर्तृकालोभयविशिष्टाधानान्तरमेव विधी-यते। सर्वाधानेषु च प्रकरणात्साधारण्येनैव धर्मविधानम्। यद्यपि च विद्याभावादस्यो-त्तरक्रतुष्वनधिकारस्स्यात्तथाऽप्याधानमात्रमरणिमथितलौकिकाग्निगुणकं कल्प्यस्वर्गफलकं सधर्मकमनुष्ठेयम्। एवं चाहवनीयादेरनुपयोगादभावेन तदुद्देशेन विहितानां 'नक्तं गार्हपत्यमादधाति' इत्यादीनां धर्माणां लोपेऽपि एकस्मिन्नेव कुण्डे स्थण्डिले वा त्रिषु वा तेष्वग्न्यथाधानं इतराङ्गयुक्तं कार्यमिति तन्त्ररत्नाभिप्रायः॥

मम तु प्रतिभाति—नास्याधानस्यार्थकर्मत्वं प्रमाणाभावात्। अग्निमिति द्वितीया-न्तपदे लक्षणादेरावश्यकत्वे रथकारपदे योगाङ्गीकारस्यैव न्याय्यत्वाच्च। अपि त्वाहवनी-

---

वचनाद्रथकारस्याधाने।

सुधन्वाचेति। व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च।
मानुषश्च विजन्मा च मैत्रः सात्वत एव च।

इति स्मृत्युक्तो मैत्रसौधन्वनसात्वताद्यपरनामधेयो जात्यन्तररूपो रथकारो न तु तस्य शूद्रवैश्यक्षत्रियादिजातिमत्वमिति विशेषपदेनोक्तम्। सौधन्वन एवात्रेति। यथा च मन्त्रवर्णे छागस्य निर्देशात् पशुशब्दश्छागपरः एवमिहापि मन्त्रवर्णे ऋभूणां निर्देशात् ऋभूणामेव लौकिकप्रसिद्ध्या 'नेमिं नयन्ति ऋभवो यथा' इति मन्त्रान्तरे ऋभूणामेव नेमिनयनकर्तृत्वोक्त्या रथकारत्वस्य प्रदर्शितत्वाच्च ऋभ्वपरपर्यायरथकारविशेषपरो रथकारशब्द इत्यर्थः। लक्षणा-देरावश्यकत्वे इति। आदिपदेन स्वर्गार्थत्वकल्पना गृह्यते। नन्वेकादशे "यज्ञायुधानि धार्येरन्

याद्युत्पादकत्वमेव। न च तेषामनुपयोगः, अविद्वत्तया क्रत्वधिकाराभावेन तत्रानुपयोगेऽपि "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति वचनविहिते दाहे उपयोगसम्भवात्। न ह्ययं दाहः कर्मोपयुक्ताहिताग्निशरीरप्रतिपत्त्यर्थः। येन कर्माभावेनाभावश्शङ्क्येत। तथात्वे आहिताग्निपदेनाधानस्यैवोपस्थितेस्तदङ्गत्वस्यैवापत्तौ क्रत्वङ्गत्वानापत्तेः। न चेष्टापत्तिः। तथात्वे प्रतिपत्तिं विना आधानफलाहवनीयादेरनिष्पत्तत्त्वापत्तेः। अतः फलश्रवणादर्थ-

---

प्रतिपत्तिविधानादृजीषवत्" इत्यधिकरणे पात्राणामनियम उतान्ताद्धारणमिति सन्देहे नियामकस्याभावादनियमः न हि पूर्वप्रयोगे कृतः संस्कारः कश्चित् परेषु उपजीवनीयोऽस्ति यल्लोपभयात् पात्रान्तरोपादानं न भवेत्।

यत्त्वाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति वचनं तदाहिताग्निशरीरसंस्कारार्थे दाहे पात्राग्न्योस्तृतीयया गुणत्वावगमात् न पात्राग्निप्रतिपत्तिविधानपरं, येन तदनुरोधादान्तं धारणं भवेत्। अतः पूर्वप्रयोगोपयुक्तपात्रपरित्यागेनापि प्रयोगान्तरार्थं उत्पादितैर्नवीनैरपि पात्रैर्भवत्येव दाह इत्यनियमपूर्वपक्षं प्रापय्याहिताग्निशरीरसंस्कारार्थे दाहे पात्रादीनां गुणभावेऽपि मरणस्यानियतकालत्वात् पूर्वप्रयोगोपयुक्तेषु तेषु परित्यक्तेषु प्रयोगान्तरार्थोपादानान्तराले यजमानमरणे आहिताग्नेः सतो दाहाभावकृतवैगुण्यापत्तेरुत्तरप्रयोगपर्यन्तं पूर्वपात्रधारणे आवश्यके तैरेवोत्तरोत्तरप्रयोगानुष्ठानसम्भवात् आन्तं धारणमिति सिद्धान्त्येकदेशिमतमुपपाद्य, यद्यपि दाहे गुणभावः पात्राणां प्रतीयते तथापि दक्षिणहस्ते जुहूमासादयति दक्षिणपूर्वे आहवनीयमित्यासादनविधिषु द्वितीयानिर्देशादासादनस्य प्रतिपत्तित्वावगतेः पात्रान्तरकरणे पूर्वपात्राणामासादनरूपप्रतिपत्तिलोपापत्तेः तदर्थं धारणस्यावश्यकत्वात् तैरेवान्तं प्रयोगनिर्वाहात् तेषामेवान्तं धारणमिति परमार्थतः सिद्धान्तितम्। एवं च तस्मिन्नधिकरणे आहिताग्निशरीरप्रतिपत्त्यर्थत्वं सिद्धान्तिनाङ्गीकृतमिव दृश्यते। तथा चाहिताग्निपदश्रवणे सत्यपि आधानोपयुक्तशरीरसंस्कारार्थत्वाङ्गीकारे आधानकाले प्रतिपत्तिरूपसंस्काराभावादाधानमात्रेणाग्न्युत्पत्तेरसम्भवेनोत्तरकर्मस्वधिकारानापत्तेरव्यभिचरितक्रतु—सम्बन्धादाहिताग्निसाध्यक्रतूपयुक्तस्यैव शरीरस्य संस्कार्यत्वाङ्गीकारात् रथकारशरीरस्य क्रतूपयोगाभावेनासंस्कार्यत्वात् कथं तद्दाहे आहिताग्नीनामुपयोगो भविष्यतीत्याशङ्कानिराकरणायाह— **न ह्ययमिति।** **अयमर्थः**— आहिताग्निपदेन तावन्नाहिताग्निसाध्यक्रतूपस्थितिः, आहिताग्निमात्रस्यैवोपस्थितेः। नाप्यव्यभिचरितक्रतुसम्बन्धः आहिताग्निपदार्थस्य क्रत्वनुष्ठानं विनापि आधानमात्रेणाप्याहिताग्निपदार्थप्रसिद्धेः यथैव आधानोत्तरं प्राक् पवमानेष्टिभ्यः त्रैवर्णिकयजमानमरणे सति प्राप्तिः तथैव रथकारस्यापि यदा कदाचिदपि मरणे अस्त्येव प्राप्तिरिति सिद्ध

**कर्मैवेदमिति युक्तस्तत्राहवनीयादेरुपयोगः।** पवमानेष्ट्यङ्गभूत**पात्रसत्त्वाच्च यज्ञपात्रसमुच्चयेऽपि न क्षतिः। अत एव पवमानेष्ट्युत्तरं प्राक्क्रतुभ्यो मरणे अग्निभिः पात्रैश्च दाहः पवमानेष्टिभ्यः पूर्वं मरणे तु उक्तवचनबलादग्निभिरेव दाहः॥**

---

एव तत्कृताधानसिद्धाग्नीनां दाहे उपयोगः। **यदा** तु आधानाङ्गत्वे प्रतिपत्तिं विना आधानमात्रेणाग्निसमुत्पत्तेरसम्भवेनोत्तरक्रतुष्वधिकारो न सिद्ध्यतीत्युच्यते **तर्हि** स्वतन्त्रफलार्थत्वस्यैव दाहेऽङ्गीकाराद्यर्थैवाधानोत्तरं प्राक् पवमानेष्टिभ्यस्त्रैवर्णिकमरणे तच्छरीरदाहः स्वर्गाद्यर्थमनुष्ठेयः तथैव रथकारशरीरस्यापि दाहस्तदर्थमनुष्ठेय एवेति तत्राग्नीनामुपयोगः समान एवेति। एवं चैकादशे यज्ञपात्राणामग्नीनां च गुणभावमात्रस्यैवाङ्गीकारः इष्टः प्राचां न तु आहिताग्निशरीरप्रतिपत्त्यर्थत्वाङ्गीकारेण तद्द्वारा दाहस्य क्रत्वङ्गत्वे आधानाङ्गत्वे वा तात्पर्यमिति भावः।

ननु नास्त्यग्नीनां रथकाराधानसंस्कृतानां तद्दाहे उपयोगस्तथाप्यग्रे यज्ञाद्यनुष्ठानाभावेन प्रयोजकाभावे पात्राणामभावात् कथं तद्दाहे यज्ञपात्रसमुच्चयः सिद्ध्येत् तदसिद्धौ च समुच्चितकारणाभावात् विगुणाद्दाहात् फलोत्पत्त्यनापत्तिः। न च प्राक्पवमानेष्टिभ्य आधानोत्तरं त्रैवर्णिकमरणे यज्ञपात्राभावेन यत्किञ्चित्काष्ठैर्दाहस्येवेहापि तथैव तस्योपपत्तिरिति वाच्यम्। तत्र यज्ञसम्बन्धिपात्राणामभावेपि आधानकाले त्रैवर्णिकैः करिष्यमाणयज्ञार्थं पात्राणामुपादानात् पुरोडाशकपालवद्यज्ञार्थोपात्तपात्राणां सत्वेन तत्समुच्चयसिद्धावपि रथकाराधाने करिष्यमाणयज्ञानामभावे तदर्थपात्रोपादानाभावात् यज्ञार्थोपात्तपात्राणामभावेन समुच्चयासिद्धिः। अत एव "यज्ञियैः केतुभिः सह" इति मन्त्रोऽप्यस्मिन्नाधाने न लुप्यते। ततश्च पात्रसमुच्चयाभावेन दाहासम्भवान्नाग्नीनामुपयोगः सम्भवतीत्याशङ्कापरिहारायाह—**पवमानेष्ट्यङ्गभूतेति**। पवमानेष्टीनामन्यधर्मवत्साधारण्येनाधानचतुष्टयाङ्गत्वात्तदर्थमाधानकाले पात्रसम्पादनस्यावश्यकत्वाद्यज्ञार्थोपात्तपात्रसमुच्चयो रथकारशरीरदाहेऽपि नानुपपन्नः। अत एव यज्ञियैः केतुभिः सहेति मन्त्रो न लुप्यते। एवं च रथकारस्य आधानमात्रोत्तरं मरणे त्रैवर्णिकस्येव पवमानेष्ट्यर्थोपात्तपात्रसत्वात् समुच्चयः सुलभ एव, पवमानेष्ट्यनन्तरं तन्मरणे तु त्रैवर्णिकवदेव न काप्यनुपपत्तिः। अत एवोपयुक्तसंस्कारार्थत्वापेक्षया उपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वात् दक्षिणहस्ते जुहूमासादयतीत्यासादनरूपः संस्कारो दाहोपयोक्ष्यमाणपात्राग्निनिष्ठ एव कल्प्यते न तूपयुक्तपात्राग्निप्रतिपत्त्यर्थः तथात्वे आधानमात्रोत्तरं मरणे उपयुक्तत्वाभावेनासादनाद्यनापत्तेः। अत उभयसाधारण्येन उपयोक्ष्यमाणपात्राग्निनिष्ठ एव कल्प्यते न तु संस्कारकत्वमेवासादनीदीनां उपयुक्तत्वेन प्रतिपत्तिस्तु क्रतुकरणोत्तरमानुषङ्गिक्येवेति नासादनादिप्रतिपत्तिसिद्ध्यर्थं क्रत्वनुष्ठाननियमापेक्षा। अत एवासादनजन्य-

संस्काराणां दाहजन्यामुष्मिकफल एवोपयोगकल्पनात् तत्तत्क्रतुषूपयोगकल्पने प्रयोजनाभावेनैहिकफलकर्मातिरिक्तकर्मोपयोगित्वमपि नैव कल्पनीयमित्याधानमात्रोत्तरं मरणेप्यासादनादिजन्यसंस्काराणामुपयोग इव रथकारमरणेपि स नानुपपन्न इति ध्येयम्। यथा चैवं सति पात्रैक्यसिद्धिस्तथा विस्तरेणैकादशे निरूपयिष्यते।

यद्यप्यत्र दाहवाक्ये आहिताग्निपदश्रवणात् आधानोपयुक्तशरीरसंस्कारद्वारा आधानाङ्गत्वमेव दाहस्यायाति। न चात्र प्रतिपत्तिं विना आधानमात्रेणाग्न्युत्पत्तेरसम्भवेनोत्तरक्रतुष्वधिकारानापत्तेरिति पूर्वोक्तं दूषणं सम्भवति। आहवनीयादिशब्दानामाधानमात्रेणोत्पादिताग्नित्वप्याधानजन्योत्पत्त्यपूर्वविशिष्टत्वमात्रेणैव प्रवृत्तेस्तावन्मात्रेणापि आहवनीयादिनिष्पत्तौ उत्तरक्रत्वधिकारसिद्ध्युपपत्तेः। अन्यथा पवमानेष्टीनामाहवनीयाभावादसिद्ध्यापत्तेः। आधानमात्रोत्तरं यजमानमरणे आहवनीयादीनामनुत्पन्नत्वेनाभावादासादनादिसंस्कारपूर्वकाग्निकरणकदाहानापत्तेश्च। अतो यथैव पवमानेष्टिभ्यः प्रागाहवनीयाद्युत्पत्तेः पवमानेष्टीनां परमापूर्वविशिष्टतदुत्पादकत्वेऽपि प्रागाहवनीयादीनां सिद्धत्वाद्यथा पवमानेष्टिष्वधिकारस्तथैव दाहरूपप्रतिपत्तिं विनापि प्रागाहवनीयाद्युत्पत्तौ बाधकाभावेन सिद्ध्यत्येवोत्तरक्रतुष्वप्यधिकार इति न बाधकम्। एवं दाहरूपप्रतिपत्तेराधनाङ्गत्वस्वीकारेऽपि पात्राग्न्योस्तस्य गुणत्वात्तदुपयोगमादायापि रथकाराधानमग्निसंस्कारकमिति शक्यत एव समर्थयितुम्। अतश्चाधानाङ्गत्वस्य दाहे प्रतिपत्तिकर्मत्वस्य च नास्ति दूषणे प्रयोजनं, तथापि परमार्थतः प्रतिपत्तिकर्मत्वमिव दाहे भासमानमयुक्तमित्येतत्प्रयोजनार्थमेवातः फलश्रवणादर्थकर्मैवेदमिति पङ्क्तिः **पूज्यपादानाम्**। तथाहि—दाहवाक्ये तावन्नाहिताग्निसंस्कारार्थत्वेन विशिष्टविधिः गौरवापत्तेः। किन्तु हविरार्तिन्यायेन लक्षणया आहिताग्निकर्मकदाहोद्देशेन यज्ञपात्रसमुच्चिताग्नीनां करणत्वेन विधानमात्रम्। अस्ति चानाहिताग्न्याहिताग्निसाधारण्येन षोडशसंस्कारान्तर्गततया दाहप्राप्तिः। तदाह—**हारीतः**

"द्विविधो हि संस्कारः ब्राह्मो दैवश्च, गर्भाधानादिः स्मार्तो ब्राह्मः पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवः। ब्राह्मेण संस्कृतो य ऋषीणां सायुज्यं गच्छति दैवेनोत्तरेण संस्कृतो देवानां समानतां सायुज्यं गच्छति" इति। ते च ब्राह्माः षोडशसंस्काराः **गोविन्दार्णवधृतजातूकर्णिवचनेनोक्ताः**।

आधानपुंससीमन्तजातनामान्नचौलकाः।
मौञ्जीव्रतादिगोदानसमावर्ताविवाहकाः॥

अन्त्यं चैतानि कर्माणि द्विजानां षोडशैव तु ।
शूद्राणां चैव भवति विवाहश्चान्त्यकर्म च ।

इति । एवं चेतरसंस्कारसाधारण्येन प्राणोत्क्रमणप्रभृति सपिण्डीकरणान्तकर्मणोऽथवा दाहान्तकर्मणो वाऽन्त्यकर्मपदवाच्यस्यापि पूर्वलिखितहारीतवचनेन

संस्काररहिता ये तु तेषां जन्म निरर्थकम् ।
स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्य चित ।
वैदिकैः कर्मभिः पुण्यैः निषेकादिर्द्विजन्मनाम् ।
कार्यः स बीजसंस्कारः पावनः प्रेत्य चेह च ।

इत्यादिवचनैश्च तत्तत्फलार्थत्वेन श्रवणाद्विशेषतश्च "एवं विदा दह्यमानः सहैव धूमेन स्वर्गलोकमेति" **इत्याश्वलायनगृह्यसूत्रे** दाहमात्रस्यैव फलश्रवणात् स्वतः सिद्धफलप्रयुक्तदाहस्याधानवाचकपदान्तरकल्पनया नैवाधानाङ्गत्वकल्पनं युक्तमित्यानुषङ्गिकशरीरप्रतिपत्तावप्यर्थकर्मत्वमेव दाहस्य । इतरथा शरीरालाभे प्रतिकृतिदाहानापत्तेः । अतो युक्तं फलश्रवणादर्थकर्मैवेदमिति । एवं च **तन्त्ररत्नकारमते** आहवनीयादीनामभावादासादनादिपूर्वकं तदग्निभिः रथकारशरीरदाहो नास्ति । किन्त्वग्निगुणकाधानमात्रादेव स्वर्गोत्पत्तेरपवृत्ते कर्मणि लौकिकः सम्पद्यत इति **न्यायेनानन्तरमेवाग्नित्यागः** । आहिताग्निपदवाच्यता रथकारस्यास्ति न वेति तु वादान्तरम् । **पूज्यपाददर्शितरीत्या** तु केवलं दाहमात्रार्थमेवाधानं आधानसंस्कृताग्न्यादिभिः कृताद्दाहादेव फलमात्रं, नाधानादपि फलान्तरमित्यनुसन्धेयम् । एवं च त्रैवर्णिकाधानप्रायपाठ आहिताग्निपदवाच्यता चोपपन्ना भवति ।

अत्र च **यद्यपि** "वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य, वर्षा रथकारस्य । ये त्रयाणां वर्णानां एतत्कर्म कुर्यस्तेषामेष कालः । शिशिरः सार्ववर्णिक" इत्याधानप्रकरणगता**पस्तम्बसूत्रकृता** रथकारपदेन त्रैवर्णिकानामेव ग्रहणं युक्तं, **तथापि** **तेन** रथकारपदे यौगिकत्वरूपन्यायोपन्यासपूर्वकं तदभिधानान्मीमांसान्यायविरोधे तस्याभासत्व-

कल्पनान्न तद्वचनबलात्त्रैवर्णिकानामधिकारः, किन्तु सौधन्वनापरपर्यायस्य जात्यन्तरस्यैवेत्यवसितं **मीमांसकमतम्** ।

परमार्थतस्तु अत्रेदं प्रतिभाति ।। यदुक्तं **तन्त्ररत्ने**-

व्रात्त्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च ।
कारूषश्च विजन्मा च मैत्रः सात्वत एव च ।

इति मनूक्तो ऋभुसौधन्वनसात्वताद्यपरनामधेयो रथकारस्तस्येदमाधानान्तरमिति। तत्र तस्य सौधन्वनत्वं सुधन्वनोऽपत्यत्वेन विवक्षितं यदि, तर्हि मनुवाक्ये सुधन्वाचार्येत्येवं विशिष्ट-संज्ञाकरणेपि सुधन्वेत्येवं संज्ञाभावात् तदपत्यत्वमपरेषां दुर्लभम् । तदपत्यत्वेऽपि वा कारूष-विजन्ममैत्रसात्वतानां चतुर्णां तत्स्वीकारे ऋभुसात्वताद्यपरनामधेयत्वमनुपपन्नम् । **वस्तुतस्तु** मनुवाक्ये पञ्चानां पृथगुपादानादुत्तरोत्तरस्य पूर्वापत्यतानुक्तेश्च पञ्च जातिविशेषाः सुधन्वाचार्येत्येव-मादिसंज्ञका उत्पद्यन्ते इत्येव युक्तं, न तु परस्परमपरनामधेयत्वं प्रमाणाभावात् । पर्यायनामाभि-धाने चकारचतुष्टयानापत्तेः । **एतेनैकस्यैव वैतानि देशभेदेन नामानीति मेधातिथिप्रभृतीनां व्याख्यानमप्यपास्तम्** ।

अथवा

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान् सावित्रीपरिभ्रष्टान् व्रात्यानित्यभिनिर्दिशेत् ।

इति मनूक्तेषु व्रात्त्येषु मध्ये यो ब्राह्मणो व्रात्यस्तस्मात् ब्राह्मण्यामुत्पन्नस्य
व्रात्यात्तु जायते विप्रात् पापात्मा भूर्ज्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पशेखर एव वा ' ।।

इति स्मृतौ पञ्चनामानि दृश्यन्ते तथापि
व्रात्याद्विप्राद्विपपत्न्यां भूर्ज्जकण्टसुतः स्मृतः ।
ब्राह्मण्यां वाटधानाद्यो यः पुत्रः पुष्पशेखरः ।
एतैस्तु जीवनार्थाय कार्यं विष्ण्वादिपूजनम् ।

इत्यादिवचनान्तरादुत्तरोत्तरस्य पूर्वपूर्वापत्यत्वमिष्यते कैश्चित्तथैव समानन्यायात्

" वैश्यात्स्त्रीषु तथाव्रात्याद्वैश्यात्कारूपको भवेत् ।
चतुष्पथे श्मशाने च स भवेन्मित्रमण्डलः ॥ सुधन्वाचार्यस्त्वपरो भवेद्रुद्रस्य पूजकः ॥

तृतीयश्च विजन्माख्यः सूतिकावेश्मपूजकः ।
भूतप्रेतपिशाचांश्च पूजयेद्राजशासनात् ॥

साध्यानां पूजको मैत्रः चैत्यादीनां चतुर्थकः ।
पञ्चमः सात्विको नाम विष्णोरायतनार्चकः ।

इत्यादिपुराणादिवचनाच्चोत्तरोत्तरस्य पूर्वपूर्वापत्यत्वमपि केषाञ्चिदुक्तमङ्गीकर्तुमुचितं, न त्वेतावतैषामपरनामधेयत्वं परस्परमाश्रयणीयम् । न च पूर्वपूर्वापत्यभूतानामेवात्र सौधन्वनानां ग्रहणं भवतु किमपरनामधेयत्वाग्रहेण, अत एव मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रः तत्पुत्राणां सौधन्वनानामृभूणामेवाधिकार इत्युपसंहृतं मीमांसकमतं देवयाज्ञिकनिबन्धे इति वाच्यं, तेषां रथकारत्वेन निर्देशस्य कुत्रापि श्रुतिस्मृतिषु वा अकरणेन रथकारत्वे प्रमाणाभावात् । पूर्वोक्तादित्यपुराणादिवचनैः नित्यवृत्तीनामेव तत्तत्पुरस्कारेण विधानेन अवयवयोगार्थसम्बन्धेनापि रथकारत्वानुपपत्तेश्च सौधन्वनानामेव रथकारत्वजातौ प्रमाणाभावे तत्सामानाधिकरण्यबलेन ऋभूणामेव सुतरां तदनुपपत्तेः । नेमिनयनकर्तृत्वयोगेन श्रुतिदर्शितेन ऋभूणां रथकारत्वस्वीकारे त्रैवर्णिकानामपि तदापत्तेश्च ।

सौधन्वनानां साक्षात् रथकारत्वेन व्यवहाराभावेऽपि ऋभूणां रथकारत्वस्वीकारे त्रैवर्णिकानामपि तदापत्तिश्च । यदि तु सौधन्वनानां साक्षाद्रथकारत्वेन व्यवहाराभावेपि ऋभूणां रथकारत्वस्य श्रुतौ व्यवहारे च प्रसिद्धेः सौधन्वना ऋभव इति सामानाधिकरण्यदर्शनात् सौधन्वनानां ऋभुत्वप्रतीतेस्तद्गतरथकारत्वस्यापि तत्र सुलभत्वेन सौधन्वनानां रथकारपदवाच्यत्वमित्युच्येत, तर्हि विलम्बोपस्थितरथकारत्वसापेक्षरथकारपदवाच्यसौधन्वनग्रहणापेक्षया झटित्युपस्थितस्य सम्भवद्योगार्थरथकारपदवाच्यस्य माहिष्योत्पन्नस्यैव रथकारस्य ग्रहणापत्तिः । अत एव छागन्यायेन मन्त्रवर्णात् सौधन्वनानां ग्रहणं इत्यपास्तं छागन्यायस्यात्राप्रवृत्तेः ।

इत्थं हि अक्ताधिकरणन्यायछागन्याययोर्विषयभेदनिरूपणावसरे प्राचीनमर्यादानुसारेणोपक्रमपराक्रमवादे छागन्यायस्वरूपमप्पयदीक्षितैरुपपादितं— अक्ताधिकरणेऽर्थवादान्वयं विना विधेरपर्यवसानादपर्यवसितं सामान्यं श्रुतविशेषे पर्यवस्यतु इति स्थितेऽपि मन्त्रान्वयं विना विधेर-

पर्यवसानाभावात्, पर्यवसितं तु न सङ्कोचनीयमित्याशङ्कोत्तरत्वेन छागपशुन्यायावतारः। तथाच पर्यवसितस्यापि विधेः प्रत्यक्षविशेषे सत्याक्षेपायोगात् विधिमन्त्रयोरेकविषयत्वनियमात् पशुत्वसामान्यस्य कृत्स्नगतस्य छागेऽपि सद्भावाविरोधेन **कांस्यभोजिन्यायावताराग्नियम**-सम्भवेऽनियमानुपपत्तेश्च मन्त्रार्पितविशेषग्राहकत्वं युक्तमिति पशुसामान्यविधानेऽपि छागविशेषस्यैव ग्रहणम्। अत एव पर्यवसितस्याप्यग्निहोत्रं जुहोतीति विधेरनियतद्रव्यदेवताक्षेपं विना पयसा जुहोति यदग्नये च प्रजापतये च सायं जुहोतीत्यादिवाक्यान्तरस्थद्रव्यविशेषान्वयानापत्तेः। अतस्तद्वदेव श्रुतिविशेषे सत्याक्षेपानवतारात् तदाकांक्षयैव मन्त्रार्पितविशेषपर्यवसानं नोपसंहारप्राबल्येन।

यदि च "यो दीक्षितो यदग्नीषोमीयं पशुमालभेत" इत्ययं विधिः स्वाकाङ्क्षया विना उपसंहारप्राबल्यादेव पशुसामान्यं परित्यज्य मन्त्रार्पितं छागं द्रव्यत्वेन गृह्णीयात् तदा अग्नीषोमावपि परित्यज्यं त्वं ह्यग्ने प्रथमो मनोता इति मनोतामन्त्रार्पितं उपनयत मेध्यादुर आशासाना मेधपतये मेधमित्यध्रिगुप्रैषगतदेवतैकवचनान्तमेधपतिशब्दोपोद्बलितं च केवलाग्निमेव देवतात्वेन गृह्णीयात्। न चेष्टापत्तिः, दशमे मनोताधिकरणे मनोतामन्त्रस्थाग्निशब्दस्यैकदेशद्वाराऽग्नीषोम-प्रकाशकत्वस्य नवमे मेधपत्यधिकरणे मेधपतये इत्येकवचनस्याग्नीषोमोभयव्यासक्तदेवतात्वैक्याभि-प्रायत्वस्य समर्थितत्वात्। न च मनोनामन्त्रे केवलाग्निशब्दप्रयोगेऽपि अग्नीषोमाभ्यां छागस्येति मन्त्रान्तरेऽग्नीषोमपदप्रयोगान्मेधपतिशब्दस्य क्वचिच्छाखायामेकवचनान्तपाठेऽपि शाखान्तरे द्विवचनान्तपाठाच्च विध्यनुगुणमन्त्रसद्भावेन तदननुगुणमन्त्रार्पितग्रहणमपि नोपेयत इति वाच्यम्। तथा सति द्रव्यविषयेऽपि "इमं पशुं पशुपते ते अद्य बध्नामि "पाशात् पशुं प्रमुञ्चत" इत्याद्यनुगुणमन्त्रसद्भावात् अननुगुणमन्त्रार्पितछागग्रहणमपि न स्यात्। तस्माद्देवता-विषये आकाङ्क्षाविरहान्मन्त्रार्पितस्याग्रहणं द्रव्यविषये तत्सत्त्वात् मन्त्रार्पितस्य ग्रहणमित्येव विशेषो वक्तव्यः। अत एव व्रीहिभिर्यजेतेति विधेः धान्यमसीति मन्त्रार्पितसामान्या-ग्रहणं अनुष्ठानाय विशेषाकांक्षाया इव सामान्याकांङ्क्षाया अभावात्।

अयुक्तश्चाकांक्षाभावे पदार्थस्य मन्त्रानुसारेण संकोचः। मन्त्रो ह्यनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेषः। न च शेषानुसारेण शेषिसङ्कोचो युक्तः अन्यथा स्योनं ते सदनं करोमि तस्मिन् सीदेति व्रीहिलिङ्गकमन्त्रानुसारेण सदनकरणप्रतिष्ठापने व्रीहिपुरोडाशे संकुचिते कल्पनीये इति यवपुरोडाशे ते न स्याताम्। तस्माद्यथा तत्र गुणानुसारेण प्रधानसङ्कोचायोगात्

यवपक्षेऽपि सदनकरणप्रतिष्ठापने, मन्त्रः परं व्रीहिपक्षे इति व्यवस्था तथात्रापि सर्वेऽपि पशवो द्रव्याणि, मन्त्रः परं छागपक्षे इत्येव स्यात् यदि तु विध्यर्थाकाङ्क्षानुसरणं न स्यात्। अत एवेन्द्रपीताधिकरणे निराकाङ्क्षस्य विधेर्मन्त्रलिङ्गानुसारेण संकोचो निराकृतः, तत्र हि सोमेन यजेतेत्यविशेषेणैन्द्रानैन्द्रप्रदानरूपसर्वाभ्यासानुवृत्तज्योतिष्टोमयागाङ्गत्वेन विहितस्य सोमद्रव्यस्य इन्द्राय त्वा वृत्रघ्ने इन्द्राय त्वा वसुमते सोमं गृह्णामीति मानग्रहणमन्त्रानुसारेणैन्द्रप्रदानविषयतया सङ्कोचमाशङ्क्य गुणानुसारेण प्रधानसङ्कोचो न युक्तः कामं मन्त्रः ऐन्द्रविषयः स्यादिति व्यवस्थापितम्। निराकाङ्क्षस्यापि विधेरुपसंहारप्राबल्येन सङ्कोचमभ्युपगच्छतः तत्रापि सङ्कोचापत्तिरिति।

एतावता पर्यवसितस्यापि विधेर्विशेषाकाङ्क्षावतो मन्त्रार्पितविशेषग्राहकत्वमिति छागपशुन्यायस्वरूपमुपपादितं भवति। प्रकृते च सौधन्वनेष्वपि रथकारत्वाङ्गीकारेपि आधानवाक्ये रथकारमात्रस्य अधिकारप्रतीतेर्ब्राह्मणाद्यधिकारवाक्येष्विव विशेषाकाङ्क्षाभावे केवलं गुणभूतमन्त्रानुसारेण रथकारपदार्थसङ्कोचो नैव युक्तः किन्तु ऋभूणां त्वेति मन्त्रः परं सौधन्वनाधान एव प्राप्नुयात्॥

वस्तुतस्तु पूर्वोक्तरीत्या सौधन्वनेषु रथकारपदवाच्यत्वे प्रमाणाभावात् माहिष्योत्पन्नस्यैव रथकारत्वेन झटित्युपस्थितेः पर्यवसितविशेषमेव रथकारपदं नैव मन्त्रवर्णाद्विहितविशेष इव शक्यं व्यवस्थापयितुं सामान्यस्य सामान्याकाङ्क्षाया इव विशेषस्यापि विशेषाकाङ्क्षाया अभावात्। मन्त्रवर्णस्यापि भृगूणां त्वाङ्गिरसां, आदित्यानां त्वा देवानामित्यादिपूर्वपठितमन्त्रसमानन्यायेन ऋभुसंज्ञकानां देवानामेव सङ्कीर्तनाद्विधिमन्त्रयोरेकविषयत्वनियमस्याप्यत्रानपेक्षणेन प्रकृते नियामकत्वानुपपत्तेश्च। नहि भृगवोऽङ्गिरस आदित्या वा केचन ब्राह्मणेषु जातिविशेषाः। किन्तु ब्राह्मणादीनां ते ऋषयो देवा भवन्तीत्यतः तेषां देवानां व्रतेन हे व्रतपते अग्ने त्वामादधामीति पूर्वमन्त्राणामर्थस्तथैव ऋभूणां त्वेति मन्त्रस्यापि यो रथकारस्तस्य ऋभवो देवविशेषाः सौधन्वनापरपर्याया रथकर्तारः केचन तेषां देवानां व्रतेनाग्ने त्वामादधामीत्ययमेवार्थो युक्तः।

अत एव सर्वेषु मन्त्रेषु देवानामिति सामानाधिकरण्यं यथर्ष्याधानमिति कल्पसूत्रकाराणां समाख्या चोपपद्यते। एतादृशार्थकमन्त्रवर्णस्य त्रैवर्णिकानामधिकारो न किन्तु रथकारदेवानामेव मन्त्रवर्णे सङ्कीर्तनाद्रथकारजात्यन्तरस्यैवेत्यर्थे एव नियामकत्वमित्यभिप्रायकमेव सौधन्वनास्तु

**हीनत्वान्मन्त्रवर्णात्प्रतीयेरन्** इति **जैमिनि**सूत्रमेतदधिकरणस्थं; न तु माहिष्योत्पन्नाधिकाख्यावृत्तिनात्पर्येण सौधन्वनानां रथकारजातीनामधिकारनियमप्रदर्शनपरम्। अत एव रथकारपरपदस्याधाननियतं चेति पूर्वोत्तरपक्षप्रदर्शनपर**कात्यायन**सूत्रं व्याचक्षाणेन **कर्को**पाध्यायेन त्रैवर्णिकाधिकारनिराकरणाय माहिष्योत्पन्नरथकाराधिकारप्रसाधने "तथाच मन्त्रलिङ्गं ऋभूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामिति रथकारस्य, रथकृतो रथन्तरं गायेति प्रेष्यति सौधन्वना ऋभव इति च" इति मन्त्रवर्णलिङ्गं माहिष्योत्पन्नरथकाराधिकारसाधकतयैवोपन्यस्तम्।

अपि च सौधन्वनानामधिकारेऽप्याधानमात्रे एवाधिकार इत्यप्ययुक्तम्। यथैवाधानविधिबलात्तावन्मात्रौपयिकविद्याक्षेपेणाधानेऽधिकारस्तथैव द्वितीयाश्रुत्या अग्निसंस्कारकत्वेनैवाधानविधानात् विधेयाग्निसंस्कारकाधानविधानसामर्थ्यादाधानपूर्वकोत्तरक्रतुषु अधिकारोऽपरिहार्य एवेति। तस्मादुपनीनाधिकारिकसंस्कारकर्माधानप्रायपाठाद्विद्याक्षेपकल्पनाभावकृतलाघवाद्वक्ष्यमाण**शङ्खा**दिवचनदर्शितावयवार्थसंभवाद्रूढेश्च माहिष्येण करण्यामुत्पन्नस्य रथकारस्यैव सभवादुपनयनादिसंस्कार्याधानपूर्वकमुत्तरक्रतुष्वधिकारो, न तु सौधन्वनानाम्। स च वैश्यजातीयाङ्गनायां परिणीतायामुत्पन्नो माहिष्यः वैश्याच्छूद्रजातीयायां परिणीतायामुत्पन्ना कन्या करणी।

एवं "माहिष्येण करण्यां तु रथकारः प्रजायते।

वर्तयेच्छिल्पवृत्त्यात्र सर्वस्मिन् शिल्पशास्त्रवित्'॥ इति योगीश्वरेणोक्तः। अत एव **मिताक्षरायामे**तच्छ्लोकविवरणे उक्तं—तस्य चोपनयनादि सर्वं कार्यं वचनात्। यथाह **शङ्खः** क्षत्रियावैश्यानुलोमानन्तरोत्पन्नो यो रथकारः तस्येज्यादानोपनयनसंस्कारक्रियाश्च प्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता चेति। रथसूत्रं रथविद्येति **मञ्जर्यां** व्याख्यातम्। **अत एव** ब्राह्मणाद्युपनयनविधायकवचनप्रायपाठे पठिते रथकाराधानविधायकवचनेप्येतादृशं सर्वकर्माधिकारिणं रथकारं रथविद्योपजीविनं विहाय सावित्रीपतितोत्पन्नं सर्वकर्मानधिकारिणं सौधन्वनमाधानेऽधिकुर्वन्ति मीमांसकास्तत्कथमिव युक्तमिति **न प्रतीमः**। मन्त्रवर्णस्य च **स्पष्टमेव** सुधन्वनोऽङ्गिरसस्यापत्यभूता ये ऋभुर्विभ्वा वाजेति नामधेयास्त्रयः पुत्राः अग्निष्टोमादिकर्मभिः ऋभुसंज्ञकदेवभावप्राप्ता अश्विनो रथं कृतवन्तस्तादृशदेवप्रतिपादकत्वं, न तु व्रात्यवैश्यपुत्ररूपसौधन्वनापरपर्यायऋभुसंज्ञकमनुष्यावान्तरजातिमत्प्रतिपादकत्वं, तथैव ऋग्वेदे प्रथमाष्टकसप्तमाध्याये "ततमे अपसंदुतायते" इति ऋभुदेवताके नवर्चसूक्ते तक्षन् रथं सुवृतं विप्रनापस इति

(१२)—स्थपतिर्निषादस्स्यात् शब्दसामर्थ्यात् ॥ ५१ ॥ लिङ्गदर्शनाच्च ॥ ५२ ॥

'रौद्रं वास्तुमध्ये चरुं निर्वपेत्' इति प्रक्रम्य 'एतया निषादस्थपतिं याजयेत्' इति श्रुतम्। तत्र यद्यपि निषादः स्थपतिर्यस्य इति बहुव्रीहौ पदद्वयेऽप्यन्यपदार्थलक्षणेति स

---

पञ्चमे सूक्ते सौधन्वनानामुपपादनात्। तदुपपादनं च विस्तरभयान्न लिख्यते श्रीविद्यारण्यस्वामिकृते तद्भाष्ये एव द्रष्टव्यम्। इममेव मन्त्रवर्णविरोधमभिप्रेत्य पूर्वलिखितकात्यायनसूत्रद्वयस्य द्वितीयव्याख्यायां माहिष्योत्पन्नरथकारस्यैवाधिकार इति सिद्धान्तप्रदर्शनावसरे देवयाज्ञिकनिबन्धे ऋभूणां त्वेति मन्त्रवर्णस्य पूर्वव्याख्यायां सौधन्वनानामधिकारसाधकतयोपन्यस्तस्यानुवादपूर्वकं परिहारो नैव दर्शितः। एवं च मस्तु शूद्रस्येत्यादिविधीनां रथकारपरत्वमुपपन्नं भवति। तस्यापि मातृसमानवर्णत्वेन मातामहीद्वारा शूद्रवर्णत्वात्। अस्मिंश्च पक्षे रथकाराधानस्यार्थकर्मत्वं, स्वर्गादिफलकल्पना, तदाहिताग्नीनां दाहमात्रोपयोगित्वकल्पना च नापद्यत इति सर्वं शिवम्।

---

॥ स्थपतिर्निषादःस्याच्छब्दसामर्थ्यात् ॥

अत्र क्वचिच्छास्त्रदीपिकापुस्तकेष्वापस्तम्बसूत्रानुरोधेन रौद्रं वास्तुमयमिति पाठो धृतः, व्याख्यातं च कैश्चित् वस्तुमयं वास्तुशाकबीजप्रकृतिकमिति। तदुभयमपि अनवधानकृतं भाष्यलिखितपाठेन विरोधादित्यभिप्रेत्य वास्तुमध्ये इत्येतत्पदघटितं वाक्यमुदाहरति—**रौद्रं वास्तुमध्ये इति**। यस्य रुद्रः प्रजाः शमयेत् स वास्तुमध्ये रौद्रं गावीधुकं चरुं निर्वपेत् इति पाठस्यान्यत्र निबन्धेषु लिखनाद्गावीधुकचरुणा वास्तुमध्ये इयमिष्टिः कर्तव्येति प्रतीतेर्न वास्तुशाकबीजप्रकृतित्वम्। तथाच कात्यायनसूत्रं निषादस्थपतिर्गावीधुकेऽधिकृत इति। अस्तु वा कल्पसूत्रभेदेन पाठभेदः॥ अत्र निषादस्थपतिशब्दे षष्ठीतत्पुरुषः कर्मधारयो वेति समासद्वयमेव प्राचां ग्रन्थेषु दर्शितम्। तत्र यथैव षष्ठीतत्पुरुषाश्रयेण त्रैवर्णिकाधिकारपूर्वपक्षः सिद्ध्यति तथा बहुव्रीह्याश्रयणेनापि सा सिद्ध्यत्येवेति तत्समासानङ्गीकारे हेतुं दर्शयन् पूर्वपक्षमाह—**तत्र यद्यपीति**। ननु षष्ठीतत्पुरुषस्थले वैयाकरणैर्विशिष्टार्थे अतिरिक्तशक्त्यङ्गीकारेण शक्त्यैव राजसम्बन्धविशिष्टपुरुषप्रतीतिस्तन्मते सुलभा, परं तु मीमांसकादिभिः क्लृप्तावयवार्थयोगेनैव बोधस्वीकारात् तन्मतेऽनुभूयमानसम्बन्धविशिष्टबोधानुपपत्तेरेव लक्षणाकरणसद्भावात् लक्षणा

नाश्रीयते। तथाऽपि निषादानां स्थपतिरिति षष्ठीतत्पुरुषे तदभावाद्विद्याक्षेपशक्तिकल्पनाभिया कर्मधारयानङ्गीकारेण स एवाश्रीयते। न च तत्रापि पूर्वपदे निषादसम्बन्धिनि लक्षणा, कारणाभावात्। यद्यपि हि क्लृप्तावयवार्थयोगेनैवोपपत्तौ न समासे विशिष्टार्थशक्तिकल्पना प्रामाणिकी। तथाऽपि कर्मधारये अभेदस्येव षष्ठीतत्पुरुषादावपि स्वस्वामिभावादिभेदसम्बन्धस्य संसर्गविधयैव भानोपपत्तेर्लक्षणायामनुपपत्त्यभावः। न च नैयायिकवदस्माकं नामार्थयोरभेदान्वय एवेत्यत्र प्रमाणमस्ति। राजा पुरुषोऽस्तीत्यादौ सर्वत्र नामार्थस्य विभक्त्यर्थे तस्य चाख्यातार्थेऽन्वयाङ्गीकारेण परस्परान्वयस्य समासातिरिक्ते क्वाप्यप्रसक्तत्वात्। अतस्समास एव प्रसक्तस्य तस्य संसर्गविधयैव भानोपपत्तेः न लक्षणेति प्राप्ते—

समानाधिकरणपदस्थले राजा पुरुषोऽस्तीत्यादौ क्रियान्वयोत्तरं पार्ष्ठिकान्वयस्याभेदसम्बन्धेनैवानुभवात् राज्ञः पुरुषोऽस्तीत्यादौ व्यधिकरणपदस्थले च भेदसम्बन्धेनैवानुभवाल्लाघवेन नामप्रयोज्यतदर्थान्वयबोधस्याभेदविषयकत्वमेवेति नियमकल्पनात् स्वस्वामिभावादिसम्बन्धस्य षष्ठीतत्पुरुषादौ संसर्गविधया भानानुपपत्तेरवश्यं पूर्वपदे स्वार्थसम्ब-

---

आवश्यिकीत्यभिप्रायेणाशङ्क्य परिहरति—**यद्यपि हीति**। अनुपपत्त्यभावमेव दर्शयति—**न च नैयायिकवदिति**। **अतः समास एवेति**। अत एव समासे विभाषाधिकारात् वृत्तिवाक्ययोरेकार्थत्वमवश्यं लभ्यते। अर्थभेदे सति विभाषाध्ययनमनर्थकं स्यात्, अर्थभेदादेव समासेन वाक्यस्य निवृत्तिसिद्धेः। तेन यथा निषादानां स्थपतिरिति वाक्ये नास्ति लक्षणा तथा समासेष्वपि नैव कस्यचिल्लक्षणा। तेन कर्मधारयषष्ठीतत्पुरुषयोर्बलाबलविशेषाभावाद्यद्यपि निषादानां स्थपतिः शूद्रोपि सम्भवति तथापि विद्याक्षेपशक्तिकल्पनाभिया त्रैवर्णिकरूपाणामेव स्थपतीनामधिकारः। न ह्यत्र स्थपतिशब्दो रथकारशब्दवद्योगरूढः, किन्तु यौगिक एव तस्य चोभयथापि सम्भवे यत्रैव विद्याक्षेपकल्पनाभावकृतं लाघवं स एव पक्षो युक्त इति भावः। **अवश्यं पूर्वपदे इति**। यद्यत्र लक्षणा न स्यात् तदा पदद्वयसामानाधिकरण्याभावे एकार्थीभावलक्षणसामर्थ्याभावात् समासोऽपि न प्राप्येत, अतश्च नीलोत्पलसमासे उत्पलशब्दस्यापि तदेवाधिकरणं प्रतिपाद्यं नीलशब्दस्यापि तदेवेति एकार्थीभावलक्षणं सामर्थ्यं सिद्ध्यति। सामर्थ्याच्च समासः, तथैव षष्ठीसमासेपि ऐकार्थ्यसिद्ध्यर्थं लक्षणा आश्रयितव्या। यदि च च निषादपदेन निषाद एवोच्यते स्थपतिशब्देन च स्थपतिरेवार्थान्तरभूत उच्यते ततो भिन्नाधिकरणत्वेन सामर्थ्याभावात् समास एव न स्यात्। अतः समाससिद्ध्यर्थं निषादशब्देन

न्धिलक्षणामङ्गीकृत्य तस्योत्तरपदार्थेऽभेदेनान्वय इत्यङ्गीकार्यम्। अत एव नामप्रयोज्यनामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गकबोधत्वावच्छिन्नं प्रत्येकाधिकरणवृत्तिप्रातिपदिकार्थतावच्छेदककनामद्वयसमभिव्याहारस्य द्वन्द्वभिन्ननामद्वयसमभिव्याहारस्य वा तन्त्रत्वमित्यपि बोध्यम्। तेन धवखदिरौ नीलघटावित्यादौ नाभेदबोध इत्यपि बोध्यम्। न चैवं समासे सम्बन्धिनोऽभेदेनान्वयाद्विग्रहे च राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसम्बन्धस्य भेदेनान्वयात् वृत्तिवाक्ययोर्भिन्नार्थत्वापत्तेरेकविधानेनेतरनिवृत्त्यनापत्तौ विभाषासूत्रवैयर्थ्यापत्तिरिति वाच्यम्। एकतरबोधे इतरबोधस्यावश्यकत्वेनार्थैक्याभिप्रायात्। अतश्च षष्ठीतत्पुरुषे लक्षणापत्तेः निषादश्चासौ स्थपतिश्चेति कर्मधारय एवायम्। तेन

---

स्थपतिपर्यन्तबोधार्थं अवश्यं लक्षणा कर्तव्येत्यवश्यशब्देनोक्तम्। यत एव समानाधिकरणपदद्वयस्थले एकाधिकरणवृत्तिपदार्थतावच्छेदकावच्छिन्नार्थबोधे एवाभेदेनान्वयो न तु नामद्वयसमभिव्याहारमात्रे अत एव द्वन्द्वसमासे नामद्वयसमभिव्याहारेऽपि नाभेदबोध इत्याह— **अत एवेति**। अत्र **तन्त्ररत्ने** वृत्तिवाक्ययोर्भिन्नार्थत्वापत्तिमाशङ्क्योक्तं "न चैतावता वृत्तिवाक्ययोर्भिन्नार्थत्वं उभाभ्यामपि निषादसम्बन्धिनः स्थपतेः प्रतिपादनात् प्रकारभेदमात्रन्त्वेतत् क्वचिच्छ्रुतिः क्वचिल्लक्षणेति नत्वेतावतैकार्थत्वहानिः" इति। अनेन च षष्ठ्यापि सम्बन्धी शक्त्योच्यते इति भाति, **तदयुक्तम्** सम्बन्धमात्र एव षष्ठ्याः शक्तत्वेन सम्बन्धिशक्तिकल्पने गौरवापत्तेः, सम्बन्धिनि शक्तिकल्पने प्रकृत्यर्थस्य प्रत्ययार्थैकदेशे सम्बन्धेऽन्वयापत्तेश्च। अतः सम्बन्धमात्रबोधकत्वेपि विग्रहवाक्ये यथैव सम्बन्धबोधोऽवश्यं जायते तथैव वृत्तिवाक्येपि लक्षणया सम्बन्धिबोधे सम्बन्धविशिष्टबोधो जायते एवेति फलतोऽर्थस्यैकत्वात् न भिन्नार्थत्वमित्यभिप्रायेणाह— **एकतरबोधेति**। एकतरस्य सम्बन्धस्य सम्बन्धिनो वेत्यर्थः।

**नन्वेवं** नीलोत्पलमिति समासे यथैव नीलशब्दस्य लक्षणया द्रव्यपरत्वान्नीलं च तदुत्पलं चेति विग्रहस्तथैव राजपुरुष इति समासे राजपदस्य लक्षणया सम्बन्धिद्रव्यपरत्वात् राजा चासौ पुरुषश्चेति विग्रहापत्तिरिति **चेत्** परिहृतमेतदिष्टापत्त्यैव वार्तिककारेण। अथात्र च कथं तर्हि षष्ठीसमासः सर्व एव समानाधिकरणसासः स्यादित्याशङ्क्य यद्यपि समासवेलायां समस्यमानपदानां सर्वेषां सामानाधिकरण्यमेव अन्यथा सामर्थ्याभावेन समासानुपपत्तेः। यत्र श्रुत्या सामानाधिकरण्यं तत्र कर्मधारयः यत्र षष्ठ्यर्थलक्षणया तत्र तत्र षष्ठीसमास इति व्यवस्था। एवं च षष्ठीतत्पुरुषेपि राजा चासौ पुरुषश्चेति विग्रहे बाधकाभावेपि यद्व्याख्यातॄणां राज्ञः पुरुष इति विग्रहकरणं तत् विस्पष्टीकरणार्थम्। अन्यथा कर्मधारयसम्भावनया

तावद्विषये विद्यामाक्षिप्याप्यनाहिताग्नेरपि निषादस्यैवाधिकारः। अत एव 'कूटं दक्षिणा स्वं

---

षष्ठीसमासता नाभिव्यज्येत। यदाऽर्थस्य करणमतन्त्रीकृत्य वृत्तिविग्रहयोरत्यन्तैकरूप्यं विवक्षितं, तदा वृत्ताविव विग्रहेपि राजपदं लक्षणया तत्सम्बन्धिपुरुषप्रतिपादकमङ्गीकृत्य राजा चासौ पुरुषश्चेति विग्रह इत्युक्तं तन्त्ररत्ने।

तदयुक्तं—नीलोत्पलसमासेऽपि यत्र नीलादिपदानां शक्त्या लक्षणया वा समानाधिकरणार्थप्रतिपादकत्वं क्लृप्तं तत्र कर्मधारयः समास इति तत्र विग्रहवाक्यस्थपदवृत्त्यैवोपस्थितयोरभेदबोधः सम्भवति। यत्र तु समासोत्पत्तेः पूर्वं व्यस्तप्रयोगे येषां पदानां शक्त्या लक्षणया वा न समानाधिकरणार्थप्रतिपादकत्वं क्लृप्तं नात्र[1] कर्मधारयः समास इति तत्र विग्रहवाक्यस्थपदवृत्त्यैवोपस्थितार्थयोरभेदासम्भवे तत्रैवानुपपत्तिप्रतिसन्धानं तत्रैव समासे लक्षणाद्याश्रयणं अभेदबोधाय स्वीकार्यम्। अत एव कर्मधारये नीलमुत्पलमित्यादिव्यस्तप्रयोगेषु नीलादिपदानामुत्पलपदसमानाधिकरणार्थकत्वस्येव [2]न राजा पुरुष इति व्यस्तप्रयोगेषु राजपदस्य क्वचिदपि शक्त्या राजसम्बन्धित्वेन रूपेण पुरुषपदसमानाधिकरणार्थकत्वस्य क्लृप्तिरस्ति। लक्षणया तेन रूपेण प्रतिपादने तु निषिद्धलक्षणात्वापत्तिः। न हि "कश्चिन्नैवाप्रयोगत" इति वार्तिके उपपादितनिषिद्धलक्षणाया रूपं वक्ष्यमिति दर्शितेनोदाहरणेन एतस्य कश्चन विशेषोऽस्ति। अतः क्वचिदपि राजसम्बन्ध्यभिधायकवृत्तिवाक्यस्य राजा चासौ पुरुषश्चेति विग्रहो न युक्तः किन्तु राजाभिन्नपुरुषप्रतीतिवारणाय राज्ञः पुरुषः इत्येव सः। तत्र विवरणरूपे विग्रहवाक्ये सम्बन्धित्वेन रूपेण पुरुषस्य विवरणाद्राजपुरुषपदं न राजाभिन्नपुरुषविवक्षया प्रयुक्तं, किन्तु राजसम्बन्धिपुरुषविवक्षयेति निश्चिते तात्पर्यानुपपत्त्या षष्ठ्यश्रवणे सति राजपदस्य राजसम्बन्धिनि लक्षणा परमाश्रीयते न त्वेतावता राजा चासौ पुरुषश्चेति विग्रहाश्रयणमितीतरबोधस्यावश्यकत्वेनेति सूचितम्। इतरस्य सम्बन्धिनः सम्बन्धस्य वा बोधोऽवश्यं जायत इति फलत अर्थैक्यं, न तु राजपदस्य राजसम्बन्धिलक्षणया राजा चासौ पुरुषश्चेति विग्रहमङ्गीकृत्य राजपुरुष इति वृत्तेर्लक्षणया विग्रहवाक्याभिन्नार्थत्वमित्यर्थः। निषादस्यैवाधिकार इति। निषादश्च—

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।
निषादः शूद्रकन्यायां यःपारशव उच्यते॥

---

1. A. तत्र 2. P. स्यैव

हि तन्निषादानाम्' इति लिङ्गमपि सङ्गच्छते। तत्र च **परप्रयुक्तोपजीवित्वादाहवनीयाद्यनाक्षेपेऽपि 'यत्र क्वचन होष्यन् स्यात् स पञ्चभूसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत्' इति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात्तमेव** तत्तद्देशे स्थापयित्वा तस्मिन्निष्टिः कर्तव्येति ध्येयम्॥ १२॥

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**
**षष्ठस्याध्यायस्य प्रथमः पादः.**

---

इति मनुना परिणीतायां शूद्रकन्यायां विप्रादुत्पन्नोऽनुलोमत्वेन मातृसमानवर्णत्वाद्यः शूद्रः पारशव इति नामान्तरेणोक्तः स गृह्यते तस्यैव चोत्पत्तौ फलाश्रवणेपि विश्वजिन्न्यायेन स्वर्गफलकल्पनया स्वर्गार्थिनोऽधिकार इत्यर्थः। अत्र च यद्यपि याजयेदिति प्रयोजकव्यापाराभिधानं तथापि यजनं विधेयं याजनस्य वृत्त्यर्थतयैव प्राप्तत्वात् प्रयोज्यव्यापार एव यागरूपो निषादकर्तृको विधीयतेऽप्राप्तत्वादिति ध्येयम्। **केचित्तु** याजनस्य वृत्त्यर्थतया प्राप्तस्यापि शूद्रयाजनत्वेन निषिद्धस्य प्रत्यवायजनकत्वाभावबोधनाय पुनर्विधानं तद्बलादेवार्थप्राप्तं यजनमित्याहुः। **कूटमिति।** कूटपदेन रजतवेष्टितं लोहमयं शस्त्रमुच्यत इति केचित्। द्रव्यान्तरमिश्रं हिरण्यमिति....पादे वार्तिके॥ निषादस्याधानाभावात् कुत्रेयमिष्टिरित्याशङ्क्योत्तरं स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवर्जेतेत्यष्टमपादस्थाधिकरणसिद्धमनुवदति—**तत्रचेति।** **तद्देशे इति।** वास्तुमध्ये इत्यर्थः॥

**इति श्रीशम्भुभट्टविरचितायां भाट्टदीपिका-**
**प्रभावल्यां षष्ठस्य**
**प्रथमः पादः**

---

# अथ षष्ठस्याध्यायस्य द्वितीयः पादः

(१)—पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारस्स्यात् ॥ १ ॥ अपि चोत्पत्तिसंयोगो यथा स्यात्सत्त्वदर्शनं तथा भावो विभागे स्यात् ॥ २ ॥

'ऋद्धिकामास्सत्रमासीरन्' इत्यादावनेककर्तृकसत्रप्रयोगादेकं फलं सर्वैः कर्तृभिरवयवशो भुज्यते उत कृत्स्नमिति विचारे यद्यपि सर्वेषां प्रत्येकं कर्तृत्वं यदि वा दम्पत्योरिव व्यासक्तमुभयथाऽपि एकसत्रप्रयोगादनेकफलनिष्पत्तौ दर्शादावप्येकस्मादेव प्रयोगाद्युगपत् क्रमेण वा अनन्तस्वर्गोत्पत्त्यापत्तेरेकप्रयोगादेकफलोत्पत्तिनियमस्यावश्यं वाच्यत्वादेकमेव फलं सर्वैरवयवशो भुज्यत इति प्राप्ते—

न तावदेकस्य फलावयविनो मुख्यावयवास्सम्भवन्ति सुखादिरूपस्य तस्यावयवासम्भवात्। सत्रजन्यतावच्छेदकऋद्धित्वादेस्तावत्पुरुषनिष्ठऋद्धिषु व्यासज्यवृत्तित्वमात्रं

---

॥ पुरुषार्थैकसिद्धत्वात् ॥

अत्र ऋद्धिकामाः सत्रमासीरन्निति वाक्ये यद्यपि कामपदे बहुत्वमुद्देश्यविशेषणत्वादविवक्षितमिति ऋद्धिकामिनः प्रधानभूतानुद्दिश्य विधीयमानं कर्म प्रतिप्रधानावृत्तिन्यायेनैकस्यैव फलं साधयिष्यति तथाप्याख्यातोपात्तकर्तृबहुत्वस्योपादेयत्वेन विवक्षितत्वात् सहितानां कर्मकर्तृत्वावगतौ व्यासज्यवृत्त्येव कर्तृत्वं सिद्ध्यति। अन्यथैकस्मिन् कर्मणि एकेन कृते अपरस्य कर्तृत्वायोगात् न बहूनां प्रत्येकं कर्तृत्वसम्भवः। अतः तस्य समुदायस्यैकस्य कर्तृत्वात् फलस्य च कर्तृगामित्वनियमात् समुदायनिष्ठमेकमेव कृत्स्नं फलमुत्पद्यते। तदन्तर्गतसमुदायिषु अकर्तृभूतेषु फलावयवमात्रम्। अत एव समुदायस्य कर्तृत्वात् समुदायान्तर्गते कस्मिंश्चिन्मध्ये मृते अन्योपादानेन सप्तदशानां समुदायसिद्धावपि पूर्वसमुदायापेक्षया अस्य समुदायस्य भिन्नत्वात् समुदायैककर्तृत्वानुरोधेनादितः पुनः कृत्स्नकर्मारम्भः सिद्ध्यति। एवं च सप्तदशानां व्यासज्यवृत्तिकर्तृत्वे पूर्वपक्षः सिद्ध्यति। यदा तु बहुवचनश्रवणात्तदुपात्तबहुत्वस्य कर्तृत्व एवान्वयात् सप्तदशयजमानवृत्तिकर्तृत्वा (न्वयेपि) न्यपि? सप्तदशैवेति प्रत्येकं कर्तृत्वात् फलमपि प्रत्येकमेव। अत एव समुदायिनां कर्तृत्वात् अन्तरा कस्मिंश्चिन्मृते अन्येषा-

**परं वाच्यं, न च तत्र प्रमाणमस्ति श्रुतऋद्धिकामादिशब्दानां फलमात्रप्रतिपादनपरत्वात्, ऋद्धिकामकर्तृनिष्ठफलभोगप्रतिपादके** कल्याधिकारविधावपि **ऋद्धिकामनाया व्यासज्यवृत्तित्वस्य बाधितत्वेन व्यासज्यवृत्तिकामनात्वरूपातिरिक्तधर्माङ्गीकारे प्रमाणाभावाच्च, प्रत्येकमेव ऋद्धिकामत्वावसायात् प्रत्येकमेव फलावगतिः। न हि तत्र बहुवचनान्तर्द्धिकामपदेन बहुत्वावच्छिन्नानामृद्धिकामत्वं प्रतिपाद्यते येन व्यासज्यवृत्तित्वावगतिर्भवेत्। अपितु ऋद्धिकामत्वावच्छिन्नानां बहुत्वं पशून् इत्यादिवत्। न च कर्तृत्वस्य व्यासक्तत्वात् फलवत्त्वस्यापूर्ववत्त्वस्य च व्यासक्तत्वम्। फलादौ कर्तृत्वसामानाधिकरण्यस्य** प्रत्येकवृत्तित्वेऽप्युपपन्नत्वेनैतादृशनियमे **प्रमाणाभावात्, अतश्च दम्पत्योर्व्यासज्यवृत्तिकर्तृत्वेऽपि अपूर्वं फलं च भिन्नमेव जन्यतावच्छेदकधर्मपर्याप्त्यधिकरणं वाच्यं, प्रकृते तु बहुवचनश्रवणेन** कर्तृत्वभेदस्यैवावगतेः **न फलवत्त्वादेः व्यासज्यवृत्तित्वकल्पनावसरः। न चैकप्रयोगादनेकफलानुत्पत्तिः। समवायसम्बन्धेनैव फलत्वावच्छिन्नं प्रति फलत्वेन प्रतिबन्धकत्वकल्पनादात्मान्तरे तदुत्पत्तौ बाधकाभावात्। न चैवमपि प्रत्येकवृत्तित्वापेक्षया फलवत्त्वादेः व्यासज्यवृत्तित्वकल्पने गौरवादेरभावान्नियामकाभावः।**

---

मविनष्टानां कर्तॄणां अवस्थितत्वात् सङ्ख्यापूरणमात्रार्थमन्यमानीय कृतान्तादेव प्रक्रमितव्यम्। एवं च प्रत्येककर्तृत्वपक्षे पूर्वपक्षो न सिद्ध्यतीत्यभिप्रेत्योभयाङ्गीकारेऽपि पूर्वपक्षसिद्ध्यनुकूलां युक्तिं दर्शयति—**एकसत्रप्रयोगादिति। कल्याधिकारविधाविति।** सप्तदश प्राजापत्यान् पशूनालभते इत्यत्र पशुत्वावच्छिन्नेषु बहुत्वान्वयात्, बहूनामेव पशूनां प्रत्येकं प्रजापतिदेवतासम्बन्धात् सप्तदशसङ्ख्यद्रव्यदेवतासम्बन्धात् सप्तदशयागा भवन्ति यथा, तद्वदिह ऋद्धिकामत्वावच्छिन्नानां बहुत्वान्वयात् प्रत्येवृत्तिऋद्धिकामत्वावच्छिन्नमात्रमुद्दिश्य सत्रस्योपायत्वेन विधानेऽपि तद्गतस्यैकशेषावगतसाहित्यस्याविवक्षणात् समुदायरूपेण व्यासज्यवृत्तिकर्तृत्वेऽपि प्रत्येकं शास्त्रायातं फलभोक्तृत्वं नापह्नोतुं शक्यत इति भावः। **प्रत्येकवृत्तित्वेऽपीति।** फलस्येति पूर्वशेषः। **एतादृशनियमे इति।** समवायसम्बन्धेन यत्र कर्तृत्वं तत्र तेन सम्बन्धेन फलमिति नियमेऽपि यत्र पर्याप्तिसम्बन्धेन कर्तृत्वं तत्र पर्याप्तिसम्बन्धेनैव फलमिति नियमे प्रमाणाभावेन प्रकृतेप्यकर्तृगामिफलं भवतीति भावः। **कर्तृत्वभेदस्यैवेति।** एवकारेण च कर्तृत्वस्य व्यासक्तस्यैकत्वेप्यादधीयातामितिवदधिष्ठानाभिप्रायं बहुवचनमिति निरस्तं वेदितव्यम्। कर्तृत्वेऽवगतस्य बहुत्वस्याधिष्ठानाभिप्रायत्वकल्पने लक्षणापत्तेरिति। न चैकस्य प्रत्येककर्तृत्वे बहुकर्तृत्वविरोधः, भवता मया सह यष्टव्यमित्यादिसंवादेनैकैकस्यापि स्वतन्त्रस्येतरस्वतन्त्रकर्तॄणां

जन्यतावच्छेदकऋद्धित्वादेः व्यासज्यवृत्तित्वकल्पने तत्पर्याप्त्यधिकरणतावच्छेदकस्य सत्रे यावत्कर्तृनिष्ठतज्जन्यफलकूटत्वादेः कल्पनीयत्वेन गौरवापत्तेः। तद्वरं सत्रजन्यफलत्वादेरेव तत्त्वकल्पनायां लाघवात् प्रत्येकमेव फलम्। प्रयोजनं सङ्कल्पे तादृशानुसन्धानम्॥ १॥

---

(२)—प्रयोगे पुरुषश्रुतेः यथाकामी प्रयोगे स्यात्॥ ३॥ प्रत्यर्थं श्रुतिभाव इति चेत्॥ ४॥ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात्॥ ५॥ अपि वा कामसंयोगे सम्बन्धात्प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणवत्॥ ६॥ अन्यस्य स्यादिति चेत्॥ ७॥ अन्यार्थेनाभिसम्बन्धः॥ ८॥ फलकामो निमित्तमिति चेत्॥ ९॥ न नित्यत्वात्॥ १०॥ कर्म तथेति चेत्॥ ११॥ न समवायात्॥ १२॥

---

साहाय्येन बहुकर्तृत्वाविरोधात्। नापि प्रत्येककर्तृत्वे एकेन कृतेऽपरस्य कर्तृत्वायोगाद्विरोधाशङ्का; पर्यायेण कर्तृत्वे विरोधेपि युगपत् सर्वेषां कर्तृत्वे तदप्रसक्तेः। सम्भवति च द्रव्यस्य साधारण्यात् देवतोद्देशेन द्रव्यत्यागरूपस्य व्यापारस्यैकैककर्तृत्वं साधारणस्य द्रव्यस्य प्रत्येकं सङ्कल्पितस्य साधारणेनैवाध्वर्युणा आहवनीये प्रक्षेपात्। अत एकस्मिन्नेव प्रयोगे सर्वेषामेव कर्तृत्वोपपत्तेः न प्रयोगभेदप्रसक्तिरिति। **तत्पर्याप्त्यधिकरणेति**। तच्छब्देन फलत्वमुच्यते। **तत्वकल्पनायां** पर्याप्त्यधिकरणतावच्छेदकत्वकल्पनायामित्यर्थः। ननु सत्रकर्तृषु फलावयवोऽथवा कृत्स्नं फलं प्रत्येकमिति विचारस्य प्रयोगगतानुष्ठानविशेषकरत्वाभावात् व्यर्थं करणमित्याशङ्कां परिहरन् प्रयोजनमाह—**प्रयोजनमिति**। ऋद्धिकामास्संभूय सत्रेण यक्ष्यामहे इत्येवं वाचिककायिकानुष्ठानाविशेषे सत्यपि मानसमनुसन्धानं पूर्वपक्षे ऋद्ध्यवयवविषयं सदधिकारिविशेषणं भवति सिद्धान्ते तु प्रत्येकं कृत्स्नविषयं सत् तद्विशेषणं इत्यनुसन्धानतारतम्यविचारद्वारा ऋद्धिकामाधिकारविचार एवायमिति न लक्षणासंङ्गतिरित्यर्थः॥

'स्वर्गकामो यजेत' इत्याद्येकवचनश्रवणे मूले तावदेकत्वमविवक्षितं स्वर्गकामपदस्य स्वर्गमात्रपरत्वात्। अधिकारिपरत्वेऽपि वा तस्योद्देश्यत्वेन तद्विशेषणस्याविवक्षितत्वात्। अतश्च तत्सामानाधिकरण्यादाख्यातेऽपि तदविवक्षितम्। किञ्चाख्यातस्य प्राप्तिमात्रमर्थः। ततश्च यागेन स्वर्गं पुरुषः प्राप्नुयादित्यर्थः। तेन तत्रापि तस्योद्देश्यत्वाद्विशेषणस्या-

---

## ॥ प्रयोगे पुरुषश्रुतेः ॥

स्वर्गकामो यजेतेति वाक्ये स्वर्गकामपदोत्तरप्रथमोपात्तमेकत्वमेकं अपरं च यजेतेत्याख्यातोपात्तं तत्राद्यं तावत् स्वर्गकामाधिकरणदर्शितरीत्याऽविवक्षितमित्याह — स्वर्गकामपदस्येति। स्वमते स्वर्गकामपदस्य लक्षणयाऽपेक्षितस्वर्गमात्रपरत्वस्य तदुत्तरप्रथमायाश्चोद्देश्यपरत्वस्य पूर्वं साधितत्वात् न तस्याधिकारिपरत्वमिति तद्बलान्नाधिकार्यैकत्वसिद्धिरित्यर्थः। प्राचां मते यद्यपि यः स्वर्गेणाहं प्राप्तः स्यामिति कामयते तस्यैव स्वर्गपदेनाभिधानमित्यधिकारिपरत्वात्तद्गतमेकत्वं प्रतीयते तथापि न तन्नियामकमित्याह — अधिकारिपरत्वेपि वेति। तस्योद्देश्यत्वेनेति। स्वर्गेणाहं प्राप्तः स्यामिति यः कामयेत तस्यैव स्वर्गकामपदेनाभिधानात् व्याप्यमानत्वेन च स्वर्गतत्सन्धाने प्रति प्राधान्यात् स्वर्गकामो यःस यजेतेत्येवंरूपेणाधिकारिण उद्देश्यत्वेन तद्विशेषणमेकत्वं अविवक्षितमिति नाधिकार्यैकत्वसिद्धिस्तद्बलादपीत्यर्थः। यतः स्वर्गकामस्योद्देश्यत्वेनाविवक्षितमेकत्वमत एवाख्यातेऽपि तदविवक्षितमिति नाधिकार इत्याह — अतश्चेति। यद्याख्यातमेकत्वविशिष्टं गुणभूतं कर्तारमभिदध्यात् स्वर्गकामपदं च प्रधानभूतं स्वर्गकाममात्रं तदा भिन्नार्थतया सामानाधिकरण्यानुपपत्तिः। अतो निश्चितार्थकस्वर्गकामपदसामानाधिकरण्यात् सन्दिग्धमाख्यातमपि प्रधानभूतमविवक्षितैकत्वमेव पुरुषं वदतीति तत्राप्यविवक्षिमेकत्वमित्यर्थः। अपि च सर्वः फलेनाहं व्याप्येयमित्येवमर्थं यतते न तु फलं वा यागो वा आत्मानं लभतामिति कश्चिदपि प्रेक्षापूर्वकारी प्रवर्तते, तेन यदि यागे फले वा गुणभूतः कर्ता नियुज्येत नियुक्तोऽपि न कुर्यात्तत्र स्वार्थाभावात्तत्र वचनानर्थक्यापत्तेराख्यातस्य प्राप्तिरेवार्थः। तस्यां प्राप्तौ पुरुषः प्रधानमित्यविवक्षितमेकत्वमित्याह — किञ्चेति। ननु स्वर्गकामशब्दः स्वर्गप्राप्त्यभिधायकः उताख्यातः नाद्यः, स्वर्गार्थिमात्रस्य तैरभिधानात्। नान्त्यः, तस्य यत्नवाचित्वात्[1]। अथ प्राप्तेरर्थात् स्वर्गकामादिपदैः प्रतीयमानाया अप्यशास्त्रार्थत्वात्तां प्रति प्राधान्येऽपि आख्यातोपात्तक्रियां प्रति निर्वर्तकत्वेनापेक्षितस्याख्यातोपात्तस्य कर्तुरेकत्वपरिच्छिन्नस्य यद्गुणत्वं तदेव शास्त्रार्थत्वेन विवक्षितमिति न पूर्वपक्षः सिद्ध्येत् इत्याशङ्कां परिहरन् यत्नवाचित्वेप्याख्यातस्य

---

1. A. फलवाचित्वे

विवक्षा। अस्तु वा करोतिना विवरणाल्लिङः प्रवर्तनाभिधायित्वाच्चाख्यातस्य प्रवृत्तिरेवार्थः। तथाऽपि फलोद्देश्यकायास्तस्या लोकत एव [illegible] यागमात्रविधानेन तस्या अनुवाद्यत्वात्तद्विशेषणस्य तत्कर्तृविशेषणस्यैकत्वस्याविवक्षेति एको द्वौ बहवः कर्तार इति पूर्वः

---

पूर्वपक्षसिद्धिं दर्शयति—अस्तु वेति। प्रवर्तनाभिधायित्वाच्चेति— लिङा हि प्रवृत्त्यनुकूलव्यापाररूपा प्रवर्तनोच्यते न तु प्राप्त्यनुकूलस्स इति प्रवृत्तेरेवाख्यातार्थत्वमित्यर्थः।

अत्र चाद्याधिकरणे प्राचीनैः स्वर्गकामादिवाक्येषु द्वेधा वाक्यार्थवर्णनेन सिद्धान्तितं—यः स्वर्गकामः स्वर्गविषयव्यापारवान् भवत्येवेति लोकसिद्धैवात्र स्वर्गकामनिष्ठा भावना प्रत्ययेनानूद्यते तां चानूद्य प्रकृत्यर्थो यागः करणतया विधीयत इति। योऽस्य स्वर्गकामस्य व्यापारः स यागकरणकः स्यादिति। अथवा उपेयोपाययोरविनाभावादुपेयकामपरेणस्वर्गकामपदेन शक्यत एवोपायो लक्षयितुमिति यः स्वर्गोपायकामः स यजेतेत्यनेन स्वर्गोपायकामनिष्ठमनुष्ठानं सामान्येनानूद्य तस्योपायविशेषत्वेन यागो विधीयत इति। उभयथापि भावनाया अनुवाद्यत्वमङ्गीकृतं भवति। "न हि यो यत्कामयते तस्य तत्कर्तव्यतोपदेष्टव्या वेदैवासौ मयैतत्कर्तव्यमिति उपायं तु न वेद" इति यथाश्रुतभाष्यस्य

साध्यांशे पुरुषाणां च प्रत्ययो न नियोजकः।
"स्वयमेव हि जानन्ति कर्तव्यं पुरुषास्सदा॥

इति तद्वार्तिकस्याग्रिमाधिकरणस्थस्य स्वारस्यमपि लभ्यते। तस्मिंश्च सिद्धान्ते प्रस्तुताधिकरणसिद्धान्तासिद्धिरेवेति निदर्शयितुं प्रथमाधिकरणदर्शितप्राचीनसिद्धान्तसाहाय्येन प्रस्तुताधिकरणपूर्वपक्षमाह। यद्यपि तदनुवाद्यत्वेपि नाविवक्षा युक्ता। तथापि विध्यन्वयाभावात्। सा न युक्ता।

तथाहि, ग्रहमित्यादावपि एकत्वं यदि ग्रहपरिच्छेदद्वारा क्रियान्वयि भवेत् तदा क्रियाया विशिष्टाया विधेयत्वात् क्रियाविशेषणीभूतद्रव्यपरिच्छेदकाकाङ्क्षया अन्वितस्यैकत्वस्यातिक्रमे विध्यर्थो नानुष्ठितो भवेदित्येकस्यैव ग्रहस्य सम्मार्गापत्तिः। न चात्र क्रियायाः स्वविशेषणीभूतग्रहविशेषद्रव्यपरिच्छेदाकाङ्क्षाऽस्ति। सम्मार्गक्रियां प्रति ग्रहाणां प्राधान्येन प्रतिप्राधानावृत्तिन्यायेन समुच्चयेनैव ग्रहाणां परिच्छिन्नत्वेन परिच्छिन्नेषु परिच्छेदकान्तराकाङ्क्षाऽभावात्। अथैकत्वस्य साक्षात् क्रियान्वयाभावेपि प्रातिपदिकार्थेऽन्वयाङ्गीकारादेकत्वविशिष्ट-

**पक्षः कृतः।** तत्फलोद्देश्यकस्य **विजातीयस्य पुरुषप्रयत्नस्याप्राप्तत्वेन विधेयत्वेन** तत्र तत्र

---

ग्रहस्य कर्मत्वे तस्य च सम्मार्गभावनायामिति परम्परया क्रियासम्बन्धो वाच्यः। सोऽपि न सम्भवति समानाभिधानश्रुत्या एकत्वस्य कर्मत्व एवान्वयेन प्रातिपदिकार्थे तदसम्भवात्। अतः साक्षात् क्रियान्वयद्वारा वा विध्यन्वयासम्भवात् अविवक्षितमेकत्वं पशुना यजेतेत्यादौ द्रव्यस्य क्रियां प्रति गुणत्वात् कियता द्रव्येण यागः सम्पादनीय इति द्रव्यपरिच्छेदकाकाङ्क्षया एकत्वस्य क्रियान्वयात् तद्वारा सम्भवति विध्यन्वयः इति तस्य विवक्षा। प्रकृतेपि भावनानुवादे सति यागमात्रस्यैव विध्यन्वयात् यथाप्राप्तानुवादे चैकत्वादेः परिच्छेदकत्वेनान्वयानपेक्षणात् सकलभावनानामेवानुवाद्यत्वप्रतीतेः एकत्वं साधुत्वमात्रार्थं सदविवक्षितमेव। अत एवानुवाद्यविशेषणत्वेऽवि भावनामात्रस्यानुवाद्यत्वासंभवात् हविरार्तिन्यायेन विनैव लक्षणां विशिष्टानुवादसंभवात् स्वर्गकामकर्तृत्वं नाविवक्षितम्। तदभावे अनुवादपर्यवसानाभावात्, अतश्च यथैवैकस्वर्गकामकर्तृनिष्ठभावनाकरणत्वेन यागविधानं तथैवानेकस्वर्गकामकर्तृनिष्ठभावनाकरणत्वेनापि सम्भवत्येव तद्विधानम्मिति भावः। तमिमं पूर्वपक्षं प्रथमाधिकरणदर्शितवाक्यार्थदूषणव्याजेनातिफल्गुतया दर्शयितुं भावनाविधानमेवात्र न तु तदनूद्य यागमात्रविधानमित्युपपादयति—**फलोद्देश्यकस्येति**। स्वर्गकामवाक्ये हि स्वरसतः एव यजेतेत्यनेन यागादिविशिष्टभावनाविधिरेव प्रतीयते यःस्वर्गो मे स्यादित्येवं कामयेत स तेन यागेन भावयेदिति। न ह्यवश्यमर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता, येन तद्बलात्तत उत्तार्य विधिः यागाद्यनुरागमात्रपरत्वेनैव व्यवस्थाप्येत। वचनात् प्राक् प्रवृत्तेः फलसाधनत्वाज्ञानात्। स्वर्गार्थिनः प्रवृत्त्यप्रवृत्त्योरौदासीन्येनावस्थानेपि नियमेन प्रवृत्त्यसम्भवात्। यदा तु वचनेन यागादिविशिष्टव्यापारविधानं क्रियते तदा तस्य व्यापारस्येप्सितोपायतां विधिप्रामाण्यादवगम्य तत्र नियमेन प्रवर्तते। तथा च विजातीयपुरुषप्रयत्नरूपाया भावनाया अप्राप्ताया एवात्र विशेषणविशिष्टाया विधानात् तद्विशेषणीभूतकर्त्रैकत्व विवक्षितमित्यर्थः। **तत्र तत्रेति**। वारवन्तीयाधिकरणे "एतस्यैव रेवतीषु वारवन्तीयं साम कृत्वा पशुकामो यजेत" इति वाक्ये प्राप्तकर्मानुवादेनानेकगुणविधानापत्तेर्वाक्यभेदप्रसङ्गाद्विशिष्टभावनाविधानमङ्गीकृतं सिद्धान्ते।

यदि च सिद्धान्तेपि पशुकामव्यापारास्यानेन न्यायेनानुवाद्यत्वं ततः प्राप्तभावनानुवादेनानेकगुणविधानाद्वाक्यभेदः समान एवाद्येत। अत एतादृशतत्तदधिकरणसिद्धान्तसमर्थनाय तत्र तत्र भावनाविधानं सर्वत्र प्रथमत आवश्यकमिति स्थापितम्। तदा च श्रुतवाक्येन विशिष्टरूपाया एकस्या एव भावनाया विधानात् कल्पितविधिभिर्विशेषणांशे प्रत्येकं विधानेपि न श्रुतवाक्ये विध्यावृत्तिलक्षणो वाक्यभेदः प्रसज्यते। न ह्येतादृशे विषये भावनानुवादेऽपि

तत्तद्गुणविशिष्टधात्वर्थमात्रविधानेनैव वाक्यभेदः सुपरिहरः। धात्वर्थस्य कारकरूपत्वेन कारकाणां परस्परमन्वयाभावेन कारकरूपगुणानां धात्वर्थे वैशिष्ट्यासम्भवात्। अत एव धात्वर्थरूपकरणावरुद्धायां भावनायां सोमादिगुणानां करणत्वेन साक्षादन्वयासम्भवात् धात्वर्थस्य कारकत्वेन भावनात उत्तार्य धात्वर्थेपि तेन रूपेणान्वयानुपपत्तेरवश्यं यागवृत्त्येव करणत्वमभेदेन तृतीयान्तसोमादिपदैरभिधेयमिति सोमादिपदेषु मत्वर्थलक्षणया यागे वृत्तिमङ्गीकृत्य यागवृत्ति-करणत्वेनैव भावनान्वयो न तु पार्थक्येन करणत्वेनेत्युक्तं उद्भिदधिकरणे।

यद्यप्यस्मिन्नधिकरणे शास्त्रदीपिकायां न च यागविशेषणत्वं गुणानां, येन तस्यैकस्य विशिष्टस्य विधानाद्वाक्यभेदः परिह्रियेत। सर्वेषां भावनागामित्वात् यथोक्तं धात्वर्थकारकाणां अरुणैकहायन्यादिवत् परस्परेणासम्बन्ध्य भावनासम्बद्धानां परस्परोपकारित्वमिति सप्तमनवमाद्य-योर्वक्ष्यतीत्युक्तम्। तेन च गुणानां न प्रथमतो धात्वर्थान्वयः, किन्तु प्रथमतो भावनाया-मेवान्वयः। पश्चादेव तु परस्परमन्वय इति प्रतीयते। उद्भिदधिकरणे मत्वर्थलक्षणोप-पादने तु सोमवता यागेनेति विवरणात् सोमादीनां प्राथमिक एव यागे अन्वय उपपादितो भवतीति पूर्वापरग्रन्थयोर्विरुद्धमिव प्रतीयते।

तथापि करणत्वेन रूपेण सोमादीनां धात्वर्थेऽन्वयस्येव यागरूपकरणावरुद्धभावनाया-मन्वयस्याप्यसम्भवे भावनान्वयसिद्ध्यर्थमेव सोमादिपदे मत्वर्थलक्षणाश्रयणं इत्येव तात्पर्यम्। न तु कारकरूपेण यागेऽन्वये तदिति न कश्चिद्विरोधः। तथाच लक्षणया सोमपदेन सोमवतोऽभिधानात् नीलघटमित्यादिवत् सोमपदोत्तरविभक्तेरभेदार्थत्वं साधुत्वमात्रार्थत्वं यागगत-करणत्वानुवादकत्वं वाङ्गीकृत्य अभेदेन सोमपदार्थस्य यागे तस्य करणत्वेन भावनायामित्यन्वयान्न प्रथमः सोमपदार्थस्य करणत्वेन यागेऽन्वयाङ्गीकारः। किन्तु यागवृत्तिकरणत्वरूपेण भावनाया-मेव पश्चात्तु सोमवत्वं यागे केन रूपेणेत्यपेक्षायां कल्प्यमानेन सोमेन यागं कुर्यादिति विशेषण-विधिना सोमस्य यागकरणतारूपत्वावगतिः। एवं च यत्र यत्रारुणाधिकरणादौ एतादृशे विषये आरुण्यादीनां साक्षादन्वयोपपादनं प्राचां ग्रन्थेषु न तन्मत्वर्थलक्षणामनाश्रित्य। किं तु सोमादिसमानन्यायात् तामाश्रित्यैव तत्र तत्र मत्वर्थलक्षणानुपपादनं चैकत्र दर्शितस्य सर्वत्र सुधीभिः सञ्चारयितुं शक्यत्वात् लाघवानुग्रहमालादेवेति द्रष्टव्यम्। परं तु सोमादिवाक्येषु मत्वर्थलक्षणायाः सोमवैशिष्ट्यस्य यागे इव वारवन्तीयादिवाक्येष्वपि मत्वर्थलक्षणया रेवतीवार-वन्तीयवैशिष्ट्यस्यापि यागे सम्भवात् भावनानुवादेपि विशिष्टयागविधाने वाक्यभेदपरिहारोपपत्ते-स्तादृशे विषये केवलभावनान्वयं गुणानामङ्गीकृत्य यागान्वयासम्भवोक्तिपुरस्सरं वाक्यभेदोपपादन-

**स्थापितत्वात् तद्विशेषणस्य कर्त्रैकत्वस्य विवक्षोपपत्तेस्स्वर्ग**कामपदे **तदविवक्षायामपि तत्सामानाधिकरण्ये बाधकाभावादुपेक्षितम् ॥**

**अन्यथा पूर्वपक्षः रच्यते—आख्यातोपात्तैकत्वस्य विवक्षायामप्यनेकेषां कर्तृत्वं, तद्धि कर्तृत्वे अन्वेति न तु तदाश्रये। अन्यथा दम्पत्योर्व्यासज्यवृत्तिकर्तृत्वानुपपत्तेः। अतश्च तदाश्रयाणामनेकत्वस्य पत्नीरादायावश्यकत्वे पुरुषानादाय तत्करणे बाधकाभावादनेकेषामपि कर्तृत्वमिति प्राप्ते—**

**असति विशेषग्राहकप्रमाणे तदाश्रयस्यापि प्रथमातिक्रमे कारणाभावादेकस्यैव प्रतीतिरानुभाविकी। अत एव सन्ध्यावन्दनश्राद्धादावेकस्यैवाधिकारः। तत्र 'धर्मे च' इत्यादिवाक्यस्य प्रमाणान्तरसिद्धपत्न्यधिकारककर्ममात्रविषयत्वे** पत्न्या अपि ग्रहणे **प्रमाणाभावे पुरुषान्तरस्याप्रसक्तेः। यत्र तु पत्नीग्राहकप्रमाणसद्भावस्तत्र सत्यपि तासां**

---

मत्वत्यं तदनुगुणप्राचीनसम्मतिप्रदर्शनं च सर्वथा मत्वर्थलक्षणोपपादनेन विरुद्धं दुष्परिहरमेव। एतदभिप्रायेणैव **पूज्यपादैः** उद्भिदधिकरणे सोमस्य करणत्वेनैव भावनायामेवान्वयस्तत्र तत्र वक्ष्यते, उक्तश्चेत्युक्त्वा दूषिता मत्वर्थलक्षणा। तस्मात् गुणानां धात्वर्थस्य च क्रियान्वयद्वारा विध्यन्वयसिद्ध्यर्थमवश्यं सर्वत्र भावनाविधानं स्थापितमिति प्रथमाधिकरणे यद्भावनाप्राप्तिमादायानुवाद्यत्वमुक्तं प्राचां ग्रन्थेषु तदेकदेशिमताभिप्रायेणेति स्पष्टमेव **शास्त्रदीपिकायां** सूचितमिति भावः। स्वर्गकामपदसामानाधिकरण्यानुपपत्तिं पूर्वपक्षोक्तां परिहरति—**स्वर्गकामपदेनेति।** **यद्यपि** स्वर्गकामपदेन स्वर्गकामस्योद्देश्यत्वेनाविवक्षितलिङ्गसङ्ख्यत्वेन स्वर्गकाममात्रमुच्यते **तथा**प्याख्यातोपात्तकर्तृत्वाश्रयस्वर्गकामाश्रययोरेकार्थत्वादेकार्थप्रतिपादकत्वमस्त्येव। तत्राख्यातोपात्तैकत्वसङ्ख्याया उपादेयगतत्वेन विवक्षितत्वाद्व्यासज्यवृत्तिकर्तृत्ववृत्तित्वेन श्रुतापि सङ्ख्या ययोरेव व्यसज्यवृत्तिकर्तृत्वं तयोरेवाधिकारमर्थात् परिच्छिनत्तीति यः स्वर्गकामः स एव कर्तृत्वाश्रयः सन्नात्मार्थं फलं यागेन कुर्यादिति वाक्यार्थपर्यवसानाद्व्यासज्यवृत्त्येकर्तृत्वाश्रययोरेवाधिकारः सिद्ध्यति न बहूनां द्वयोर्वाऽधिकार इति सिद्धान्तस्य सयुक्तिकत्वेन केनापि प्रकारेण पूर्वपक्षानुत्थानात् प्राचां पूर्वपक्षकरणं न युक्तिसहमित्यन्यथा पूर्वपक्ष उच्यत इति भावः। **पत्न्या अपि ग्रहणे इति।** यथाच श्राद्धादिसर्वकर्मसाधारण्येन पत्न्या न सहाधिकारः तथोप-

कर्तृत्वाधिष्ठानत्वे पुरुषस्यैकस्यैव तत्, प्रथमातिक्रमे कारणाभावात्, 'स्वर्गकामो यजेत, यजमानः केशश्मश्रु वपते, मेखलया यजमानम्' इत्यादौ विना कारणं स्रुगुपादैकत्वस्य पाक्षिकानुवादत्वानुपपत्तेश्च। अतः पुरुष एक एवाधिकारी ॥ २ ॥

---

(३)—प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ १३ ॥ फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते ॥ १४ ॥ नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् ॥ १५ ॥

**काम्यं कर्म कामनायां प्रक्रान्तं** वीतायां फलेच्छायामवाप्ते **वा फले** प्रयोजकाभावात् **न समापनीयमिति प्राप्ते**—

---

पादितमधस्तादिति नात्रोपपाद्यते। **पुरुषस्यैकस्यैवेति**। पत्नीसहितस्यापि एकस्यैव पुरुषस्येत्यर्थः। एवमन्तेऽपि पुरुष एक एवाधिकारीत्यत्रापि पत्नीसहितोऽप्येक एवेत्यर्थो द्रष्टव्यः।

---

**प्रक्रमात्तु नियम्येत**

ननु स्मृतीनामाचाराणां च प्रामाण्यस्य प्रतिपादितत्वात् सिद्धान्ते शिष्टविगर्हणाभयादेव समापनप्रसाधनात् पुनरुक्तमिदमधिकरणमित्याशङ्कायां परिहृतं **तन्त्ररत्ने**—मिथ्यासङ्कल्पदोषं मन्वाना हि विगर्हन्ते। न च परमार्थतो मिथ्यासङ्कल्पदोषोऽत्रास्ति। शास्त्रार्थो ह्यनुष्ठातुं सङ्कल्पितः। न चारब्धस्य समापनं शास्त्रार्थः। तस्मान्निर्मूलमिदं गर्हणं अनादरणीयम्। अतो नावश्यं प्रक्रान्तं काम्यं समापनीयमिति केषाञ्चित् भ्रान्तिः स्यात् तन्निराकरणायेदमारभ्यत इति। **वीतायां फलेच्छायामिति**। अत्र वीतायां फलेच्छायामिति ऐहिकामुष्मिकफलककर्मसाधारणमेव। अवाप्ते वा फले इति तु ऐहिकफलककर्मविषयमिति विवेकः। **प्रयोजकाभावादिति**। अनेन च भाष्योपपादितं सिद्धान्त्येकदेशिमतं निरस्तं वेदितव्यम्। इत्थं हि तन्मतं-प्रजाकामो यजेतेत्यादिवाक्येषु वाक्यगत्या फलकर्तव्यताबाधेन पदश्रुत्या यागस्य कर्तव्यतावगमात् तद्बलेन कामपदं तावन्निमित्तपरं; निमित्ते चोत्पन्ने विनष्टेऽपि नैमित्तिकं कार्यं गृहदाहादिवत्। तत्र नारम्भमात्रं नैमित्तिकं, उपक्रमप्रभृत्यपवर्गपर्यन्तस्य क्रियानिचयस्याख्यातार्थतया लोकव्युत्पत्तेः। तत्रापि समाप्त्या एकस्या एव विधेयत्वे आरम्भमध्ययोरर्थप्राप्त-

सत्यं नास्ति फलरूपं प्रयोजकं तस्येच्छाविषयत्वेन प्रयोजकत्वात्। तथाऽपि प्रारम्भ एव प्रयोगसमाप्तेर्निमित्तम्। न च तत्र प्रमाणाभावः। शिष्टविगर्हणस्यैव प्रमाणत्वात्। शिष्टा हि प्रारब्धापरिसमापने प्राक्रमिकोऽयमिति विगर्हन्ते। तेन शिष्टाचारमूलभूतश्रुतौ प्रारम्भे निमित्ते प्रयोगसमाप्तेर्नैमित्तिकत्वेन विधानात्तस्या आवश्यकत्वम्। न च वस्तुतश्शास्त्रेण कामनाया एव प्रयोजकत्वावगमादाचारस्यास्य भ्रान्तिमूलकत्वमिति वाच्यम्। सर्वेषां शिष्टानां भ्रान्तिकल्पने प्रमाणाभावात्, 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत' इति प्रत्यक्षश्रुत्यैवाकरणे निन्दाप्रायश्चित्तयोर्विधानात्, प्रारम्भे निमित्ते प्रयोगसमाप्तेरावश्यकत्वावगमाच्च। अतः प्रयोजकान्तराभावेऽपि निमित्तवशात्समापनीयमेव। समापिते च तस्मिन् कारणसत्त्वात्फलमपि भवत्येव। एकफलप्राप्तावपि फलान्तरोपपत्तेः। न च कामनारूपाङ्गाभावाद्वैगुण्याशङ्का। तस्याः प्रवृत्तित्वावच्छिन्नं प्रति कारणत्वमात्रत्वेनाङ्गत्वे प्रमाणाभावात्प्रवृत्तिपूर्वक्षणे तस्यास्सत्त्वाच्च। अन्यथा समापनोत्तरमिच्छाऽपगमेऽपि फलानुत्पत्तिप्रसङ्गात् ॥ ३ ॥

---

त्वेनानुवादसम्भवाल्लाघवेन समाप्तिरेव फलकामे निमित्ते विधीयते। तस्मात् समाप्तेः शास्त्रार्थत्वाद्वीतायामपि फलेच्छायां अवाप्ते वा फले समापनीयमेवेति—तदयुक्तम्। फलोद्देशेन यागस्य साधनत्वेनैव विधानेन फलकामनाया निमित्तत्वाभावात् ॥ कामपदस्य विध्यपेक्षितफलपरत्वे सम्भवति अनपेक्षितनिमित्तपरत्वस्यान्याय्यत्वात्। अतः फलस्य निमित्तत्वेन प्रयोजकत्वासम्भवादिच्छाविषयत्वेनैवोपायानुष्ठानप्रयोजकत्वं वाच्यम्। न च फलप्राप्तौ फलेच्छाभावे इच्छाविषयत्वेन प्रयोजकत्वं सम्भवतीति प्रयोजकाभावान्न तदुत्तरमुपायानुष्ठानम्। न वा आरम्भस्य समाप्तिं प्रति निमित्तत्वं केन चिदवगतं, येन निमित्तरूपारम्भसत्वे नैमित्तिकसमाप्तिरिष्येत। अतो नारब्धमवश्यं समापनीयमिति पूर्वपक्षः। सिद्धान्तमाह—**सत्यमिति। शिष्टाचारमूलभूतश्रुताविति।** शिष्टाचारमूलभूतस्मृतेः मूलभूतायां श्रुताविर्थः। **आवृश्च्यते**—द्रुह्यतीत्यर्थः ॥ अत्र शिष्टविगर्हणादोषभयादारम्भनिमित्तेऽवश्यं काम्यमुपक्रान्तं समापनीयमित्येतावतैवाधिकरणसमाप्तिः प्राचां ग्रन्थेषु कृता तत्र विशेषमाह—**समापिते च तस्मिन्निति।** अत्रेदमवधेयम्—योगसिद्ध्यधिकरणे हि "एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ" इति सर्वफलार्थं विहिताज्ज्योतिष्टोमादेः एकफलकामनया अनुष्ठितात् फलान्तरस्याप्यकामितस्योत्पत्तिमाशङ्क्य एकैकस्मै इत्याद्यर्थवादे कामपदश्रवणात् प्रवृत्तिप्रयोजककामनाविषयत्वमेव सर्वेभ्य इति सर्वनाम्ना परामृश्यते। न तु पुरुष-

पशुत्वादि। अतश्च तदेवोद्देश्यतावच्छेदकं कार्यतावच्छेदकं चेत्येकरूपावच्छिन्नोत्पत्तौ तदवच्छिन्नान्तरानुत्पत्तिवदेककार्यतावच्छेदकावच्छिन्नसत्वे तत्कार्यतावच्छेदकावच्छिन्नान्तरस्यानुत्पत्तेः तदवच्छिन्नं स्वर्गपापक्षयादिप्रवृत्तिप्रयोजककामनाविषयत्वावच्छिन्नं चैकं पुत्रपश्वादि एकप्रयोगाज्जायत एवेति पुत्रार्थकृताज्ज्योतिष्टोमादेः स्वर्गपापक्षयाद्युत्पत्तावपि न पश्वादिफलान्तरोत्पत्तिरिति सिद्धान्तितं चतुर्थे। अस्मिंश्च स्त्रोपपादिते सिद्धान्ते यथैव पुत्रार्थं कृताज्ज्योतिष्टोमादेः भिन्नकार्यतावच्छेदकावच्छिन्नस्वर्गादेरुत्पत्तिस्तथैव पापक्षयार्थं कृतादपि तस्मात् स्वर्गादेरकामितस्योत्पत्तिरापद्येतेति काम्यस्थलेऽकामितफलोत्पत्तिर्नास्ति किन्तु कामितमेव फलं भवति नित्यस्थले च पापक्षयमात्रमेव न तु स्वर्गादीति मीमांसकसिद्धान्तानुपपत्तिं प्राप्तां परिहर्तुं फलैकत्ववादे स्वकृते पूज्यपादैरेवं वर्णितम्।

यत्कर्मजन्यानि फलानि स्वर्गकामो यजेत पुत्रकामो यजेतेत्यादिना कामनाविषयत्वेन श्रुतानि तेषां तत्कामनाघटितसङ्कल्पपूर्वकतत्कर्मकरणादेवोत्पत्तिः। षोडशिग्रहणजन्यापूर्वस्य फलजननपर्यन्तस्थायित्ववच्च तत्तत्सङ्कल्पजन्यापूर्वस्य तत्तत्फलोत्पत्तिपर्यन्तस्थायित्वेपि न क्षतिः। अत एव येषां न कामनाविषयत्वेन श्रवणं—यथा नित्यनैमित्तिकस्थले धर्मेण पापमपनुदतीत्यादौ पापक्षयादेः, प्रस्तरप्रहरणादौ चायुरादेः, प्रयाजादौ च क्रतूपकारादेः, तत्र तादृशसङ्कल्पाभावेऽपि करणमात्रादेव तदुत्पत्तिः। अत एव नित्यनैमित्तिकस्थले अकरणे प्रत्यवायभिया कर्मकरणेऽपि अकामितपापक्षयोत्पत्तिः पुत्रगतपूतत्वाद्युत्पत्तिश्च सर्वसम्मता। क्रत्वर्थतयैव च कृतेन प्रस्तरप्रहरणेनाकामितस्याप्यायुरादेः। यद्यप्यायुराशास्ते इति मन्त्रे तस्यापि कामनाविषयत्वं श्रुतं तथापि तत्कल्प्यविधौ लाघवेन जन्यत्वमात्रस्यैव कल्पनात् तस्याकामितस्योत्पत्तिः। पशुयागोद्देशेन च कृतेन प्रयाजादिना पशुपुरोडाशोपकारसिद्धिरकामितापि। एवं कर्मणा पितृलोक इत्यस्यापि साध्यसाधनभावविधायकत्ववादिमते कामनाविषयत्वान्नित्यनैमित्तिककर्मभ्योऽपि अकामितपितृलोकोत्पत्तिः बहुसम्मता।

तत्र चाकरणे प्रत्यवाय इति भियैव प्रवृत्तेस्तदपूर्वस्य ज्ञानैकनाश्यत्वापत्त्या पापक्षयोत्तरमपि पितृलोकाद्यानुषङ्गिकफलोत्पत्तिस्तत्त्वविवेकाद्युक्तापि सङ्गच्छते। अत एवमादीनामकामितानां उत्पत्तावपि कामनाविषयत्वेन श्रुतानां स्वर्गादीनां सङ्कल्पवेलायां कामनासत्व एवोत्पत्तिः। न चैतादृशनियमे प्रमाणाभावः, पुत्रकामो यजेत स्वर्गकामो यजेतेत्यादौ कामपदश्रवणवैयर्थ्यापत्तेरेव तत्र प्रमाणत्वात्। धर्मेण पापमपनुदतीतिवत् पुत्रायेत्यादेरेव श्रवणापत्तेः। अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति

तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते । तदेष श्लोको भवति तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमान" इति बृहदारण्यकश्रुतेरेव तत्र प्रमाणत्वाच्च ।

व्याख्याता चेयमाचार्यैः—क्रतुरध्यवसायापरपर्यायः सङ्कल्पः **तत्कर्म** तत्कामनाविषयोपायभूतं, **तदभिसम्पद्यते** तत्तु कामनाविषयीभूतत्वेन श्रुतं फलं प्राप्नोति, तदेव कामितमेव नान्यत्, एवकारेण सजातीयस्यैव व्यावृतेः कामनाविषयत्वेन श्रुतस्यैवात्र निवृत्तिः न त्वानुषङ्गिकत्वेन श्रुतस्यापि **सक्तः** आसक्तः यत्कर्मफलासक्तो यत्कर्म करोति तत्कर्मणा तत्फलमेवैतीति । अत एव तत्र तत्र श्रुतौ "अकामः सर्वकामो वा" इत्यादिपुराणेषु च कामनाविषयत्वेन श्रुतानां फलानां विकल्प उक्तः । इतरथा पक्षद्वयेऽपि भवन्मते द्विविधफलोत्पत्त्या विकल्पायोगात् । अत एवाकामितं फलं भवतीति सर्वतान्त्रिकसिद्धान्तोप्येतदभिप्रायक एव च सङ्गच्छते । अत एव यत्रानेकविषयिणी कामना तत्रानेकफलोत्पत्तिरिति **भट्टसोमेश्वरेण तन्त्रसारे** अभिहितम् । **आपस्तम्बः** स्वर्गकामो दर्शपूर्णमासौ कुर्यात् सर्वकामो वा युगपत्कामयेताहारपृथक्त्वेनैवेति । युगपदनेककामनायामपि सकृत्प्रयोगः सकृत्प्रयोगादेकमेव वा काम्यं फलमिति तदर्थात् ।

एवं विविदिषन्तीत्यनेन ज्ञानस्यापि इच्छाविषयत्वेनैव फलत्वश्रवणात् ज्ञानकामनया कृतस्य कर्मणो ज्ञानजनकत्वमेव न तु स्वर्गादिजनकत्वम् । न चैवमुभयकामनया कृतस्योभयोत्पादकत्वापत्तिः । "योऽकामो निष्काम आत्मकाम आप्तकामो भवति" इति श्रुत्या निष्कामस्यैव मुमुक्षोर्ज्ञानोत्पत्त्यभिधानात् । **गीतादौ** च मोक्षोपयोगिकर्मकरणवेलायां फलान्तरकामनाया असकृन्निषिद्धत्वाच्च । ज्ञानोत्पत्तिपर्यन्तं च कर्मजन्यापूर्वसत्वादन्तरा पितृलोकादिप्राप्त्यापत्तिः 'कर्मणा पितृलोक' इत्यस्य साध्यसाधनभावविधायकत्वाभावादेव निराकरणीया । इतरथा शुद्धकाम्यकर्मणोऽपि आमुष्मिकफलसाधनत्वात् तत्प्राप्त्यापत्तेः । इष्टापत्तेरुभयत्रापि तुल्यत्वाच्च । अतः सङ्कल्पजन्यापूर्वस्यापि फलोत्पत्तिं प्रति कारणत्वान्नाकामितफलप्रसङ्ग इति ।

इदं च **पूज्यपादैः** कृतफलैकत्ववादस्यातिसङ्क्षिप्तत्वादनतिप्रचाराच्च मया विस्तरेणात्रोपपादितम् । एवं च पशुकामश्चित्रेष्ट्या यक्ष्य इति सङ्कल्पजन्यापूर्वस्य फलोत्पत्तिं प्रति कारणत्वं च निर्विवादम् । तच्च सङ्कल्पजन्यापूर्वं सङ्कल्पाव्यवधानेनोत्पन्नमपि सङ्कल्पितार्थानुष्ठाने सत्येव फलोपधायकमित्यपि निर्विवादमेव इतरथा उभयथापि मिथ्यासङ्कल्पापत्तेः । एवं च पशुकाम-

श्चित्रेष्ट्या यक्ष्य इत्येवं पशुकामस्य साङ्गप्रयोगानुष्ठानसङ्कल्पवतो मध्ये कामनाऽभावे प्रयोगानुष्ठाने सति न यथासङ्कल्पितार्थानुष्ठानं सिद्ध्यति। प्रयोगोपक्रमांशेन पशुकामकर्तृकत्वासिद्धेः। पूर्वोक्तरीत्याऽऽरम्भमध्ययोरर्थलभ्ययोराख्यातार्थत्वाभावात् समाप्तेरेव तदर्थत्वस्थापनात् सङ्कल्पवाक्येऽपि यक्ष्ये इत्याख्यातोपात्तसमाप्तावेव स्वर्गकास्य कर्तृत्वेनान्वयाद्यथारब्धसमाप्तिपर्यन्तं तत्कर्तृकत्वनिर्वाहाय तत्कामनाया आवश्यकत्वाच्च।

अत एव **बहूनां तु प्रवृत्तेऽन्यमागमयेद्वैगुण्या**दित्यधिकरणे सत्रे कर्तृत्वांशेन प्रतिनिधिसिद्धान्तोपपत्त्यै प्रारब्धमवश्यं समापनीयम्। ननु समाप्यन्त एवावशिष्टैरित्युक्तं तत्राह —**यथाश्रुतमेव** सप्तदशकर्तृकमेव समापनीयं तथाविधस्यैव प्रारब्धत्वात् प्रारब्धस्य च समापनीयत्वात् न तु षोडशकर्तृकं अयथारम्भसमापने वैगुण्यप्रसङ्गादित्युक्तं **वार्तिकतन्त्ररत्नयोः**।

अत एवैतादृशे विषये पुरुषान्तरानयनेनापि यावत्सम्भवं वैगुण्यपरिहारसम्भवः तावत्तदाश्रित्यैवारब्धप्रयोगसमाप्तिः। यत्र तु प्रारम्भरूपनिमित्तवशात् काम्यस्य प्रारब्धस्य समापनं तत्र यद्यपि प्रारम्भस्य स्वर्गकामकर्तृकत्वात् समाप्तेश्च मध्ये फलावाप्त्या स्वर्गकामकर्तृकत्वान्न यथारम्भसमापनं सम्भवति तथापि तत्र यथारम्भासमापनजन्यवैगुण्यपरिहारोपायाभावे प्रधानप्रयोगसमाप्तिगतावश्यकर्तव्यतानुरोधेन आश्रित्यापि वैगुण्यं समापनं कर्तव्यमेव। काम्ये तु किञ्चिद्वैगुण्यसत्वे फलोत्पादासम्भवात् यथारम्भसमापनमावश्यकमिति हेतोरेवोपक्रान्तकाम्यान्मध्ये वीतायामिच्छायामवाप्ते वा फले न स्वर्गाद्युत्पत्तिः। अतश्च सङ्कल्पोपक्रमे यत्फलविषयकामनासत्वं तस्यैव फलस्य यथोत्पत्तिर्नान्यस्य तथैवान्तमपि यत्फलविषयकामनासत्वं तस्य तदैवोत्पत्तिरित्यपि नियमस्यावश्यकल्प्यत्वादुपक्रमे कामनाभावे इव समाप्तिपर्यन्तं कामनाऽभावेपि नाकामितफलोत्त्यापत्तिः।

स्पष्टमेव कारीर्यादिषु यदि वर्षेत्तावत्येव होतव्यमिति **तन्त्ररत्नो**दाहृतलिङ्गदर्शनादेकफलप्राप्तौ सत्यां फलान्तरोत्पत्तिर्नास्तीति प्रतीयते। एतदभिप्रेत्यैव प्राचां फलान्तरोत्पत्त्यनभिधानम्। प्रारम्भे निमित्ते विधीयमानायाः कर्माश्रितसमाप्तेः परं नैमित्तिकत्वादथवा वीतायामपि फलेच्छायां अवाप्ते वा फले कर्मणः पापक्षयफलकत्वस्य तन्त्ररत्नादौ स्वयं च सर्वशक्त्यधिकरणे उपपादयिष्यमाणत्वात् समापितात् कर्मण एव वा पापक्षयो भवेन्न तु कर्मणस्तादृशादकामितं पुत्रादिफलमपीत्यलं विस्तरेण॥

(४)—लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥ अपराधेऽपि च तैश्शास्त्रम् ॥ १७ ॥ अशास्त्रात्तूपसम्प्राप्तिरशास्त्रं स्यान्न प्रकल्पकं, तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत् ॥ १८ ॥

लौकिकस्य तु गृहरथकर्मादेरशास्त्रीयत्वादशास्त्रीयासमापने च शिष्टविगर्हणाभावात्प्रयोजकाभावेनासमापनम्। न च तस्यापि शिल्पश्रुतिमूलत्वाच्छास्त्रीयत्वम्। तस्याः अर्थसुखादिवशवर्तितया लोकमूलकत्वेन श्रुतिमूलकत्वाभावात्। यत्तु, गृहकरणाद्याश्रितं पुरुषार्थं नैमित्तिकं वास्तुशान्त्यादिकं 'आरे भग्ने इन्द्रबाहुर्वेद्धव्यः, पायसं ब्राह्मणो भोजयितव्यः' इत्यादि च, तस्य शास्त्रीयत्वादिष्टमेव समापनम् ॥ ४ ॥

---

(५)—प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥ शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ १२ ॥

---

॥ लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥

यद्यपि पूर्वत्र शिष्टविगर्हणाभयादारब्धकर्मणोऽवश्यं समापनं साधितं लौकिकेषु तु गृहादिषु सामि कृतेष्वपि न शिष्टाः विगर्हन्ते अतो लौकिककर्मणोऽवश्यसमापनमिति निर्युक्तिकः पूर्वपक्षो नोत्तिष्ठति तथापि यथैव लोकादिषु प्राच्यादिभिर्व्यवस्थितेष्वप्यनुष्ठीयमानेषु तत्कल्पितायाः श्रुतेः सर्वगामित्वात्सर्वधर्मत्वं साधितमेवमिहापि प्रक्रान्तं शास्त्रीयं कर्मावश्यं समापयितव्यमिति सामान्यतः श्रुतिकल्पनात् "देवताभ्यो वा एष आवृश्च्यत" इति च वाक्याद्देवताश्रयव्यापारमात्रस्यावश्यं समापनीयत्वावगमाद्गृहादीनामपि शास्त्रीयत्वात् देवताश्रयत्वाच्चावश्यमारब्धस्य समापनं कर्तव्यमिति सम्भावितं पूर्वपक्षयुक्तिद्वयं सिद्धान्तोपक्रमेणैव दूषयति—लौकिकस्येति। शास्त्रीयं प्रकान्तं कर्मावश्यं समापनीयमिति श्रुतिकल्पना उभयथापि प्रयोजनाभावादसमापनमिति भावः। शास्त्रीयत्वादिष्टमेवेति। तथा चार्थसुखादिप्राप्तये गृहादिनिर्माणं कार्यं यावत्फलोदयं कृते च तस्मिन् वास्तुशान्त्यादि शास्त्रीयं अवश्यमारब्धं समापनीयमेव। अर्थसुखादीच्छानां मध्ये वीतत्वे तु आरब्धमपि गृहादि नावश्यं समापनीयमिति भावः।

**'न कळञ्जं भक्षयेत्' इत्यादिषु किं स्वर्गकामस्याधिकारः उत प्रवृत्तमात्रस्येति चिन्तायां**—नञो निपातत्वेन **क्रियान्वयनैयत्याभावात्क्रियान्वयाङ्गीकारे च प्रधानभूतायास्तस्या एवान्यथात्वापत्तेः, आनर्थक्यतदङ्गन्यायेन क्रियाविशेषणेष्वन्वयावगमात्, तत्रापि कळञ्जा-**

---

**प्रतिषेधेष्वकर्मत्वात्**

अत्र च प्रतिषेधत्वमाश्रित्य सिद्धान्ते प्रवृत्तमात्रस्याधिकारः साधयिष्यते। एतदभिप्रायेणैवात्रत्ये "प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणां" इति पूर्वपक्षसूत्रे प्रतिषेधेषु प्रतिषिद्धानामिति पदद्वयम्। तद्धि प्रतिषेधत्वम्

"पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रतिषेधस्स विज्ञेयः क्रियया सह यत्र नञ्॥"

इत्यभियुक्तोक्तेः प्रधानभूतक्रियान्वये भवेत्। स एव न सम्भवतीति पूर्वपक्षे उपपादयति—**नञो निपातत्वेनेति**। क्रियान्वयो हि तदाकाङ्क्षया भवति। अत एव कारकाणामेव परस्पराकाङ्क्षया सः। नैवं निपातार्थानां क्रियान्वयाकाङ्क्षाऽस्ति, न वा क्रियायास्तदर्थान्वयाकाङ्क्षेत्यत एव क्रियान्वयकार्यकारणभावे निपातातिरिक्तत्वविशेषणम्। अतः कथञ्चित् समभिव्याहृतार्थे अन्यस्मिन्निव क्रियायामन्वयो वाच्यः। सोऽपि न सम्भवतीत्याह—**क्रियान्वयाङ्गीकारे चेति**।

अत्र चेत्थं सिद्धान्त्येकदेशिमतं—नञस्तावत् प्राधान्यात् भक्षयेदिति प्रत्ययार्थ एवान्वयः भक्षणधात्वर्थस्य नञर्थे प्रागभावरूपेऽन्वयः। तथा च कलञ्जभक्षणवर्जनं कर्तव्यमिति निषेधेष्वपि विधिष्विव कर्तव्यतैव वाक्यर्थः। यत्र केवलधात्वर्थानुरक्ता भावना विषयस्तत्र विधिव्यपदेशो, यत्र धात्वर्थावच्छिन्ननञर्थानुरक्ता भावना विषयस्तत्र स एव विधिः निषेधव्यपदेशं लभत इति विषयभेदमात्रेणैव द्वेधा व्यवहारो न तु स्वरूपतः अनयोः कश्चिद्भेदः।

अत एव कलञ्जभक्षणनिवृत्तेर्विधेयत्वात् तस्याश्च फलाकाङ्क्षायां केषाञ्चिन्मते नित्यनैमित्तिकयोरिष्यमाणप्रत्यवायपरिहार एव कल्प्यते। एवं कलञ्जभक्षणनिवृत्तेर्वेदबोधितश्रेयःसाधनताकत्वात् नित्यकर्मवत् धर्मत्वमपि नानुपपन्नम्। न च कलञ्जभक्षणप्रागभावस्य सर्वदा सत्वेनेष्यमाणप्रत्यवायपरिहारोपपत्तेर्विधिवैयर्थ्यं, निवृत्तिप्रतियोगिनः कलञ्जभक्षणस्यानुष्ठाने प्रत्यवायोत्पत्तिरित्यर्थस्य फलतस्तात्पर्यविषयीभूतस्योपपत्तये तत्सार्थक्यात्।

**न्वये सुबन्तसम्बन्धेन नञ्समासापत्तेः, कलञ्जातिरिक्तभक्षणस्य च रागप्राप्तत्वेनाविधेयत्वात् पारिशेष्येण धातुसम्बन्धावगतेभक्षणाभावस्य च कर्तुमशक्यत्वेन प्रजापतिव्रतवदेव**

---

अत एव सर्वनिषेधेषु पुरुषार्थत्वक्रत्वर्थत्वव्यवहार उपपद्यते। निवृत्तेरभिधेयत्वे तु विहितत्वघटिताङ्गत्वानुपपत्तेः।

यत्त्वत्र **तन्त्ररत्ने** तदनुसारिणि **न्यायप्रकाशे** च दूषणमुक्तं धात्वर्थस्य समानपदश्रुत्याऽवगतप्रत्ययार्थान्वयबाधापत्तिः। तथा "समर्थः पदविधिः" इतिपदविधिमात्रविषयप्रवृत्तपरिभाषया प्रकृतिप्रत्यययोरपेक्षितैकार्थीभावलक्षणसामर्थ्यभङ्गापत्तिश्चेति; तदयुक्तं, भवन्मते नञस्तात्पर्यग्राहकत्वाङ्गीकारेण लिङः शक्त्यन्तरलक्षणयोरन्यतरस्वीकारेण निवर्तनाबोधकत्ववन्ममापि नञ्समभिव्याहृतलिङ्प्रकृतिभूतधातोः शक्त्या लक्षणया स्वार्थाभावबोधकत्वोपपत्तेः। यथैव हि ईक्षणाभावसङ्कल्पलक्षणायां सङ्कल्पस्य धात्वर्थत्वात् न समानपदश्रुतिसामर्थ्ययोर्भङ्गस्तव सिद्धान्ते ममापि तथैवाभावस्य धात्वर्थत्वादेव न तयोर्भङ्ग इति न किञ्चिद्बाधकमिति। तदिदं मतं पूर्वपक्ष एव दूषयति—**भक्षणाभावस्य चेत्यादिना। अयमर्थः** कलञ्जभक्षणवर्जनस्य न तावद्विधानं सम्भवति। तस्य प्रागभावरूपत्वेनाननुष्ठेयत्वात् तदनुपपत्तेः। नापि तस्य धर्मत्वं तस्यादृष्टद्वारा फलजनकत्वाभावात्। अदृष्टद्वारा फलजनकस्यैव शास्त्रीयत्वेन धर्मत्वाङ्गीकारात्। अत एव निषेधपरिपालनकर्तरि अधार्मिको नेत्येव व्यवहारो न तु धार्मिक इत्युपपादितं चोदनासूत्रे **तर्कपादे**। तथा अयाचितव्रतनिरूपणे **कालतत्वविवेचनकारैः** न च नित्यकर्मणां अनुष्ठानाव्यवधानेनैव पापक्षयोत्पत्तेस्तत्र तज्जन्यापूर्वकल्पने प्रमाणाभावाददृष्टद्वारा फलजनकत्वाभावेन धर्मत्वानापत्तिः। तत्रापि पूर्वोत्तराङ्गसहितादेव तस्मात्फलोत्पत्तेरुत्तराङ्गानुष्ठानसिद्ध्यर्थं अपूर्वस्यावश्यकत्वात्। अत एव गुणकामस्थले गुणस्य दृष्टद्वारा आश्रयजनकत्वेपि फलं प्रत्याश्रयजन्यापूर्वस्य स्वतन्त्रस्यैव द्वारत्वात् गुणस्य धर्मत्वोपपत्तिः। किञ्च निवृत्तेः धर्मत्वकर्तव्यतयोः स्वीकारे "नेक्षेतोद्यन्तं" इत्यधिकरणोपपादितसङ्कल्पलक्षणासिद्धान्तानुपपत्तिः। ईक्षणनिवृत्तिमात्रविधानेऽपि तस्य व्रतमित्युपक्रमेण विरोधाप्रसक्तेः। विधिवैयर्थ्यान्यथानुपपत्त्या ततः कल्पनीयस्य कलञ्जभक्षणगतप्रत्यवायजनकत्वबोधस्य वक्ष्यमाणरीत्या तात्पर्यविषयत्वकल्पनेन वाक्यार्थोपपत्तौ किमिति योगक्षेमसाधारणत्वं क्लिष्टकल्पनया प्रागभावस्य कर्तव्यतात्वाङ्गीकारेण विध्याश्रयणं, तदपेक्षया कर्तुं शक्यस्य भक्षणाभावसङ्कल्पस्य सङ्कल्पान्त-

लक्षितस्य भक्षणाभावसङ्कल्पस्य विश्वजिन्न्यायेन स्वर्गार्थत्वेन विधानमिति प्राप्ते—

'तस्य व्रतम्' इत्युपक्रमानुसारात् प्रजापतिव्रतेषु लक्षणाङ्गीकारेऽपि प्रकृते लक्षणायां प्रमाणाभावात् प्रधानान्वयस्याभ्यर्हितत्वेन नञोऽभाववाचकस्य प्रतियोगिता-संसर्गेण भावनायामेव स्वकारकविशिष्टायामन्वयः। न चान्यथात्वापत्तिः। पुरुषे

---

लक्षणया धात्वर्थत्वाङ्गीकारेण विधानमुचितमित्याह—लक्षितस्येति। प्रजापतिव्रतेषु "एतावता हैनसा वियुक्तो भवति" इत्यर्थवादश्रवणात् रात्रिसत्रन्यायेनार्थवादिकपापक्षयरूपफलकल्पनेऽपि प्रकृते अर्थवादाभावे विश्वजिन्न्यायेनैव फलकल्पनेत्याह—विश्वजिन्न्यायेनेति। अत्र भाष्यकारेण पूर्वपक्षे प्रयोजनं दर्शितं यथा नोद्यन्तमादित्यमीक्षेतेत्येवमादिषु प्रजापतिव्रतेषु कुर्वतः फलं अकुर्वतो न फलं न दोष इत्येवमिहापीति। तत्र प्रजापतिव्रतदृष्टान्तोपपादनमयुक्तं प्रजापतिव्रतेषु सङ्कल्पस्य नैमित्तिकत्वेन तदकुर्वतो दोषापत्तेरनिवारणात्। अतः प्रजापतिव्रतेषु संङ्कल्पकरणे न पापक्षयः फलं, किन्त्वकरणे प्रत्यवायदोषस्तथेह नास्ति स्वर्गादिफलमकरणे न वा दोष इत्येव प्रयोजनं तन्त्ररत्नकृता पूर्वपक्षोपसंहारे सूचितम्। निष्कामानां तु याथाकाम्यमिति शास्त्रदीपिकोक्तं स्पष्टत्वान्नोक्तम्। न चैतावता निष्कामानां कलञ्जभक्षणानुष्ठाने दोषो नास्तीति भ्रमितव्यं, कलञ्जभक्षणाद्यनुष्ठाने तत्तद्दोषाख्यानपूर्वकं तत्तत्स्मृतिषु प्रायश्चित्ताम्नानेन दोषापत्तेरनिवार्यत्वादिति ध्येयम्। प्रतियोगितासंसर्गेऽपीति। एतच्च न पचतीत्यादिष्विव नञो वाचकत्वमभिप्रेत्य तदर्थस्याभावस्य प्रतियोगितासंसर्गेण भावनान्वयकथनं धात्वर्थादावन्वय-निरासमात्रतात्पर्यकमेवेति भावनायामेवेत्येवकारेण सूच्यते, न तु वस्तुगत्या अन्वयप्रदर्शनपरं उत्तरत्रैव सम्यक्तात्पर्यग्राहकत्वकथनात्। अतो न पूर्वापरविरोधः। अत्र चाचाराधिकरण-वार्तिकन्यायसुधयोः ब्राह्मणत्वपुंस्त्वयोरविवक्षाप्रदर्शनावसरे निषेधाधिकारेषु निवर्तनावाक्यार्थ-सिद्ध्यै वचनव्यक्तिरनेकधा दर्शिता। तत्र केवलनञोऽभाववाचकत्वेन क्लृप्तस्य, लिङो वा प्रवर्तनावाचकत्वेन क्लृप्तस्य निवर्तनाबोधजनने असामर्थ्यात् विनिगमनाविरहेण पङ्कजपदे पङ्कपदजनिधात्वोरुभयोरपि शक्त्यन्तरकल्पनया पद्मत्वप्रकारकपद्मविशेष्यकबोधस्वीकारावदिहापि नञ्लिङोरुभयोरपि निवर्तनाबोधजनकत्वं शक्त्यन्तरकल्पनया स्वीक्रियते। तदा चैषा वचन-व्यक्तिः यद्ब्राह्मणहननं तन्न कुर्यात्। अथवा धात्वंशोऽनुवादः प्रत्ययांशो विधिरिति वैरूप्या-पत्तिपरिहाराय यो ब्राह्मणस्तं हन्यान्नेति। अथवा

चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेः, नोपसर्गनिपातयोः॥

तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकस्स विचार्यते ।

इत्याकृत्यधिकरणदर्शितरीत्या निपातानां स्वतो द्योतकत्वादेव नञस्तात्पर्यग्राहकत्वमङ्गीकृत्य केवललिङ एव निवर्तनावाचित्वम् । तत्र च पूर्वोक्तैव वचनव्यक्तिः द्योतकस्यापि नञोऽवश्यमुच्चार्यत्वात् । न च प्रवर्तनायां शक्तेर्निवर्तनायामपि शक्तिकल्पने गौरवाल्लक्षणैवास्त्विति वाच्यम् । उभयोः प्रचुरप्रयोगत्वाविशेषेण एकत्रैव शक्तिकल्पने मानाभावात् ।

**अथवा** नञ एव निवर्तनावाचकत्वं सामान्यतो विरोधप्रतीतिजनकत्वेन क्लृप्तस्य तस्यैव विरोधिविशेषरूपनिवर्तनायां शक्तिकल्पनौचित्यात् । अस्मिंश्च पक्षे यद्ब्राह्मणं हन्यात्तन्नेति वचनव्यक्तिः ।

प्रायश्चायमेव पक्षोऽस्मिन्नधिकरणे **तन्त्ररत्नकृता** दर्शितः—कः पुनरत्र नञर्थः निवारणमिति ब्रूमः । **तथाहि**— येनैवासौ समभिव्याहृतस्तस्यैव प्रतिपक्षमभिधत्ते । ततश्च यथैव नास्ति इत्यत्रास्तिशब्दयुक्तः सत्वप्रतिपक्षमसत्वं प्रतिपादयति तथैव प्रेरणात्मकविधिसमभिव्याहृतस्तत्प्रत्यनीकं निवारणं प्रतिपादयतीति । एतदनुसारिण एव **न्यायप्रकाशकारादयो** नवीना नञर्थमेव निवारणं मन्यन्ते । तत्राद्यप्रकारद्वयेन नञ्लिङोरुभयोरन्यतरस्य वा निवर्तनायां शक्त्यन्तरकल्पने गौरवं तावत् स्फुटमेव । **अथ** नञा निवारणोच्यत इति मतं, तत् सुतरामयुक्तम् ।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥

इति वृद्धवचने विरोधाद्यर्थप्रतीतावपि विरोध्यर्थान्तरवाचकत्वे नञः शक्तिकल्पने प्रमाणाभावात् । ब्राह्मणविरोधिन्यब्राह्मण इत्यत्र ब्राह्मणविरोधित्वविशिष्टव्यक्तेः प्रतीतावपि विरोधाप्रकारककेवलव्यक्त्यनुभवाभावात् । नहि नास्तीत्यत्रापि सत्वप्रतिपक्षमसत्वं भावान्तरं नञ् प्रतिपादयति । किन्तु सत्वाभावमात्रं, नैतावता सत्वप्रतिपक्षत्वं तदभावे विहन्यते । भावाभावयोः स्वभावतयैव सप्रतिपक्षत्वात् ।

अत एव ब्राह्मणविरोधिनि ब्राह्मण एव अब्राह्मण इति प्रयोगः तत्रैव ब्राह्मणत्वाभावस्य प्रत्यक्षबाधेन बोधयितुमशक्यत्वात् ब्राह्मणविरोधित्वेनैव प्रतीतिः । यत्र तु शूद्रादौ न

ब्राह्मणत्वाभावः प्रत्यक्षबाधितस्तत्र ब्राह्मणत्वाभाववत्त्वैव नञर्थप्रतीतिः। एवं चेहापि विधिसमभिव्याहृतो नञ्प्रवर्तनाभावमात्रं, अथ वा प्रवर्तनाविरोधिव्यक्त्यन्तरसामान्यमभिदध्यान्न तु निवर्तनाम्। न च प्रवर्तनाभावमात्रमेवात्राभिधीयत इति वाच्यं लिङ्निष्ठप्रवर्तनाभावबोधेऽपि रागादिना प्रवृत्तौ प्रत्यवायानापत्तिप्रसङ्गात्। न च रागादिनिष्ठप्रवर्तनाभाव एवाभिधेयः तादृशप्रवर्तनायाः लोके वेदे च लिङादिवाच्यत्वेनाक्लृप्तेः तत्रापि शक्त्यन्तरकल्पने गौरवतादवस्थ्यात्। नापि विरोधिव्यक्त्यन्तरसामान्यस्य विशेषं विना अपर्यवसानान्निवर्तनारूपविशेषपर्यन्तमपि शक्त्यन्तरस्वीकारो युक्तः। तथात्वे प्रवर्तनाविरोधित्वप्रकारकनिवर्तनाविशेष्यकबोधस्य निषेधवाक्ये प्रतीत्यापत्तेः।

**एतेन** नास्तीत्यादौ सर्वत्र सत्ताभावप्रतीतावपि नास्तीत्यादौ सत्वप्रतिपक्षमसत्वं प्रतिपादयति नञिति **तन्त्ररत्नाद्युक्तिः** खपुष्पं नास्तीत्येतदुदाहरणाभिप्रायिका। तत्रासत्त्वात् खपुष्पस्य तत्प्रतियोगिकाभावबोधासम्भवादिति **भट्टालङ्कारोक्तमपास्तम्**। खे पुष्पस्यासत्वेन तत्प्रतियोगिकाभावासम्भववत् असत्वस्यापि भावरूपत्वे असद्रूपखपुष्पवृत्तित्वासम्भवात्। अभावरूपत्वे तु समानपरिहारत्वात॥

यत्तु लिङस्तात्पर्यग्राहकत्वमङ्गीकृत्यैतादृशे विषये नञो निवारणाभिधेयत्वं न तु केवलनञ एव ततः केवलात्तदप्रतीतेः। नञस्तात्पर्यग्राहकत्वङ्गीकारेण लिङ एव निवर्तनावाचकत्वकल्पने तु नञोऽर्थाभावेन शक्तत्वाभावात् प्रातिपदिकसंज्ञाभावेन सुबन्तत्वप्रयुक्तपदत्वस्याप्यसम्भवेन पृथक्पदत्वव्यवहारानापत्तेः। लिङस्तात्पर्यग्राहकत्वे तु लिङो भावनारूपार्थान्तरसद्भावात् पृथक्पदत्वव्यवहारोपपत्तेः न बाधकम्। अतोऽभाववाचकस्यापि नञो निवर्तनावाचकत्वं नानुपपन्नमिति भाट्टालङ्कारोक्तम्। **तत्तुच्छं**। “क्लृप्तशक्तेर्लिङ एव निवर्तनाबोधकत्वाङ्गीकारेण नञस्तात्पर्यग्राहकत्वकल्पने लाघवात् लिङ्निष्ठस्य कस्यचिद्धर्मस्य प्रवर्तनात्वेन क्लृप्तस्य निवर्तनात्वकल्पनापेक्षया नञ्निष्ठस्य धर्मस्य निवर्तनात्वकल्पने गौरवापत्तेः। निवृत्तेः विजातीययत्नरूपत्वाङ्गीकारे तद्वाचकस्य, अथवा निवृत्तेः प्रवृत्त्यभावात्मकत्वे अभाववाचकस्य नञस्तात्पर्यग्राहकत्वाङ्गीकारेण लिङो निवर्तनावाचित्वकल्पनेपि नञ्गतपृथक्पदत्वव्यवहारस्य ममाप्युपपन्नत्वात्। भवन्मते लिङर्थविशेष्यकबोधस्य स्वीकारादेकस्य नञ एव निवृत्त्यनुकूलव्यापारशक्त्यङ्गीकारेणैतादृशे विषये कलञ्जभक्षणविषयनिवृत्त्यनुकूलो व्यापार इति बोधोपपत्तौ लिङोऽर्धजरतीयाङ्गीकारेण भावनाविधायकत्वकल्पनेपि प्रयोजनाभावेन सर्वथा तात्पर्यग्राहकत्वस्यैव युक्तत्वाच्च। अत एव विधिस्थले

वाचकान्तराभावे लिङ एव भिन्नरूपेण प्रवृत्तितदनुकूलव्यापारवाचित्वमङ्गीक्रियत एव।

अथ विधिस्थले प्रवृत्तेराख्यातत्वेन रूपेण प्रवृत्तिबोधकस्य लिङो निवृत्तिरूपविजातीययत्नवाचकत्वनिर्वाहार्थमवश्यं नञस्तात्पर्यग्राहकत्वस्य कल्पनीयत्वे निवर्तनाप्रतिपादकत्वे वैषम्यपरिहाराय तात्पर्यग्राहकत्वकल्पनस्यैव युक्ततरत्वम्। नन्वेतादृशे विषये रागद्वेषादिगता प्रवर्तनैव लिङर्थोऽस्तु। उक्तं च वार्तिके प्रत्ययसम्बन्धानुगृहीतशक्तिरभावमात्राभिधानादभ्यधिकलब्धव्यापारो नञ् विध्यर्थमपि द्वेषाद्यर्थप्राप्तं प्रतिषिद्ध्य चरितार्थ इति। अतश्च रागाद्यर्थप्राप्तां पानादिप्रवर्तनां लिङादिनोद्दिश्य नञा निवर्तना विधीयते। एवं च निवर्तनावाचकस्य निवृत्तिबोधतात्पर्यग्राहकत्वमपि नासुलभमिति चेन्न; रागादिनिष्ठप्रवर्तनावाचित्वस्य लोके वेदे वा क्लृप्तत्वेनानुवादायोगात् स्वनिष्ठप्रवर्तनायाश्चाप्राप्तत्वेन लिङादिनाऽनुवादकत्वकल्पने सर्वथा प्रवर्तनाभिधायकत्वानुपपत्तेश्च। अत एव लिङस्तात्पर्यग्राहकत्वं प्रकल्प्य प्रवर्तनानुवादेन निवर्तनावाक्यार्थोपपादने स्वमतत्वभ्रम एव भाट्टालङ्कारकाराणामित्यभिप्रायेणैव। केषाञ्चित्त्वत्र स्वमतत्वप्रमितिः भ्रम एवेत्युक्तं कौस्तुभे अर्थवादाधिकरणे पूज्यपादैः। एवं च द्वेषादिरूपप्रवर्तनानिवारणप्रतिपादकपूर्वोपन्यस्तं वार्तिकमपि परमताभिप्रायेणैव कथञ्चिन्नेयम्॥

वस्तुतस्तु निवृत्तेर्विजातीययत्नरूपत्वाश्रयणे विधिस्थले प्रवृत्तिर्विषयः निषेधस्थले निवृत्तिः विषय इति विषयभेदेनापि स्वरूपभेदेनेव विधिनिषेधयोर्भेदसिद्धौ भावनारूपविषयस्यैक्यात् न विषयकृतो भेदस्तयोः किं तु प्रेरणानिवारणस्वरूपकृत एव भेद इत्यत्रत्यतन्त्ररत्नाद्युपपादितं मन्दमेवस्यात् तस्या धर्मत्वापत्त्या व्रतशब्दवाच्यत्वानिवारणान्नेक्षेतोद्यन्तमित्यादौ निवृत्तेरेव विधेयत्वस्य युक्तत्वात् सङ्कल्पलक्षणासिद्धान्तानुपपत्तिश्च। अतः प्रवृत्त्यभावस्यैव निवृत्तिपदार्थत्वादाख्यातोपात्ता भावनैव विशेष्यभूता। तथाचाभाववाचकस्य नञो लिङ्गतनिवर्तनावाचित्वतात्पर्यग्राहकत्वेऽपि पृथक्पदत्वव्यवहारो नानुपपन्नः।

परमार्थतस्तु द्योतकानामर्थान्तरवाचित्वं नास्त्येव किन्तु यदर्थद्योतकत्वं स एवार्थस्तेषां यथा प्रातिपदिकार्थ एव प्रथमार्थो नान्यस्तद्वत्। एवं च पृथगर्थे शक्त्यभावेपि द्योत्यमानार्थबोधकत्वात् न पदत्वानुपपत्तिः। अतश्च कलञ्जकर्मकभक्षणभावनामाख्यातवाच्यां रागतः प्राप्तामनूद्य लिङा तदभावरूपनिवृत्तिफलं निवर्तना लिङादिवाच्यैव वाक्यार्थत्वेन बोध्यते। कलञ्जकर्मिका भक्षणप्रवृत्तिर्निवर्तनाप्रयोज्येति शुद्धभावनायाश्चोद्देश्यत्वासम्भवात् हविरार्तिन्यायेन धात्वर्थकारकादीनां उद्देश्यान्तर्गतया कृतिविशेषणत्वस्य व्युत्पत्तिसिद्धत्वाद्वा विवक्षायामपि

भावनानुत्पत्तावपि प्रत्ययेन तस्या एव बोधनेनान्यथात्वाभावात्। अत एव निषेधस्थले लिङर्थभूतव्यापारस्य न विधिवाक्य इव प्रयोज्यत्वसम्बन्धेन भावनान्वयः। अपि तु नञस्तात्पर्यग्राहकस्य सत्त्वात् स्वप्रयोज्याभावप्रतियोगित्वेनेति तस्य निवर्तनारूपत्वसिद्धिः। कळञ्जभक्षणभावना निवर्तनाविषय इति तु मूलानुसार्यन्वयः, नञ्सहितस्य लिङादेर्निवर्तनायां लक्षणास्वीकारात्। स्वप्रयोज्यत्वं च प्रवृत्त्यभावे प्रवृत्तिविषयस्यानिष्टसाधनत्वज्ञानं विनाऽनुपपन्नमिति तस्य प्रत्यवायजनकत्वं कल्प्यते। तेन पुरुषमात्रस्यैव रागतः प्रवृत्त्युन्मुखस्य निषेधेष्वधिकारः। अत एव च प्रत्यवायसाधनीभूतस्यानुष्ठेयस्य भक्षणस्य रागत एव ज्ञातत्वात्तदनुष्ठाने सति प्रत्यवायोत्पत्त्युपपत्तेर्न तदंशे तन्निषेधांशे वाऽध्ययनविधिसिद्धज्ञानापेक्षाऽपि। यत्त्वत्र निवर्तनाप्रकारकथनं

---

कर्तृकर्मादिकारकनिष्ठलिङ्गसङ्ख्यादिविशेषणादीनां उद्देश्यविशेषणत्वादविवक्षोपपन्ना। निवर्तनायाश्च सामर्थ्यादेव स्वविषयकज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगितासंसर्गेण भावनान्वयान्निवर्तनाप्रयोज्यत्वं एवं रूपेण द्रष्टव्यम्। न चास्तु अभाववाचकस्यापि संसर्गविधयाऽभावबोधेन प्रवृत्त्यभावानुवादकमात्रं न तु तदर्थस्यास्मिन् पक्षे प्रतियोगितासम्बन्धेन भावनायामन्वयः प्रयोजनाभावात् (?)। यद्यपि च भावनायाः नञर्थेऽन्वयमङ्गीकृत्य निवर्तनायास्तस्मिन्नभावे स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गेणान्वयाङ्गीकारादथवा निवर्तनाया एव निरुक्तसम्बन्धेनाभावे तस्य च प्रतियोगितासंसर्गेण भावनान्वयाङ्गीकारादपि इष्टवाक्यार्थोपपादने तथापि शक्त्यन्तरकल्पनागौरवस्य तदवस्थत्वान्न निवर्तनासिद्धिरित्येतत् सर्वमनुसन्धाय लघुना प्रकारेण स्वमतत्वख्यापनायनिवर्तनामुपपादयति— **अत एव निषेधस्थले इति।** अयमर्थः, न लिङः प्रवर्तनायां निवर्तनायां वा पृथक्शक्तिकल्पनं, गौरवात्। अपितु प्रवृत्त्यनुकूलव्यापारात्मिकायां प्रवर्तनायां प्रवृत्तेराख्यातलभ्यत्वात् अनुकूलत्वस्यापि सम्बन्धभावेनान्यलभ्यत्वात् केवलं व्यापारमात्र एव लाघवात्। तस्य च व्यापारस्य यथैव नञोऽसत्त्वे प्रवृत्तिप्रयोजनकत्वात् प्रवर्तनात्वेन व्यवहारः तथैव नञस्सत्त्वे प्रवृत्त्यभावजनकत्वान्निवर्तनात्वेन व्यवहारः। एवं च विधिनिषेधयोरुभयोरपि लिङ्व्यापारत्वेन रूपेण व्यापाराभिधानेपि तस्य यथाक्रमं स्वप्रयोज्यत्वसंसर्गेण स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेण भवनान्वयात्तस्य व्यापारस्य प्रवर्तनात्वं निवर्तनात्वं च सिद्ध्यति। नञस्तु तस्मिन् पक्षे अभावघटितससर्गतात्पर्यग्राहकत्वमेवेति। **अनिष्टसाधनत्वज्ञानं विनेति।** यथैव विश्वजिता यजेतेत्यत्र विधेः प्रवर्तकत्वान्यथानुपपत्त्या इष्टसाधनत्वमाक्षिप्य स्वर्गादिरूपेष्टविशेषः कल्प्यते, तथा निषेधस्यापि निवर्तकत्वान्यथानुपपत्त्याऽनिष्टसाधनत्वमाक्षिप्य तत्तत्स्मृतिसमर्पितोऽनिष्टविशेषो निषेध्यफलत्वेन श्रुतौ कल्प्यत इत्यर्थः। **न तदंशे इति।** प्रत्यवायोत्पत्त्यंश इत्यर्थः।

**प्रकारान्तरेण तन्त्ररत्ने कृतं तदर्थवादाधिकरणे कौस्तुभ एव निरस्तम्। स्वोक्तरीतिश्च विस्तरेणोपपादिता ॥ ५ ॥**

---

तथाचाध्ययनविधिसिद्धज्ञानवतैव कृतं कलञ्जभक्षणं प्रत्यवायजनकं तेनैव च न कृतं न प्रत्यवायजनकमिति नार्थः।

किमर्थं तर्हि निषेधवाक्यानां अध्ययनमिति चेन्—परिहृतमेतत् अर्थवादाधिकरणव्याख्याने अध्ययनविधिसिद्धनिषेध्यगतानिष्टसाधनत्वज्ञानवत एव प्रायश्चित्तानुष्ठानात् फलसिद्धिः। नचैतावता येषा शूद्राणामनध्ययनं तेषां न प्रायश्चित्ताधिकार इति भ्रमितव्यं; प्रायश्चित्तविधिषु निषेध्यानुष्ठातुरनुतापवत्वमात्रस्यैवाधिकारबोधनात्। येषामध्ययनमस्ति तेषां तदन्यथानुपपत्त्या फलपर्यन्तमपि तस्य व्यापारकल्पनं, दानविधिवाक्येष्विव नानुपपन्नमिति। **कौस्तुभ एव निरस्तमिति।** अत्र कः पुनरत्र नञर्थो निवारणमिति ब्रूमः। **तथा हि**—येनैवासौ समभिव्याहृतस्तत्प्रत्यनीकं निवारणं प्रतिपादयतीति ग्रन्थेन नञा निवर्तनोच्यत इति तन्त्ररत्नोक्तनिवर्तनाप्रकारकथनं तदेव पूर्वोपपादितदिशा कौस्तुभे निरस्तं वेदितव्यम् न तु विध्यर्थमपि चैतेषामर्थप्राप्तमनूदितम्। "प्रतिषिध्य कृतार्थो नञ्" इत्याद्यत्रत्य**तन्त्ररत्नग्रन्थे** विध्यर्थप्रवर्तामनूद्य नञा निषिध्यत इत्यापाततः प्रतीयमानप्रवर्तनानुवादेन निषेधकरणं **तन्त्ररत्नकृतो**ऽभिप्रेतं यत्तन्निरस्तमिति भ्रमितव्यम्। तन्त्ररत्नकृतोपि पूर्वापरग्रन्थपर्यालोचनया प्रवृत्तेरेवोद्देश्यत्वप्रतीत्या प्रवर्तनानुवादतात्पर्यस्यानुक्तोपालम्भत्वात्। अत एव **तन्त्ररत्ने** स्वमतोपपादनपरग्रन्थे—यद्भक्षयितव्यमिति रागादिप्राप्तक्रियाकर्तव्यतानुवादेन नेति निषिद्ध्यते भक्षणस्य कर्तव्यता या भवताऽवगता सा नास्ति। सन्निहितसुखलवदर्शनात्तु मोहात्तस्य कर्तव्यता अवगतेति। अस्मिंश्च पक्षे न विधिनिषेधयोर्विषयभेदः किन्त्वेक एव भावनात्मा विषयः। तत्रैव प्रेरणं विध्यर्थो निवारणं निषेधार्थ इति स्वरूपमेवानयोर्भिन्नं न विषय इत्युपक्रमात्।

सूत्रभाष्यकारयोरप्येतदेव दर्शनमभिप्रेतम्। सूत्रकारस्तावत् विध्यतिक्रमो वाक्यार्थ इति, न तु विध्यर्थस्य कर्तव्यतात्मकस्य रागादिप्राप्तस्य निवारणमतिक्रमापरनामधेयं नञ्प्रतिपाद्यं वाक्यार्थं दर्शयतीति मध्ये परामर्शात्। तस्माद्यत्कुर्यादिति रागादिप्राप्तक्रियाकर्तव्यतानुवादेन तन्नेति नञा निवारणं क्रियत इति दर्शयति। तथा **भाष्यकारोऽपि** भक्षयितव्यमिति भक्षणं कर्तव्यमिति शब्देनोच्यते नेति तत्प्रतिषिद्ध्यते श्रुत्यैवेति स्पष्टमेव कर्तव्यतानिवारणं वाक्यार्थं दर्शयति। इयमेव वचनव्यक्तिर्ज्यायसीत्युपसंहाराच्च कृतिविषयतारूपकर्तव्यताया

(६)—तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २१ ॥ अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥

**श्रौतेषु स्मृत्युक्तेषु च निषेधेषु, तथा स्मार्तेष्वेवानग्निसाध्येषु अमन्त्रसाध्येषु विधिषूपनयनात्पूर्वमपि** शक्तस्याधिकारः। **स्मार्तविधावुपनयनादिनियमे प्रमाणाभावात्।**

---

एवानुवादनिषेधयोः प्रतीतेः। नचैवं प्रवर्तनानुवादे यत्कलञ्जं भक्षयेदिति लिङानुवादानुपपत्तिः। दध्ना जुहोतीत्यत्रेव भावनानुवादार्थं तद्वाचकस्य लिङ एवात्राभिधानावश्यकत्वेपि तदर्थप्रवर्तनानुवादकल्पने प्रमाणाभावात्। एवं च प्रेरणात्मकविधिसमभिव्याहृतस्तत्प्रत्यनीकं निवारणं प्रतिपादयतीति तन्त्ररत्नग्रन्थे नञा सम्बद्धेन विधिना तद्विपरीतनिवर्तनाप्रतीतिरित्यत्र शास्त्रदीपिकाग्रन्थे च प्रेरणात्मकोऽत्र विधिः प्रेरणाममिदधाति। पश्चाद्विपरीतां निवर्तनां नञभिदधातीति नार्थः, तथात्वे प्रेरणाभावबोधेपि नञो निवृत्त्यनुकूलव्यापारपर्यन्तबोधकत्वकल्पने मानाभावात्। तत्कल्पनेऽपि वा प्रवर्तनाभावानुकूलव्यापारस्य नञर्थस्य निवर्तनात्वानुपपत्तेश्च। अयं मां निवर्तयति अहमेतस्य निवर्तक इत्यादिव्यवहारसिद्धनिवर्तनाया निवृत्त्यनुकूलव्यापारात्मकत्वात्। अत उभयसमभिव्याहारे नञलिङ्भ्यां उभाभ्यां अथवैकतरस्य तात्पर्यग्राहकत्वकल्पनया एकतरेण निवर्तनारूपार्थान्तरस्य प्रतीतिर्न तु प्रत्येकशक्त्येत्येव तद्ग्रन्थतात्पर्यदर्शनेनात्र प्रेरणानभिधानादेव तदनुवादानुपपत्तेः, केवलं प्रवृत्त्यनुवादेनैव तदभावफलकनिवर्तना वाक्यार्थोऽत्रत्यसूत्रभाष्यकारतन्त्ररत्नादिसम्मत एव कौस्तुभे पूर्वोक्तरीत्योपपादितः।

यद्यपि च निषेधेषु निवृत्तेरभावरूपायाः फलत्वान्न विधेयत्वं तथापि फलीभूताया अपि तस्या गर्दभाभिधानीनिवृत्तेरिवार्थसिद्धाया अपि विधितात्पर्यविषयत्वेनेष्यमाणप्रत्यवायपरिहारार्थत्वात् तद्द्वारा पुरुषार्थत्वक्रत्वर्थत्वोक्तिश्चतुर्थाध्यायोपपादिता नासमञ्जसा। क्रत्वर्थपुरुषार्थत्वलक्षणघटकोद्देश्यताविधेयतयोः स्वरूपसम्बन्धरूपविषयताविशेषरूपयोरेव तत्र पूज्यपादैरभिधानात्। यत्तु निषेधवाक्येषु न विधिः किं तु लिङादिप्रत्ययेन विधिफलीभूतो रागतः प्राप्तः कुर्यामिति सङ्कल्पो लक्ष्यते। तद्विरोधिवचनेन नञा न कुर्यामिति प्रत्यय उच्यत इति तस्य निषेधकत्वमिति कस्यचिन्मतं तत्स्पष्टदूषणत्वादुपेक्ष्यम्। अत्र कलञ्जं नाम विषदिग्धशस्त्रहतपशुमांसमिति प्रकाशे उक्तम्।

---

**॥ तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥**

**शक्तस्येति। एतेन** तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् इति **पूर्वपक्षसूत्रस्थं**

उपनयनस्य वेदमात्राध्ययनाङ्गत्वात्। निषेधेषु तु जातमात्रस्याधिकारः 'ब्राह्मणो न सुरां पिबेत्' इतिवत् परप्रेरणादिजन्याया अपि भक्षणादिभावनाया निषेधात्। तत्र च स्मृत्याद्यध्ययनस्यानुपयोगादिति प्राप्ते—

स्मृत्यध्ययनस्यापि 'ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति स्मृत्या उपनयनाङ्गत्वविधानात् स्मार्तविधीनामप्युपनीताधिकारकत्वम्। निषेधेषु तु 'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति स्मृत्यैवाभ्यनुज्ञानादुपनयनोत्तरकालत्वम्। अत एव वर्णपुरस्कारेण आम्नातानां सुरापानादिनिषेधानां जातमात्राधिकारिकत्वमेव स्मृतिसिद्धम्। येषां तु शूद्रादीनामुपनयनाभावस्तेषां विवाहावधि, तस्य तत्स्थानत्वेन विधानात्॥ ६॥

---

## (७)—अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते ॥ २३ ॥ तस्मिन्नसम्भवन्नर्थात् ॥ २४ ॥ न कालेभ्य उपदिश्यन्ते ॥ २५ ॥ दर्शनात्काललिङ्गानां कालविधानम् ॥ २६ ॥

---

जननपदं समर्थमात्रोपलक्षणमुक्तं भवति। ननु निषेधेषु पूर्वाधिकरणे रागतः प्राप्तप्रवृत्तिनिषेधकत्वस्य स्थापनात स्वेच्छाजन्यप्रवृत्तिमदधिकारकत्वसिद्धावपि परप्रेरणाजन्यप्रवृत्तेरनिषिद्धत्वेन तद्वतः शक्तस्यापि कथं निषेधाधिकार इत्यत आह—**परेति**। भक्षणादिभावनामात्रस्यैवानुवादेन निषेधः भावनागतस्वपरप्रेरणाजन्यत्वे तु नादर इत्यर्थः। **विवाहविधानादिति**। "वैवाहिको विधिः स्त्रीणां औपनायनिकः स्मृत" इति वचनेन विवाहस्योपनयनस्थानकत्वस्य स्त्रीशूद्रयोः समानधर्मत्वेन बोधनादित्यर्थः।

---

### ॥ अभ्यासः ॥

अत्र च भाष्यादिषु जीवने निमित्ते विहितस्य कर्मणो निमित्तसान्तत्येन नैमित्तिकत्वात सातत्येनानुष्ठानमिति पूर्वपक्षं प्रापय्य सायमादिकालविधायिशास्त्रविहितवशात् सङ्कोचो निमित्तस्य। इतरथा कालरूपाङ्गत्यागेन वैगुण्यापत्तेः अनुपादेयत्वात् यथाशक्त्युपबन्धविषयत्वानुपपत्तेरिति सिद्धान्तितम्। तदनेन पूर्वपक्षसिद्धान्तकरणेनापाततो यावद्विशेषविहितकालाङ्गके नैमित्तिककर्ममात्रे सनिमित्तसङ्कोच इत्युक्तं भवति। यथा सोमनिमित्तभूतस्य मासद्वयात्मकवसन्तस्य पर्वादिना सङ्कोचः, इतरथा तत्रापि यावद्वसन्त-

**जीवनादिनिमित्तकाग्निहोत्रादौ** निमित्तस्य **प्रतिक्षणं भेदात् प्रतिनिमित्तं नैमित्तिकावृत्त्या सन्ततानुष्ठानप्रतीतेस्तदनुरोधेन चाशक्याङ्गत्यागस्य वक्ष्यमाणत्वात्**कालस्यापि

---

समाप्ति सान्तत्येन सोमानुष्ठानापत्तेः। परं तु सायङ्कालावच्छिन्नस्य पर्वावच्छिन्नस्य वा जीवनस्य निमित्तत्वेऽपि तथाविधे निमित्ते एकवारमनुष्ठानोत्तरमपि तत्तत्कालावच्छिन्नजीवनरूपनिमित्तलाभे सति पुनरनुष्ठानापत्तिस्तु नैतदधिकरणसिद्धान्तेन निवारयितुं शक्यते। एवं राहूपरागादिनिमित्तस्नानस्य सकृदनुष्ठानानन्तरमपि यावद्राहूपरागसमाप्ति निरन्तरानुष्ठानमनिवार्यमेव। तत्रेतरकालस्यानङ्गत्वेन निमित्तावच्छेदकत्वासम्भवात्। अतः कालान्तरस्यावच्छेदकत्वे तदभावेपि वा निमित्तसातत्येन नैमित्तिकस्य सातत्येनानुष्ठानमेवं वारणीयम्—

निमित्ते हि कर्म चोद्यते निमित्तत्वं च नियतानुष्ठापकत्वं तस्मिन् नियतानुष्ठापकत्वे सम्प्राप्ते कर्मानुष्ठानं कार्यमिति शास्त्रार्थः। न तु यावत तत्समाप्ति द्वित्रिचतुर्वारं वाऽनुष्ठानं तद्बोधकाभावात्। तस्य च शास्त्रार्थस्य सकृत्करणेनापि सिद्धेर्न पुनरनुष्ठानप्रसङ्गः। **यद्यपि** नियतानुष्ठापकसम्प्राप्तिः सकृदनुष्ठानानन्तरमपि मध्येऽस्ति **तथापि** तस्याः अनुष्ठापकतायाः सकृदनुष्ठानप्रयोजकत्वेनैव चरितार्थाया नानुष्ठानान्तरप्रयोजकत्वमपि कल्पनीयं, गौरवात्, प्रमाणाभावाच्च। अतश्च मिमित्तं न यावद्भिन्नबुद्धिविषयं भवति न तावदनुष्ठानान्तरप्रयोजकं भवतीत्येकबुद्धिविषयं निमित्तमेकवारमेव स्वोत्पत्तौ सत्यां प्रयोजकमिति शास्त्रार्थनिर्णयान्न पूर्वोक्तातिप्रसङ्गापत्तिः। एवं च मासद्वयात्मकस्य वसन्तस्यावान्तरतिथिषु वसन्तत्वेऽपि भिन्नबुद्धिविषयत्वाभावादेकबुद्धिविषयत्वाच्च निमित्तैक्यात् सकृदेवानुष्ठानं प्राप्तं न सातत्येन, येन पर्वादिकालः सातत्यानुष्ठाननिवारकः सन्नवच्छेदको भवेत्। किन्तु तिथ्यन्तरकालीनतावारक एव। सातत्यानुष्ठानस्य न्यायादेवाप्राप्तेः। ततश्च वसन्ते सकृत्कर्तव्यस्य सोमस्य यदा कदाचित करणे प्राप्ते पर्वानुरूपाङ्गानुग्रहाय तत्रैवानुष्ठानमिति यथैव वसन्तादिनिमित्ते विधीयमानसोमादेः पूर्वोत्तरपक्षासम्भवात् नैतदधिकरणविचारास्पदता; एवं जीवनस्यादेहपातमेकत्वात् तस्मिन् सकृदनुष्ठानस्यैव प्राप्तौ सायमादिकालानुग्रहाय तत्रैवानुष्ठानं भविष्यतीति कथमेतदधिकरणविचारास्पदत्वमित्याशङ्कानिराकरणायाह— **निमित्तस्य प्रतिक्षणं भेदादिति।** प्राणनक्रियापरपर्यायाणां जीवनानां प्रतिक्षणं भेदान्निमित्तभेदे सति प्रकृते सातत्येनानुष्ठानं संभवतीत्यर्थः। **कालस्यापि चेति।** सायंजुहोति प्रातर्जुहोतीत्यादिविधिविधेयसायमा-

**चाङ्गत्वेन त्यागोपपत्तेः काम्यविषयत्वेन तस्य सार्थक्याच्च सान्तत्यानुष्ठानम्।** अत एव **सोमे वसन्तस्य निमित्तत्वात् तत्रैकैकस्मिन् सकृत्करणप्रतीतेः अमावास्यादिकालानुग्रहेऽपि न क्षतिरिति प्राप्ते—**

**आहारविहाराद्यनुरोधेन निमित्तश्रुतेरवश्यं सङ्कोचनीयत्वात् अग्निविद्याभ्यामिव कालेनापि सा सङ्कोच्यते। न हि कालस्याङ्गत्वेऽपि यथाशक्त्युपबन्धविषयत्वं, यस्यैव हि प्रयोगविधिप्रयोज्यत्वेन शक्तावनुष्ठानप्रसक्तिः तस्यैवाशक्तौ निमित्तश्रुत्यनुरोधेन त्यागः। ततश्च यथैवाग्निविद्ययोर्विध्यन्तरप्रयुक्त्युपजीवकत्वेन प्रयोगविध्यप्रयोज्यत्वं न** तत्, **तथा कालस्यापि स्वरूपेणाननुष्ठेयस्य प्रयोगविध्यप्रयोज्यत्वाद्यथाशक्त्युपबन्धविषयत्वानुपपत्तेः। कालबिधिनाऽपि निमित्तश्रुतिसङ्कोचान्न सान्तत्येनानुष्ठानम्। अत एव 'यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इति** काले नैमि-**त्तिकातिक्रम एव प्रायश्चित्तम्॥ ७॥**

---

दिकालस्याङ्गत्वेन त्याग उचित इत्यर्थः। **अत एव सोमेति।** व्याख्यातोऽयं ग्रन्थः। **न तदिति।** न यथाशक्त्युपबन्धविषयत्वमित्यर्थः। **काले नैमित्तिकातिक्रमे प्रायश्चित्तमिति** नन्वेवमपि सायंकालादौ पौर्णमास्यामेव यावत् पौर्णमासीसायंकालादीनां समाप्तिस्तावज्जीवनानामपि प्रतिक्षणं भिन्नतया निमित्तभेदान्नैमित्तिकावृत्तिरनिवार्यैव। न च कालस्यापि नैमित्तिककोटावन्तर्भावात् तस्य चैकत्वेन नावृत्तिप्रसङ्गः। अत एवोक्तमत्र **भाष्यकारेण** न कालो गुणो निमित्तं द्योतयतीति वाच्यम्। कालान्तरीणजीवननिमित्तताव्यावर्तनेन निमित्ततावच्छेदकत्वेऽपि तस्य निमित्तत्वाभावात्। अत एवात्र **तन्त्ररत्नकृता** वास्तवं निमित्तत्वं न संभवतीत्यतो निमित्तसूचकत्वेनार्थान्निमित्तमित्यभिप्रायेण 'भाष्यं व्याख्यातम्। नहि युक्तं कालस्य निमित्तत्वं कथंभावापेक्षिताङ्गपरत्वे संभवत्यनपेक्षितनिमित्तपरत्वायोगात्। यदि च निमित्तपरा कालश्रुतिः न तर्हि काम्यस्य तत्कालत्वं सिद्ध्येत। अपि चैवं यावज्जीवादिश्रुतेरानर्थक्यं स्यात् प्रदोषे निमित्ते कर्मविधानेन यथेष्टप्रयोगसिद्धेः। अतः कालस्यानुपादेयाङ्गत्वादागते काले कर्तव्यमित्यर्थान्निमित्तसङ्कोचकत्वेन निमित्तत्वव्यवहारमात्रम्। अत एव पर्वावृत्तावपि वसन्तस्यैकत्वान्न निमित्तभेद इति तदनुरोधेन नैमित्तिकसोमस्य नावृत्तिरित्युत्तराधिकरणे वक्ष्यते इति चेत्।

**अत्रोच्यते।** सत्यं पौर्णमास्यादिकालसमाप्तिपर्यन्तमस्ति जीवनानां भेदः तथापि जीवने निमित्ते पौर्णमास्यादिकालेषु तत्तत्कर्मानुष्ठानमिति शास्त्रार्थस्य सकृत्करणेनापि सिद्धेर्न पुनरनुष्ठान-

## (८)—तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ २७ ॥ तथा हि लिङ्ग-दर्शनम् ॥ २८ ॥

**कालशास्त्रेण निमित्तशास्त्रस्य सङ्कोचेऽपि यदा कालावच्छिन्नस्य निमित्तस्य पुनस्सन्निपातस्तत्र नैमित्तिकावृत्तिः। इतरथा स्वोत्पत्तावावश्यानुष्ठापकत्वरूपनिमित्तत्वानुपपत्तेः। अत एव यत्र तस्मिन्नेव निमित्ते कालमात्रस्यावृत्तिस्तत्र न नैमित्तिकावृत्तिः। यथा एकस्मिन्नेव वसन्ते पर्वावृत्तौ। अत्र च पूर्वपक्षस्यातितुच्छत्वात् सुहृद्भूत्वोपदेश इति मन्तव्यम् ॥ ८ ॥**

---

प्रसङ्गः। न हि पौर्णमासस्यादिकालेष्वनवरतमनुष्ठेयमित्यस्ति विधानं किन्तु तत्तत्कालेषु कर्म कर्तव्यमित्येव। तत्तु सकृत्करणेनापि सम्पद्यत एव। पौर्णमास्यादिकालो लम्बायमानोऽस्तीत्येतावता तु न तदनुरोधेन कर्मावृत्तिः गुणानुरोधेन प्रधानावृत्तौ प्रमाणाभावात्। उक्तं चोत्तराधिकरणेषु तत्र तत्र तन्त्ररत्ने—न हि कर्माङ्गत्वेन वसन्ते विहिते यावद्वसन्तमनुष्ठानं प्राप्नोति न ह्यङ्गमस्तीति कृत्वा प्रधानमनुष्ठातव्यं भवति इति। तथा सकृत् कृतेऽपि च कालशास्त्रं कृतार्थं भवतीति च। अत एव दिनद्वये तत्तत्कर्मकालस्पर्शे सति गुणभूतकालानुरोधेन प्रधानावृत्तेरन्याय्यत्वेन दिनद्वयेपि कर्मानुष्ठानासम्भवादेकतरत्र न्यायेनानुष्ठाने प्राप्ते पूर्वत्रैवोत्तरत्रैव वेत्येवं व्यवस्थाविधायकानि तत्तत्स्मृतिवाक्यानि निर्णायकानि। दिनद्वयेपि कर्मकालास्पर्शे तु गुणभूतकालानुरोधेन सर्वथा कर्मलोपस्यान्याय्यत्वात् तमनादृत्यापि कर्मानुष्ठानम्। वीप्सादिद्योतकाभावे उपपदविभक्तित्वाङ्गीकारे प्रमाणाभावेन करणविभक्त्याऽधिकरणबोधेन कालस्याङ्गत्वादित्यादिलिखनं कालनिर्णयकाराणाम्।

एवं चाङ्गभूतस्यापि कालादेः प्रयोगान्वयिगुणत्वेनैकस्य कालस्यैकप्रयोगाङ्गत्वादेकस्मिन् काले सकृत्प्रयोगानुष्ठानेनापि कालस्याङ्गतानिर्वाहात् सत्यपि जीवनरूपनिमित्तभेदे प्रयोगान्तरारम्भककालान्तराभावान्न पयोगावृत्तिः। अत एव तादृशकालान्तरसत्वे जीवनरूपनिमित्तभेदस्यापि सत्वात् प्रयोगान्तरं भवत्येवेत्युत्तराधिकरणे वक्ष्यते। सायमादिसर्वकालव्यक्तीनामयङ्गताबोधात्, न त्वेतावता तत्प्रयोगान्तरं गुणभूतकालप्रयुक्तम्। अपितु निमित्तभेदप्रयुक्तमेव। अत एव पुण्यकाले विहितानां निमित्तदानानां न प्रतिपर्वावृत्तिनियम इति ध्येयम्। एतदाशङ्कापरिहारार्थं पौर्णमास्यादिकालवत् पूर्वाह्णादिकालस्यावच्छेदकत्वेनावृत्त्यनुपपत्तेरिति यावज्जीवाधिकरणोक्तकौस्तुभोक्तिरप्येतदभिप्रायिकैव। इतरथा पूर्वाह्णादिकालावच्छिन्नपौर्णमास्यादिकालावच्छिन्नजीवनानामेव पूर्वाह्णादि-

## (९)—तथाऽन्तः क्रतुप्रयुक्तानि ॥ २१ ॥

पुरुषार्थनैमित्तिकवदेव क्रत्वर्थनैमित्तिकस्यापि भेदनहोमादेरेकस्मिन् प्रयोगे भेदनानेकत्वे यदि तावत् होमात्पूर्वं तदनेकता तदाऽगृह्यमाणविशेषत्वादश्वप्रतिग्रहेष्टिवच्च तावच्छब्दाभावात् तन्त्रेणैव होमकरणेऽपि होमोत्तरं तदनेकत्वे नैमित्तिकावृत्तिस्स्यादेव। न च तत्र क्रतुजन्यापूर्वोत्पत्तेः पूर्वं होमजन्यादृष्टस्य सत्त्वात्तेनैव प्रसङ्गिसद्ध्याशङ्का। तथात्वे निमित्ते सति नैमित्तिकाकरणे निमित्तत्वव्याघातात्। अत एव निमित्ताभावे होमाभावेऽपि क्रतूपकारसिद्धिः, तत्सत्त्वे तदनुष्ठानेन, तदावृत्तावावृत्तेनेत्यपि बोध्यम् ॥ ९ ॥

---

कालेषु भेदादावृत्तेरनिवार्यत्वापत्तेः। एवं चानग्नेरविद्यस्य अकाले च नैमित्तिकेषु नास्त्यधिकार इति सिद्धम्।

---

॥ तेषामौत्पत्तिकत्वात् ॥

पूर्वं व्याख्यातप्रायमेतत् ॥

॥ तथाऽन्तः क्रतुप्रयुक्तानि ॥

विशेषाशङ्का च दर्शिता तन्त्ररत्ने—युक्तं यत् पुरुषार्थं निमित्तावृत्तावावर्तते। तत्र हि प्रतिप्रयोगं फलभेदात् ऐश्वर्यलक्षणस्यावृत्तिर्भवति। क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारव्यतिरेकेण फलाभावात् तस्य चैकत्वात् सकृत्कृतेनैवाङ्गेन निवृत्तेरनावृत्तिर्युक्तेति विशेषाशङ्कायामतिदिश्यते इति। अत्र प्राचां ग्रन्थेषु पुरुषार्थनैमित्तिकवत् क्रत्वर्थनैमित्तिकस्यापि निमित्तावृत्तावावृत्तिरित्येतावतैव सिद्धान्तितं तत्र विशेषमाह—यदि तावदिति। तावच्छब्दाभावादिति। अश्वप्रतिग्रहेष्टौ निमित्तानेकत्वे तन्त्रेणैव नैमित्तिकस्य सकृदनुष्ठानं प्राप्तमपि तावच्छब्देन निमित्तसमसङ्ख्यतया नैमित्तिकस्य विधानात् बाध्यते न तथेहेत्यर्थः। यदुक्तं सकृत् कृतेनैवाङ्गेन क्रतूपकारफलनिर्वृत्तेर्नावृत्तिरिति तत्राह—अत एव निमित्ताभावे इति। यदि शास्त्रेण निमित्तसंप्राप्तौ नैमित्तिकस्यावश्यानुष्ठातव्यत्वमुक्तं, तदा यथैवासति भेदने विनापि भेदनहोमेन अङ्गान्तरैरेव जन्यते क्रतूपकारः सति तु भेदने भेदनहोमोपि सहायीभवति, तथैवावृत्ते भेदने गृह्यमाणविशेषत्वे च विद्यमाने आवृत्तेनैव भेदनहोमेन क्रतूपकारो जन्यत इति कल्पनादेषामपि क्रत्वर्थानां निमित्तावृत्तौ आवृत्तिर्युक्तैवेत्यर्थः ॥

(१०)—आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥ ३० ॥

आचारप्रमाणकेषु गुरुगमनादौ शिष्यानुगमनादिषु आवृत्तस्यैवाचारस्य दर्शनात् तन्मूलभूतश्रुतौ गुरुगमनादेर्निमित्तत्वकल्पनावगतेः प्रतिनिमित्तमावृत्तिः। न चाचरितॄणामावृत्तेर्दृष्टविधया गुरुप्रीत्यर्थत्वेनाप्युपपत्तेर्निमित्तत्वे प्रमाणाभावः। गुरुप्रीतेरुपायान्तरेणापि सिद्धेरधीतविद्येनाप्यनुष्ठानान्नियतानुष्ठानबलेन नैमित्तिकत्वप्रतीतेः। यत्तु—तन्त्ररत्ने शास्त्रेणैव सप्तमीशतृप्रत्ययादिना निमित्तत्वावगतिः गुरुगमनादेरित्युक्तं तच्छ्रुतिस्मृतिरूपशास्त्रसत्त्वे सूत्रकारोक्तस्याचारप्रमाणकत्वस्यानुपपत्तेरुपेक्षितम ॥

---

(११)—ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३१ ॥

---

॥ आचाराद्गृह्यमाणेषु ॥

गुर्वनुगमनादीनां तु दृष्टार्थत्वात् गुरुप्रीत्यादिवशेनैव सकृदसकृद्वा शिष्यानुगमनादीनामनुष्ठानं, न त्ववश्यं गुरुगमनादिनिमित्तावृत्तावावृत्तिरिति विशेषाकाङ्क्षया अधिकरणान्तरम्। अत्र सिद्धान्ते तन्त्ररत्नकृता दृष्टार्थेष्वपि नियमादृष्टस्याप्रतिहतत्वात्, तस्य च यथाशास्त्रं अवगमात् शास्त्रे च स्थिते तिष्ठेदिति सप्तमीबलेन गुरूपस्थानादीनां निमित्तत्वावगमात् अनूत्थाय तिष्ठेत् तं गच्छन्तमनुगच्छेत् धावन्तमनुधावेदित्येवमादौ लक्षणार्थेन शतृप्रत्ययेनानुगमनं प्रति गुरुगमनस्य निमित्तत्वप्रतीतेर्निमित्तावृत्तौ नैमित्तिकमावर्तितव्यमित्युक्तम्। तत्र प्रत्यक्षमिव दर्शितं शास्त्रं यत् तद्दूषयति—यत्तु तन्त्ररत्ने इति। वस्तुतस्तु तन्त्ररत्नकृता यदि प्रत्यक्षं विद्यमानमेव शास्त्रं लिखितमिति सूत्रोक्ताचारप्रमाणकत्वमेवानुपपन्नम्। अत आचारमूलभूतस्मृतिस्वरूपं निमित्तताप्रतिपादकशब्दघटितं कल्पितमेव शास्त्रत्वेनोक्तम्। अथवा पूर्वलिखितप्रत्यक्षस्मृतिनिबन्धनानामेव गुर्वनुगमनाचाराणामाचारत्वेन सूत्रकृता ग्रहणं कृतमिति न तन्त्ररत्नोक्तौ किंचिद्दूषणं, स्वयमपि कल्पितश्रुतावेव निमित्तत्वस्य प्रदर्शनादिति ध्येयम्।

---

॥ ब्राह्मणस्य तु सोमविद्याप्रजम् ॥

अत्र चावश्यककर्मविषयविचाराधिकारात् सोमादीनामप्यावश्यकत्वमस्ति नास्तीति चिन्त्यत इति लक्षणसङ्गतिः स्पष्टैवेति सङ्गतिरुक्ता तन्त्ररत्ने। अत्र भाष्यादिषु प्रथमतः सोमादीनां नित्यताप्रतिपादनपरतया एकधाऽधिकरणं व्याख्याय तेषु नित्येष्वपि ब्राह्मणस्यैवाधिकारं निरस्य त्रयाणामप्यधिकार इत्येवं वर्णकान्तरं कृतं, तत्र स्वयं भेदेन व्याख्याने प्रयोजनाभावा-

सोमस्य 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वचनादेव नित्यत्वम्। न चायं कालविधिः। 'वसन्ते ज्योतिषा यजेत' इति वीप्सारहितवाक्येनैव तद्विधानात्। न च विनिगमनाविरहः। गुणभूतकालानुरोधेन प्रधानावृत्तेरप्राप्ततया वीप्सार्थस्यापि विधेयत्वे वाक्यभेदापत्तौ प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायप्राप्तवीप्सार्थानुवादबलात् तद्वाक्यस्थाया एव सप्तम्या निमित्तपरत्वावसायात्। अग्निहोत्रादीनां तु नित्यत्वं स्थितमेव। एवं विद्याया अप्यध्ययनसहितायाः 'स्थाणुरयं भारहारः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम्, अनधीयाना व्रात्या भवन्ति, इत्यादिनिन्दोन्नीताकरणप्रत्यवायबलेन नित्यत्वम्। एवमुपनयनस्यापि षोडशादिवर्षोत्तरमकरणे प्रत्यवायश्रवणादेव नित्यत्वम्। यत्तु 'षष्ठे अन्नाद्यकामस्योपनयीत' इत्यादिफलश्रवणं तदुपनयनाश्रितषष्ठादिकालस्येति ज्ञेयम्। यत्तु तन्त्ररत्ने क्रतूनामावश्यकत्वात्तदपेक्षितविद्यादेरप्यावश्यकत्वेन फलतो नित्यत्वमुक्तं, तत् क्रतूनां विद्याप्रयोजकत्वस्य निरस्तत्वात्तद्वत एवावश्यकक्रत्वकरणे प्रत्यवा-

---

दुपेक्ष्यैकहेलयैव व्याख्यानान्तरतादर्शनेनाधिकरणविचारं दर्शयति—सोमस्येति। यद्यपि सूत्रकारेण सोमादीनां नित्यत्वं ऋणवाक्येन संयोगात साधितं तथापि तस्य लिङ्गदर्शनरूपस्य स्वतोऽसाधकत्वान्न्यायानुकूलमात्रमेव तदित्यतो न्यायेनैवैषां नित्यतां साधयति—वसन्ते वसन्ते इति। निमित्तत्वपरत्वावसायादिति। यद्यपि वसन्ते निमित्ते विधीयमानस्य सोमस्यानुष्ठाने वसन्तकालकत्वमपि लभ्यत एवेति न तत्प्राप्त्यर्थं वसन्ते ज्योतिषेति वचनापेक्षा। अत एव तन्त्ररत्ने वसन्तकालप्रापकत्वेनैतद्वचन-मनुपन्यस्यैव वीप्सायुक्तवाक्यस्य वीप्सामात्रबलादेव वसन्तकालविधानार्थमावश्यकं तद्वचनं, पर्जन्यवल्लक्षणप्रवृत्त्या नित्यसोमप्रयोगेप्यनिवारितप्राप्तीति तद्वचनाद्वसन्तकालप्राप्त्युपन्यासे न बाधकमिति। अत्र तन्त्ररत्ने सोमस्यैव नित्यतासाधने सूत्रस्थसोमपदस्वारस्यमनुगृहीतं भवतीत्यभिप्रेत्य सिद्धान्ते भाष्यकारेण अकामसंयुक्तान्येषां वाक्यानि भवन्ति वसन्ते वसन्ते ज्योतिषा यजेत यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, तथा विद्यामधीयीत तथा प्रजा उत्पादयितव्या इति सोमविद्याप्रजानां नित्यतासाधनप्रकारमध्ये यदग्निहोत्रदर्शपूर्ण-मासवाक्योपन्यसनं तत् दृष्टान्तार्थं यथा यावज्जीवादिश्रुतेरग्निहोत्रदर्शपूर्णमासयोर्नित्यत्वं एवं सोमादीनामपीत्युक्तम् —तदयुक्तम्। ऋणवाक्ये सामान्यतो यज्ञमात्रस्यैवो-पादानात्। सूत्रस्थऋणवाक्यस्य संयोगरूपहेत्वभिधानबलादेव सोमपदस्य नित्ययज्ञमात्रोप-लक्षणत्वप्रतीतेरग्निहोत्रादीनामप्येतदधिकरण एव नित्यत्वस्य वक्तव्यतौचित्यात्। अतो न दृष्टान्तार्थमग्निहोत्रादिग्रहणमपि तु पूर्वं साधितमेव भाष्यकृता स्मारितमित्यभिप्रायेणाह— अग्निहोत्रादीनान्त्विति। आदिपदेन नित्ययज्ञान्तरसङ्ग्रहः। निरस्तत्वादिति। चातुर्वर्ण्यम-

यावगतेः विद्यादेरकरणे क्रतूनामनधिकारादेवानावश्यकत्वादुपेक्षितम्। एवं प्रजोत्पादनमपि 'अनुत्पाद्य सुतं मोहान्मोक्षमिच्छन् पतत्यधः' इत्यविरक्तस्य प्रत्यवायश्रवणान्नित्यत्वम्। अत एव 'जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इत्यपि सङ्गच्छते। न चात्र ब्राह्मणपदश्रवणात्तस्यैवैते नित्याः इतरयोस्त्वनावश्यका इति शङ्क्यम्। अस्यात्रदानविधिशेषत्वेनार्थवादस्य विधायकत्वाभावेनात्रत्यब्राह्मणपदस्योपलक्षणत्वात्॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
षष्ठस्याध्यायस्य द्वितीयः पादः.

---

विशेषणादित्यधिकरणे अत्रैव प्रथमपाद इति शेषः। विधायकत्वाभावेनेति। तैत्तिरीयशाखायां षष्ठाष्टके "एकादशावदानान्यवद्यति दश वै पशोः प्राणाः आत्मैकादश इत्याद्यवदानोपक्रमस्य तदवदानैरेवावदयते तदवदानानामवदानत्वं" इत्युपसंहारस्य चान्तराले अस्यार्थवादरूपेण विधानान्न विधायकत्वमित्यर्थः। यत एवास्य न स्वतो विधायकत्वं न वा विधिकल्पकत्वं, अत एव ऋणसंस्तवकल्पेन विधिना चौलादिवदावश्यकः स्वतन्त्र एव ब्राह्मणस्य सकृत्प्रयोगो विधीयत इति न्यायसुधोक्तमपास्तम्। एतदधिकरणभाष्यादिविरोधाच्च।

इति श्रीखण्डदेवान्तेवासिकविमण्डन-
श्रीशम्भुभट्टविरचितायां भाट्ट-
दीपिकाप्रभावल्यां षष्ठस्य
द्वितीयः पादः

---

# अथ षष्ठाध्यायस्य तृतीयः पादः

(१)—सर्वशक्तौ प्रवृत्तिस्स्यात्तथा भूतोपदेशात् ॥ १ ॥ अपि वाऽप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात ॥ २ ॥ तदकर्मणि च दोषस्तस्मात्ततो विशेषस्स्यात प्रधानेनाभिसम्बन्धात् ॥ ३ ॥ कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशस्स्यादिति ॥ ४ ॥ अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्यात यथा क्रत्वन्तरेषु ॥ ५ ॥ विध्यपराधे च दर्शनात्समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥

नित्यनैमित्तिकानां कर्मणां काम्यवत्सर्वाङ्गोपसंहारेणैव प्रयोगः, एकादशे सर्वेषामङ्गानां साहित्येन क्रतूपकारजनकत्वस्य स्थापयिष्यमाणत्वात्, तिर्यगधिकरणे यथाविनियोगम-

---

॥ सर्वशक्तौ प्रवृत्तिः स्यात् ॥

अत्र यज्जीविके प्रयोगे किं सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारः, उत[1] यदा यावन्ति शक्नोत्युपसंहर्तुं तदा तावद्भिरुपेतं प्रधानं कुर्वन्नपीति संशयं स्पष्टत्वात् अनुल्लिख्यैव तिर्यगधिकरणे साङ्गप्रधानभावनानुष्ठानसमर्थाधिकारस्य सिद्धान्ते साधितस्योपक्रमेण पूर्वमक्षमारचयति — **नित्यनैमित्तिकानामिति**। अत्र नियतनिमित्तानि नित्यपदेन अनियतनिमित्तानि नैमित्तिकपदेन गृह्यन्ते—यथा अग्निहोत्रजातेष्ट्यादीनि तेषामेव विषयत्वमित्यर्थः। **एकादशे इति**। तत्र हि **अङ्गानां तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्व**मिति द्वितीयाधिकरणेऽङ्गान्तरमन्तरेणापि एकेन द्वाभ्यां वा अङ्गाभ्यां प्रधानं समापनीयमिति पूर्वपक्षं प्रापय्य सर्वाण्यङ्गानि युगपत् कथंभावाकाङ्क्षिण्या भावनया इत्थंभावेन गृह्यन्ते इति सर्वेषां सम्भूयैव प्रधानोपकारकत्वमिति सिद्धान्तितम् तेनासत्सु सर्वेष्वङ्गेषु प्रधानोपकारानिष्पत्तेरनुपकृताच्च फलाभावात असति फले चाधिकाराभावात् नैकदेशोपसंहारसमर्थस्याधिकारः सम्भवतीति भावः। प्राचां सिद्धान्तयुक्तिमनूद्य दूषयति

---

1. T. उतासमर्थस्यापीति संशयं

धिकारकल्पनस्य स्थितत्वाच्च। न चैवं नित्येऽपि तथा कल्पने सर्वाङ्गोपसंहारासामर्थ्ये सत्यनुष्ठानाभावान्निमित्तत्वव्याघातः। अवश्यानुष्ठापकत्वरूपस्य निमित्तत्वस्य कालाग्निविद्यादिभिरवच्छेदवच्छक्तयाऽप्यवच्छेदोपपत्तेः। अतश्च यथैव कालाद्यवच्छिन्नजीवनादेरेव निमित्तत्वादकालादौ निमित्ताभावादेव नैमित्तिकाकरणे न प्रत्यवायः तथा शक्त्यभावेऽपीति बोध्यम्। न च कदाऽपि सर्वाङ्गोपसंहारासामर्थ्यं, काम्येऽपि तदापत्तेः। न वा सकृदेव सर्वाङ्गकरणसामर्थ्यमिति नियमे प्रमाणमस्ति। येन वीप्साद्यनुपपत्तिराशङ्क्येत, काम्यस्याप्यावृत्त्यनुपपत्तेः। किञ्च निमित्तस्यानुष्ठापकतया कालदेशादिवत्प्रयोगान्वयित्वात् यथैव 'अप्स्ववभृथेन चरन्ति' इत्यादावपां देशत्वात्साङ्गप्रधानान्वयित्वं तथा निमित्तस्यापि। अतश्चानेकेषु प्रधानेषु यथा न यथाशक्त्युपबन्धः तदकरणस्य प्रत्यवायजनकत्वबोधनादेवमङ्गानामपीति न तेषु यथाशक्त्युपबन्धः। अत एव तद्वदेव तृतीयानिर्देशोऽपि सङ्गच्छते प्रयोगान्वयितया च निमित्तश्रुतेरङ्गविनियोगोत्तरकालीनत्व-

---

न चैवमिति। शक्त्यभावेति। अवच्छेदिका च नात्र शक्तिः सामान्यरूपेण, किन्तु यावत्किञ्चित्कर्मानुष्ठानौपयिकद्रव्यारोग्यशक्त्यादि, तत्सामग्रीयुक्तं त्वेतदेवाधिकारिविशेषणं सन्निमित्तेप्यधिकारसङ्कोचकं भवत्यग्निविद्ये इव। एवं च स्वतः सिद्धाग्निविद्यावत् साङ्गप्रधानभावनानुष्ठानसमर्थाधिकारिजीवने निमित्ते सति नैमित्तिकाकरणे प्रत्यवायबोधनेपि तथाविधनिमित्ताभावे नैमित्तिकाकरणे प्रत्यवायानुत्पत्तेरवश्यानुष्ठापकत्वस्यैवासम्भवात् न तदनुरोधेनाङ्गत्याग उचितः इति भावः। ननु कदापि पुरुषस्य सर्वाङ्गोपसंहारसामर्थ्याभावात् कमधिकृत्य नैमित्तिकशास्त्रप्रवृत्तिरित्याशङ्क्य परिहरति—न चेति। एवमङ्गानामपीति। तर्ह्येतावता अङ्गानां प्रधाननैरपेक्ष्येण निमित्तसम्बन्धात् पृथगनुष्ठानं प्रधानव्यतिरेकेणापद्येतेत्याशङ्कां निरसितुमाह—तद्वदेवेति। यथा चावभृथेन चरन्तीत्यत्रावभृथेनेति तृतीयाश्रुत्या साङ्गप्रधानस्यैव करणत्वात् साङ्ग एव प्रधाने देशसम्बन्धो न तु परस्परनैरपेक्ष्येण इतरेतरयोः एवमिहापि यावज्जीववाक्ये दर्शपूर्णमासाभ्यामिति तृतीयया साङ्ग एव प्रधाने निमित्तसम्बन्धान्न पृथगनुष्ठानप्रसक्तिरिति भावः। नन्वस्तु निमित्तसम्बन्धात् प्रागग्निविद्यादीनामधिकारिविशेषणत्वेन क्लृप्तानां निमित्तावच्छेदकत्वं सर्वाङ्गकरणस्य तु प्रागक्लृप्तस्य कथं निमित्तावच्छेदकत्वमित्याशङ्कां परिहरति—प्रयोगान्वयितयेति। प्रयोगो हि साङ्गप्रधानस्वरूपावगमोत्तरं भवतीत्युत्पत्तिवाक्य एव कथंभावाकाङ्क्षिणीभिः प्रधानभावनाभिः सह प्रकरणादिकल्पितश्रुत्या सर्वाङ्गकरणस्य निमित्तावच्छेदकत्वं नासुलभमिति भावः।

# अथ षष्ठाध्यायस्य तृतीयः पादः

(१)—सर्वशक्तौ प्रवृत्तिस्स्यात्तथा भूतोपदेशात् ॥ १ ॥ अपि वाऽप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात ॥ २ ॥ तदकर्मणि च दोषस्तस्मात्ततो विशेषस्स्यात प्रधानेनाभिसम्बन्धात् ॥ ३ ॥ कर्मभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशस्स्यादिति ॥ ४ ॥ अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्यात यथा क्रत्वन्तरेषु ॥ ५ ॥ विध्यपराधे च दर्शनात्समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥

नित्यनैमित्तिकानां कर्मणां काम्यवत्सर्वाङ्गोपसंहारेणैव प्रयोगः, एकादशे सर्वेषामङ्गानां साहित्येन क्रतूपकारजनकत्वस्य स्थापयिष्यमाणत्वात्, तिर्यगधिकरणे यथाविनियोगम-

---

॥ सर्वशक्तौ प्रवृत्तिः स्यात् ॥

अत्र यज्जीविके प्रयोगे किं सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारः, उत[1] यदा यावन्ति शक्नोत्युपसंहर्तुं तदा तावद्भिरुपेतं प्रधानं कुर्वन्नपीति संशयं स्पष्टत्वात् अनुल्लिख्यैव तिर्यगधिकरणे साङ्गप्रधानभावनानुष्ठानसमर्थाधिकारस्य सिद्धान्ते साधितस्योपक्रमेण पूर्वमक्षमारचयति — **नित्यनैमित्तिकानामिति**। अत्र नियतनिमित्तानि नित्यपदेन अनियतनिमित्तानि नैमित्तिकपदेन गृह्यन्ते—यथा अग्निहोत्रजातेष्ट्यादीनि तेषामेव विषयत्वमित्यर्थः। **एकादशे इति**। तत्र हि **अङ्गानां तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वमिति** द्वितीयाधिकरणेऽङ्गान्तरमन्तरेणापि एकेन द्वाभ्यां वा अङ्गाभ्यां प्रधानं समापनीयमिति पूर्वपक्षं प्रापय्य सर्वाण्यङ्गानि युगपत् कथंभावाकाङ्क्षिण्या भावनया इत्थंभावेन गृह्यन्ते इति सर्वेषां सम्भूयैव प्रधानोपकारकत्वमिति सिद्धान्तितम् तेनासत्सु सर्वेष्वङ्गेषु प्रधानोपकारानिष्पत्तेरनुपकृताच्च फलाभावात असति फले चाधिकाराभावात् नैकदेशोपसंहारसमर्थस्याधिकारः सम्भवतीति भावः। प्राचां सिद्धान्तयुक्तिमनूद्य दूषयति

---

1. T. उतासमर्थस्यापीति संशयं

धिकारकल्पनस्य स्थितत्वाच्च। न चैवं नित्येऽपि तथा कल्पने सर्वाङ्गोपसंहारासामर्थ्ये सत्यनुष्ठानाभावान्निमित्तत्वव्याघातः। अवश्यानुष्ठापकत्वरूपस्य निमित्तत्वस्य कालाग्निविद्यादिभिरवच्छेदवच्छक्तयाऽप्यवच्छेदोपपत्तेः। अतश्च यथैव कालाद्यवच्छिन्नजीवनादेरेव निमित्तत्वादकालादौ निमित्ताभावादेव नैमित्तिकाकरणे न प्रत्यवायः तथा शक्त्यभावेऽपीति बोध्यम्। न च कदाऽपि सर्वाङ्गोपसंहारासामर्थ्यं, काम्येऽपि तदापत्तेः। न वा सकृदेव सर्वाङ्गकरणसामर्थ्यमिति नियमे प्रमाणमस्ति। येन वीप्साद्यनुपपत्तिराशङ्क्येत, काम्यस्याप्यावृत्त्यनुपपत्तेः। किञ्च निमित्तस्यानुष्ठापकतया कालदेशादिवत्प्रयोगान्वयित्वात् यथैव 'अप्स्ववभृथेन चरन्ति' इत्यादावपां देशत्वात्साङ्गप्रधानान्वयित्वं तथा निमित्तस्यापि। अतश्चानेकेषु प्रधानेषु यथा न यथाशक्त्युपबन्धः तदकरणस्य प्रत्यवायजनकत्वबोधनादेवमङ्गानामपीति न तेषु यथाशक्त्युपबन्धः। अत एव तद्वदेव तृतीयानिर्देशोऽपि सङ्गच्छते प्रयोगान्वयितया च निमित्तश्रुतेरङ्गविनियोगोत्तरकालीनत्वा-

---

न चैवमिति। शक्त्यभावेति। अवच्छेदिका च नात्र शक्तिः सामान्यरूपेण, किन्तु यावत्किञ्चित्कर्मानुष्ठानौपयिकद्रव्यारोग्यशक्त्यादि, तत्सामग्रीयुक्तं त्वेतदेवाधिकारिविशेषणं सन्निमित्तेप्यधिकारसङ्कोचकं भवत्यग्निविद्ये इव। एवं च स्वतः सिद्धाग्निविद्यावत् साङ्गप्रधानभावनानुष्ठानसमर्थाधिकारिजीवने निमित्ते सति नैमित्तिकाकरणे प्रत्यवायबोधनेपि तथाविधनिमित्ताभावे नैमित्तिकाकरणे प्रत्यवायानुत्पत्तेरवश्यानुष्ठापकत्वस्यैवासम्भवात् न तदनुरोधेनाङ्गत्याग उचितः इति भावः। ननु कदापि पुरुषस्य सर्वाङ्गोपसंहारसामर्थ्याभावात् कमधिकृत्य नैमित्तिकशास्त्रप्रवृत्तिरित्याशङ्क्य परिहरति—न चेति। एवमङ्गानामपीति। तर्ह्येतावता अङ्गानां प्रधाननैरपेक्ष्येण निमित्तसम्बन्धात् पृथगनुष्ठानं प्रधानव्यतिरेकेणापद्येतेत्याशङ्कां निरसितुमाह—तद्वदेवेति। यथा चावभृथेन चरन्तीत्यत्रावभृथेनेति तृतीयाश्रुत्या साङ्गप्रधानस्यैव करणत्वात् साङ्ग एव प्रधाने देशसम्बन्धो न तु परस्परनैरपेक्ष्येण इतरेतरयोः एवमिहापि यावज्जीववाक्ये दर्शपूर्णमासाभ्यामिति तृतीयया साङ्ग एव प्रधाने निमित्तसम्बन्धान्न पृथगनुष्ठानप्रसक्तिरिति भावः। नन्वस्तु निमित्तसम्बन्धात् प्रागग्निविद्यादीनामधिकारिविशेषणत्वेन क्लृप्तानां निमित्तावच्छेदकत्वं सर्वाङ्गकरणस्य तु प्रागक्लृप्तस्य कथं निमित्तावच्छेदकत्वमित्याशङ्कां परिहरति—प्रयोगान्वयितयेति। प्रयोगो हि साङ्गप्रधानस्वरूपावगमोत्तरं भवतीत्युत्पत्तिवाक्य एव कथंभावाकाङ्क्षिणीभिः प्रधानभावनाभिः सह प्रकरणादिकल्पितश्रुत्या सर्वाङ्गकरणस्य निमित्तावच्छेदकत्वं नासुलभमिति भावः।

**च्छक्त्यवच्छेदकल्पनेऽपि न दोषः। एवं सत्यपि यदि निमित्तस्य प्राधान्यं स्यात्तदा तदनुरोधेनाङ्गेष्वेव शक्त्यवच्छेदः कल्प्येत, न त्वेतदस्तीति प्राप्ते—**

**न निमित्तस्यानुष्ठापकत्वं, अपि तु विधिबोधितस्यैवानुष्ठानस्यावश्यकताबोधकत्वमात्रं, तद्बोधस्य च फलं नैमित्तिकाकरणस्य प्रत्यवायजनकत्वबोधः। अन्यथा चेतनप्रवृत्तेरावश्यकत्वानुपपत्तेः। एवं चोक्तावश्यकत्वमेव सप्तम्यादिना बोध्यमानं नैमित्तिकान्वयि। अतश्च यथैव काम्ये प्रवर्तनाक्षिप्तेष्टसाधनत्वं प्रधानांश एव न तु साङ्गे, तथैव निमित्ताक्षिप्तप्रत्यवायजनकाकरणप्रतियोगित्वमपि प्रधान एव न तु साङ्गे। अत एव निमित्तस्यापि विनियोगविधावेवान्वयः। अत एव विनियोगोऽपि प्रवृत्तिजनकीभूतज्ञान-**

---

**अङ्गेष्वेवेति।** निमित्ते सति यथाशक्त्यङ्गसहितप्रधानं कुर्यादित्येवमङ्गेष्वेव शक्त्यवच्छेदः कल्प्येत इति भावः। **न त्वेतदस्तीति।** यतो न प्राधान्यं निमित्तस्य अत एव बह्वङ्गानुरोधेनैकस्मिन्निमित्त एव शक्त्यवच्छेदः कल्पयितुमुचित इत्यर्थः। **अकरणप्रतियोगित्वमिति** । अत्र च प्रतियोगित्वं सम्बन्धविशेषः यस्मिन् सति अस्याकरणमिति प्रतीतिरुपजायते न त्वभावप्रतिस्पर्धिस्वरूपसम्बन्धात्मकं तस्य करणे एव सम्भवेन दर्शपूर्णमासादावसम्भवात्। तथा चाग्निहोत्रादि नित्यं कर्म अनिष्टजनकीभूताकरणप्रतियोगि अयमत्रावश्यं प्रवर्ततामित्याकारकाप्तेच्छाविषयत्वात् यथा आप्तोपदिष्टं राजाभ्यागमननिमित्तमुपायनमित्यनुमानात् प्रत्यवायसाधनाकरणप्रतियोगित्वस्य बोधोऽपि जायमानः प्रधानमात्रांश एव न तु अङ्गसहिततदंशे इति प्रधानमात्रस्यैवाकरणे प्रत्यवायापत्तेरावश्यकत्वं न त्वङ्गानामित्यर्थः। **अत एवेति। अयमर्थः** यद्ययं निमित्ते प्रयोगो विधीयेत तदा सायंकालादिवाक्यविहितप्रयोगातिरिक्तप्रयोगान्तरविधाने गौरवम्। अतः सायंकालादिवाक्यविहितस्य पूर्वप्रयोगस्यैव यावज्जीववाक्येन विनियोगान्तरफलकनिमित्तसम्बन्धमात्रमेव क्रियते क्लृप्तप्रयोगाणामेव विविदिषार्थं विनियोगान्तरवत्, न प्रयोगान्तरस्यापि नैमित्तिकत्वानुरोधेनाकरणे प्रत्यवायजनकत्वकल्पनाया आवश्यकत्वात्। तदपेक्षया प्रयोगान्तराभावकल्पनाकृतलाघवानुरोधेन विनियोगान्तरकल्पनायाः फलमुखत्वेन कल्पने बाधकाभावात्। अत एव प्रयोगविधित्वाभावादत्र तृतीया श्रूयमाणापि स्वर्गकामवाक्य इव साङ्गप्रधानगतकरणत्वपरापि अङ्गेषु प्रधानेन फले जनयितव्ये उपलक्षणतयैवान्वयबोधिका न तु फलजनकक्रियायां करणत्वेन विशेषणताबोधिका। इतरथा अङ्गानामपि फलकरणत्वात् समप्राधान्यापत्तेः।

अथवा प्रधानगतफलवत्वज्ञानात् पूर्वमङ्गानामनन्वयात् फलवाक्ये सर्वत्रैव तृतीया प्रधानमात्रगतकरणत्वपरैव तदन्वयकाले अङ्गानामनुपस्थितेः। अतएवोत्पत्तिवाक्ये

**विषयीभूतधर्मरूपः** उभयसाधारण **एव। अत एवाङ्गान्वयोऽपि प्रधानस्य एतदुत्तरकालीन एव, तस्य प्रधानगतफलवत्त्वज्ञानाधीनत्वात्॥**

**तत्र त्वयं विशेषः—यत्काम्ये विध्याक्षिप्तेष्टसाधनत्वज्ञानोत्तरमेवाङ्गविनियोगः। नित्ये तु विधिसदृक्कृतनिमित्ताक्षिप्तप्रत्यवायजनकाकरणप्रतियोगित्वज्ञाने जातेऽपि नाङ्गान्वयोऽनपेक्षितत्वात्। अपि तु** तदुत्तरं **प्रधानकरणकभावनाया भाव्यापेक्षायां पूर्वकृतपापक्षयस्य भाव्यत्वेऽवगते स इति बोध्यम्।**

---

इष्टसामान्यस्य भाव्यत्वावगमेऽपि तद्विशेषणसमर्पणं फलवाक्येन क्रियतां नाम। उत्पत्तिवाक्ये च यादृशमिष्टसामान्यं प्रति करणत्वमवगतं तादृशस्य त्यागे प्रमाणाभावात् प्रधानमात्रस्यैव चोत्पत्तिवाक्ये करणत्वावगमात् तन्मात्रस्यैव युक्तं करणत्वम्। तथा च फलेन यागे भावनीये इतिकर्तव्यताकाङ्क्षायां प्रयाजादीनामितिकर्तव्यतात्वेनान्वयेऽपि यागकरणिका स्वर्गभाव्यिका प्रयाजादीतिकर्तव्यतोपेता भावनेति फलवाक्ये बोधात् करणत्वं प्रधानमात्रस्यैव। प्रयोगवाक्ये तु यादृशी फलभावनेतिकर्तव्यतोपेता प्राप्ता तादृश्या एव समादिदेशविधायकवाक्येषु अनुवादात्। तत्र श्रूयमाणं तृतीयान्तं नामपदं साङ्गप्रधानगतकरणत्वानुवादकमिति साङ्गस्यैव देशाद्यन्वयित्वं इति विशेषः। एवं नैमित्तिकविनियोगविधावपि प्रधानमात्रस्यैव विनियोगादावश्यकत्वं निमित्तवशात् प्रतीयमानं प्रधान एव।

अत एवोक्तं **तन्त्ररत्ने** दर्शपूर्णमासादिशब्दो यद्यपि कालापेक्षो भवति न तु प्रयोगवाक्यविहितकालापेक्षः पौर्णमासीसंज्ञकस्य सततस्तत्रोपादानात्। अत उत्पत्तिवाक्यविहितकालयोगनिमित्तोऽयं शब्दः प्रधानमात्रवाची। तेन प्रधानमात्रं श्रुत्या निमित्ते विधीयते अङ्गानि तदर्थतया प्रकरणेन गृह्यन्त इति। **उभयसाधारण एवेति।** यथा काम्यस्य प्रवृत्तिजनकेष्टसाधनताज्ञानविषयीभूतेष्टसाधनत्वेन रूपेण विनियोगस्तथैव नैमित्तिकस्यापि प्रवृत्तिजनकीभूतप्रत्यवायजनकाकरणप्रतियोगित्वज्ञानविषयीभूततत्तत्प्रतियोगित्वेन रूपेण विनियोगस्ततश्च प्रवृत्तिजनकीभूतज्ञानविषयीभूतधर्मः काम्यनित्योभयसाधारणे विनियोगे प्रविष्ट इत्यर्थः। **तदुत्तरमिति।** यद्यपि यावज्जीववाक्ये निमित्ते नैमित्तिककर्मभावनाविधानं प्रथमत एव निरपेक्षं जायते पश्चाच्च निमित्तगतनैमित्तिकानुष्ठापकत्वान्यथानुपपत्त्या प्रत्यवायजनकाकरणप्रतियोगित्वकल्पनमिति प्राथमिकेष्टसामान्यभाव्यकभावनाबोधस्य न प्रत्यवायजनकाकरणप्रतियोगित्वज्ञानोत्तरत्वं तथापि इष्टसामान्यभाव्यकत्वबोधेपि तद्[illegible]भावस्यानुपदमेव वक्ष्यमाणत्वाद्यावत्या पा[illegible]भाव्यकत्वकल्पनयाङ्गान्वयः कल्पनीयः ततः पूर्वमेव प्रत्यक्षश्रुतनिमित्तान्वयस्य पुरःस्फूर्तिकतया

तदन्यथानुपपत्तिकल्प्यस्य प्रत्यवायकल्प्यमानस्यापि पापक्षयादेः फलस्य न प्रवृत्तिजनकत्वकल्पनं तद्विनापि निमित्ताक्षिप्तप्रत्यवायजनकाकरणप्रतियोगित्वज्ञानादेव प्रवृत्त्युपपत्तेः। अतो निमित्ते सति प्रत्यवायापत्तिभिया क्रियमाणान्नैमित्तिकप्रयोगात् काम्यप्रयोगादिव अनुषङ्गिकपापक्षयोत्पत्तिमात्रमित्यानुषङ्गिकत्वमुक्तं पापक्षयादेर्यावज्जीवाधिकरणे **कौस्तुभे**।

अत्रेदं तावत् **सिद्धान्त्येकदेशिमतं** नैमित्तिककर्मसु यदीतिकर्तव्यता भवेत् तदा तत्साकल्यसम्पादनसमर्थस्यैवाधिकार इति नियम्येत न त्विहेतिकर्तव्यताऽस्ति तेषां फलाभावेनापूर्वाभावे तत्प्रयुक्तायास्तस्या अप्यसंभवात्। न च निष्फले पुरुषप्रवृत्त्यसम्भवात् फलकल्पनं, तथात्वे फलनिमित्तयोरुभयोरपि प्रयोजकत्वेन प्रत्युद्देश्यं वाक्यावृत्तिप्रसङ्गात्, श्रुतनिमित्तत्वान्यथानुपपत्त्यैव प्रवृत्तिसिद्धेः पुरुषप्रवृत्त्यसंभवाभावाच्च। न चोत्पन्नाया भावनागतभाव्याकाङ्क्षायाः निमित्तेन अपुरुषार्थेन यागेन वाऽपूरणात् तदर्थं तत्कल्पनमिति युक्तम्। तर्हि फलनिमित्तयोरुभयोरपि प्रयोजकत्वकल्पने वाक्यभेदापत्तेः फलस्यैकस्यैव तत्कल्पने निमित्तत्वव्याघातापत्तेः। अगत्या निमित्तत्वपरित्यागेन काम्ये कर्मणि यावज्जीवकालस्यैव अङ्गत्वेन विधानापत्तिः।

किञ्च यदि नैमित्तिकेष्वपि फलं तदा काम्यवत् सर्वाङ्गोपसंहारस्यैवापत्तिः, नित्यकाम्यव्यपदेशानापत्तिश्च। न चाकामिते फले विद्यमानेपि तस्याश्रुतत्वेन कल्प्यत्वान्न प्रयोजकत्वं, अपि तु श्रुतस्य निमित्तस्यैवेति निमित्तवशादवश्यकर्तव्यप्रधानानुरोधेनैकदेशाङ्गोपसंहारः। फलानर्थिनोऽपि फलस्य विश्वजिन्न्यायेन स्वर्गरूपस्यैव कल्पनीयत्वात्। तस्य च शरीरारम्भकत्वेन बन्धात्मकतया मुमुक्षुकर्तव्यनैमित्तिककर्मफलत्वासंभवात् जीवनस्य निमित्तस्य मुमुक्षोरपि सत्वेन तत्प्रयुक्तनैमित्तिकानुष्ठानस्य कर्मस्वरूपनिष्पत्तिमात्रफलकत्वस्यावश्यकल्पनीयत्वे सर्वसाधारण्येनैव तत्फलकत्वकल्पने बाधकाभावाच्च। नैमित्तिकशास्त्रस्य तु मुमुक्षुभिन्नाधिकारिकत्वकल्पने सङ्कोचापत्तेश्च, मुमुक्षुं प्रति तच्छास्त्राप्रवृत्तौ जीवनगतनिमित्तत्वव्याघातापत्तेश्च। विश्वजिदधिकरणे **"स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्"** इति सूत्रकृता सर्वाभिलषितत्वेनैव स्वर्गकल्पनायाः साधितत्वात् अकामितस्य स्वर्गफलत्वायोगेन मुमुक्षुकर्तव्यादकामितस्वर्गफलोत्पादासंभवाच्च। अत एव कामनाद्योतकं स्वर्गकामपदमेवाध्याहर्तव्यमिति स्थितं तदधिकरणे। अतो मुमुक्षुसाधारण्येन

"अकुर्वन् विहितं कर्म प्रायश्चित्तीयते नरः।
दोषनिर्हरणार्थं हि प्रायश्चित्तं विधीयते।
चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।

**अत्र हि पापक्षयस्यैव भाव्यत्वं नित्यस्थले "धर्मेण पापमपनुदति" इत्यादिवाक्येभ्यः प्रतीयते अत एव न विश्वजिन्न्यायेन स्वर्गकल्पनं नवाऽपुरुषार्थस्यापि यागध्वंसस्यैव भाव्यत्वकल्पनं यागस्यैव वा तत्, तृतीयानिर्देशात् समानपदश्रुतेः करणत्वेनाप्युपपत्तेश्च। न च दर्शपूर्णमासादौ क्लृप्तानामेव स्वर्गादीनां नित्येऽपि भाव्यत्वोपपत्तौ 'धर्मेण' इत्यस्यान्यपरत्वं शङ्क्यम्। तथात्वे मुमुक्षोस्स्वर्गादीनामनिष्टत्वेन तदुत्पत्तौ शास्त्रस्याहितसाधनानुष्ठापकत्वे अप्रामाण्यापत्त्या यावज्जीवादिवाक्यस्यामुमुक्षुविषयतया सङ्कोचापत्तेः। पापक्षयस्य तु सर्वाभिलषितत्वात् निमित्तस्यैव प्रयोजकतया तस्य नैमित्तिकाप्रयोजकत्वेऽपि निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वे बाधकाभावः। न चोद्देश्यानेकत्वम्। तत्त्वेऽपि**

---

इत्यादि वचनाद्विहितकर्माकरणस्य प्रत्यवायजनकत्वावगतेस्तत्परिहाराय कर्मस्वरूपनिष्पत्तिमात्रमेव फलं नित्यनैमित्तिककर्मणां कल्पनीयम्। अर्थप्राप्तिवदनर्थनिवृत्तेरपि पुरुषार्थत्वेनाभ्युपगमात्। न चैवं तर्हि प्रत्यवायाभाव एव फलं स्यादिति वाच्यं, प्रतियोग्यनुत्पत्त्या तद्ध्वंसस्य स्वयं सिद्धत्वेन तत्प्रागभावस्य वा जन्यत्वाभावेन फलत्वानुपपत्तेः भावरूपस्यैव भाव्यत्वस्वीकारात्। न च प्रत्यवायप्रागभावपरिपालनं योगक्षेमसाधारणं **न्यायसुधाकृतोक्तं** फलं पूर्वसिद्धविधौ तद्विशिष्टकर्मातिक्रमात् प्रत्ययायोत्पत्तिः तादृशप्रत्यवायप्रागभावसिद्धौ तद्विधिरित्यन्योन्याश्रयापत्तेः। विधिविहितकर्मातिक्रमे एव प्रत्यवायबोधनात् प्रागभावतत्परिपालनस्यापि प्रतियोग्यनुत्पत्तिरूपस्योत्पत्तिप्रागभावात्मकतया तस्याप्यजन्यत्वेन फलत्वासम्भवात्। तस्मात् करणनिवृत्त्यात्मकाकरणस्य प्रत्यवायजनकस्य करणेन नाशे सति अर्थात् सामग्र्यभावादेव प्रत्यवायानुत्पत्तिमात्रं न तु तस्य कर्मफलत्वमिति फलाभावान्नेतिकर्तव्यतापेक्षेति कर्तव्यस्वरूपमात्रनिष्पादकद्रव्यदेवतात्मकसामग्रीसम्पादनसमर्थस्याप्यधिकार इति। तदिदमेकदेशिमतमत्र दूषयितुं यावज्जीवाधिकरणे नित्यनैमित्तिककर्मणां साधितमपि पापक्षयफलकत्वं पुनस्साधयति— **अत्र हीति। पापक्षयस्यैवेति।** एवकारेण फलायोगव्यावृत्तिः फलान्तरव्यवच्छेदश्च सूच्यते। तदेव दर्शयति—**अत एवेति। तृतीयानिर्देशादिति।** यजिसमानाधिकरणदर्शपूर्णमासपदे तृतीयानिर्देशाद्यागस्य करणत्वप्रतीत्या भाव्यत्वासम्भवात्। प्रत्युत करणत्वात्मनेपदेतरेतरयोगानां श्रवणाद्भाव्यान्तरसद्भावस्यैव प्रतीत्या तृतीयानिर्देशोपपत्तेः। इतरथा क्रियाजन्यफलस्यैवाभावे तस्य कर्तृगामित्वासम्भवे आत्मनेपदस्य कार्यापेक्षितेतरेतरयोगस्य चानुपपत्तेः। अतो विधिबलादस्त्यवश्यं भावनाया भाव्यम्। तच्च न यागस्तद्ध्वंसो वा सम्भवतीति भावः। यदुक्तं विश्वजिन्न्यायेन स्वर्गार्थत्वं तत्प्रकारान्तरेण स्वर्गार्थत्वाशङ्कानिराकरणव्याजेन दूषयितुं स्वर्गार्थत्वं मध्ये पुनराशङ्कते—**नचेति।** परिहरति—**तथात्वे इति। सर्वाभिलषितत्वादिति।**

ननु यदि मुमुक्ष्वमुमुक्षुसाधारणमिति सर्वाभिलषितं पापक्षयोऽत्र फलं तर्हि विश्वजिदधिकरणसिद्धान्तसूत्रेऽपि स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादिति सर्वाभिलषितत्वेनैव साधितः स्वर्गो विश्वजित्फलमपि न स्यात्, तत्रापि तस्य मुमुक्ष्वनभिलषितत्वेन अमुमुक्षुविषयतया शास्त्रसङ्कोचापत्तेः समत्वात्। **एतेन** प्रीतिर्हि स्वर्गः सर्वे च प्रीतिं प्रार्थयन्ते प्रीतिशेषं हि पुत्रपश्वादिकं कतिचिदेव पुरुषाः प्रार्थयन्ते। न च महाविषयत्वे सम्भवत्यल्पविषयत्वं शास्त्रस्य युक्तमङ्गीकर्तुमिति सर्वान् प्रत्यविशिष्टत्वादिति सूत्रपदविवरणं तदधिकरणस्थं **तन्त्ररत्नकारीयमपास्तं**, मुमुक्ष्वनभिलषितत्वेन सर्वाभिलषितत्वाभावात्। अतस्तत्र पापक्षयस्य, अथवा अत्र स्वर्गस्य फलत्वं दुर्वारमेव। न च धर्मेण पापमपनुदतीति विधेर्लाघवानुरोधेनेतरप्रयुक्तानुष्ठानवतो धर्ममात्रस्यानुषङ्गिकपापक्षयफलकत्वबोधकत्वकल्पनान्नित्यस्य काम्यस्य वा कर्मणो निमित्तकामप्रयुक्तानुष्ठानवत्वेन तद्विधिविषयत्वेन पापक्षयफलकत्वसम्भवेऽपि विश्वजितः फलान्तराभावे इतरप्रयुक्तानुष्ठानासम्भवादेतद्विधिविषयत्वायोगाद्विश्वजिति पापक्षयस्य प्रयोजकत्वकल्पने विधिवैरूप्यापत्तेर्नैतद्विधिबोध्यपापक्षयफलकत्वं युज्यत इति विश्वजिदधिकरणोपपादितं **पूज्यपादोक्तं** युक्तम्। एतद्विधिविषयत्वाभावेऽपि विनापि वचनं सर्वाभिलषितत्वेन स्वर्गफलार्थत्वकल्पनवत् सर्वाभिलषितत्वेनैव हेतुना पापक्षयफलार्थत्वकल्पनेपि बाधकाभावात्।

अपि च विधिलाघवेन तदनुरोधेन परप्रयुक्तानुष्ठानवत्कर्ममात्रविषयत्वमेव धर्मेणेत्यादिवाक्यानां यथा कल्प्यते तथा येषामेव कर्मणां परप्रयुक्तानां भाव्यानाकाङ्क्षित्वं तेषामेवानुषङ्गिकपापक्षयफलकत्वं कल्प्यत इति काम्यादिकर्मणां एतद्विधिविषयत्वसम्भवेपि नित्यकर्मभावनायां फलाकाङ्क्षित्वात् तत्कर्मण एतद्विधिविषयत्वे प्रमाणाभावः। इतरथा एकस्यैव धर्मपदस्य फलाकाङ्क्षतन्निराकाङ्क्षकर्मपरत्वे वैरूप्यापत्तेरपरिहार्यत्वात्। अत एव **तन्त्ररत्नादौ** येष्वेव सन्ध्योपासनादिकर्मसु

पूर्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति

इत्यादिवचनमस्ति तत्रैव वचनावगतं पापक्षयः फलमिति प्रदर्शनेनार्थात् वचनाभावे तत्समानन्यायादेव नित्यादिकर्मसु पापक्षयस्य फलत्वं दर्शितम्। अन्यथा सर्वाभिलषितत्वेनेति भवदुक्तन्यायोपन्यासस्य वैयर्थ्यापत्तेः। प्रत्युत धर्मेणेत्यादिवाक्यानां भाव्यसाकाङ्क्षकर्मपरत्वे आकाङ्क्षितविधित्वलाभान्नित्यादिकर्ममात्रपरत्वस्यैवापत्तौ काम्यानुषङ्गिकफलप्रतिपादकत्वानापत्त्या नित्यकाम्यस्थले काम्यप्रयोगादानुषङ्गिकपापक्षयोत्पत्तावपि केवलकाम्यात् तदुत्पत्त्यनापत्तिः।

**द्विकर्मकत्वाभावेन अवाक्यभेदात्। अतश्च पापक्षयभाव्यकत्वावगमोत्तरमेवाङ्गान्वयात्**

---

अतोऽवैरूप्याय धर्मेणेत्यादिवाक्यानां क्लृप्तफलककर्ममात्रविषयत्वमेव न वचनान्तरानवगताक्लृप्तफलककर्मविषयत्वं वाच्यं; तत्राक्लृप्तफलककर्मविषयत्वकल्पने सर्वाभिलषितत्वरूपन्यायादेव तेषु तत्फलकत्वसिद्धेः; वचनवैयर्थ्यापत्तेः। अगत्या क्लृप्तफलककर्मविषयकत्वकल्पनया तेष्वेवानुषङ्गिकपापक्षयबोधकत्वं युक्तमाश्रयितुम्। अत एव सर्वकाम्यकर्मणोऽपि नान्तरीयकः पापक्षय इष्ट एव।

यदि च धर्मेणेत्यादिवचनबलादेव पापक्षयस्यैतादृशे विषये फलत्वं तदा इष्यमाणज्ञानार्थत्वेन विविदिषार्थत्वेनापि वा यज्ञेनेत्यादिवाक्येन कर्ममात्रस्य विनियोगकरणादेतद्वचनावगतं सर्वाभिलषितं ज्ञानादिरूपं फलं लभ्यत एवेति किमिति पापक्षयफलकत्वसाधने प्रयासः सर्वेषाम्।

**यद्युच्येत** ज्ञानादिफलं मुमुक्षोरेवेष्टं अमुमुक्षोस्तु ज्ञानविषयस्यात्मनो दुर्विज्ञेयत्वादेव तदनभिलषितमिति शास्त्रस्य सङ्कोचस्तस्मिन् पक्षे आपद्यतेति। तर्हि यस्मिन् सर्वाभिलषिते फलत्वेन कल्पिते शास्त्रस्य महाविषयत्वलाभो भवति तदेव पापक्षयरूपं फलं कल्प्यत इति सर्वाभिलषितत्वमेव फलविशेषकल्पने मुख्या युक्तिर्वचनोपन्यासस्तदुपोद्बलक एव तस्या इत्यर्थे सिद्धे विश्वजित्यपि तस्या युक्तेः समानत्वात्पापक्षयफलकत्वमनिवार्यमेवेति चेन्न। विश्वजिता यजेतेत्यत्र काम्यैकाहकाण्डपठितत्वेन काम्यमान एव फले पुत्रपश्वादिरूपे कस्मिंश्चिदाश्रयणीये काम्येषु फलेषु सर्वाभिलषितत्वेन स्वर्गफलकत्वस्यैव युक्तत्वात् पापक्षयफलकत्वाङ्गीकारे काम्यमानफलकर्मप्रायपाठबाधापत्तेः। प्रकृते तु तादृशबाधकस्याभावात् प्रत्युत मुमुक्षुणा अहितस्वर्गसाधनत्वेन नित्यकर्माननुष्ठाने जीवनगतनिमित्तताव्याघातापत्तिबाधकस्य सत्वान्निषिद्धाचरणजन्यपापक्षयस्य फलत्वं युक्तमेव। एतदेवाभिप्रेत्य नित्यानां पापक्षयफलकत्वाङ्गीकारे विश्वजित्प्रतिबन्धाशङ्कितापि यावज्जीवाधिकरणे **कौस्तुभे** न परिहृता पूज्यपादैरिति दिक्।

**द्विकर्मकत्वाभावेनेति।** यद्यत्र निमित्तफलयोरेकरूपत्वं भवेत् तदा विरुद्धयोर्द्वयोरेकभावनायामन्वयासम्भवात् वाक्यावृत्त्या एकस्यान्वयः कल्पनीय आपतेत, न त्वेतदस्ति निमित्तस्य प्रयोजकतामात्ररूपोद्देश्यत्वेपि जन्यत्वाख्योद्देश्यत्वाभावेन भावनास्वरूपानुबन्धाभावात् फलस्य च प्रयोजकतासमानाधिकरणजन्यतारूपोद्देश्यत्वेन भावनास्वरूपान्तर्गतस्यैवैकस्य कर्मत्वेन भावनान्वयेनोद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तिप्रयोजकस्यैककर्मताभङ्गापत्तेरप्रसक्तेर्न वाक्यभेदापत्तिरिति भावः। **अङ्गान्वयादिति।** अतश्च पापक्षयस्य फलत्वे सिद्धे तदवान्तरव्यापारापूर्वस्यापि

**पूर्वावगतनिमित्तान्वयानुरोधेनाङ्गेष्वेव शक्त्यवच्छेदकल्पनम् ।**

**न चोत्पत्तिवाक्य एवाङ्गान्वयस्य वक्ष्यमाणत्वात् तत्र चेष्टसामान्यस्यैव भाव्यत्वात् तदवगमोत्तरत्वेऽपि न निमित्तसम्बन्धावगमोत्तरत्वमङ्गान्वयस्येति वाच्यम् । सामान्यगतविशेषापेक्षाया अन्तरङ्गत्वेन प्रथमं कामयावज्जीववाक्यैकवाक्यतया विशेषावगमोत्तरमेवाङ्गवाक्यैकवाक्यतयाऽङ्गान्वयाङ्गीकारेण तत्रैव शक्त्यवच्छेदोपपत्तेः । अत एव कामे निमित्ते च यस्याधिकारिणो यावन्ति** प्रमाणान्तर**प्रमितान्यङ्गानि तस्य तावद्भिस्सहितैराग्नेयादेरुपकुर्यादिति महावाक्यार्थकल्पनात् काम्ये सर्वाङ्गसाहित्यं, नित्ये च शक्त्यवच्छिन्नमित्यर्थलाभः । अतश्च यथैव एकस्यैव काम्यवाक्यस्य यावज्जीववाक्यस्य च सोमयाज्यसोमयाजिरूपाधिकारिभेदेन प्रधानसाहित्यभेदेऽपि यस्याधिकारिणो यावन्ति प्रमाणान्तरप्रमितानि तस्य तावतां कामे निमित्ते च विधायकत्वं तथाऽत्रापीति न कोपि दोषः । अतस्सिद्धं निमित्तश्रुत्यनुरोधेन यथाशक्त्यङ्गहीनेनापि प्रयोग इति । अत एव विध्यपराधे "तदेव यावत्कादग्धोतव्यम्" इति विगुणसमाप्तिं विध्यपराधे** प्रायश्चित्तं **च दर्शयति ॥ १ ॥**

---

सत्त्वात् तत्प्रयुक्तेतिकर्तव्यता नित्यनैमित्तिकयोरपि सिद्धेत्यर्थः । **पूर्वावगतनिमित्तेति ।** प्रथमतो हि निमित्ते सति नैमित्तिकमवश्यं कर्तव्यं प्रधानवाक्ये प्रतीयते तद्यदि कस्यचिदङ्गस्यानुरोधेन सत्यपि निमित्ते नैमित्तिकं न क्रियते ततः पूर्वावगतार्थप्रधानवाक्यविरोधः स्यात् । अतः प्रधानानुरोधेन पश्चादापतितेष्वङ्गेष्वेव जीवने निमित्ते यथाशक्त्युपबन्धः । यदि तु अशक्तस्य स न सिद्ध्यति तदा तदनुरोधे न यथाशक्त्युपबन्धेन संहारः स्यादित्याशङ्कानिराकरणायाह— **प्रमाणान्तरप्रमितानीति । अयमर्थः**—काम्येषु सर्वाङ्गोपसंहारसमर्थ एवाधिक्रियते । नहि तत्राङ्गत्यागे प्रमाणमस्ति । प्रधानवाक्यस्य सर्वाङ्गोपसंहारेप्यविरोधात् । नहि तस्यावश्यकर्तव्यत्वं केनचिदुक्तं यतः औदासीन्यं लभ्यते । काम्यश्रुतिस्तु समर्थेऽपि वर्तमाना न श्रुत्यर्थतां जहातीति नाङ्गत्यागाय भवति । निमित्तश्रुतिस्तु निमित्ते सत्यक्रियमाणे नैमित्तिके बाध्येतेति वैषम्यम् । अतएवोपक्रान्ते काम्येपि मध्ये फलावाप्तौ वीतायां वा तदिच्छायामवश्यकर्तव्यतानुरोधेनाङ्गत्याग इष्ट एव । एवं च काम्येषु सर्वाङ्गसाहित्यस्यैव प्रमाणप्रमितत्वात् नित्यनैमित्तिकेषु च निमित्तबोधितावश्यकर्तव्यप्रधानानुरोध्यङ्गसाहित्यस्यैव प्रमाणायातत्वात् तत्तदधिकारिणस्तावन्मात्राङ्गसहितप्रधानानुष्ठानादेव फलसिद्धौ न किञ्चिद्बाधकमिति । **प्रायश्चित्तं चेति ।** कपालभेदने निमित्ते होमाख्यं प्रायश्चित्तं विधीयते । यदि नित्यानां भेदनेन विगुणानां निष्फलत्वं तदा तेषामङ्गैः प्रयोजनाभावात्तद्विधानं नोपपद्यते । अतो विगुणेभ्योऽपि

(२)—काम्येषु चैवमर्थित्वात् ॥ ८ ॥ असंयोगात्तु नैवं स्यात् विधेश्शब्दप्रमाणत्वात् ॥ ९ ॥ अकर्मणि चाप्रत्यवायात् ॥ १० ॥

काम्ये तु यद्यपि फलसम्बन्धोत्तरमेवाङ्गान्वयः तथाऽपि साङ्गस्य प्रयोगविधिनाऽनुष्ठानावगमोत्तरं प्रवृत्तिकारणत्वेनोपस्थितायाः कामानायाः अधिकारिविशेषणत्वेन शक्त्याऽवच्छिन्नाया एव तत्कल्पनात् अकरणे प्रत्यवायाश्रवणाच्च सर्वाङ्गोपसंहारसमर्थस्यैवाधिकार इति प्रत्युदाहरणमात्रम् ॥ २ ॥

---

(३)—क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागस्स्यात् ॥ ११ ॥ अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

एवं यथाशक्त्युपबन्धे निरूपिते तच्छेषत्वेन प्रतिनिधिविचारे कर्तव्ये उपोद्घाततयेदं विचार्यते—तत्र मूले तावत् द्रव्यस्य क्रियातोऽत्यन्तभेदाभावात् द्रव्यभेदे कर्मभेदापत्तेः

---

नित्येभ्यः फलसद्भावात् तदर्थमङ्गानामपेक्षणान्नैमित्तिकाङ्गविधानं युज्यते इत्येतज्जातीयस्य सर्वस्य सङ्ग्रहार्थं विध्यपराधे इत्युक्तम् ।

---

॥ काम्येषु चैवमर्थित्वात् ॥

स्पष्टार्थमुक्तार्थं चैतत् ।

॥ क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥

एवमिति । काम्येष्वतिप्रसङ्गनिराकरणमेवंशब्दार्थः । तच्छेषत्वेनेति । अङ्गत्यागेनापि प्रयोगे कर्तव्ये स मुख्यद्रव्याभावे सति तं विनैव उत द्रव्यान्तरमुपादायापि कर्तव्य इत्येवं यथाशक्तिप्रयोगशेषत्वेन प्रतिनिधिविचारः करिष्यत इत्यर्थः । उपोद्घाततयेति । यदि द्रव्यभेदात् क्रियान्तरमेव भवति तदा उपात्तेऽपि प्रतिनिधितया द्रव्यान्तरे न व्रीह्यादिजन्यक्रियाव्यक्तिः सिद्ध्यति । व्रीह्यादिजन्यक्रियाव्यक्तिसिद्धये हि मुख्याभावे प्रतिनिध्युपादानं, न तु स्वतन्त्रक्रियान्तरसिद्ध्यर्थमिति प्रतिनिधित्वमेव न सिद्ध्येदिति तत्सिद्ध्यर्थमयं क्रियाभेदाभेदविचारः उपोद्घातरूपः क्रियत इत्यर्थः । क्रियात इति । यथैव गुणगुणिनोर्जातिव्यक्त्योर्वा

न नीवाराद्युपादाने विहितक्रियासिद्धिरिति पूर्वपक्षिते अत्यन्तभेदाभावेऽप्यत्यन्ताभेदस्या-प्यभावात् कर्तृदेशकालादिवत् द्रव्यभेदेऽपि तदेवेदं चलनं यजनमित्यादिप्रत्यभिज्ञाबलात् क्रियैक्यप्रतीतेः प्रतिनिध्युपादानेऽपि न क्षतिः। तत्र च जगतीतलवर्तिन्येकैव कर्मव्यक्तिः अभिव्यक्तिमात्रं तु भिद्यते। अथवा शब्दान्तरादिप्रमाणैरेव व्यक्तिभेदः, द्रव्यदेशकाल-कर्तृव्यक्त्यादिभिस्तु तस्या एव व्यक्तेरभिव्यक्तिभेदमात्रम्। अथवा अस्तु तत्रापि व्यक्तिभेदः शब्दान्तरादिप्रमाणैश्चाग्नेयत्वादिजातय एव भिद्यन्त इति सिद्धान्तितम्।

तत् द्रव्याश्रितत्वेऽपि क्रियायास्तद्भेदे वैजात्यस्य शङ्कितुमशक्यत्वात् व्यक्त्यैक्यसि-द्धान्ते चापूर्वापह्नवापत्तेः। तस्याभिव्यक्तिजन्यत्वे च यजिपदे तल्लक्षणापत्तेरुपेक्षितम्॥

---

नात्यन्तभेदः तथा क्रियाक्रियावतोरपि भेदाभावात् द्रव्यस्वरूपात्मिका क्रिया द्रव्यभेदे भिन्नैवेत्यर्थः। **कर्तृदेशेति।** यथा दर्शपूर्णमासौ कालान्तरदेशान्तरपुरुषान्तरेषु क्रियमाणौ नाधिकौ न वा न्यूनौ भवत एवं द्रव्यान्तरेप्यन्यूनानतिरिक्तौ तावेव, न हि तदात्मनोऽवश्यं तद्भेदे भेदः व्यक्तिभेदेपि जातिभेदाभावात्। **प्रत्यभिज्ञाबलादिति।** प्रत्यभिज्ञाबलादित्युप-लक्षणं, यथा प्रत्यभिज्ञया क्रियैक्यं तथा द्रव्यभेदेऽपि दर्शपूर्णमासनामत्वाविशेषादपि तदैक्यम्। न च भिन्नास्वेव कर्मव्यक्तिषु विद्यमानं सामान्यमेव गोशब्दस्य गोत्वमिव दर्शपूर्णमासपदाभिधेय-मिति वाच्यं, सास्नादिभिर्गोत्वसामान्यस्य प्रत्यक्षमुपलभ्यमानत्वेपीह व्यक्तिभेदे प्रमाणाभावेन सामान्यसद्भावे प्रमाणाभावात्। तदेव व्यक्त्यैक्यमुपपादयति—**तत्र चेति।** अभिव्यञ्जक-भेदेन कर्मसु भेदबुद्धिः अभिव्यञ्जकाभावादेव सततानुलब्धिश्चेत्यर्थः। नन्वेवमेकत्वे सत्याग्नेयादीनामपि मिथो भेदो न स्यादित्यत आह—**अथवेति।** यावद्भिः शब्दान्तरादिभिः षड्भिर्व्यक्तीनां भेदोऽवगतः तावतामेव व्यक्तीनामस्तु भेदः तदुत्तरं षडन्यतमव्यक्तेर्देशद्रव्यादि-भेदेप्यैक्यमेव। अभिव्यक्तिस्तु भिन्ना। अतश्च द्रव्यान्तरेण नीवारादिनापि क्रियमाणे कर्मणि शब्दान्तरादिभेदप्रमाणाभावात् व्यक्त्यन्तरबुद्धिर्नोपजायते इति सिद्धं व्यक्त्यैक्यमिति। **तस्या एव व्यक्तेरिति।** शब्दान्तरादिभेदप्रमाणैरवगतपरस्परभेदवदाग्नेयाग्नीषोमीयादिव्यक्तेरित्यर्थः। पक्षान्तरमाह—**अथवेति।** **अयमर्थः** देशकालादिभेदे आग्नेयव्यक्तीनामपि भेदः तथापि शब्दान्तरादिभिराग्नेयाग्नीषोमीयत्वादिजातीनामेव भेदाङ्गीकारात् तत्तदाग्नेयत्वादिजात्यवच्छिन्नाना-मेव फलसाधनताबोधनात् यथैव देशकालादिभेदभिन्नासु व्यक्तिषु आग्नेयत्वसामान्यसत्वात् फलवत्वमेवं व्रीहियवद्रव्यभेदभिन्नासुव्यक्तिष्विव नीवारद्रव्यभेदभिन्नास्वपि तद्वत्वं नानुपपन्न-

अत एवं विचारो वाच्यः—सत्यपि शब्दान्तरादिप्रमाणैराग्नेयत्वादिवैजात्ये विधेयतावच्छेदकविजातीययागत्वावच्छिन्नं प्रति व्रीहित्वादिनैव कारणत्वावगतेः, तस्यैव तज्जात्यभिव्यञ्जकत्वावसायात् न नीवाराद्युपादाने तज्जात्यवच्छिन्नसिद्धिरिति प्राप्ते—

सत्यपि तज्जात्यवच्छिन्नं प्रति तत्त्वादिना कारणत्वे न तस्य प्रत्येकं तज्जात्यभिव्यञ्जकत्वं, व्रीहित्वादिना कर्मान्तरेऽपि कारणत्वेन व्यभिचारात्। अपि तु सामग्रीत्वेनैव। सामग्री च शक्तस्य व्रीहित्वघटिता। अशक्तस्य तु तदघटिता। अतश्च व्रीह्यभावे नीवाराद्युपादानेऽपि विजातीययागत्वापूर्वत्वफलत्वावच्छिन्नं जायत एव। फलं परं नित्य एव

---

मिति। प्रत्येकमिति। व्रीहित्वयवत्वादिनेत्यर्थः। तज्जात्यभिव्यञ्जकत्वं—आग्नेयत्वाग्नीषोमीयत्वादिजात्यभिव्यञ्जकत्वम्। मुख्यद्रव्येण प्रतिनिधिना वा यागे कृते उभयथापि फलसिद्धेस्तुल्यत्वात् को विशेषो मुख्यत्वप्रतिनिधिकृत इत्यपेक्षायां तं विशेषं दर्शयति—फलं परमिति। अयमर्थः, व्रीह्याद्यभावे हि नीवारा ग्राह्याः न तु व्रीहीणां सत्वेऽपि। एवं च प्रतिनिधेः कर्मचोदनाक्षिप्तस्य नियमादृष्टजनकत्वे प्रमाणाभावादिति न देवतेत्यधिकरणे वक्ष्यमाणरीत्या व्रीह्यभावे व्रीहिनियमादृष्टस्याभावात् तज्जन्योपकाराभावे फलजनकप्रधानापूर्वं उत्पद्यते नातिशयः इति तदतिशयाभावकृतं फलतारतम्यं भवत्येव। अत एव सुसदृशनियमादृष्टजनितातिशयवदपूर्वजं फलमपि तादृशातिशयानुरूपमेव। अतः प्रत्यक्षाप्रत्यक्षविज्ञानफलीभूतफलतारतम्यकृत एव मुख्यत्वप्रतिनिधित्वव्यवहार इति।

अत्र च तन्त्ररत्ने सामान्यं तच्चिकीर्षा हीत्यधिकरणे सुसदृशप्रतिनिधिनियमसिद्धान्तमुपपाद्य ननु सदृशोपादाने वैगुण्यात् फलसिद्धिर्न स्यादित्याशङ्क्य परिहृतं प्रारब्धस्यावश्यकर्तव्यतोपदेशादवश्यमेव विगुणादपि फलेन भवितव्यम्। किं पुनः फलमित्याकाङ्क्षायां प्रारब्धस्य काम्यकर्मणो यत्फलमवगतं स्वर्गादि तदेव फलत्वेन कल्प्यते तस्य बुद्धौ विपरिवर्तमानत्वात्। किं चानाकाङ्क्षितत्वाच्च न फलान्तरकल्पनं युक्तं योहि स्वर्गं कामयमानः तत्साधनं कर्म प्रारभ्य अङ्गसाकल्यासम्भवाद्वैफल्यं मन्वानो वीतेच्छ एव कर्मणः परावर्तितुमुपक्रमते तं प्रति नैतदुत्स्रष्टव्यं अवश्यमेतत्समापयितव्यमिति विहिते यदेव तस्य मनसि विपरिवर्तते तदेव फलापेक्षायां सन्निहितत्वादपेक्षितत्वाच्च फलतया सम्बध्यते नान्यत्। यस्तु वीतेच्छः प्राप्तफलो वा तं प्रति प्रकृतफलस्यानपेक्षितत्वादसन्निहितोऽपि पापक्षय एवापेक्षितत्वात् फलं कल्प्यते।

**तारतम्येन जायते। काम्ये तु आरम्भोत्तरमशक्तस्य शिष्टविगर्हणदोषपरिहारार्थं समापनेऽपि न फलोत्पत्तिः। सर्वाङ्गोपसंहारेणैव तदुत्पत्तेः। प्रयोगसमाप्त्यकरणे दोषमात्रो-**

---

अथवा शिष्टाचारानुमितेन प्रारभ्य यजेतैवेति वचनेनावगतावश्यकर्तव्यतानियमस्य गुणस्य दध्न इव प्रक्रान्तकर्माश्रितस्य विधाने सति तस्य फलमवीतफलेच्छस्य यद्बुद्धौ विपरिवर्तमानं स्वर्गादि तदेव कल्प्यते। वीतायां तु फलेच्छायां पापक्षयः फलमिति प्रक्रान्तकाम्यप्रयोगानन्तरं मुख्यद्रव्याद्यशक्तौ सत्यां तत्सदृशद्रव्योपादानेन कर्मानुष्ठानेऽपि अवीतेच्छस्य काम्यमानफलोत्पत्तिरभिधास्यते तदत्रैव प्रसङ्गात् दूषयति—**काम्येष्विति। सर्वाङ्गोपसंहारेणैवेति। अयमर्थः-** न पुरुषस्य बुद्धौ विपरिवर्तमानत्वमात्रेण फलं कर्मजन्यं भवति, तथात्वे तदवस्थस्य पापक्षयस्य फलत्वानुपपत्तेः। उपक्रान्त[1]काम्यादपि अवीतेच्छत्वे स्वर्गादिविषयेच्छायां वीतायां स्वर्गाद्यवाप्तौ वा कदाचित् पुरुषबुद्धौ उपक्रान्तकर्मजन्यत्वेनोपस्थितपुत्रादीनामेव फलत्वापत्तेश्च यथाशक्तिप्रयोगे सत्यपि पुरुषबुद्धिवृत्तित्वेन स्वर्गादिफलापत्तेश्च। अतः पुरुषबुद्धिविपरिवर्तमानं यद्यप्यस्ति फलं, तथापि न तत्साधनता कर्मणः शास्त्रेण बोधिता, न वोपक्रान्तकाम्यारम्भोत्तरमशक्तौ पुरुषस्य प्रवृत्तिः स्वर्गादिफलजनकताज्ञानजन्या, तादृशस्य विगुणस्य काम्यमानफलजनकतायाः काम्यशास्त्रेणाबोधितत्वात् सर्वाङ्गोपसंहारसमर्थस्यैव तत्राधिकारात्। अत एव तत्र पुरुषस्य या प्रवृत्तिः सा प्रारम्भे निमित्ते समाप्तेर्विधानादकरणे प्रत्यवायभियैव। अत एवोपक्रान्तकाम्यरसायनप्रयोगस्य विगुणस्य फलजनकत्वाभावात् फलापेक्षायां प्रारम्भनिमित्तकनैमित्तिककर्तव्यताविधिना विनियोगविधिरूपेण यत्फलं पापक्षयादि बोधितं तदेव फलमवीतेच्छस्यापि भवत्येव। इतरथा सत्रे सप्तदशयजमानकर्तृकत्वाभावेन विगुणादपि सत्रप्रयोगादवशिष्टयजमानानां बुद्धौ विपरिवर्तमानतया सत्रफलोत्पत्त्यापत्तेः।

**एतेनोपक्रान्तकर्मावश्यकर्तव्यतानियमस्य दध्यादिवत् पुरुषबुद्धौ विपरिवर्तमानस्वर्गादिफलजनकत्वमुक्तमप्यपास्तम्।** एतस्यैव तादृशनियमस्य कदाचित्स्वर्गजनकत्वं कदाचित् पापक्षयजनकत्वमित्येवं वैरूप्यापत्तेः। अत एवोपक्रान्तकाम्यसमापने पूर्वोपस्थितकाम्यमानस्वर्गादेरेव फलत्वकल्पने तत्कामनाभावे कर्माननुष्ठानापत्तौ प्रारम्भादिनिमित्तश्रुतेः सङ्कोचापत्तेर्निमित्तश्रुत्यनुरोधेन तत्कामनाऽभावेपि तदनुष्ठाने फलेच्छाया नियामकत्वानुपपत्तेः तत्र पापक्षयफलकत्वमिति वैरूप्यापत्तिः **विश्वजित्यप्रवृत्ते भावः कर्मणि स्यादित्यधिकरणेऽत्रैव** चतुर्थपादे पूज्यपादैर्दर्शयिष्यते। विस्तरेणैतन्मया निराकरिष्यते।

---

1. A. अनुपक्रान्त

त्पत्तेः। **करणे फलान्तराभावात् नापूर्वोत्पत्तिरिति केचित्। नैमित्तिकत्वाविशेषात् तत्रापि पापक्षयकल्पनेति तत्रापि तारतम्यमि**त्यपि ध्येयम् ॥ ३ ॥

---

किं चावश्यकर्तव्यतानियमरूपगुणात् तादृशफलोत्पत्तावपि नैतावता अवश्यकर्तव्यकर्मणस्तत्फलं प्रमाणाभावात् प्रारंभनिमित्तकनैमित्तिकावश्यकर्तव्यताविधिना तन्नियमस्य फलजनकत्वबोधनेपि कर्मणः फलविशेषजनकतायाः बोधे प्रमाणाभावात्। न चैतादृशे विषये नास्त्येव कर्मणः फलमिति युक्तम्। तथात्वे पूर्वोत्तराङ्गानुष्ठानानापत्तेः। अत एव दध्यादिगुणादग्निहोत्रप्रयोगे इन्द्रियरूपानुषङ्गिकफलोत्पत्तावपि अग्निहोत्रप्रयोगाद्यथावस्थितफलोत्पत्तिरिष्यत एव। एवं चैतादृशे विषये कर्मणः फलावश्यकत्वात् तस्य च प्रारम्भे निमित्ते समाप्तिविशिष्टं कर्म कुर्यादित्येवंरूपेण शिष्टाचारानुमितवचनेन नैमित्तिकविधिरूपेण विनियोगकरणात्तद्बोधितपापक्षय एव फलं न तु तद्व्यतिरिक्तं अवश्यकर्तव्यतानियमस्यैतत् फलमिति बोधनीयं प्रमाणाभावात्, अर्थसिद्धत्वात्, गौरवापत्तेश्चेति नैतादृशाद्गुणात् काम्यमानफलोत्पत्तिः।

स्पष्टमेव सत्रे कर्तृप्रतिनिधिविचारे **स स्वामी स्यादि**त्यधिकरणे एकस्मिन्नपि मृते सर्वेषां विपन्नमेव फलं स्वामिसङ्ख्याहान्या वैगुण्यात् विगुणात्काम्यात् फलानुदयात्। प्रारब्धं समापयेदिति तु विध्यन्तरप्रमितफलेच्छयाऽवशिष्टाः सत्रिणः प्रवर्तन्ते। न च तत्र मृतस्य प्रसङ्गोऽप्यस्तीति ग्रन्थेनोपक्रान्तकाम्यकर्मणो विगुणस्य फले विनियोजकः प्रारम्भनिमित्तकसमाप्तिविशिष्टकर्मविधेरेवेति **तन्त्ररत्ने** वक्ष्यते। अतस्तत्र कुतः प्रक्रान्तफलस्य स्वर्गादेरुत्पत्तिप्रत्याशेति परस्परग्रन्थविरुद्धमेव स्वर्गादिफलोत्पत्त्यभिधानमिति।

**प्रस्तुतमनुसरामः—यद्यपि** नीवाराणामलाभे नीवारैः क्रियमाणेऽपि प्रयोगे सर्वाङ्गोपसंहारसामर्थ्यमुपपद्यत एव **तथापि** पूर्वाधिकरणन्यायेन काम्ये अङ्गशक्तस्यैवाधिकारसाधनात् सर्वयावद्विहितसामग्र्या एव फलजनकत्वादशक्तस्य व्रीह्यादिघटितसामग्र्यभावे नैव स्वरूपेण काम्यमानफलोत्पत्तिर्नितरां तद्गतं तारतम्यम्। **यत्तु** समापिते च तस्मिन् कारणसत्वात् फलान्तरमपि भवत्येवेति "**प्रक्रमात्तु नियम्येतारम्भस्य निमित्तत्वात्**" इत्यधिकरणे उक्तं तदारम्भोत्तरं फलावाप्तौ वीतायां वा फलेच्छायां यथावस्थितमुख्यद्रव्यकप्रयोगारम्भविषयं इतरथा तत्राप्यशक्त्यादिना प्रतिनिधिना क्रियमाणे फलान्तरस्याप्यनुत्पत्तेरिति। यत्तु **प्रकाशकारैर्बहूनां तु सत्रधर्मः स्यादिति** वक्ष्यमाणाधिकरणद्वये सत्रे मृतावशिष्टानां प्रारब्धासमापननिमित्तप्रत्यवायपरिहार एव फलमुक्तं न तु पापक्षयरूपं तदनुद्य प्रतिबन्द्या परिहरति —**प्रयोगेति। इत्यपि ध्येयमिति**। एतच्च प्रारम्भे यजेतेत्येव शिष्टाचारानुमितश्रुतिमङ्गीकृत्य द्रष्टव्यम्।

(४)—श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥ क्वचिद्विधानाच्च ॥ १४ ॥ आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ नियमार्थःक्वचिद्विधिः ॥ १६ ॥ तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

काम्ये आरम्भोत्तरं नित्ये ततः पूर्वमपि श्रुतद्रव्याद्यलाभे द्रव्यान्तरं प्रतिनिधेयं न वेति चिन्तायां अशक्तावङ्गहानेन प्रयोगेऽप्यनङ्गग्रहणे प्रमाणाभावः। तथा हि—न ताव-द्व्र्यादिशास्त्रम्। तस्य व्रीहित्वाद्यवच्छिन्नविधायकत्वेन नीवाराद्यविधायकत्वात्, न हि तेषु व्रीहित्वमस्ति। नापि कर्मशास्त्रं तदाक्षेपकम्। द्रव्यशास्त्रेण द्रव्यान्तरसाधार-णाक्षेपप्रतिबन्धेन व्रीह्यादिविधानात् द्रव्यान्तराक्षेपानुपपत्तेः। न हि व्रीहिशास्त्रं शब्दतो

---

तदानीमेव विधीयमानयागभावनायाः इष्टभाव्यकत्वानुरोधेन पापक्षयफलकल्पनाया आवश्यकत्वात्। यदा तु प्रारब्धासमापने निन्दा प्राप्नोतीत्येव श्रुतिकल्पनं तदा भावनाविधाने प्रयोजनाभावात् न तत्फलकल्पनायां किञ्चित्प्रमाणमित्युत्तरत्र करिष्यमाणं साङ्गमपि निष्फलमेवेत्यपि शक्यत एव वक्तुं तैत्तिरीयश्रुतावपि तथैव प्रतीतेरित्यपि ध्येयम्।

---

॥ श्रुतिप्रमाणत्वात् ॥

अङ्गहानेनेति। अनेन च पूर्वत्र यथाशक्त्युपबन्धे द्रव्यभेदे कर्मैक्ये च सिद्धेतदन्तो-त्सर्गपूर्वपक्षो नोत्तिष्ठतीत्याशङ्का पूर्वोक्तन्यायेन प्रयाजाद्यङ्गत्यागेन प्रयोगसिद्धावप्यनङ्गा-न्तरग्रहणे प्रमाणाभावात् समाप्तेरनावश्यकत्वाद्युक्त एव प्रयोगोत्सर्ग इति परिहृता भवति। तेन द्रव्यभेदेऽपि यत्कर्मैक्यमुक्तं तद्भिन्नद्रव्यग्रहण एव प्रमाणाभावादयुक्तमित्याक्षेपोत्तरमधि-करणमिति तत्सूचितम्। व्रीह्यादिविधानादिति। आग्नेयादिवाक्ये हि पुरोडशा-दिद्रव्काग्न्यादिदेवताककर्ममात्रं विधीयते। तत्र यागस्य द्रव्यविशेषाकाङ्क्षा विशिष्टविधानकाले पुरोडाशस्यान्वयेनैव शान्ता। पुरोडाशः परमनोवासोधिकरणन्यायेन लोकसिद्ध उपादेय उत श्रपणेन प्रयोगमध्ये उत्पादनीय इत्याकाङ्क्षायां न्यायलभ्ययथासिद्धोपादाननिर्णयात् पूर्वमेव श्रपणविधिरेव प्रवर्तते तदुत्तरं कं प्रकृतिविशेषमुपादाय श्रपणेनासावुत्पाद्य इत्याकाङ्क्षायां तदानीमेव व्रीहिविधिः प्रवर्तते यद्यजेत तद्व्रीहिभिः व्रीहींस्तत्र करणीकुर्याद्यागोद्देशेन व्रीहिरूपे

नियमविधिः अपि त्वाक्षेपप्रतिबन्धद्वारा फलतः। अतश्च यथैवाग्निविधयोः स्वविधिप्रयुक्तयोरेव लाभादाक्षेपप्रतिबन्धेनाशक्तस्य शूद्रादेर्वा न तदाक्षेपः, अपितु अग्निविधयोरधिकारिविशेषणत्वमङ्गीकृत्य तद्वत एवाधिकारः, एवं द्रव्याद्यंशेऽपि प्रधानविधिनाऽनाक्षेपात् व्रीह्यादिश्रुतद्रव्यवत एवाधिकारित्वकल्पनेन न द्रव्यान्तरोपादानमिति प्रयोगोत्सर्ग एव युक्त इति प्राप्ते—

द्रव्यशास्त्रेण द्रव्यान्तरसाधारण्येनाक्षेपप्रतिबन्धेऽपि व्रीह्यादीनामग्निविधयोरिव स्वतन्त्रप्रयोगविधिविधेयत्वाभावात् प्रयाजादिवत् प्रधानविधेरेव व्रीह्यादिप्रयोगविधायकत्वात् प्रयोगविधिविषयीभूतानां तेषामधिकारिविशेषणत्वानुपपत्तौ निमित्तबलादशक्तौ त्यागेनापि प्रधानकर्तव्यतावगतेस्तस्य च द्रव्यान्तरमन्तरेणायोगाद्युक्तं तदाक्षेपकत्वम्।

---

प्रकृतिविशेषे व्याप्रियेतेति। ततः कथं कोऽसौ व्यापार इत्याकाङ्क्षायां अवघातपेषणविधिप्रवृत्तिरिति वास्तवं तत्तद्विध्यर्थानुरूपाकाङ्क्षाक्रमकृतं तद्विधिप्रवृत्तिपौर्वापर्यम्। अत एव व्रीहिभिर्यजेतेति तृतीया न साक्षात् करणत्वाभिधायिनी सती यागोद्देशेन प्रकृतिकरणत्वेन व्रीहीणां विधायिका। पुरोडाशकरणत्वेन तत्करणत्वासम्भवात् अतः सोमेन यजेतेतिवदेतत्पादान्त्याधिकरणदर्शितवक्ष्यमाणरीत्या विनैव लक्षणां प्रदेयप्रकृतित्वरूपतया पारम्परिककरणत्वपरा सती तेन रूपेण तेषां विधायिकेति व्रीहिशास्त्रेण प्रकृतिद्रव्यान्तराक्षेपप्रतिबन्धेन व्रीहीणां प्रकृतित्वनियमे तज्जन्यादृष्टाभावे अन्यद्रव्याक्षेपेण फलोत्पत्तौ प्रमाणाभावान्न तेन प्रधानानुष्ठानम्। तेन मुख्यद्रव्याशक्तौ नारभ्यमेवानारब्धम्। आरम्भोत्तरं मुख्याशक्तौ तावन्मात्रमेव कर्तव्यं उपरि उत्स्रष्टव्यमिति तदेवोपपादयति—न हीति। आक्षेपेण द्रव्यप्राप्तौ सत्यां तन्निषेधपूर्वको यदि श्रौतो नियमः स्यात् तदा द्रव्यान्तरनिवृत्तावपि आक्षेपो यथावस्थितोऽनुवर्तेत। न त्वेतदस्ति। किन्तु यावदाक्षेपेणानियतद्रव्यप्राप्तिः ततः पूर्वमेव प्रत्यक्षवचनेन व्रीहिद्रव्यविधानेनाक्षेपस्यैव प्रतिबन्धात् फलतो नियमादाक्षेपस्य न पुनर्जीवनमित्यर्थः। **त्यागेनापीति।** यथैव निमित्तावगतावश्यकत्वानुरोधेनाशक्तेन कथंचित् प्रधानमात्रानुष्ठानं अङ्गहानेन कर्तव्यमिति बोधितं, तथैव प्रधानसाधनमुख्यद्रव्याशक्तेन द्रव्यान्तरं सम्पाद्यापि प्रधानमात्रं कथंचित कर्तव्यमावश्यकत्वादित्यपि बोधितमेव। न हि प्रधानमात्रमप्यवश्यं कर्तव्यं मुख्यद्रव्याभावे द्रव्यान्तरेण सम्भवति, प्रधानचोदना हि नियमेन यत्किञ्चिद्द्रव्यमर्थादाकाङ्क्षति। सा व्रीहिभिर्यजेतेति श्रुतैर्विद्यमानैरेकवाक्यतां प्रतिपद्यमाना अर्थप्राप्तिं द्रव्यान्तराणां बाधते। श्रुताभावे तु या द्रव्यान्तराणामर्थप्राप्तिः सा केन निवार्येत। यदि ह्याग्नेयविधिर्न स्वयं द्रव्योपादानं प्रयुञ्जीत किन्तु व्रीहिवाक्यमेव प्रयोजकं स्यात् तदा तदभावेन द्रव्यान्तरमुपादापय-

(४)—श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥ क्वचिद्विधानाच्च ॥ १४ ॥ आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ नियमार्थःक्वचिद्विधिः ॥ १६ ॥ तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

काम्ये आरम्भोत्तरं नित्ये ततः पूर्वमपि श्रुतद्रव्याद्यलाभे द्रव्यान्तरं प्रतिनिधेयं न वेति चिन्तायां अशक्तावङ्गहानेन प्रयोगेऽप्यनङ्गग्रहणे प्रमाणाभावः। तथा हि—न ताव-द्व्र्यादिशास्त्रम्। तस्य व्रीहित्वाद्यवच्छिन्नविधायकत्वेन नीवाराद्यविधायकत्वात्, न हि तेषु व्रीहित्वमस्ति। नापि कर्मशास्त्रं तदाक्षेपकम्। द्रव्यशास्त्रेण द्रव्यान्तरसाधार-णाक्षेपप्रतिबन्धेन व्रीह्यादिविधानात् द्रव्यान्तराक्षेपानुपपत्तेः। न हि व्रीहिशास्त्रं शब्दतो

---

तदानीमेव विधीयमानयागभावनायाः इष्टभाव्यकत्वानुरोधेन पापक्षयफलकल्पनाया आवश्यकत्वात्। यदा तु प्रारब्धासमापने निन्दा प्राप्नोतीत्येव श्रुतिकल्पनं तदा भावनाविधाने प्रयोजनाभावात् न तत्फलकल्पनायां किञ्चित्प्रमाणमित्युत्तरत्र करिष्यमाणं साङ्गमपि निष्फलमेवेत्यपि शक्यत एव वक्तुं तैत्तिरीयश्रुतावपि तथैव प्रतीतेरित्यपि ध्येयम्।

---

॥ श्रुतिप्रमाणत्वात् ॥

अङ्गहानेनेति। अनेन च पूर्वत्र यथाशक्त्युपबन्धे द्रव्यभेदे कर्मैक्ये च सिद्धेतदन्तो-त्सर्गपूर्वपक्षो नोत्तिष्ठतीत्याशङ्का पूर्वोक्तन्यायेन प्रयाजाद्यङ्गत्यागेन प्रयोगसिद्धावप्यनङ्गा-न्तरग्रहणे प्रमाणाभावात् समाप्तेरनावश्यकत्वाद्युक्त एव प्रयोगोत्सर्ग इति परिहृता भवति। तेन द्रव्यभेदेऽपि यत्कर्मैक्यमुक्तं तद्भिन्नद्रव्यग्रहण एव प्रमाणाभावादयुक्तमित्याक्षेपोत्तरमधि-करणमिति तत्सूचितम्। व्रीह्यादिविधानादिति। आग्नेयादिवाक्ये हि पुरोडशा-दिद्रव्काग्न्यादिदेवताककर्ममात्रं विधीयते। तत्र यागस्य द्रव्यविशेषाकाङ्क्षा विशिष्टविधानकाले पुरोडाशस्यान्वयेनैव शान्ता। पुरोडाशः परमनोवासोधिकरणन्यायेन लोकसिद्ध उपादेय उत श्रपणेन प्रयोगमध्ये उत्पादनीय इत्याकाङ्क्षायां न्यायलभ्ययथासिद्धोपादाननिर्णयात् पूर्वमेव श्रपणविधिरेव प्रवर्तते तदुत्तरं कं प्रकृतिविशेषमुपादाय श्रपणेनासावुत्पाद्य इत्याकाङ्क्षायां तदानीमेव व्रीहिविधिः प्रवर्तते यद्यजेत तद्व्रीहिभिः व्रीहींस्तत्र करणीकुर्याद्यागोद्देशेन व्रीहिरूपे

नैव शुद्धो यागः कर्तव्यतया अवगम्यते अपि तु सोमानुरक्त एवेति न द्रव्यान्तराक्षेपको भवतीति न प्रतिनिधिप्राप्तिर्येन तत्प्राप्तौ पूतीकविधिर्नियमविधिः स्यादित्याशङ्क्य परिहृतम्—

पदैरभिहिताः पदार्थाः स्वातन्त्र्येण गृहीताः परस्परमपेक्ष्यमाणा वाक्यार्थमवगमयन्ति, न तु पूर्वमाम्नाता अप्यनपेक्षिताः। ततश्च यजेतेत्यनेन यागः करणतया प्रतिपन्नः। पश्चादपेक्षावशात् सोमादिद्रव्यमङ्गतया गृह्णाति। सोमोऽपि तदपेक्षयाऽन्वीयमानो नियमविषयतामापद्यते। न तु सोमानुरक्तस्य करणत्वमिति वाक्यान्तरोपात्तत्वकृतविशेषाभावाद्यथैव वाक्यान्तरोपात्तव्रीहीणामभावेऽस्त्येव यागस्य द्रव्यापेक्षा, तथैव पदान्तरोपात्तसोमाभावेपि अस्त्येव द्रव्यापेक्षा। तथाच युक्तमेव प्रतिनिधिग्रहणम्। अत एव ज्योतिष्टोमनामधेयमपि विजातीययागमात्रस्यैव न तु सोमानुरक्तस्येति पूतीकैः क्रियमाणादपि स्यादेव फलमिति। तत्र यत्र यजेतेति प्रत्यक्षश्रवणं तत्र यागमात्रस्यैवाक्षिप्तयत्किञ्चिद्द्रव्यसाधनकस्य प्रथमतः करणत्वेनान्वितस्य पश्चाद्विशेषाकाङ्क्षया सोमादिद्रव्यग्रहणसम्भवेऽपि यत्र द्रव्यदेवतासम्बन्धानुमितयागकल्पनं तत्र विशेषद्रव्यसाधनकस्यैव यागस्यैव प्रथमतो विधेयत्वेन द्रव्यसामान्याक्षेपे प्रमाणाभावात् मुख्यद्रव्याभावे प्रतिनिध्युपादानं दुरूहमेव।

यदि त्वेतादृशे विषये उत्पत्तिवाक्ये द्रव्यविशेषविशिष्टत्वेन यागस्योत्पत्तावपि विशेषद्रव्याभावे गुणानुरोधेन प्रधानत्यागायोगादावश्यकतया कथंचिदपि द्रव्यान्तरेण तत्सम्पादनमित्येवं प्रतिनिधिरुच्येत, तदा, सोमेपि तत्तुल्यमिति वृथैव सोमानुरक्तयागकरणताखण्डनप्रयास इति तात्विकार्थकथनतात्पर्यकमेव तद्द्रष्टव्यम्।

**यदपि** प्रतिनिधिना क्रियमाणस्यापि ज्योतिष्टोमनामकत्वेन फलवत्त्वप्रतिपादनं, **तदपि** पापक्षयरूपफलजनकत्वाभिप्रायेण न तु स्वर्गजनकत्वाभिप्रायेण, प्रतिनिधिना क्रियमाणस्य काम्यस्यापि विगुणत्वेन काम्यमानफलजनकत्वाभावस्य पूर्वमुपपादितत्वात्। **अत एव** तन्त्ररत्ने पूतीकेषु सोमाकृत्युपलक्षितरसस्य सामस्त्येनाभावाद्वैगुण्यं तावदस्तीत्याशङ्कोत्तरपरग्रन्थे विगुणस्य नित्यस्य प्रयोगादिति ग्रन्थे वैगुण्ये विद्यमानेऽपि अवश्यकर्तव्यत्वेन नित्यप्रयोगे सोमालाभे पूतीकैरनुष्ठाने न बाधकमित्यर्थके केवलनित्यप्रयोगारब्धकाम्यप्रयोगविषयत्वं पूतीकानामुक्तम्। भाष्यकारेणापि **वचनाच्चान्याय्यमित्यग्निमाधिकरणे** उपक्रान्तकर्मविषय एव सोमाभावे पूतीकप्रतिनिधिग्रहणं वक्ष्यते। एवं च नित्यसोमारम्भात् पूर्वं काम्यसोमारम्भोत्तरं वा मुख्यद्रव्याभावे पूतीकैरनुष्ठानं, न त्वनारब्धकाम्यस्यापीति ज्ञेयम्। **वक्ष्यत इति। वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादि**त्यस्येत्यधिकरणे इति शेषः।

**(५)—न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥ देवतायां च तदर्थत्वात् ॥ १९ ॥**

**एवं सर्वत्र प्रतिनिधौ प्रसक्ते** देवतायां **स न भवति। यदि ह्यर्थमात्रस्यैव देवतात्वं त्यागकालीनोच्चारणकर्मभूतशब्दप्रतिपाद्यत्वरूपं भवेत् तदा तस्य शब्दविशेषापेक्षायां प्रतिपादकत्वेन विधिगतस्योपस्थितस्य शब्दस्य नियमेऽपि रोगादिना तत्पदोच्चारणासंभवे तादृशार्थस्य यागाङ्गत्वानपायात् तद्बोधकश्रौतलाक्षणिकशब्दान्तरप्रसक्त्या भवेदपि प्रतिनिधिः। यदा तु दाशमिकाधिकरणवक्ष्यमाणरीत्या विधिगतशब्दविशिष्टस्यार्थस्य तादृशशब्दमात्रस्य वा देवतात्वं तदा कः प्रसङ्गः शब्दान्तरस्य। न हि हविस्त्यागकालीनोच्चारणकर्मत्वविशिष्टविधिगतशब्दत्वसमनियतं अखण्डोपाधिरूपं वृद्धव्यवहारसिद्धं देवतात्वं शब्दान्तरे समस्ति। यदि तु** अर्थस्यापि **देवतात्वं कथञ्चिदङ्गीक्रियेत ततस्तत्रापि तादृशविधिगतशब्दप्रतिपाद्यत्वसमनियतमेव तदङ्गीकृत्य प्रतिनिध्यभावस्समर्थनीयः। अत एव यागस्य देवतापेक्षत्वेऽपि विधेयत्वघटिततद्विषये आक्षेपकत्वासम्भवात् देवता-**

---

**॥ न देवताग्निशब्दक्रियम् ॥**

**देवतायां स नेति।** अत्र च देवतामन्त्रक्रियासु विस्मृतिरेव प्रतिनिध्युपादानस्य कारणम्। आहवनीयस्यासिद्धत्वं अनुगतत्वं च द्रष्टव्यम्। अपवादमात्रे सुहृद्भूत्वोपदिशतीति पूर्वाधिकरणसिद्धान्तेनैव पूर्वपक्षः स्पष्ट इति नातीव तत्राभिनिवेशः। **यदा त्विति।** शब्दद्वारेण हि कर्मणि देवतायाः समवायाच्छब्दस्य च विधिगतस्यैव नियमनात् विधिगतशब्दविस्मरणे द्वारस्यैवाभावः स्पष्ट एव। न च शब्दान्तरेणोपात्तेन द्वारसम्पादनम्। तण्डुलनिर्वृत्तेः प्रत्यक्षत्वात् शास्त्रमन्तरेणापि नीवारैः प्रत्यक्षेण तदुपलम्भेन प्रतिनिधिसम्भवेऽपि देवतायाः कर्मोपकारकत्वस्य प्रत्यक्षसिद्धत्वाभावे शास्त्रैकगम्यत्वस्यैवाङ्गीकारेण शास्त्राच्च विधिगतशब्दोद्देश्यतयैव तदुपकारकत्वबोधनाच्छब्दान्तरोपादाने देवतात्वासिद्धेः। न ह्युद्देश्यत्वमात्रं देवतात्वं तन्मात्रे देवताशब्दाप्रयोगात् किन्त्वखण्डोपाधिरूपमित्याह—**नहीति।** किञ्च सदृशं प्रतिनिधातव्यं भवति तत्र यदि देवतावाचकः शब्दो विस्मृत एव तदा किंप्रतियोगिकसादृश्येन शब्दान्तरमुपादेयं? यदि तदानीं स्मृतः तदा तेनैव देवतासिद्धेः न प्रतिनिधिरिति मन्त्रांशे वक्ष्यमाणेनैव प्रकारेण देवतायामपि समानं ज्ञातव्यमित्यभिप्रायेण नोक्तं **पूज्यपादैः। अर्थस्यापीति।** अपिरेवकारार्थे। **अत एवेति। एतेन** द्रव्यदेवतासम्बन्धानुमितयागविधेर्द्रव्यविषये नियमविधित्वं तथा मासमग्निहोत्रं जुहोतीत्यादेः अत्यन्तसयोग-

**विधिरपूर्वविधिरेव।** तदसम्भवे **च यागपदार्थस्य लोप एव** यदा तु **देवताऽपचारे प्रजापतिरिति वचनं अभावे विधिविधया** प्रामाणिकं **तदा तथैवानुष्ठानम्।**

**एवमग्नेरपि होमाधिकरणस्य न प्रतिनिधिः। तत्राहवनीयादेस्तावदाधानविधिसिद्धत्वादेव क्रतुप्रयोगविध्यविषयत्वात्तेषामधिकारिविशेषणत्वप्रतीतेर्यथाशक्तिन्यायाविषयत्वादेव न प्रतिनिध्याशङ्का। यत्र तु लौकिकाग्नेरेव वाचनिकमधिकरणत्वं यत्र वा पदादेस्तत्रापि सत्यपि तस्य प्रयोगविधिविषयत्वेऽदृष्टार्थत्वात् न तत्प्रतिनिधिः।** न हि **पूर्वदेशविभागानुकूलव्यापाररूपप्रक्षेपमात्ररूपस्य होमस्याधारापेक्षाऽस्ति। अत एव तद्विधिरप्यपूर्वविधिरेव। पदादिना आहवनीयादिबाधस्तु पतनप्रतिबन्धकत्वरूपाधिकरणताया एवादृष्टोत्पादकत्वादेकेन तत्सिद्धेस्समुच्चयायोगादनुसन्धेयः। अतश्च तत्रापि तत्प्रतिनिधेरदृष्टोत्पादकत्वे प्रमाणाभावान्न सः। क्वचित्तु वाचनिको ब्राह्मणपाण्यादि**रभावे विधिरेव।

---

वाचिद्वितीयात्रगतमासादिव्याप्तिलभ्याभ्यासविशिष्टापूर्वकर्मविधेर्मासाद्यंशे सर्वदेवताविधेश्च देवतायां नियमविधित्वं दुरुपपादम्। **पार्थसारथिमिश्रप्रभृतिभिरपि** नोपपादितमिति मासव्यवस्थानिरूपणे **कालतत्वविवेचनकारोक्तमपास्तम्।** देवतांशे नियमविधित्वस्यैव मासत्वादृशद्रव्यांशे नियमविधित्वस्यानङ्गीकारात् सर्वे द्रव्यकालविधयो नियमविधय इत्यस्यौत्सर्गिकमात्रत्वात् इति। **तदसम्भवे इति।** नहि त्यागमात्रं यागपदार्थोऽपि तु देवतोद्देशेन सः। तेन सर्वथा देवतावाचकशब्दस्मरणाभावेनासत्यां देवतायां प्रधानस्यैव यज्यर्थस्यासम्भवात् अगत्या लोप एवेति भावः। एवं प्राचीनैः सिद्धान्तितेऽर्थे विशेषमाह—**यदा तु देवताप्रचारे इति। प्रामाणिकमिति।** कामं तं देवताया इति **कातीयसूत्रे** शाखान्तरे च प्रजापतिः देवताप्रतिनिधौ व्याहृतयश्च होममन्त्रप्रतिनिधौ श्रूयन्त इति **श्रीमदनन्तभाष्यग्रन्थात्** तद्दर्शनमात्रेण वचनानुमानात् प्रामाण्यसन्देहः **प्रामाणिकमिति** पदेन सूचितः। ननु प्रक्षेपस्य यत्र क्वचनाधारेऽनियमेन प्राप्तस्याहवनीयांशे नियमविधिरिति दृष्टार्थत्वात् स्यादेव प्रतिनिधिरित्याशङ्कां वारयति—**नहीति।** प्रक्षेपो हि प्राग्देशविभागः। नहि तस्याधारापेक्षा तदुक्तं **तन्त्ररत्ने**—न हि त्यज्यमानस्य देशः किञ्चिदुपकरोति। शक्यते ह्यप्रतिष्ठिते द्रव्ये त्यागहोमौ कर्तुमतो यदाहवनीये जुहोतीति वचनात् अदृष्टार्थतया विधीयते। यथाचैवं सति पदादिनाऽऽहवनीयस्य बाधस्तथा वक्ष्यते दशमे। **अभावे विधिरेवेति।** एवमेव याज्यापचारे व्याहृतयः। सत्रायागूर्य विश्वजिता यजेतेत्यादयो मन्त्रक्रियापचारे तत्तद्विधयोऽपि अभाव एव विषयो द्रष्टव्याः।

एवमर्थप्रकाशनार्थेष्वपि मन्त्रेषु न प्रतिनिधिः शब्दान्तरस्य मन्त्रान्तरस्य वा। स ह्युपायान्तरेण ध्यानादिनाऽर्थेऽनवगते तत्प्रतिपादकत्वज्ञानाभावादेवानाशङ्क्यः। अवगते तु तस्मिन् स्मारकानपेक्षत्वादेव न तदुपादानम्। न चैवं यत्र स्वत एवार्थस्स्मृतः तत्र विहितमन्त्रपाठानापत्तिः तत्र नियमादृष्टसिद्ध्यर्थं मन्त्रजन्यस्मृतेरेवाभ्युदयकारित्वकल्पनेन मन्त्रपाठावश्यकत्वात्। प्रतिनिधेस्तु कर्मचोदनाक्षिप्तस्य नियमादृष्टजनकत्वे प्रमाणाभावात् न पाठ इति वैषम्यम्।

एवमन्यस्मात्तदृष्टोत्पत्तौ प्रमाणाभावेनादृष्टार्थप्रयाजादिक्रियाया अपि न प्रतिनिधिः। दृष्टार्थावघातादिक्रियायास्तु स समस्त्येव।

यत्त्वत्र कैश्चिददृष्टार्थस्य षोडशिग्रहणाभावादेरपि न प्रतिनिधिः। तेन षोडश्यभावयुक्तक्रतुप्रयोगसङ्कल्पे कृते यदि दैवादनङ्गमपि तत्र षोडशी कृतः तदा षोडश्यभावस्याभावे तददृष्टार्थं नाभावान्तरं प्रतिनिधेयमित्युक्तम्। तन्न 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन षोडशिग्रहणाभावेऽपि इतराङ्गमात्रादेव क्रतूपकारसिद्धिरित्यवगमात् षोडशिग्रहणाभावस्यादृष्टोत्पादकत्वे प्रमाणाभावात्। अत एव तत्र षोडशिग्रहणे वृथाचेष्टाकृतप्रायश्चित्तमात्रम्॥ ५॥

---

अत्र च प्रकाशकारैः सौत्रस्य क्रियापदस्य समानन्यायात् तदभावोपलक्षणत्वमङ्गीकृत्य षोडशिग्रहणाभावस्यापि विहितस्य पूर्वोत्तरपक्षविषयत्वमुक्तं तद्दूषयितुमनुवदति— **यत्त्वत्रेति**। अभावकर्तव्यताविधानस्य कलञ्जभक्षणाभावकर्तव्यताविधानमतदूषणेनैव निरस्तत्वात् षोडशिग्रहणाभावसहितेतराङ्गानामेव षोडशिग्रहणजन्योपकारजनकत्वेन विवक्षितगत्या विधाने सत्यभावे अक्लृप्तोपकारजनकत्वकल्पनापेक्षयोपकारजनकत्वेन क्लृप्तसामर्थ्यानामङ्गान्तराणामेव तदर्थत्वेन विध्युपपत्तेरभावे प्रतिनिधिप्रयोजकीभूतस्य विहितत्वघटिताङ्गत्वस्योपादेयत्वस्य चाभावात् पूर्वोत्तरपक्षयोरनुपपत्तेरयुक्तमित्यभिप्रेत्य दूषयति— **तत्रेति**। यत्तु षोडशिग्रहणाभावानृतवदनाभावयोः क्रतुसाद्गुण्यवैगुण्यपरिहारोद्देशेन चतुर्थे विधेयत्वमुक्तं तद्विधेयसाधारणक्रत्वर्थपुरुषार्थलक्षणसङ्गमनायार्थतः सिद्धं स्वरूपसम्बन्धरूपविषयताविशेषात्मकं गौणं न तु मुख्यमङ्गत्वघटकम्। अत एवैतादृशनिषेधेषु क्रत्वर्थपुरुषार्थत्वव्यवहारो गौण एव कर्त्रधिकरणे उक्त इति न विरोधः। **प्रायश्चित्तमात्रमिति**। मात्रचा प्रतिनिध्युपादानमेव व्यावर्त्यते न तु निषेधातिक्रमनिमित्ते तत्तद्वेदविहितपुरस्कारेण विधीयमानं प्रायश्चित्तान्तरमपि। तस्य तत्तद्वेदविहितपदार्थमात्रशेषे विहितस्य अनृतवदनस्य निषेधातिक्रम इवेहापि प्रवृत्तेर्निवारणासम्भवात्।

## (६)—प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

अनारभ्य श्रुतेन 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इत्यनेन माषादीनां यज्ञाङ्गत्वप्रतिषेधात् यत्र साक्षात्तेषां विधानं तत्रैव विकल्पार्थः प्रतिषेधः। अथवा यत्र धान्यत्वादिना सामान्यधर्मेण विधानं तत्र स्वेच्छाप्राप्तमाषाद्यङ्गप्रतिषेधो 'बर्हिषि रजतं न देयम्' इतिवत्। अतश्च कर्मशास्त्रानुरोधेन माषादीनां प्रतिनिधिस्थले साधनत्वेऽप्यङ्गत्वाभावात् तत्र न प्रतिषेधः। वक्ष्यमाणयुक्त्या द्रव्यशास्त्रानुरोधेन माषादिरूपसदृशप्रतिनिधिस्थले व्रीह्यवयवत्वादिनैव तेषां ग्रहणादवर्जनीयतया माषाद्युपादानादङ्गत्वाभावेन न प्रतिषेधः। अतस्तेऽपि प्रतिनिधेया इति प्राप्ते—

अयज्ञिया इत्यर्हार्थप्रत्ययेन साधनत्वमात्रनिषेधाद्विशेषविहितातिरिक्तस्थले सर्वत्रैव माषादिप्रतिषेधप्रतीतेर्न प्रतिनिधेयाः, द्रव्यसामान्याभावे तु ग्राह्या एवेति ध्येयम्। अत्र च लक्षणया यज्ञोद्देशेन माषनिषेधविधानात् नैकप्रसरताभङ्गः ॥ ६ ॥

---

## (७)—तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥ २१ ॥

मृते तावद्यजमाने पत्न्यां वा नान्यतरेणान्यतरस्य प्रतिनिधिः यजमाने मृते पत्न्या अन्वयभावादेवानधिकारात् पत्न्यां मृतायां यजमानस्यापि

---

॥ प्रतिषिद्धम् ॥

अङ्गत्वाभावेनेति। पूर्वोक्तरीत्या विजातीयावयवानामपूर्वसाधनतया विधानाभावेनोपकारकत्वेऽप्यङ्गत्वाभावेनेत्यर्थः। अर्हार्थप्रत्ययेनेति। तदर्हतीत्यर्थे यज्ञर्त्विग्भ्यां घखञाविति सूत्रानुशिष्टघञ्प्रत्ययेनेत्यर्थः। अत्र च लक्षणयेति। यथा चायज्ञिया वै माषा इति पदसमुदायस्यैव यज्ञोद्देश्यकमाषवृत्तिसाधनत्वनिषेधरूपे विशिष्टार्थे लक्षणयेत्यर्थः। अथ वा सिद्धवदनुवादकल्पितनिषेधकवाक्यान्तरकल्पनयैव तदुद्देशेनैतन्निषेध इत्याह—वाक्यान्तरेति।

---

॥ तथास्वामिनः ॥

अन्यतरमृतौ तावत् प्रतिनिधातुरभावात् नान्यतरप्रतिनिधिरित्युपपादयति—यजमाने मृते इति। अन्वयभावादेवेति। अत्रेदं तत्वं—पत्न्याः पूर्वं यजमानमरणे आहिताग्निमग्निभिर्दहन्ति, तयोर्यः पूर्वो म्रियते तस्याग्निस्त्रेतायां पितृमेधो, यःपश्चात् तस्यौपासनेन, सहैव

प्रेते सहैव पितृमेधो, द्विवचनलिङ्गान्मन्त्रान् सन्नमयति। दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयमग्निहोत्रदर्शपूर्णमासाग्रयणार्थं च शेषाणि कर्माणि न भवन्तीति भारद्वाजादिवचनाच्छ्रौताग्निभिर्यजमानस्य दाहः। अत एव यजमानमरणेनाग्नीनां प्रतिपादितत्वात् तदुत्तरं पत्न्या मरणे श्रौताग्नीनामभावे सति केन दाहस्तस्या इत्यपेक्षायां निर्मन्थ्येन पत्नीमित्याश्वलायनादिवचनं, तयोर्यः पश्चादिति पूर्वोक्तभारद्वाजवचनं च प्रवर्तते। तेन चैकार्थत्वेन पत्नीविषये यद्यप्यव्यवस्थितो विकल्पः प्राप्नोति, तथापि

"अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योश्च पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता" इति लक्षणलक्षितसर्वाधानिन औपासनाभावात् तत्पत्नीदाहे निर्मन्थ्यः। अर्धाधानिनः औपासनसत्वात् तत्पत्नीदाहे औपासन इति व्यवस्थितो विकल्पो द्रष्टव्यः। एवं चार्धाधानिनो मरणोत्तरमपि पत्नीदाहार्थं औपासनसंरक्षणं कार्यम्। औपासनविच्छेदे तु स्मार्तप्रेताधानोत्पादित औपासनोऽग्निः, निर्मन्थ्यस्तु लौकिकारण्योर्मथनेन निष्पन्नोऽग्निः।

केचित्तु सर्वाधानिन आहिताग्नेर्मरणोत्तरं मृतायां पत्न्यां प्रेताधानोत्पादितत्रेताग्निना दाहः, अर्धाधानिनः पत्न्यास्तु स्मार्ताग्निना दाह इत्याहुः। तन्न। पत्नीविषये विहितनिर्मथ्येनैव दाहोपपत्तौ प्रेताधानोत्पादितत्रेताग्नेश्च यजमानविषयतयाप्युपपत्तिसम्भवे निर्मथ्येन सह विकल्पाङ्गीकारस्यायुक्तत्वेनानाकाङ्क्षिताधानोत्पादितत्रेताग्निभिर्दाहे प्रमाणाभावात्। इतरथा अर्धाधानिपत्न्या अपि तेनैव दाहापत्तौ स्मार्ताग्निभिर्दाहानापत्तेः। अत एव यजमानविषये यः पश्चादिति विहितौपासनस्य प्रेताधानोत्पादितत्रेताग्नीनां च भवत्येव विकल्प इति विस्तरेणोपपादयिष्यते।

एतेन सर्वाधान्यर्धाधानिनोरुभयोरपि मरणोत्तरं उभयोरपि तत्पत्न्योः प्रेताधानोत्पादितत्रेताग्निभिर्दाहः आधानोत्तरविवाहितायास्तु स्मार्ताग्निना दाहः।

पत्नी चेद्विधवा भूत्वा म्रियेतानग्निका यदि।
तदा त्रेताग्निशून्यत्वात् निर्मन्थ्येनैव तां दहेत्।

इति त्रिकाण्डमण्डने अनग्निकेति निर्देशात्, निर्मन्थ्येन मथनोत्पादितस्मार्ताग्निनेति दिनकरोद्योतकृदुक्तमपास्तम्। मृतसर्वाधानिपत्न्या अपि अग्निभिर्यजमानदाहेन श्रौताग्निशून्यत्वेन च तदानीमनग्निकत्वान्मण्डनकारिकाविषयत्वे बाधकाभावान्निर्मन्थ्येन दाहानिवारणात्।

किञ्च "धर्मप्रजासम्पन्ने दारे सति नान्यां कुर्वीत" इति वचनेनाधानोत्तरं विवाहनिषेधात् कर्तव्यत्वेऽपि वा तस्य "प्रागग्न्याधेयात्" इति सूत्रेणाग्न्याधानात्पूर्वमेव करणनियमेनाधानोत्तरं विवाहाप्रसक्तेः। अत एव प्रागग्न्याधेयादित्यत्र हेतुरुत्तरसूत्रं आधाने हि सति कर्मभिः सम्बन्ध्यते एषामेतदङ्गमिति। व्याख्यातं चैतत्। यस्मादाधाने विद्यमाना येषामाधानमुपकारकं तैरधिक्रियते। आधानोत्तरं कृतायाः क्रतुसम्बन्धाभावेन सहधर्माचरणाननिचरणसङ्कल्पविरोधस्तस्या ऋणापाकरणाभावप्रसङ्गश्च। तस्मात्प्रागेवाग्न्याधेयाद्विवाहेति। अपि चाधानोत्तरं विवाहिताया अपि पुनराधानानुष्ठानेन संसृष्टस्मार्ताग्निद्वयसंसर्गेण केषां चिन्मते श्रौताग्निसत्वान्नानग्निकत्वं तस्याः अग्निद्वयसंसर्गाभावे तु तस्या औपासनाग्नेः सत्वान्नानाकाङ्क्षितनिर्मथ्यविधिप्रवृत्तिर्युक्ता। ज्येष्ठायां सत्यां कनिष्ठायास्तस्या मरणे सति तस्या अग्न्याधानपक्षे तु भवन्मते तस्या अनग्निकत्वं दुर्घटमिति न तत्कारिकाविषयत्वमस्या इत्यलम्।

एवं च सर्वाधानिनोऽर्धाधानिनो वा यजमानस्य पूर्वमरणे अग्नीनां तद्दाहे प्रतिपादनात् पत्न्या अग्न्यभावादेवानधिकारान्न तावत्तदानीं यजमानप्रतिनिधिप्रसक्तिः यदा तु यजमानात् पूर्वं पत्नीमरणं तदा **यद्यपि** तयोर्यः पूर्वं म्रियते इति वचनात् त्रेताग्निभिस्तस्याः सामान्यतो दाहः प्राप्नोति **तथापि** उत्तरत्र दारकर्मणि यद्यशक्तः इत्युक्तेः पूर्वमग्नित्रेतायामुच्यमानोऽपि पूर्वमृतत्वसामान्यरूपेण पत्न्या दाहो दारान्तरकरणशक्तिपक्ष एवेति प्रतीतेरग्रे दारान्तरकरणपूर्वाधानस्वीकारेण स्वस्य दाहार्थमाहिताग्निसम्भवात् पूर्वैश्रौताग्निभिः तदानीमेव दाहः। तथा च

भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि।
आहरेद्विधिवद्दारान् अग्नींश्चैवाविलम्बयन्॥

इति मनुवचने स्पष्टं पूर्वापरोत्तरार्धैकवाक्यतया दारान्तरकरणपक्ष एव पूर्वाग्निभिः तस्या दाह इत्यपि प्रतीयते। **यद्यपि** यथा दारकर्मणि शक्तिपक्षे अनन्तरं करिष्यमाणाधानसम्पादितस्वात्मार्थाग्निसद्भावाद्यजमानेन पूर्वमृतायाः पत्न्याः पूर्वत्रेताग्निभिर्दाहः कर्तव्य इति प्रतीयते, तथैव दारकर्मण्यशक्तस्याप्यात्मार्थाधानेन स्वार्थाग्निसम्भवात् पूर्वाग्निभिस्तस्या दाह इत्यपि प्रतीयते इति न दारकरणपक्ष एव त्रेताग्निभिस्तस्या दाह इत्यर्थः सिद्ध्यति, **तथापि** अनेकार्थानग्नीनुत्सृज्यात्ममात्रार्थानादध्यादिति वचनान्तरेणात्मार्थाधानपक्षे पूर्वाग्निस्थापनस्योत्सर्गेष्ट्या तदुत्सर्गस्य च विधानात् तैरग्निभिः पत्न्याः स्वस्य च दाहाकरणप्रतीतेः न स्वात्मार्थाधानपक्षे नियमेन पूर्वमृतायाः पत्न्याः पूर्वाग्निभिर्दाहः।

अत एव मृतदारस्य दारकर्मण्यशक्तस्य पक्षद्वयं ; यत्पूर्वाग्निस्थापनेनोत्सर्गेष्ट्या तदुत्सर्गपूर्वकमात्ममात्रार्थाधानमित्येकः पक्षः ।

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनापि तत्कर्म यावज्जीवं समाचरेत् ।

इति छन्दोगपरिशिष्टविष्णुस्मृतिवचनात् पूर्वेषां वैदिकाग्नीनां यावज्जीवं स्थापनमित्यपरः । **उपाधिः** कुशपत्न्यादिः । पक्षद्वयेपि च सर्वाधानिनाऽर्धाधानिना च सर्वाग्नीनां स्थापनात् श्रौतस्मार्ताग्न्यभावेऽविशेषप्रवृत्तेर्निर्मन्थ्येन पत्नीमिति विहितो निर्मन्थ्याग्निरेव पूर्वमृतायाः पत्न्याः दाहे भवति । **अथवा** अर्धाधानिना केवलश्रौताग्निमात्रस्य संरक्षणे औपासनेऽपि । अत एवोत्तरपक्षेऽग्नीनां सद्भावादपत्नीकस्य यजमानस्याप्यपत्नीकोप्यग्निहोत्रमाहरेदिति श्रुतेः ।

"अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः ॥

इति स्मृतेश्चाग्निहोत्रमात्र एवाधिकारः । इममेव पक्षमभिप्रेत्योक्तमत्र **तन्त्ररत्ने**— आचारप्रामाण्यान्नापत्नीकस्य दर्शपूर्णमासाद्यनुष्ठानं, अग्निहोत्रमात्रं तु वचनादनुष्ठीयत इति । पत्न्याः सहाधिकारनियममुल्लङ्घ्यापि केवलाग्निसद्भावमात्रेण दर्शपूर्णमासानुष्ठाने आचाराभावादित्यर्थः[1] । यदा त्वग्निहोत्रानुष्ठानस्येव दर्शपूर्णमासाद्यनुष्ठानस्यापीच्छा तदा **भारद्वाज**मतेन पूर्वोक्तविधुराधानपक्षः स्वीकार्यः । एवं च पूर्वमृतायां पत्न्यां सत्यां यावद्दारान्तरकरणेनाधानसम्पादनं पूर्वाग्निभिः पत्नीदाहादग्न्यभावादेव न यजमानस्याधिकार इति न पत्नीप्रतिनिधिप्रसक्तिः । यदाप्यग्नीनां यावज्जीवं रक्षणे, अथवाऽग्नीनामुत्सर्गेष्ट्योत्सर्गेणात्मार्थाधानसम्पादिताग्निसत्वे वा अग्निसद्भावाद्यावद्वाचनिककर्ममात्रेऽस्त्येव अधिकारस्तदाप्यपत्नीकस्यैव तदानीमधिकारान्न पत्न्यपेक्षया पत्नीप्रतिनिधिप्रसक्तिरिति सिद्धम् । एतादृशे च विषये यजमानस्य यदि दारकरणोत्तरकर्तव्याधानात् प्राक् मृतिस्तदा देयः पश्चादित्यविशेषेणौपासनविधानेऽपि सर्वाधानिन औपासनाभावादर्धाधानिनश्च पत्न्याः पूर्वाग्निभिर्दाहे औपासनस्यापि दानपक्षे औपासनाभावाद्यदाऽऽहिताग्निः विच्छिन्नाग्निर्विसृष्टाग्निः विधुराग्निर्वा प्रमीयते न तस्यप्रायश्चित्तं न तमन्येन त्रेताग्निभ्योदहन्तीति **भारद्वाज**वचनविहितप्रेताधानोत्पादितत्रेताग्निभिस्तस्य दाहः विच्छिन्नाग्निः पुनराधान-

1. T. नाचरणभावादित्यर्थः ।

निमित्तत्वात् । उत्सन्नाग्निः उत्सृष्टाग्निः—उत्सर्गेष्ट्या त्यक्ताग्निः, विधुरपग्निर्भार्यायै दत्ताग्निः, प्रायश्चित्तं प्रेताधानमित्यर्थः ।

यदा त्वर्धाधानिना केवलं श्रौताग्निभिरेव पूर्वमृतपत्नीदाहं कृत्वा औपासनाग्निः स्वार्थमेतादृशमरणनिमित्तमेव संरक्ष्यते तदौपासनेनैव यजमानस्य दाहः न त्वेतावता प्रेताधानोत्पादितन्त्रेताग्निभिरैपासनस्यैतादृशे विकल्पः । त्रेताग्नेरौपासनाभावविषयत्वेनाप्युपपत्तेः न विकल्पाश्रयणं युक्तम् । यदा त्वग्नीनां स्थापनपक्षस्तदा अर्धानिना ओपासनस्य पत्नीदाहे विनियुक्तत्वात् केवलश्रौताग्निभिरेव यजमानस्य दाहः । एवं सर्वाधानिनोपि मरणे तेनैव दाहः । एवमग्नीनां स्थापनपक्षे उत्सर्गेष्टिपूर्वकात्मार्थाधानात् प्राक् यजमानमरणेऽपि तैरेव दाहः । उत्सर्गेष्ट्यनन्तरं आधानात्प्राक् तन्मृतौ तु पूर्वोक्तप्रेताधानोत्पादितत्रेताग्निभिस्तस्य दाहः उत्सृष्टाग्नेरपि तेषां विधानात् । स्वात्मार्थाधानोत्तरे तन्मरणे तु तदाहितैरेवाग्निभिर्दाहः ।

एवं स्थिते यः पश्चात् इत्यविशेषेणोक्तमपि औपासनविधानं दारग्रहणपक्षे यजमानस्य तत्सहचरिताग्निसद्भावात् तदशक्तिपक्षे आत्मार्थाधानस्य विशिष्य विधानाच्च पत्नीमरणोत्तरं यजमानमरणे अग्न्यपेक्षाभावेन पत्नीमात्रविषय एव व्यतिष्ठते इति केषांचिदुक्तम्, तथा विधुराधानात् प्राक् यजमानमरणेऽपि यः पश्चादित्यौपासनविधानं प्रवर्तत इति केषांचिदुक्तं तदुभयमप्यपास्तम् । औपासनाभावे तद्विधानस्य यजमानदाहे अप्राप्तात्त्वप्यौपासनसत्वे यजमानमरणे सति तद्विधानस्य यजमानदाहेपि तत्प्राप्तेरपरिहार्यत्वात् । इतरथा पत्नीमात्रविषयेऽपि निर्मन्थ्येनैव दाहोपपत्तेः यः पश्चादित्यौपासनविधेस्तत्राप्याप्तेर्निर्विषयत्वापत्तेः । यदा तु त्रेताग्निजनकप्रेताधानसिद्ध्यर्थमरण्योस्सर्वाधानिनोर्निर्मन्थ्येन अर्धाधानिनश्चौपासनेन निष्टपनमपि कैश्चिल्लिख्यते तदा त्वौपासनसत्वे तेनारण्योस्तपनपूर्वकं प्रेताधानोत्पादितैरेवाग्निभिर्यजमानदाह इति सर्वदा पत्नीमरणोत्तरं श्रौताग्न्यभावे प्रेताधानोत्पादितैरेव न तु कदाचिदौपासनेनापीति ध्येयम् ।

केचित्तु यः पश्चादिति विधानं स्मार्तप्रेताधानोत्पादिताग्निभिः पश्चान्मृतस्य दाह इति प्रतिपादनार्थम् । तथाचौपासनसत्वे तेनैव दाहः । तदभावे तु यथैव तद्विच्छेदे स्मार्तप्रेताधानेन स्मार्ताग्निसम्पादनं तथैव तत् कृत्वा स्मार्ताग्निनैव दाहः । एवं च सर्वाधान्यर्धाधानिविषयद्वयेपि अग्न्यपेक्षायां निरशङ्कमौपासनविधानमित्याहुः ॥

वस्तुतस्त्वर्धाधानिविषयकत्वं सर्वाधानिविषये च सर्वांशेपि विधायकत्वमित्येवं वैरूप्यापत्तेर्लाघवाच्च अर्धाधानिविषयत्वपरत्वमेव युक्तं, इतरथा सर्वाधानिविषयेऽस्य स्वतन्त्रौपासन-

प्रयोजकत्वकल्पने गौरवापत्तेरतोऽर्धाधानिपरत्वमेव यः पश्चादित्यंशस्येति। एवमेकभार्यविषये निर्णय उक्तः। द्विभार्यस्य तु यदि भर्तुः पूर्वं कनिष्ठा म्रियते तदा

" द्वितीयां चैव भार्यां दहेद्वैतानिकाग्निभिः।
जीवत्यां प्रथमायां तु सुरापानसमं स्मृतम्।

इति मिताक्षराधृतस्मृत्यन्तरान्निर्मन्थ्येन तस्या दाहः। अथवा त्रेताग्निभिः तस्या दाहं कृत्वा ज्येष्ठया सह पुनराधानं कार्यम्। ज्येष्ठाया एव पूर्वं मरणेऽपि तस्या अपि त्रेताग्निभिरेव दाहः कनिष्ठया सह पुनराधानम्। स्त्रीमात्रस्य पूर्वं नाशे तु दारकरणसामर्थ्ये त्रेताग्निभिरेव दाहः। अन्यथा निर्मन्थ्येनेति तु पूर्वमेवोक्तम्। सर्वं चेममर्थमनुसन्धायोक्तं **मण्डनकारिकाभिः।**

'पत्नी चेद्विधवा भूत्वा प्रमीयेत कदाचन।
तदा श्रौताग्निशून्यत्वात् निर्मन्थ्येनैव तां दहेत्।
पुनः परिणयाधाने स्वामिनो यदि सिद्ध्यतः।
पत्न्यै मृतायै श्रौताग्नीन् दद्यान्निर्मन्थ्यमन्यथा॥

तथैवानेकभार्यस्य यद्येका तत्र मीयते।
नेच्छेत्पुनर्विवाहं तु चेन्निर्मन्थ्येन तां दहेत्॥

किन्त्वेतावदिहाप्यस्ति दग्ध्वा निर्मन्थ्यवह्निना।
उत्सर्गेष्ट्या त्यजेदग्नीन् पुनस्तानादधीत च[1]॥

तथा तत्रैव पत्न्यैव अग्न्यदानेनाग्निहोत्रानुष्ठानं ज्येष्ठायां सत्यां द्वितीयायै अग्नीनामदानं अविशेषेणाग्नीन् दत्वा विवाह्याऽऽधानं एकाकिन एवाधानं इति पक्षा उक्ताः॥

नित्याग्निहोत्रं प्रेतायै न स्त्रियै दातुमर्हति।
नाप्यादधीत पूर्वाग्नावग्निहोत्रं समाचरेत्।
ज्येष्ठायां विद्यमानायां द्वितीयायै स्वयोषिते।
काम्यं नित्याग्निहोत्रं वा न कथञ्चित्प्रयच्छति।

1. P. चेत्।

जायायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि ।

इति पक्षे तावदग्न्यभावादेव, विवाहात्पूर्वमनधिकारात् । तत्रापि विधुराधानपक्षे अनौत्तरवेदिककर्मणां पत्नीव्यतिरेकेणैव वाचनिकत्वेन पत्नीप्रतिनिध्यप्रसक्तेः । यदा तु नाग्नीनां पत्न्यै दानं तदाऽपि 'तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरेत्' इति वचनात् पत्नीव्यतिरेकेणव अग्निहोत्रमात्रानुष्ठानमिति न प्रतिनिधिप्रसक्तिः । यदा तु कस्यचित् कर्मणो मध्येऽन्यतरस्य मृतिस्तदा दाहात्पूर्वमेव तत्समापने वक्ष्यमाणरीत्या प्रोषितादिव- देवानुष्ठानमिति न प्रतिनिधिप्रसक्तिः । रोगादिना अशक्तौ कार्यान्तरव्यापृते वाऽन्यत- राधिकारिककर्मसु यद्यपि स्वामिनः कालादिवत्प्रयोगविध्यविषयत्वात् तदेकत्वादिवदेव न प्रतिनिधिप्रसक्तिः । तथाऽपि

सन्ध्यामिष्टिं चरुं होममसगोत्रेण कारयेत् ।

इत्यादिवचनबलाच्छिष्टाचाराच्चानुमतिद्वारा कर्त्रन्तरेणाप्यनुष्ठानं, स्वत्वत्यागमात्रं तु सति सम्भवे स्वयं कार्यम् । नो चेत्तदपि तेनैव अग्नय इदं न मदीययजमानस्येत्येवं कार्यम् । उभयाधिकारिकेषु दर्शादिषु त्यागघटितं कर्मान्यतरेणैव कार्यं द्वयोरपि संसृष्टस्वत्ववत्त्वात् । अत एव त्यागोऽपि तादृशस्थले मम यजमानस्य च नेत्यादिरूपः । उभयोरप्यशक्तावध्वर्यु- णैव, असति बाधे सामान्यसमाख्यया तत्प्राप्तेः । एवं यजमानप्रवासेऽपि । पत्न्यास्तु

---

स्त्रीमात्रमविशेषेण दग्ध्वान्यां वैदिकाग्निभिः ।
विवाह्यादधते यद्वाऽधानमेवास्ति चेद्वधूः ।
एकाकी वादधीताग्नीन् विवाहश्चेन्न सिद्ध्यति ॥

इति । तत्सिद्धं दम्पत्योरन्यतरमरणे श्रौताग्नीनां तद्दाहे प्रतिपादनेनाग्न्यभावादन्यतर- स्यानधिकारादेव नान्यतरप्रतिनिधिप्रसक्तिः । यजमानस्यापत्नीकस्यापि श्रौताग्निधारणपक्षे अपत्नीकत्वेनैव कतिपयकर्मण्यधिकारान्न तदपेक्षया प्रतिनिधिप्रसक्तिरिति अग्न्यभावप्रसङ्गादा- हितानिमरणे अग्निनिर्णयः कृतः । समारोपिताग्निकादियजमानस्य तादृशपत्न्या वा मरणेऽग्नि- निर्णयस्तु ग्रन्थान्तरादवगन्तव्यः । पत्नीव्यतिरेकेणेति । वाचनिककुशपत्न्या विद्यमानत्वेऽपि वास्तवपत्नीत्वाभावात् पत्नीव्यतिरेकेत्युक्तौ न बाधकम् । तस्याः कर्तृत्वांशेनापि प्रतिनिधित्वा- भावादित्यर्थः । अग्निहोत्रमात्रानुष्ठानमिति । मात्रच्प्रयोगाभिप्रायः पूर्वमेव दर्शितः । उभया- धिकारिकेष्विति । अत्रापि रोगादिना अशक्तावित्येतदनुवर्तते । तथाचात्रापि अन्यतरस्या- शक्तौ कार्यान्तरव्यापृते च सतीत्यर्थः । पत्न्यास्तु प्रवासे इति । यदि पत्नी सीमाति-

प्रवासेऽग्निविच्छेद एव। एवमाज्यावेक्षणादियाजमानपदार्थानामध्वर्युणैव करणम्। पत्नीपदार्थानां च, सामान्यसमाख्याऽनुरोधेन यजमानस्याप्राप्तेः। एवं फलिसंस्कारेष्वपि आनीयमाने फलाभावात् न प्रतिनिध्याशङ्का। अत स्तेषामशक्त्यादौ लोप एव। न तु दम्पतिभ्यां परस्परमपि करणं, तत्तद्वाक्ये यजमानत्वादेरुद्देश्यतावच्छेदककोटिप्रविष्टत्वात्। अध्वर्य्वादीनामशक्त्यादौ तु अध्वर्य्वाद्यन्तरमेवोपादेयमिति न तत्र प्रतिनिधिः॥ ७॥

---

## (८)—बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात्॥ २२॥

एवं तावत्स्मृत्याचारप्रामाण्यात् क्वचित्कर्त्रन्तरसत्त्वेऽपि न्यायेन न प्रतिनिधिरिति स्थितेऽपवादः क्रियते—सत्रमध्ये कस्यचिद्यजमानस्य मरणे तत्प्रतिनिधिरन्यः कार्य एव। काम्यस्यापि प्रारब्धस्यावश्यं समापनीयत्वात्। यद्यपि च मुख्य कर्तुः प्रयोगविध्यविषयत्वान्न प्रतिनिधिः न वा मृतेन तदुपादानसम्भवः। तथाऽपि साङ्गकर्तरि 'सप्तदशावरास्सत्रमासीरन्' इति वाक्येन साप्तदश्यविधानात् साप्तदश्यरूपाङ्गसम्पत्त्यर्थमन्योपादानमवशिष्टैः कार्यम्। न च तस्याख्यातोपात्ताधिकारिसङ्ख्याविशेषत्वादानीयमानस्य च

---

क्रमेदादित्योस्तमियात् अभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तमिति वचनेन पत्न्याः सीमान्तगमने पुनराधेयप्रायश्चित्तविधानात् अग्निविच्छेद एवेत्यर्थः। यत्र चान्यतरगामिफलके कर्मणि उभयोरप्यप्रतिबन्धेन सन्निधानं तत्रान्यतरकर्तृकपदार्थानामाज्यावेक्षणादीनां गुणलोपे च मुख्यस्येति न्यायेन परिक्रयेणान्यतरोपादानेनानुष्ठानमुक्तं प्राक्। यत्रापि अन्यतरगामिफलके उभयगामिफलके वा कर्मणि अन्यतरस्य प्रतिबन्धेनासन्निधानं, यत्र वा पत्नीकर्तृकाग्निहोत्रदर्शपूर्णमासादिषु पत्न्यभावस्तत्रान्यतरस्य परिक्रयेणोपादानेनापि आज्यावेक्षणादितत्तत्कर्तृकपदार्थानामनुष्ठानसम्भवात् तेषां केनानुष्ठानमित्यत आह—एवं आज्यावेक्षणेति। स्वरूपेण पत्न्यभावे तु तत्कर्तृकपदार्थानां लोप एव द्रष्टव्यः। आनीयमाने अध्वर्य्वादिरूपे कर्त्रन्तरे॥

---

॥ बहूनां तु प्रवृत्ते॥

अधिकारिसङ्ख्याविशेषत्वादिति। आसीरन्निति बहुवचननेनानियता या सङ्ख्या प्राप्ता सा सप्तदशावरा इत्यनेन नियम्यते। अनियता च स्वतन्त्रकर्तृगतैव प्राप्तेति फलसम्बन्धाभावे स्वतन्त्रताभावान्नानीतेन नियम्यमानस्वामिगतसप्तदशसङ्ख्यापूरणमित्याशङ्क्य परिहरति—न च तस्या इति। यद्यप्यानीयमानेन स्वामिगतसङ्ख्यापूरणं, तथापि यो

वक्ष्यमाणरीत्या फलभोक्तृत्वाभावादृत्विक्त्वानुपपत्तेः कथं तमादाय सांतद्श्यसम्पत्तिः । फलभोक्तृत्वाभावेपि कर्तृनिष्ठत्वमात्रेणैव साप्तदश्योपपत्तेः अत एवार्त्विज्येऽपि 'ये यजमानास्त ऋत्विजः' इत्यनेन जघन्यऋत्विक्पदे आर्त्विज्यलक्षणमनूकृत्य तदुद्देशेन यजमानानां कर्तृत्वविधानात् यजमानपदस्य च शानजन्ततया आत्मनेपदरूपत्वेन फलभोक्तृत्वविशिष्टकर्तृत्ववाचित्वेऽपि यथाशक्ति प्रयोगेण भोक्तृत्वाभावे ऽप्यप्रतिनिहितस्य कर्तृत्वसत्त्वात् सङ्ख्यासम्पत्त्यविघातः। ततश्च सङ्ख्यासम्पत्त्यै न्यायेनैवात्र प्रतिनिध्युपादानम्। एवं च न्यायप्राप्तेः पूर्वमेव प्रवृत्तेन "यदि सत्त्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठस्स्यात् तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्" इत्यनेन वचनेन नेदिष्ठत्वविधानार्थं पुनर्विधिः। अत एवेदमधिकरणं शिष्यव्युत्पत्तिमात्रार्थं, तदभावेऽपि वचनेनैवान्यागमोपपत्तेः। अत्र च पत्नीमरणेऽपि 'तेन सह यजेरन्' इति पुल्लिङ्गनिर्देशात् यजमानसाप्तदश्येनैव च सङ्ख्याया अपि सम्पत्तेः तत्कर्तव्यपदार्थानां च पत्न्यन्तरेण

---

मृतस्तत्कर्तव्यपदार्थकर्तृत्वांशेनानीयमानस्तत्पूरको भवत्येव कर्तृत्वांशेन प्रतिनिधिः। न हि स्वामिसादृश्यं न सम्भवतीत्येतावता यथाशक्तिप्रयोगसत्त्वेपि सम्भवदपि कर्तृत्वांशे साप्तदश्यं हातव्यं भवतीत्यर्थः। न च तथापि यजमानानामेवार्त्विज्यविधानात् आनीतस्य यजमानत्वाभावे कर्तृत्वमपि न सम्भवतीत्याशङ्कां परिहरन्नाह—अत एवेति। यद्यपि यजमानपदात् स्वामित्वं कर्तृत्वं चोभयं प्रतीयते, तत्र यदि आर्त्विज्ये कर्तृमात्रं विधीयते, तदा अस्वामिनोऽपि कर्तृत्वसम्भवात् स्वामित्वं पाक्षिकानुवादः प्रसज्येत, अतः कर्तृत्वं नित्यप्राप्तानुवादः फलभागित्वरूपं स्वामित्वमेव विधीयत इति अस्वामिनि ऋत्विक्कार्यगतकर्तृत्वे स्पष्टमेव वैगुण्यमापद्यते तथापि प्रारब्धस्यावश्यसमापनीयत्वेन यथाशक्तिप्रयोगस्यावश्यकत्वात् तदभावकृतवैगुण्येपि कर्तृत्वांशेनैवार्त्विज्ये विधाने बाधकाभावात् अस्त्येवानीतस्य कर्तृत्वमिति सप्तदशसङ्ख्यासम्पत्तौ न बाधकमित्यर्थः। न च द्रव्यत्यागकर्तृगतसाप्तदश्यसङ्ख्यायाः सत्रप्रयोगारम्भे षोडशानां द्रव्यसाधारण्यकरणेन सङ्ख्यानिवेशसम्भवेप्यानीतस्य द्रव्यसाधारण्याभावे त्यागकर्तृत्वायोगात् कथमन्यानयनेप्युपपत्तिरिति वाच्यं; यथा सम्भवति त्यागकर्तृत्वं तथैव यत्नेन तत्सम्पादने बाधकाभावात् प्रागेव साधारणीकृतस्य द्रव्यस्य प्रतिनिहितेन क्रयादिना सम्पादयितुं शक्यत्वात्—नेदिष्ठत्वविधानार्थमिति। अत्र हविरार्तिन्यायेन सत्राय दीक्षितानां मरणे निमित्ते यो मृतस्तन्नेदिष्ठसाहित्यमितरकर्तृकं दीक्षा तदुत्तरकालविशिष्टं यागोद्देशेन विधीयते। अन्यत्तु सर्वमनुवादः नेदिष्ठसामर्थ्यादेव मृतस्थानकत्वस्य तत्साहित्येन यागकर्तृत्वस्यार्थतः प्राप्तत्वात्। तत्र च "अन्तिकबाढयोर्नेदसाधौ" इति सूत्रेणातिशयार्थकेष्ठनीयसुन् प्रत्ययद्वये निमित्ते

यजमानैरेव वा सिद्धेः नान्यानयनम्। अत एव तादृशस्थले पत्न्या नाग्निभिर्दाहः। किन्त्वग्न्यन्तरेणैव। यजमानस्य तु मृतस्य पृथक्कृतस्वाग्निभिर्दाहेऽप्यनाहिताग्निसाधारण्येन आनीतस्याग्निसंसर्गे प्रमाणाभावात् ऋत्विग्वदेव कर्तृत्वोपपत्तिः॥ ८॥

---

(९)—स स्वामी स्यात तत्संयोगात ॥ २३ ॥ कर्मकरो वा भृतत्वात् ॥ तस्मिंश्च फलदर्शनात ॥ २५ ॥

पूर्वाक्षेपेणेदं आनीयमानस्य न कर्तृत्वमात्रं, अपि तु स्वामित्वमपि तत्स्थानापन्नत्वात् दीक्षा[illegible]संस्कारश्रवणाच्चेति प्राप्ते—

---

अन्तिकबाढशब्दयोर्नेदसाधादेशविधानात् अतिशयेन समीपस्थो नेदिष्ठपदार्थो द्रष्टव्यः। नान्यानयमिति। यद्यप्यत्रासीरन्निति बहुवचनेन बहुत्वमुच्यमानं यद्यपि कर्तृत्वाश्रयगतं प्रतीयते तथापि दम्पत्योस्सहाधिकारात कर्तृत्वाश्रयाणां चतुस्त्रिंशत्सङ्ख्यत्वात् सप्तदशसङ्ख्यानियमो न सिद्ध्यतीति बहुत्वं साप्तदश्यं च व्यासज्यवृत्तिकर्तृत्वगतमेव वाच्यं; ततश्च पत्नीमरणेऽपि कर्तृत्वगतसाप्तदश्यसङ्ख्यापूर्तये सम्भवतः परिक्रयादिना पत्न्यन्तरस्य हानायोगात् गुणलोपे च मुख्यस्येति न्यायेन पत्न्यन्तरानयनमावश्यकमेव। न च तेन सह यजेरन्निति पुंलिङ्गनिर्देशात् न तत्साहित्यापेक्षेति युक्तं, वचनेन पुंस एव नेदिष्ठस्य विधानसामर्थ्यात पुंमरणनिमित्तकत्वावगमेऽपि पत्नीमरणे न्यायप्राप्तस्य पत्न्यन्तरप्रतिनिधेरपवादे प्रमाणाभावात्। न च पत्न्यन्तरेण यजमानैरेव वा तत्कार्यसिद्धेर्नान्योपादानं, तथात्वे यजमानमरणेऽपि यजमानान्तरैरेव सिद्धेरन्यानयनानापत्तेः। नहि कर्तव्यपदार्थानुरोधेनान्यानयनमत्र, किं तु यथारब्धस्य प्रयोगस्य तथैव समाप्त्यनुरोधेन। तथा च सप्तदशकर्तृत्वारब्धप्रयोगसमाप्त्यर्थं पत्न्यन्तरानयनं युक्तमेव; तथापि दम्पत्योर्व्यासक्तकर्तृत्वस्य धर्मे चार्थे चेति वचनप्रमाणकस्य परस्परविवाहितविषये एव सम्भवादानीतायामन्यस्यामपि स्त्रियां व्यासक्तकर्तृत्वे प्रमाणाभावात तामादायापि व्यासक्तकर्तृत्वगतसाप्तदश्यस्यानिर्वाहे तदभावकृतवैगुण्यमङ्गीकृत्यापि प्रयोगसमाप्तेरावश्यकत्वान्न निष्प्रयोजनं तदानयनं कार्यमित्याशयः॥

न तावदत्र सत्रफलं तस्य वैगुण्ये सत्यनुपपत्तेः। तद्धि न तावदानीतस्य साङ्ग-कर्तृत्वाभावात्। अत एव न मृतस्यापि। नाप्यवशिष्टानां सत्वद[illegible]-कर्तृत्वाभावात्। अवशिष्टैस्तु शिष्टविगर्हणाद्[illegible]मवश्यं कर्तव्ये क्रतुसमापन सामाद्युपायैस्स[illegible]यासम्पत्त्यर्थमन्यस्समानीयते। अत एव प्रारम्भनिमित्तकसमापन-साध्यपापक्षयोऽप्यवशिष्टानामेव नानीतस्य प्रारम्भरूपनिमित्ताभावात्। अतस्तस्य क[illegible]त्वमात्रमिति सिद्धम्॥ ९॥

## (१०)—स तद्धर्मा स्यात् कर्मसंयोगात्॥ २६॥

फलिसंस्काराः ब्रह्मचर्यपयोव्रताद्य आनीतस्य फलित्वाभावादप्राकृतकार्यकारित्वापत्तेर्न कर्तव्याः। अवशिष्टानां तु सत्रफलाभावेऽपि प्रारम्भनिमित्तकपापक्षयस्य सत्त्वात्कर्तव्याः। अत एव फलिसंस्काराणां प्रकृतौ प्रधानफलाधानयोग्यताजननार्थत्वात् यदा प्रधान-करणात्पूर्वं मृतिस्तदैव तेषां फलिसंस्काराः। पापक्षयस्य प्रधानजन्यत्वा[illegible] न तदूर्ध्वमिति ध्येयम्। दीक्षाकरणं त्वानीतस्य वाचनिकमप्राकृतं कार्यमिति प्राप्ते—

॥ स स्वामी स्यात्॥

वैगुण्ये सतीति। वैगुण्यं चास्वामिकर्तृकत्वादिना प्रागुपपादितेन ज्ञेयम्। मृतस्योत्तरप्रयोगाननुष्ठानात् आनीतस्य पूर्वप्रयोगाननुष्ठानादुभयोरपि साङ्गकर्माकरणान्न काम्यमान-सत्रफलमित्याह—तद्धीति।

॥ स तद्धर्मा स्यात्॥

वपनादिसंस्काराणां दीक्षान्तर्गततया तस्या वाचनिकत्वेन पक्षद्वयेऽप्यनुष्ठानाविशेषात् विचारासम्भवमभिप्रेत्य तदनन्तर्गतान् विशेषरूपेणोदाहरति—ब्रह्मचर्येति। अप्राकृतकार्य-का[illegible]त्वापत्तेरिति। प्रकृतौ हि फलिसंस्काराणां स्वसमानाधिकरणफलग्रहणयोग्यताधायकत्वं क्लृप्तं कार्यम्। इह त्वानीते फला[1]भावात् तद्ग्रहणयोग्यताधायकत्वासम्भवादवशिष्ट-यजमाननिष्ठफलजननयोग्यताधानार्थं तदनुष्ठाने च स्वसमानाधिकरणफलग्रहणयोग्यताधायक-त्वानुपपत्तेरुभयथापि प्राकृतकार्यकारित्वासम्भव इत्यर्थः। नन्ववशिष्टेष्वपि सत्रफलाभावान्न फलिसंस्कारानुष्ठानापत्तिरित्यत आह — अवशिष्टानान्त्विति। न तु तदूर्ध्वमिति।

1. P. फलसम्भवात्।

प्रधानानुष्ठानानन्तरं कस्यचिन्मृतौ प्रधानस्य पूर्वं जातत्वेपि प्रधानानन्तरावशिष्टपदार्थानुष्ठानस्यैवावश्यकर्तव्यताबोधात्तावन्मात्रादेव पापक्षयफलोत्पत्तिरिति न तत्र प्रधानफलं पापक्षयो येन प्रधानजन्यफलाधानयोग्यताजनकाः फलिसंस्कारा अवशिष्टेषु आपद्येरन् न त्वेवैतदस्तीति न तादृशस्थले अवशिष्टेषु फलिसंस्कारा इत्यर्थः ॥

अत्रेदमवधेयं। नित्येषु तावन्निमित्तं प्रधानमात्रांश एव पूर्वोपपादितरीत्या आवश्यकतां बोधयतीति सति संभवे यावदङ्गसहितं, असम्भवे यावत्सम्भवाङ्गसहितं कथंचित्प्रधानमात्रमनुष्ठेयं तत्रापि न प्रधानमात्रादव्यवधानेन पापक्षयोत्पत्तिः अपूर्वमन्तरेण भवति। अन्यथोत्तराङ्गानुष्ठानवैयर्थ्यापत्तेः। अतो यथैव दीक्षणीयाजन्यो दीक्षारूपः संस्कारः प्रधानमात्रादुत्तरतन्त्रवैयर्थ्यापत्तेर्न भवति, किं तु दीक्षणीयाप्रधानेनाव्यवधानेनोत्पादिते उत्पत्त्यपूर्वे उत्तराङ्गैः दीक्षारूपसंस्कारजननानुकूलयोग्यतासम्पादनानन्तरं सर्वान्त एवेति नवमादौ सिद्धन्तयिष्यते; एवमिहापि उत्पत्त्यपूर्वानन्तरमुत्तरतन्त्रानुष्ठानसाहाय्येनान्त एव पापक्षयोत्पत्तिरिति शतशः आवेदितमेव। प्रारम्भनिमित्ते तु विधीयमानायाः कर्मसमाप्तेरावश्यकत्वबोधात् न प्रधानमात्रस्यैवावश्यकत्वबोधे तात्पर्यं, अपि तु ब्राह्मणतर्पणान्तस्यैव तद्बोधे तात्पर्यम्। अत एवारंभस्य निमित्तत्वेऽपि न प्रधानमात्रारम्भो निमित्तं तत्समाप्तिमात्रमेव नैमित्तिकमिति बोध्यते, तथात्वे अन्वाधानादिकतिपयाङ्गानुष्ठानानन्तरं अवाप्ते फले वीतायां फलेच्छायां प्रधानारम्भस्याभावात् प्रयोगसमाप्त्यावश्यकत्वानापत्तेः। किं तु प्रयोगारम्भ एव निमित्तं तत्समाप्तिरेव च नैमित्तिकी समाप्तेरावश्यकत्वानुरोधेनैव चाङ्गेषु यथाशक्त्युपबन्धः तस्यावश्यकत्वात्।

एवं च यथैव काम्यदर्शाद्यनुष्ठानकाले निमित्तसत्वान्नित्यस्यापि भवत्येव प्रसङ्गानुष्ठानं इत्यन्तरा पापक्षयोऽपि आनुषङ्गिको भवत्येव। सर्वत्रापि चोत्पद्यमानः पापक्षयः सर्वप्रयोगान्त एवोत्पद्यत इत्युपपादितमेव, सुतरां यत्र कर्मसमाप्तेः समाप्तिविशिष्टकर्मणो वा नैमित्तिकत्वेन विधानं तत्र समाप्त्यनन्तरमेव तदुत्पत्तिरिति। प्रधानकरणात्पूर्वमुत्तरं वा कस्यचिन्मृतौ पापक्षयस्य सर्वान्त एवोत्पत्स्यमानत्वात्, तस्य च प्रधानजन्यत्वेन प्रधानफलत्वात् तदाधानयोग्यतासम्पादकाः कर्तव्या एवावशिष्टेषु फलिसंस्काराः। अन्यथा प्रधानोत्तरावशिष्टपदार्थानुष्ठानस्यैव पापक्षयफलकत्वे प्रधानप्रयोगसमाप्तिजन्यफलाधानयोग्यतार्थमवशिष्टानामवश्यशिष्टानामावश्यका एव फलिसंस्काराः। एतावांस्तु विशेषः प्रधानानन्तरं कस्यचिन्मृतौ परप्रयुक्तमेव प्रधानपर्यन्तपदार्थानुष्ठानं लभ्यत इति न प्रारम्भस्य तदनुष्ठापकत्वं कल्प्यते। किं तु तदुत्तरपदार्थानुष्ठापकत्वमात्रं; तेन चानुष्ठितैरुत्तरपदार्थैरुपकृतं प्रधानं परप्रयुक्तमपि प्रारम्भनिमि-

यद्यपि न तस्य फलित्वं तथाऽप्यन्येषां फलिसंस्कारकर्तरि साप्तदश्यसम्पत्त्यर्थमानीतस्यापि ते कार्याः। न च ब्रह्मचर्यादिषु पुरुषस्य संस्कार्यत्वेन कर्तृत्वस्यार्थिकत्वात्सङ्ख्यायाश्च वैध एव कर्तृत्वे निवेशात् फलिसंस्कारकर्तरि साप्तदश्याभावः वैधावैधसाधारणावश्यककर्तृत्वद्वारेणैव लाघवात् साप्तदश्यस्य सत्राङ्गत्वोपपत्तेः। अतस्तत्सम्पत्त्यर्थं कर्तव्या एव फलिसंस्काराः। ननु 'सप्तदशावराः' इत्यनेन सत्रप्रयोगकर्तृपरिच्छेदकत्वेन साप्तदश्यं विहितं न तु प्रत्येकं, तत्तत्पदार्थे। प्रत्येकपदार्थानां सप्तदशभिरकरणात्। न चानुमतिद्वारा सप्तदशानां सर्वत्र कर्तृत्वं, तथात्वे फलिसंस्कारेष्वनुमतिद्वारेणैव साप्तदश्योपपत्तेरानीते फलिसंस्कारकरणानापत्तेः। किञ्चैवं मृतस्यैव पूर्वकाले अनुमतिसत्त्वात् सङ्ख्यासम्पत्तिसम्भवेनानयनवैयर्थ्यम्। मृतकर्तव्यपदार्थानुष्ठानार्थमानयनमिति चेत्तेषां कर्मान्तरेष्विव आध्वर्यवादिसमाख्यया 'इतरमन्यस्तेषाम्' इति न्यायेन वा कर्त्रन्तरैरेव सिद्धेः। अतश्चानयन एव प्रमाणाभावे कुतस्त्यं संस्कारकल्पनमिति चेत्—तन्न—न्यायेन तदसिद्धावपि वचनेनैव तत्सिद्धेः।

---

त्तकसमाप्तिविशिष्टं भवत्येवेति कारणीभूतप्रधानस्यैव पापक्षयफलकत्वं न तूत्तरपदार्थमात्राणामेवेति। अनुमतिद्वारेणैवेति। आनीतेनापि अवशिष्टयजमानसंस्कारेषु अनुमतिमात्रं कर्तव्यं तेन संस्कारेषु सप्तदशकर्तृत्वसिद्धेः न फलिसंस्कारकरणापत्तिः इत्यर्थः। न्यायेन तदसिद्धावपीति।

अत्रेदमवधेयं। सत्रप्रयोगविधिना हि कर्तॄणां साहित्यविधानवत् प्रधानभूतद्रव्यत्यागानां कर्तृभेदेन भिन्नानामपि साहित्यं यथा बोधितं तथैवाङ्गप्रधानानामङ्गानां च परस्परमपि साहित्यमितरप्रयोगाविधिनेव विधीयत इति निर्विवादम्। ततश्च कस्यचिन्मृतौ तत्कर्तव्येतरपदार्थानां त्यागस्य च यद्याध्वर्यवादिसमाख्यया इतरमन्यस्तेषामिति न्यायेन तदीयपुरुषेण वाऽनुष्ठानसम्भवेऽपि न साहित्यमुपपद्यते पञ्चदशकर्तृकत्यागसमसमये तदीयपुरुषेण वा षोडशेन स्वकर्तृकद्रव्यत्यागकरणसम्भवेपि मृतद्रव्यत्यागस्य स्वद्रव्यत्यागानन्तरभावित्वेनैकसमयवृत्तित्वासम्भवात्।

एवं मृतकर्तृकपदार्थानां तदीयपुरुषकर्तृकपदार्थानां वा एकसमयवृत्तित्वासम्भवेन साहित्यानुपपत्तेश्च। अतः कर्तृत्वांशेन सप्तदशकर्तृकपदार्थसाहित्यं यावत्सम्भवति तावन्न हातव्यं भवति इति अवश्यं पुरुषान्तरानयनं युक्तमेव। अत एवेतरेषां फलप्राप्तेर्यथोपक्रान्तकर्मानुष्ठानाधीनसिद्धित्वात् सप्तदशकर्तृकस्य च ब्रह्मचर्यादेः स्वकार्यसाधनत्वात् तत्सिध्यर्थं प्रतिनिहितोऽपि ब्रह्मचर्यादि कुर्यादिति तन्त्ररत्नादिग्रन्थानामप्येतदेव तात्पर्यम्। इतरथा तत्तद्यजमाननिष्ठतत्त-

**अत एवोक्तवचने दीक्षितमरणे निमित्ते दीक्षानेदिष्ठसाहित्याद्यनेकगुणविशिष्टनैमित्तिकव्याप्यतावत्पदार्थप्रयोगस्यैव विधानात् न वाक्यभेदः। दीक्षा चाप्राकृतकार्याऽपि वचनादेव विधीयते। तस्याश्च यमनियमपरिग्रहरूपत्वात् ब्रह्मचर्यादिसिद्धिः। एवं च ये केचित्तद्भिन्नास्संस्कारास्ते न कार्या इति प्रतिभाति। सत्राय दीक्षितानामिति श्रवणाच्च नाहीने तदानयनम् ॥ १० ॥**

---

त्संस्काराणां तत्तत्स्वनिष्ठफलाधानयोग्यताजनकत्वेपि ब्रह्मचर्यादिनिष्ठस्य साप्तदश्यस्य प्रचयशिष्टत्वेनार्थिकस्य फलाधानयोग्यताजनकत्वबोधने प्रमाणाभावात्सप्तदशकर्तृकब्रह्मचर्यस्य च स्वकार्यसाधनत्वादित्युक्तेरकिञ्चित्करत्वापत्तेः। अत एव सर्वफलार्थदर्शपूर्णमासविधानेऽपि तत्तत्फलविशेषोद्देश्यकप्रातिस्विकतत्तत्प्रयोगविधिकल्पने यत्फलमुभयगामि सम्भवति तत्र दम्पतीकर्तृकब्रह्मचर्यादिसंस्कारकूटद्वयस्याङ्गत्वात् तयोः परस्परसाहित्यस्यापि तेन बोधनादन्यतरब्रह्मचर्याद्यभावे नैव फलसिद्धिः। यत्र त्वन्यतरगाम्येव फलं तत्रान्यतरस्य परिक्रयेणोपादानेपि अन्यतरनिष्ठफलोत्पादकब्रह्मचर्यादीनामेवाङ्गत्वविधानात् तदीयप्रातिस्विकविधिनेतरब्रह्मचर्यादिसाहित्यस्याबोधनादन्यतरब्रह्मचर्यादेव फलसिद्धिरिति वैषम्यम्।

**एतेन** श्राद्धे पत्न्या आधिकारोऽस्ति नास्ति वेति विचारे अन्यतरगामिफलके कर्मणि परिक्रयेणोपात्तयोः पत्नीयजमानयोः फलिसंस्कारा भवन्ति न वेति तु वादान्तरमिति **कालतत्त्वविवेचनकाराणां** लिखनमपि व्याख्यातम्। एवं च न्यायेन पुरुषान्तरस्यानयने तत्संस्काराणां च प्राप्तिसिद्धौ यदि सत्राय दीक्षितानामिति वचनं यथैव नेदिष्ठत्वांशे विधायकं तथैव साधारण्येन सकलफलिसंस्कारप्राप्तौ दीक्षामात्रविधानेनेतरसंस्कारपरिसङ्ख्यापकम्। अथवा दीक्षापदस्योपलक्षणत्वमङ्गीकृत्य सर्वसंस्कारानुवादकमिति ध्येयमिति। **तावत्पदार्थेति**। यदन्तपदार्थानुष्ठानसमये यजमानस्य मृतिः तदाद्युत्तरपदार्थजातन्तावत्पदस्यार्थः। यद्यपि च तावत्प्रयोगभावनायाः प्रारम्भनिमित्तकावश्यसमापनविधिना सामान्यप्रवृत्तेनैव प्राप्तत्वान्न पुनर्विधाने प्रयोजनं तथापि अस्मिन् पक्षे दीक्षादीनां न्यायतः प्राप्त्यभावान्नेदिष्ठतद्दीक्षासाहित्याद्यनेकगुणविधाने प्रसक्तवाक्यभेदनिवारणाय प्राप्ताया अपि तस्याः पुनर्विधानमुक्तम्। अथवा प्रारम्भनिमित्तकावश्यकसमापनप्रयोगो यो व्यापकः तद्व्याप्यं तावत्प्रयोगान्तरमेव सत्रीयदीक्षितमरणनिमित्तकं विधीयत इति **नैमित्तिकव्याप्येत्यनेन** सूचितं न विरुद्ध्यत इति द्रष्टव्यम्। **नाहीने इति**। द्विरात्रादारभ्य एकादशरात्रपर्यन्तमहीनाः त्रयोदशरात्रादारभ्य सर्वेऽपि सत्रभूताः। अनियतसङ्ख्यकर्तृकत्वे सति यजतिचोदनाचोदितत्वरूपाहीनत्वस्य नियतसङ्ख्यकर्तृकत्वे सत्यासीरन्नुपेयु-

## (११)—सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

एवं प्रतिनिधौ विचारिते किं सति सम्भवे सदृश एव प्रतिनिधिरुतानियम इति चिन्तायां—कर्मचोदनया यत्किञ्चिद्द्रव्यमात्राक्षेपात् द्रव्यशास्त्रस्य च नीवारेषु व्रीहित्वाभावेन सदृशनीवारादिनियामकत्वाभावात् न सदृशनियमः। न च व्रीह्यवयविनस्स्वावयवैरत्यन्तभेदाभावात्तदवयवानामेव कतिपयानां नीवारोपादानतया नीवाराभिन्नतया व्रीहिशास्त्रेणैव तद्विधानमिति वाच्यम्। तथात्वे व्रीहिसत्त्वेऽपि नीवारोपादाने वैगुण्याभावप्रसङ्गादिति प्राप्ते—

व्रीहिशास्त्रेण व्रीहित्वजातेस्साधनत्वे प्रमिते अमूर्तायास्तस्यास्साधनत्वासम्भवादर्थात्तत्परिच्छिन्नस्यावयविनस्साधनत्वमवगम्यते। तस्यापि चावयवोपादानव्यतिरेकेण साधनत्वासम्भवात् तदवयवानामपि साधनत्वमर्थादेवावगम्यते। तज्जातीयावयवानामेव च कतिपयानां विजातीयावयवान्तरोपेतानां नीवारारम्भकत्वमिति यथाशक्तिप्रयोगे जातेरव-

---

रिति चोदनाचोदितत्वस्य सत्त्रत्वस्य यथाक्रमं वृद्धव्यवहारानुमेयस्य सत्वात्। अत एव मध्यतनवर्तिनि द्वादशाहे उभयथापि वृद्धव्यवहारादुभयरूपत्वम्। अहर्गणाश्च द्विविधाः केचन सत्त्ररूपाः केचनाहीनरूपाः अधर्मकास्तेषु यथाक्रमं सत्त्ररूपेषु सत्त्रात्मकद्वादशाहधर्माः अहीनरूपेषु अहीनात्मकद्वादशाहधर्माः इत्यादि सर्वं अष्टमदशमयोर्वक्ष्यते। तत्राहीनेषु कदाचिदनियतसङ्ख्यस्वामिकत्वात्कस्यचिद्यजमानस्यान्तरा मृतौ नेदिष्ठत्वादिनियमः प्राप्नोति तथापि सत्त्रपदोपादानात् सत्त्रीयदीक्षितान्यतममरणस्यैव निमित्तत्वात् तदभावे न नेदिष्ठानयनं, किं तु प्रारब्धस्यावश्यसमापनानुरोधादवशिष्टैरेवाहीनेषु समापनमित्यर्थः। येषां तु मते न्यायत एव अन्यानयनं तेषामपि मते न नेदिष्ठादिनियमः तस्य सत्त्र एव विधानात् दीक्षादिकमन्यानयनं च न्यायप्राप्तं नैव निवार्यत इत्यनुसन्धेयम्।

---

**॥ सामान्यं तच्चिकीर्षा हि ॥**

**तज्जातीयावयवानामिति। इदं त्ववधेयम्।** यद्यप्यमूर्ताया जातेस्साधनत्वासम्भवादवयविनस्तदवयवानां लक्षणया साधनत्वं व्रीहिपदेन बोधितं, तथापि नैतावता नीवारगतानां कतिपयानामप्यवयवानां तेन साधनत्वं बोध्यते लक्षिकाया व्रीहित्वजातेस्तत्त्वाभावात्। लक्षिका हि जातिः स्वसाधनत्वनिर्वाहाय स्वाश्रयावयविनं तदवयवांश्च लक्षयेन्न तु स्वानाश्रयावयविनं तदवयवान्वा, शक्यसम्बन्धाभावात्। न च व्रीहित्वजातीयावयवानामेव नीवारारम्भकत्वमिति

युक्तम् । प्रमाणाभावात् । अत उपक्रान्तव्रीहिद्रव्यकप्रयोगस्य एकदेशेनापि नीवारैरुत्पत्तौ मानाभावात्तन्निर्वाहाय सति सम्भवे सदृशोपादानमिति तन्त्ररत्नोक्तमयुक्तम् । तथा व्रीहिशास्त्रं यथासम्भवमुपपादयितुं सदृशोपादानमिति शास्त्रदीपिकोक्तमप्ययुक्तं नीवारोपादानेन लेशेनापि व्रीहिशास्त्रोपपत्तेरसम्भवात् ।

**एतेन** व्रीहिशास्त्रान्नीवारप्राप्त्युपपादनाय **भाट्टालङ्कारकृता** अपूर्वसाधनलक्षणाक्षेपसमाधानप्रस्तावे उक्तं—अस्ति तावन्मन्त्राणामिव विधीनामपि प्रकरणपाठात् क्रत्वर्थत्वं अर्थवादाधिकरणे वार्तिककृता तथैवोपपादनात् । अन्यथोपकारपृष्ठभावेन शास्त्रातिदेशोक्तेराकरस्थाया उच्छेदापत्तेः । तत्र च सामर्थ्यान्मन्त्राणां प्रयोगसमवेतस्मरणमिव विधीनां प्रधानविध्यपेक्षिताज्ञाताङ्गसमर्पणमेव द्वारत्वेनाध्यवसीयते । समर्पणं च क्वचित् प्राप्तिः क्वचिन्नियम इत्यपि तत एव हेतोर्लभ्यते । एवं चानेन मन्त्रेणैतदर्थप्रकाशनद्वारेण क्रतावुपकर्तव्यमिति शास्त्रार्थवद्व्रीहिभिर्यजेतेति विधिना प्रकृतद्रव्यनियमेन क्रतोरुपकर्तव्यमित्यपि शास्त्रार्थोऽध्ययनमूलक एव सर्वैरभ्युपेयः ।

नियमश्चाग्नेययागत्वावच्छिन्ने हविः प्रकृतित्वेन व्रीहय एवोपादेया इत्येवंरूपस्तदैवानेन विधिना सिद्ध्यति यद्यत्रत्यव्रीहिपदे व्रीहित्वाकृत्या लोकदृष्टलक्षणावेलायां स्वपरिच्छेद्यत्वयोग्यतासम्बन्धेन तदवयवा अपि लक्ष्यन्ते । सन्निहितेऽपि प्रयोगा[?]येषु व्रीहितण्डुला एव तत्पिष्टमेव वा लभ्यते न तु व्रीहयः न च तत्प्रयोगस्थानां आग्नेययागव्यक्तीनां यवप्रयोगस्थानामिव परिहारेणैव नियम इत्यत्र किं चिद्धेतुभूतं शास्त्रमस्ति ।

अतस्तासु व्रीहिनियमाऽसम्भवादवयवनियमसम्भवात् तन्नियमेन तास्वपि व्रीहिविधेरुपकारकत्वलाभाय व्रीहिपदं लक्षणयाऽवयवपरं कल्पयितुमुचितम् ।

प्रकरणावगतशेषिभावानां तासामनुरोधेन नियमात्मककार्यानुरोधेनाक्लृप्तलक्षणाकल्पने समर्थस्य **गुणे त्वन्याय्यकल्पनेति** न्यायस्य हि क्लृप्तलक्षणाया विषयाधिक्यकल्पकत्वे नाश्चर्यम् । आग्नेयादिप्रधानविधिरपि पुरोडाशप्रकृतित्वेनावयवानेव साक्षादपेक्षते । तत्सिद्ध्यै परं जातिं व्यक्तीश्चापेक्षते । न च साक्षात् तदपेक्षितसमर्पणे सम्भवति अन्यथाभाव उचितः । अतो व्रीहित्वावच्छेद्योग्यावयवनियमपरं व्रीहिशास्त्रम् । न च तन्मात्रपरमपि व्रीहितण्डुलतत्पिष्टानामेव यत्र लाभसम्भवस्तत्र प्रयोगे अनन्यलभ्यव्रीहिनियमेनैव व्रीहिविधेः क्रतूपकारित्वस्य वक्तुमुचितत्वात् । अस्तु वा तन्मात्रनियमपरम् । उभयथापि नियम्यावयवेषु नियम्यतावच्छेदकत्वेन व्रीहित्वादन्यत्कि-

च्छिद्रूपमवश्यमभ्युपेयम्। न हि निरूढलक्षणया प्रतीयमानव्यक्तेरिव साम्प्रतिकलक्षणया प्रतीयमानावयवानां शक्याकृत्यैवावछेद इति शक्यं वक्तुं, केनापि रूपेण बुद्ध्यारूढस्यैव साम्प्रतिकलक्षणासम्भवात् युगपच्छक्यलक्ष्ययोर्जातिव्यक्त्योरुपस्थापिकाया निरूढलक्षणाया अनाद्या बुद्ध्यारोहानपेक्षत्वात्। तच्चावयवगामिरूपं सकलव्रीह्यारम्भकावयवेषु अनुवृत्तं यवाद्यवयवेभ्यो व्यावृत्तजातिगुणसंस्थानाद्यात्मकं केषुचिन्नीवारावयवेषु सम्भवद्वृत्तिकमिति नियम्यतावच्छेदकावच्छिन्नसकलावयवालाभदशायां सम्भवति व्रीहिशास्त्रस्य नीवारगतविकलतदवच्छिन्नावयवनियामकत्वमिति [illegible]।

नियम्यावयवेषु नियम्यतावच्छेदकरूपस्य नीवारगतावयवानतिप्रसक्तस्यैव कल्पने बाधकाभावात्। यथैव गङ्गापदस्य तीरे साम्प्रतिकलक्षणायां गङ्गापदार्थप्रवाहेणैकसम्बन्धिस्मरणेनापरसम्बन्धिस्मरणविधया घोषाधिकरणतायोग्यं तीरादिबुद्ध्यारूढं तीरत्वेनैव रूपेण लक्ष्यते। न तु नौकादिसाधारण्येनातिप्रसक्तेन प्रवाहसंयोगित्वेन, अनतिप्रसक्तरूपेण तत्सम्भवेऽतिप्रसक्तधर्मस्य लक्ष्यतावच्छेदकत्वकल्पने मानाभावात्। तथैव व्रीहित्वजात्यवयविनैकसम्बन्धिस्मरणेनापरसम्बन्धिस्मरणविधया स्वारम्भकावयवत्वेनैवानतिप्रसक्तेन धर्मेण बुद्ध्यारूढाः स्वावयवा एव लक्ष्यन्त इति नीवारगतकतिपयावयवानां लक्ष्यतावच्छेदकरूपाक्रान्तत्वाभावान्न नीवारगतावयवानां व्रीहिनियमशास्त्रविषयत्वम्।

**एतेन** समानजातीयावयवारब्धत्वसादृश्यस्य व्रीहिशास्त्रविषयत्वोपपादनमपि शिथिलमेव। व्रीहित्वजात्यवच्छिन्नावयव्यारम्भकावयसाधनत्वस्य व्रीहिसाधनत्वशास्त्रविषयत्वेपि तत्समानजातीयावयवारब्धसाधनतायास्तच्छास्त्रविषयत्वे मानाभावात्। एवं च व्रीह्यलाभे समानजातीयावयवगुणसंस्थानाद्यारब्धत्वेन व्रीहिसदृशमेव द्रव्यमुपस्थितं भवतीति उपस्थापकताया व्रीहिनिष्ठायाः प्रमाणायातायाः विना निमित्तान्तरं बाधे प्रमाणाभावात् यावत्सम्भवं झटित्युपस्थितनीवारग्रहणमेव युक्तम्। तेषु च व्रीह्यादिगतदीर्घशूकत्वादिसमानजातीयाः केचन धर्मा अपि लभ्यन्त इति व्रीहीणां, तच्छास्त्रस्य चानुग्रहो गौण एवेत्येव सिद्धान्तरहस्यम्। न तु वस्तुगत्या व्रीह्यवयवानामनुग्रहोऽपि जायत इति न व्रीह्यवयवत्वेन नीवारगतावयवपरत्वं व्रीह्यादिपदार्थानामित्यग्रिमविचारकरणमपि शिथिलमेव।

एतदेवाभिप्रेत्य 'यद्व्रीहिप्रोक्षणादेर्यवमपि विषयं' इति श्लोकविवरणे विधिरसायनकृता प्रतिनिधिभूतनीवारगतव्रीह्यवयवानां व्रीहिभिर्यजेतेत्यादिशास्त्रैर्व्रीह्यादीनामिव नापूर्वोपायत्वं

**यविनो अवयवान्तराणां च साधनत्वासम्भवेऽपि कतिपयावयवानामेव** तत्सम्पत्त्यर्थ-**मवर्जनीयतया नीवारविजातीयतदवयवोपादानमिति सदृशप्रतिनिधिनियमसिद्धिः। अत एव सादृश्यं समानजातीयावयवारब्धत्वेनैव नियामकं न तु समानजातीयधर्मान्तरेण तस्य व्रीहिशास्त्राविषयत्वात्। एवं च व्रीह्याद्यभावे सुसदृशं तदभावे सदृशं तदभावे मन्दसदृशमित्यादिक्रमेण बोध्यम्॥ ११॥**

---

सिद्ध्यति। किं तु व्रीहिशास्त्राद्यनुसारेण मुख्येष्वेव व्रीह्यादिषु अवश्यमुपादातव्येषु नित्यमारब्धकाम्यं च कदाचिद्व्रीह्याद्यलाभेप्यवश्यानुष्ठेयमिति प्रधानानुसारेण यत्किञ्चिद्द्रव्याक्षेपे च प्रसक्ते व्रीहित्वादिजात्यनवच्छिन्नत्वेपि तदवच्छेद्यत्वयोग्यतया मुख्यसन्निकृष्टानां नीवारादिगत-व्रीह्यादिभावयोग्यावयवानां सम्भवेपि विप्रकृष्टद्रव्यान्तरोपादानायोगात त एवोपादेया इत्येवं रूपादाक्षेपात्तेषामपूर्वोपायत्वं सिद्ध्यति। सोमाभावे भूयोवयवलिप्सया सुसदृशाक्षेपे प्रसक्ते पूतीकोपादानमाक्षेपस्याप्यपवादकेन वचनान्तरेण सिद्ध्यतीति तेनैवापूर्वीयत्वमपीत्युपपादितम्।

अत एव मुख्यव्रीहिशास्त्रे येषामपूर्वीयतावगमानन्तरमेव संस्कारशास्त्राणां तेषु प्रवृत्ति-रित्यङ्गीकारे मुख्याभावे निमित्ते सत्याक्षेपवचनान्तरावगम्यापूर्वीयभावानां प्रतिनिधीनामुपदेशतः संस्कारान्वयो न सिद्ध्येदिति तत्सिद्ध्यर्थं मुख्यशास्त्रप्रवृत्त्यनन्तरभाविनामाक्षेपवचनान्तराणामपि प्रवृत्तिमपेक्ष्यैव संस्कारशास्त्राणां प्रवृत्तिरेष्टव्येति यथाकथंचित् येषामपूर्वसाधनताऽवगता तेषां संस्कारशास्त्रोद्देश्यतावच्छेदकरूपाक्रान्तत्वं न तु प्रागवगतापूर्वसाधनभावानामेवेति निरूपयिष्यते नवमे। अतो न्यायादेव नीवारादिप्रतिनिधिप्राप्तिर्न तु मुख्यव्रीह्यादिशास्त्रबलादिति मुख्य-शास्त्रसदृशविसदृशानां प्रतिनिधीनां भवत्येव समानविधानत्वमिति स्थिते यद्भावार्थाधिकरणपूर्व-पक्षप्रयोजनकथनपरं पूर्वपक्षे न सदृशोपादाने यतितव्यं, किन्त्वसदृशोपादानमपि। तथाच नायं प्रतिनिधिरुच्यते अन्यार्थवादसादृश्याच्चेति वार्तिकमनुसृत्यावयवघटितसादृश्याभावे प्रतिनिधित्वा-भावान्न समानविधानता, एवं दृष्टार्थावहननप्रतिनिधिभूतक्रियान्तरेपीति तार्तीयप्रतिनिधिसामान-विध्याधिकरणगतं लिखनमपि नातीव युक्तमिति **मम प्रतिभाति। तत्सम्पत्त्यर्थमिति।** साधनत्वसम्पत्त्यर्थमित्यर्थः॥

## (१२)—निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २८ ॥ अशब्दमिति चेत् ॥ २९ ॥ नानङ्गत्वात् ॥ ३० ॥

वैकल्पिकेषु 'खादिरे बध्नाति, पालाशे बध्नाति' इत्यादिषु एकेन प्रक्रान्ते प्रयोगे यदि तस्यापचारः तदा वैकल्पिकान्तरमेवोपादेयं न तु पूर्वोपात्तसदृशं वैकल्पिकान्तरस्याप्युद्देश्यतावच्छेदकसामानाधिकरण्येन विहितस्य तस्मिन्नपि प्रयोगे अङ्गत्वस्वरूपयोग्यतया मुख्यत्वेन जातिव्यक्तिसर्वावयवानामेव साधनत्वसम्भवे पूर्वोपात्तारम्भककतिपयावयवमात्रग्रहणे प्रमाणाभावादिति प्राप्ते—

तस्मिन्नपि प्रयोगे इतरस्याङ्गत्वेन तदभावकृतवैगुण्यापत्तेरवश्यं वैकल्पिकस्थले तत्तद्वाक्ययोस्तत्तद्घटितप्रयोगमात्रविषयकत्वावसायात् तत्प्रयोगे इतरस्याङ्गत्वाभावेन पूर्वोपात्तसदृशमेवोपादेयम्। अत एवाग्नेयत्वादिव्याप्यधर्मावच्छिन्नं प्रत्येव व्रीह्यादेः कारणत्वमित्युक्तं कौस्तुभे। तत्रापि 'वैकल्पिकानामादितोऽवधारणम्' इत्यस्य प्रामाणिकत्वे सङ्कल्पोत्तरमेव तदभावे तु एकोपादानोत्तरमेव तस्यापचार इति द्रष्टव्यम् ॥ १२ ॥

---

॥ निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥

अत्र च यद्यपि व्रीहिप्रतिनिधिनीवारप्रसङ्गेनोपस्थितं व्रीहियवावेव वैकल्पिकं द्रव्यमुदाहर्तुमुचितं; उदाहृतं च तथैव शास्त्रदीपिकायां, तथापि विषयान्तरसंग्रहायोदाहृतं स्वतन्त्रेच्छेन भाष्यकारेण यत्तदेवोदाहरति—**खादिरे बध्नातीति**। **सामानाधिकरण्येनेतीति**। आग्नेयादियागत्वावच्छेदेन यदि व्रीहियवयोर्विधानं तदोभयोरपि समुच्चयापत्त्या निरपेक्षताबाधः स्यात्। अतो यागत्वसामानाधिकरण्येनैव वैकल्पिकयोर्विधानमित्यर्थः। **व्याप्यधर्मावच्छिन्नं प्रतीति**। व्रीहियवजन्यतावच्छेदकं आग्नेयत्वव्याप्यं तृणारणिजवह्न्योरिवैकमेव वैजात्यं कल्प्यते लाघवात्तदवच्छिन्नं प्रत्येव व्रीहियवयोः कारणत्वे न समुच्चयेन तयोः प्रकृतित्वं, तथात्वे तद्विधेरपूर्वविधित्वापत्तेः प्रधानसाधनपुरोडाशगतप्रकृत्याकाङ्क्षायां अनियतप्राप्तप्रकृतिद्रव्यनियमनार्थं हि तच्छास्त्रद्वयम्। न ह्यनियमेन समुच्चितं द्रव्यद्वयमाकाङ्क्षितं सत् प्राप्यते, किन्त्वेकमेवा प्रकृतिद्रव्यं प्राप्तं तथैव नियम्यते इत्युभयोरेकस्मिन् यागे प्रकृतिद्रव्यत्वेन निवेशासम्भवेऽर्थाद्विकल्पे सिद्धे तत्सामर्थ्यादेव तत्तत्प्रयोगे एकतरस्यानङ्गत्वं अनङ्गस्यापि ग्रहणे व्रीहिभिरुपक्रान्तस्य नानृतं वदेदिति निषेधातिक्रमात् प्रत्यवायः स्यादिति यावत्सम्भवं व्रीहिभिस्तदभावे तत्सदृशैरेव प्रयोगसमाप्तिः कार्येति भावः। **एकोपादानोत्तरमिति**। यद्यप्येकस्योपादाने कृते तदनन्तरं तस्यालाभो नैव वक्तुं शक्यते तथापि लब्धस्यापि चौर्यादिनाऽस्य द्रव्यन्तरदूषितत्वादिना तदपचारस्सम्भवत्येवेति भावः ॥

(१३)—वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥ न प्रतिनिधौ समत्वात् ॥ ३२ ॥ स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥ न तदीप्सा हि ॥ ३४ ॥

'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इत्यादौ किं सोमाभावे पूतीकत्वेन रूपेण पूतीकानां विधानं उत? प्रतिनिधिविधया पूतीकगतसोमावयवानां नियम इति चिन्तायां—प्रतिनिधिनियमे पूतीकपदस्य तद्गतसोमावयवे लक्षणापत्तेरभावे विधिरेवायम्। न च नियमविधिलाघवानुरोधेन तदङ्गीकरणमप्यदोषः। निषादस्थपत्यधिकरणन्यायेनापूर्वविधिगौरवस्य फलमुखत्वात्। अभावे विधिपक्षेऽपि प्रतिनिधिनियमस्यार्थसिद्धत्वाल्लाघवस्य त्वन्मतेऽपि सत्त्वाच्च। न ह्ययं त्वन्मतेऽपि शाब्दः प्रतिनिधिनियमः। अपितु फलतः। तच्च फलं ममाप्यविशिष्टमेव। किञ्च—सोमाभावे सुसदृशस्यान्यस्यैव प्राप्तेः मन्दसदृशानां पूतीकानां पक्षप्राप्त्यभावादेव नियमविषयत्वानुपपत्तिः अतः पूतीकत्वेन रूपेण पूतीकानामपि सोमाभावे विहितत्वात्तदपचारे पूतीकसदृशमुपादेयमिति प्राप्ते—

नाभावे विधिरयं तथात्वे पूतीकत्वस्य तदवच्छिन्नव्यक्तेस्तदवयवान्तराणां च सोमावयवविजातीयानां करणत्वकल्पनागौरवापत्तेः प्रतिनिधिनियमे तु क्लृप्तसोमावयवनिष्ठकरणताक्षिप्तोपादानकपूतीकपरिच्छेदकत्वेन यागोद्देशेन पूतीकत्वनियममात्रविधानात् पूतीकव्यक्त्यवयवानां यागकरणत्वाकल्पनाल्लाघवम्। अत एव न लक्षणाऽपि। 'पूतीकानभिषुणुयात्' इत्यत्र तु तृतीयाया अश्रवणात् द्वितीयया यागप्रयोजकत्वस्यैव निरुक्त-

---

॥ वचनाच्चान्याय्यमभावे ॥

**अर्थसिद्धत्वेति।** पूतीकानां साधनत्वे विहिते तदन्तर्गतानां सोमावयवानामपि साधनत्वात्पक्षप्राप्तसुसदृशसोमावयवनिवृत्त्या पूतीकगतसोमावयवानां नियमविधिविषयत्वमर्थसिद्धत्वमित्यर्थः। वस्तुतस्तु सोमाभावे पूतीकत्वेन रूपेण पूतीकविधिरपि सम्भवत्येव नियमविधिः सोमाभावे नित्यप्राप्तत्वेन यागचिकीर्षायां यागसाधनत्वेनानियतद्रव्यप्राप्तौ पूतीकानां साधनत्वेन विधाने बाधकाभावेन सोमावयवत्वेन पूतीकविधाने प्रमाणाभावादिति न प्रतिनिधितयैव नियमविधिरित्यपि सुवचम्। यदि तु सोमाभावेनाक्षेपतः पूर्वं सुसदृशस्यैव प्राप्तेर्न पूतीकानां पक्षे प्राप्तिरित्युच्येत तत्प्रतिनिधिनियमपक्षेऽपि तुल्यमित्यभिप्रेत्याह—**किं चेति। द्वितीययेति।** अत्राभिषवेणाङ्गेनाङ्गिनो यागस्य लक्षणायां यागाङ्गत्वादेव निर्वपतिवदभिषवस्य प्राप्तत्वाच्छ-

**सम्बन्धेन लक्षणेऽपि न दोषः। यद्यपि च तेन सम्बन्धेन पूतीकत्वस्यैतद्विध्यभावे न पक्षे प्राप्तिः। पूतीकानां मन्दसदृशत्वेन सोमाभावे सुसदृशस्यैव प्राप्तेः। तथाऽपि कर्मचोदनया यत्किञ्चित्प्रतिनिधिप्रसक्तौ सदृशन्यायेन नियमकरणात्पूर्वमेवैतद्वचनप्रवृत्त्या नियमोपपत्तेः। अत एव पूतीकगतसोमावयवनियमफलकपूतीकत्वनियमकरणेऽपि न पूतीकानां सुसदृशाभावे उपादानं, किन्तु सोमाभाव एव, वचनस्यैव शीघ्रप्रवृत्तिकतया नियामकत्वात् 'यदि सोमम्' इति अनुवादसामर्थ्याच्च। एवं च पूतीकापचारे सोमपूतीकोभयसदृशं ग्राह्यम्। पूतीकत्वस्यापि** कारणकोटौ प्रवेशात् ॥

---

क्यार्थोऽभिषवोऽनुवाद एव। यागे च लक्षिते पूतीकानां साधनत्वेनान्वयाय यद्यपि तद्वाचिका तृतीया न श्रूयते तथापि द्वितीयया करणत्वलक्षणापेक्षया लाघवात् सोमावयवनिष्ठकारणताक्षिप्तोपादानकपूतीकपरिच्छेदकत्वमेव लक्षयित्वा पूतीकत्ववृत्तिपरिच्छेदकत्वमेव विधीयत इति भावः।

अत्र **भाट्टालङ्कारकृता** अपूर्वविधिलक्षणे अप्राप्तेरात्यान्तिकत्वं त्रैकालिकत्वरूपमथवा पाक्षिकत्वाभावरूपं वेति पक्षद्वये यदि सोममिति नियमविधावतिव्याप्तिं **विधिरसायनोप**पादितां परिहर्तुमुक्तं—सुसदृशानामभावे पूतीकानामबाधितभविष्यत्प्राप्तेस्सत्वान्न तावदाद्यपक्षेतिव्याप्तिः। स्वभिन्नकालीनप्राप्तिसमानाश्रयत्वरूपपाक्षिकत्वाभावरूपात्यन्तिकत्वाङ्गीकारेण नापि द्वितीयपक्षे सा, सोमाभावविशिष्टज्योतिष्टोमे सुसदृशलाभदशायां पूतीकाप्राप्तेस्तदलाभदशायां तु प्राप्तेस्सम्भवति पूतीकानां पाक्षिकत्वमिति सुसदृशद्रव्यालाभे पूतीकनियमविधिरिति तद्दूषयति—**अत एवेति**। निरुक्तपाक्षिकत्वाङ्गीकारेऽपि सोमाभावे एव वचनात् प्रतीयमानं पूतीकनियमविधित्वं दुरुपपादमयुक्तं चात एवेत्यर्थः। अतो मदुक्तयुक्त्यैव नियमविधित्वं युक्तमित्याशयः। **कारणकोटौ प्रवेशादिति**। पूतीकत्वेन रूपेण कारणताविधानेपि न पूतीकावयवानां कारणतया विधानं तस्य पूर्वोक्तरीत्या तेषां यागकरणत्वविधानाभावस्योपपादितत्वात्। अतो यद्यपि पूतीकावयवानां नाङ्गत्वं श्रुत्यादिप्रमाणकं येन तदपचारे तत्सदृशमप्युपादीयेत तथापि नान्तरीयकतया प्राप्तोपादानविजातीयपूतीकावयवसाहित्यस्य सोमावयवाङ्गतया मैत्रावरुणग्रहे पयस्साहित्यस्येव विधानात्तत्सम्पत्तये पूतीकापचारे सोमपूतीकोभयसदृशमेव ग्राह्यमिति कोटिपदेन ध्वनितं द्रष्टव्यम्।

अत्र च प्रतिनिधिनियमपक्षे न नान्तरीयकतया प्राप्तोपादानविजातीयपूतीकानामपि पूतीकत्वेन विधानं, तथात्वे तद्गतसोमावयवांशे प्रतिनिधिनियमविधित्वं पूतीकावयवांशे

**यत्तु शास्त्रदीपिकायामेतादृशविषये सोमसदृशमेव ग्राह्यमित्युक्तं, तत् तन्त्ररत्नविरोधादुपेक्षितम्।** तदभावे तु **सोममात्रसुसदृशं पूतीकत्वावच्छिन्नसंसर्गस्य सोमावयवाङ्गत्वेन 'गुणलोपे च' इति न्यायेन बहुतरसोमावयवानामेवानुग्राह्यत्वात्। अभावे विधिपक्षे तु सोमाभावे निमित्ते पूतीकानामेवाङ्गत्वात्तत्सदृशमेवेति** विशेषः। **अत एव**

---

वाऽत्यन्ताप्राप्तसाधनताविधानादपूर्वविधित्वमिति वैरूप्यापत्तेः। अतो नियमविधिलाघवजिघृक्षया वैरूप्यपरिहाराय च यथाप्राप्तसोमावयवोपलक्षणमेव पूतीकपदम्। तथाच यः सोमजातिपरिच्छिन्नान् सकलावयवानुपादातुमशक्तो विकलावयवानुपादित्सते स पूतीकगतानिति वाक्यार्थे सति वचनेन पूतीकगतविकलसोमावयवानामेव नियमकरणात् पूतीकांशे सर्वथा नीवारगतविजातीयांश इव विधानाभावस्य तुल्यत्वात् पूतीकापचारे नीवारापचारे व्रीहिसदृशमिव सोमसदृशमेव ग्राह्यम्।

अत एव **भाष्यकारेणैकान्तराधिकरणीये न तदीप्सा हीति** सिद्धान्तसूत्रे नैतदेवं न हि पूतीकव्यक्तीनामीप्सा, पूतीकेषु यत्सोमसादृश्यं तन्नियम्यते। तथाहि पूतीकविधानं दृष्टार्थं असदृशविधानेऽदृष्टं कल्प्येत। अतो यस्मिन् तदपूतीकसदृशे द्रव्ये भवति तद्ग्रहीतव्यं न पूतीकसदृशमाद्रियेतेत्युक्तमित्यभिप्रायेण यच्छास्त्रदीपिकालिखनं सोमसदृशमेव ग्राह्यमिति तदनूद्य दूषयति—**यत्त्विति। अयमाशयः—यद्यपि** सोमावयवनियममात्रमेव क्रियत इति सोमावयवानामेव साधनत्वं न पूतीकावयवानां **तथापि** तेषां यत्र क्वचन स्थितानां साधनतापरिहाराय पूतीकगतत्वेन नियमविधानमावश्यकं पूतीकगतत्वं चेदमेव यद्विजातीयपूतीकावयवसंसर्गित्वम्। अतश्च पूतीकगतविजातीयावयवानां साधनतयोपादानाभावेऽपि नात्र तेषां नान्तरीयकतयोपादानं नीवारगतविजातीयावयववत्। किन्तु विहिततदवयवसंसर्गसम्पत्त्यर्थमिति पूतीकापचारे विजातीयपूतीकावयवसंसृष्टसोमावयवानामेव अपचाराद्यद्विजातीयपूतीकावयवसंसृष्टसोमावयवसदृशं तदेवोपादेयं, नान्यतरसदृशम्। एवमेवैकान्तराधिकरणे तन्त्ररत्ने उपपादितमिति पूर्वोक्तभाष्यस्य शास्त्रदीपिकाग्रन्थस्य च केवलपूतीकमात्रसदृशोपादाननिवारण एव तात्पर्यं वर्णनीयमिति। **तदभावे त्विति।** सोमपूतीकोभयसदृशाभावे त्वित्यर्थः। **इति विशेष इति।** न केवलमयमेवाभावे विधिपक्षे विशेषः अपि तु तत्पक्षे सोमरससंस्कारभूतग्रहणाङ्गभूतानामैन्द्रवायवादिदेवतानां सोमरसाभावे प्राप्त्यभावात् पूतीकारब्धे यागे इन्द्रवाय्वादिदेवताप्राप्तिर्दुरुपपादैव। नहि भवन्मते व्रीह्यंशत्वेन नीवाराणामिव पूतीकानां सोमांशत्वेन ग्रहणं येन प्रतिनिधित्वेन तद्ग्रहणसम्बन्धिदेवतालाभः स्यात्। न च व्रीहियवयोरिवैककार्यत्वेन सोमधर्मप्राप्तिरिति

यत्र व्रीह्यादौ तदवयवत्वेनैव नीवारप्रतिनिधिः तत्र नीवारत्वस्यानङ्गत्वात् तदपचारे व्रीहिसदृशमेवोपादेयं न तूभयसदृशमित्यपि सुलभम्। अत एव मूले उभयविधप्रतिनिध्यपचारे अधिकरणद्वयं कृतं तत्तु मया स्पष्टत्वादुपेक्षितम् ॥ १३ ॥

---

## (१४)—मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३५ ॥ प्रवृत्तेऽपीति चेत् ॥ ३६ । नानर्थकत्वात् ॥ ३७ ॥

---

युक्तं व्रीहियवयोरुभयोरप्याम्नानस्य नित्यत्वात् नित्यानित्यसंयोगविरोधापत्तेः । फलचमसवत् सामानविध्यसम्भवात् । कार्यापत्तेस्तु अतिदेशाभावे स्वतन्त्रप्रमाणान्तरत्वाभावादप्रत्यक्षविधानासु विकृतिषु अतिदेशसद्भावेपि प्रत्यक्षोपदेशविहिताङ्गजाते ज्योतिष्टोमेऽतिदेशसम्भवान्न धर्मप्रापकत्वम् । अत एवापूर्वप्रयुक्तेष्वपि धर्मेषु यत्र द्वारसम्भवस्तत्रापूर्वसाधनतारूपाक्रान्तेषु अन्येष्वपि भवन्ति धर्माः । यत्र तु न द्वारसम्भवो यथा प्रकृते तत्र तदीयधर्मलाभस्तत्साध्यापूर्वसाधनेष्वपि पूतीकेषु नैव भवन्ति । यदा तु फलचमसे इवेहापि सोमधर्मातिदेश उच्येत तदा तद्वदेव सोमपदघटितमन्त्रेषूहानूहौ तार्तीयाधिकरणसिद्धो विशेषो भवतीति । **नीवारत्वस्याङ्गत्वादिति ।** नीवारत्वावच्छिन्नविजातीयावयवसंसर्गस्याविधानेनाङ्गत्वाभावादवर्जनीयतयैवोपादानं तेषां न तु कस्यचिद्धिर्ध्यंशस्यानुग्रहायेति भावः । अत्रैतदधिकरगानन्तरं "न प्रतिनिधौ समत्वात्" इति सूत्रं प्रतिनिध्यपचारे प्रतिनिधिसदृशमुपादेयमिति पूर्वपक्षनिरासार्थतया मुख्यसदृशमेवोपादेयमिति सिद्धान्तकरणेनैकाधिकरणतया व्याख्याय तदुत्तरं "स्याच्छ्रुतिलक्षणे नियतत्वात्" न तदीप्साहि" इतिसूत्रद्वयं पूतीकापचारे पूतीकसदृशमुपादेयमिति पूर्वपक्षनिरासार्थतयोभयसदृशं ग्राह्यमिति सिद्धान्तकरणेनैकाधिकरणतया व्याख्यातमित्यधिकरणद्वयं कृतं भाष्यकारादिभिः । तदेतस्मिन्नेवाधिकरणे वैषम्योपपादनव्याजेनैव व्याख्यातप्रायमिति न पृथग्व्याख्यातमिति दर्शयति—**अत एव मूले इति । उभयविधेति ।** सुसदृशो नीवारादिभिः मन्दसदृशः पूतीकादिभिः इत्युभयविधप्रतिनिधेरपचारे इत्यर्थः ।

---

॥ **मुख्याधिगमे** ॥

अत्राप्यनन्तरं मुख्याधिगमे मुख्यमागमो हि तदभावात् प्रवृत्तेपीति चेन्नानर्थकत्वात् इति सूत्रत्रयमुत्सूत्रपूर्वपक्षत्रयनिराकरणार्थं सत सिद्धान्तत्रयप्रदर्शकं इत्यधिकरणत्रय-

यदा मुख्यमलभ्यं मत्वा **प्रतिनिधिमुपादातुं प्रवृत्तः उपादाय वा द्वित्राः सर्वे वा संस्काराः कृताः, कार्यं न कृतं तत्र कार्यकरणात्पूर्वं मुख्यलाभे** तमेवोपादाय पुनस्संस्कारान् **आशु कृत्वा तेनैव प्रधानं कार्यं मुख्यसम्भवे विकल्पोपादानस्य** वाचनिकस्याप्यन्याय्यत्वात्। **न च प्रतिनिधित्यागे सङ्कल्पबाधः द्रव्यांशे पृथक्सङ्कल्पे प्रमाणाभावात्।** सत्त्वेऽपि **वा**

---

प्रदर्शकतया पृथक् पृथक् भाष्यकारैर्व्याख्यातम्। **तत्राद्यसूत्रे** मुख्यालाभेन प्रतिनिध्युपादाने प्रवृत्तस्य मध्ये मुख्यलाभः यदा तदा तेन मुख्यमेवोपात्तव्यमिति सिद्धान्तो दर्शितः। **द्वितीये** तु सूत्रे यदा पुनः प्रतिनिधिमुपादाय केचन संस्काराः कृताः तदनन्तरमपि मुख्यलाभे मुख्यमेवोपादेयं, न तु संस्कृतोऽपि प्रतिनिधिरुपादेय इति सिद्धान्तः। **तृतीये** तु सूत्रे प्रतिनिधौ संस्कारकरणानन्तरं नियोजनादिरूपप्रधानस्यापि सिद्धिर्जाता तदनन्तरं मुख्यद्रव्यलाभेऽपि न मुख्यमुपादेयं किन्तु प्रतिनिधिरेवेति सिद्धान्तः। सर्वत्रापि च पूर्वपक्षः उत्सूत्र एव द्रष्टव्यः।

अथवा प्रवृत्तेऽपीति चेदिति पूर्वपक्षसूत्रमेव। तदा कृते प्रयोजने श्रुतमेवागमयितव्यमिति पूर्वपक्षोत्तरं नानर्थकत्वादितिसूत्रं प्रयोजनाभावान्न श्रुतमागमयितव्यमिति सिद्धान्तप्रदर्शनमेवेति सूत्रद्वयेनैकमेवाधिकरणमिति। तदेतदधिकरणभेदप्रदर्शनं सूत्रानुरोधात् भाष्यकारादिभिः कृतमपि प्रयोजनाभावात् स्वयमप्रदर्श्यैव एकहेलया वैषम्योपपादनव्याजेनैवाधिकरणार्थमुपपादयति— **यदा मुख्यमिति**। **तमेवेति** मुख्यमेवेत्यर्थः। **पुनस्संस्कारानिति**। न च पूर्वकृतसंस्कारवैयर्थ्यं, प्रतिनिध्युपादानस्यैव वैयर्थ्ये तत्संस्काराणां वैयर्थ्यस्य प्रधानगतवैगुण्यापत्तिभयेनेष्टत्वात्। मुख्योपादानेन तद्गतवैगुण्यस्य परिहार्यत्वात्। **वाचनिकस्यापीति**। पूतीकविधिर्हि प्रतिनिध्यन्तराणामेव निवर्तको न तु मुख्यस्य तस्य तदभावे एव विधानात्। अतस्तस्मिन् मुख्ये लब्धे सति न पूतीकोपादानं स प्रयुङ्क्ते इति पूर्वं प्रयुक्तस्यापि तदुपादानस्य त्याग एव युक्त इत्यर्थः। न तु अन्येन [आज्येन] हविषा आमेन वा सद्यः करिष्ये तण्डुलैर्होष्ये इत्यादिश्राद्धाग्निहोत्रादौ शिष्टानां द्रव्यविषयसङ्कल्पाचारदर्शनात् प्रतिनिधित्यागे सङ्कल्पबाधः स्यादेवेत्यत आह—**सत्त्वेपि चेति**। **यद्यपि** द्रव्यांशेपि सङ्कल्पो भवेत्; अत एव व्रीहिमयं पुरोडाशं सङ्कल्प्य यवमयो न कार्य इति वार्तिकलिखनं नवमे, तथापि तादृशस्थले द्रव्यविशेषवाचकं पदं यथा शास्त्रप्राप्तद्रव्यमात्रोपलक्षणमेव यथाशक्ति शास्त्रार्थं सम्पादयिष्यामीत्येवं सङ्कल्पात्। इतरथा मुख्यद्रव्येणोपक्रान्ते प्रयोगमध्ये मुख्यालाभेन प्रतिनिध्युपादाने सङ्कल्पबाधापत्तेः।

'यथाशक्तिशास्त्रार्थं सम्पादयिष्ये' इत्येव सङ्कल्पात्। प्रधानानुरोधेन पुनस्संस्कारकरणस्य न्याय्यत्वाच्च। यदा तु प्रतिनिधिनैव कार्यं निष्पन्नं तदा प्रयोजनाभावात् न मुख्यमुपादेयम्। मुख्याभावनिमित्तकप्रायश्चित्तमात्रमेव तु कार्यम् ॥ १४ ॥

---

## (१५)—द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३८ ॥ अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ ३९ ॥

यदा नियोजनादिकार्यमात्रयोग्यो मुख्यः तक्षणादिसकलसंस्कारयोग्यस्तु प्रतिनिधिस्तदा मुख्यस्यैवोपादानं संस्काराणां तु 'गुणलोपे च मुख्यस्य' इति न्यायेन लोपेऽपि न दोषः। न चान्यत्र तथात्वेऽपि यूपस्य दृष्टादृष्टसंस्कारसमूहरूपत्वान्न संस्काराणां काष्ठाङ्गत्वमिति वाच्यम्। लाघवेन सकलसंस्कारजन्यपरमापूर्वविशिष्टकाष्ठस्यैव यूपपदार्थत्वात्। अत एव 'यूपं तक्षति' इत्यादौ काष्ठस्यैव संस्कार्यत्वान्न काऽप्यनुपपत्तिः।

---

अत एवैतादृशविषये मुख्यद्रव्यसाधनकत्वाभावकृतमेव वैगुण्यं न तु सङ्कल्पबाधकृतमपि। तद्वदिहापि न बाधकम्।

वस्तुतस्तु क्वचित्कर्मविशेषे विकल्पिताविकल्पितद्रव्यसङ्कल्पानुष्ठाने दर्शपूर्णमासादावपि तदापत्तेः इष्टापत्तौ च द्रव्यवत् देवताया अपि साधनत्वात् तस्या अप्युल्लेखापत्तेरनिवारणाच्च तद्विषयकः सङ्कल्पो निष्प्रमाण एवातो यथाशास्त्रार्थं यथाशक्तिसम्पादयिष्यामीत्येतावदवधारणमात्रं प्रयोगारम्भात् पूर्वं कार्यम्। तच्च सङ्कल्प इव सङ्कल्पो, न तु वाचनिकमपि। प्रमाणाभावात्। अद्यावधि केषाञ्चिद्याज्ञिकानां तथाचाराभावाच्चेति न तद्बाधकृतवैगुण्याशङ्कापीति भावः। पुनस्संस्कारकरणे प्रमाणाभावं निरस्यति—प्रधानानुरोधेनेति।

---

॥ द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥

अत्रापि द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वादिति सूत्रादनन्तरेणार्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वादिति सूत्रेण नाधिकरणान्तरं, अपि तु पूर्वाधिकरणे प्रत्युदाहरणमात्रमेव प्रदर्श्यते इत्यनुसन्धाय द्वितीयं सूत्रमनुल्लिख्यैवैकाधिकरणेन विषय दर्शयति—यदेति। न काप्यनुपपत्तिरिति। यदि केवलमदृष्टसंस्कारमात्रमेव यूपः स्यात् तदा तत्प्रकृतित्वेन विधीयमानं खदिरत्वाद्यदृष्टार्थं स्यात् ततश्चादृष्टार्थानां प्रतिनिध्यभावात् कदरोपादानं

**यत्र तु प्रधानभूतनियोजनासमर्थमेव मुख्यं तत्र तदनादरेण प्रतिनिधिनैव कार्यसम्पादनं द्रष्टव्यम् ॥ १५ ॥**

---

## (१६)—विधिरप्येकदेशे स्यात् ॥ ४० ॥ अपि वाऽर्थस्य शक्यत्वात् एकदेशेन निर्वर्तेतार्थानामविभक्तत्वाद्गुणमात्रामितरत्तदर्थत्वात् ॥

**यत्र त्वश्वशफपरिमाण**शेषकार्याद्यपर्याप्ताः **पुरोडाशत्वजातिमात्राभिव्यक्तिसमर्था व्रीहयो लभ्यन्ते तत्र तेनैव पुरोडाशं कृत्वा प्रधानमनुष्ठेयम्। शेषकार्याणां लोपः। न च बहूनां शेषकार्याणां पुरोडाशाङ्गभूतैकव्रीह्यनुरोधेन लोपासम्भवः। व्रीहीणामपि यागोद्देशेन विहिततया यागाङ्गत्वेन पुरोडाशाङ्गत्वाभावात्। न चोत्पत्तिशिष्टपुरोडाशावरोधात् 'व्रीहिभिः' इति तृतीया** प्रयोजकत्वपरेति **वाच्यं,** पुरोडाशद्वारकत्वरूपव्यापारकत्वेऽपि **करण-**

---

नापद्येत। अतः काष्ठमपि अदृष्टदृष्टसंस्कारविशिष्टं यूपपदवाच्यमङ्गीकार्यम्। विशेषतश्चायमर्थो नवमे निरूपयिष्यते। अत एव काष्ठरूपदृष्टकार्यार्थत्वेन विहितेऽपि खादिरे तदभावे प्रतिनिधित्वेन तत्कार्यार्थकदरोपादानम्। एवं च दृष्टादृष्टसंस्काराणां यूपपदवाच्यकाष्ठाङ्गत्वात् प्रधानभूतप्रधानकार्यक्षममात्रमुख्यखदिरलाभे न गुणभूतसंस्कारपर्याप्तस्यापि कदरस्योपादानमित्यर्थः। अत एव प्रधानमात्रकार्येप्यक्षमत्वे वैषम्यमाह—**यत्र त्विति**।

---

### ॥ विधिरप्येकदेशे स्यात् ॥

**शेषकार्यादीति। शेषकार्याणि** स्विष्टकृदिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षणरूपाणि। **प्रयोजकत्वपरेति**। तथा च व्रीहिजन्यपुरोडाशजन्यत्वे यागोद्देशेन विहिते पुरोडाशजन्यत्वस्योत्पत्तिविधिनैव प्राप्तत्वात् प्राप्ताप्राप्तविवेकेन पुरोडाश एव व्रीहिजन्यत्वे तात्पर्यावगतेः पुरोडाशाङ्गत्वं व्रीहीणां युक्तमित्याशङ्कार्थः। व्यापारद्वारा श्रुत्या यागं प्रत्येव करणत्वोपपत्तौ पुरोडाशाङ्गत्वे मानाभावादिति परिहरति—**पुरोडाशद्वारकत्वेति**। **यद्यपि** यागाङ्गत्वे तस्य द्रव्याकाङ्क्षाऽभावात् व्रीहिविधिरनाकाङ्क्षितविधिरेवापद्येतेत्यगत्या पुरोडाशाकाङ्क्षया तद्विधानस्य युक्तत्वात् पुरोडाशाङ्गत्वमेव युक्तं **तथापि** मदीयसाधनं किंप्रकृतिकं इति यागगतयैवाकाङ्क्षया तृतीयाश्रुत्यविरोधिन्या यागाङ्गत्वेन तद्विधानोपपत्तेः पुरोडाशाङ्गत्वे प्रमाणाभाव इति भावः। उक्तं च **तन्त्ररत्ने**—श्रुत्या तावद्यागाङ्गत्वमेव व्रीहीणामवगम्यते। वस्तुतोपि तथा। यद्यपि पुरोडाशप्रकृतिद्रव्यत्वं व्रीहीणां तथापि तदवयवा एव पुरोडाशतामापन्न

**त्वस्य 'काष्ठैः पचति' इत्यादिवदुपपन्नतरत्वेन लक्षणायां प्रमाणाभावात्।** अतश्चैक-**प्रधानाङ्गानुरोधेनानेकेषामप्यङ्गानां लोपो नायुक्तः ॥ १६ ॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**
**षष्ठस्याध्यायस्य तृतीयः पादः**

---

यागद्रव्यं भवन्ति। ते च नीवारेषूपादीयमानेषु विकला भवन्ति ततश्च प्रधानमेव विगुणं स्यादिति। एवं चास्मिन्नधिकरणे व्यापारभेदेनाविरुद्धयोरुभयोरपि करणयोरेकत्रापि निवेशो दर्शितः। अनेनैव न्यायेन यथैवोत्पत्तिवाक्योपात्त[1]पुरोडाशकरणावरुद्धे याग एव वाक्यान्तरोपात्तानामपि व्रीहीणां करणत्वेनैव निवेशः तथैव समानपदोपात्तयागरूपकरणावरुद्धायामपि भावनायां पदान्तरोपात्तसोमादेरपि करणत्वेन निवेशो विनैव मत्वर्थलक्षणां साधितः पूज्यपादैरिति ज्ञेयम्। व्यापारभेदेन विरोधपरिहारस्योभयत्रापि तुल्यत्वादित्यादि बहु वक्तव्यं विस्तरभयान्नोच्यते। अधिकरणार्थमुपसंहरति— **अतश्चेति।**

**इति श्रीकविमण्डनशम्भुभट्टकृतायां**
**भाट्टदीपिकाप्रभावल्यां**
**षष्ठस्य तृतीयः**
**पादः**

---

1. A. एकवाक्योपात्त

# अथ षष्ठस्याध्यायस्य चतुर्थः पादः

(१)—शेषाद्द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥ निर्देशाद्वाऽन्यदा-गमयेत् ॥ २ ॥

**दर्शादौ** यदा **सकलस्य पुरोडाशस्य दधिपयसोरन्यतरस्य वा हविषस्सम्पूर्णस्य नाशस्तदा प्रधानानुरोधेन हविरन्तरोत्पत्तौ प्रसक्तायां "यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसङ्ख्याय यजेत" इति श्रुतेन आज्येनैव याग इत्यविवादम्। अत्र हि** नाशादीनां **प्रत्येकं निमित्तत्वे वाक्यभेदापत्तेरुत्प-न्नहविरयोग्यत्वमेव 'अर्धमन्तर्वेदि' इतिवत् लक्षणया निमित्तं, न तु हविरलाभः, नाशाद्युल्लेखवैयर्थ्यापत्तेः। अत एवानुत्पन्नपुरोडाशाद्यसम्भवे नाज्यनियमः, किन्तु यत्कि-ञ्चिदनियतप्रतिनिध्युपादानमेव। एकदेशनाशादौ तु यदि द्व्यवदानग्रहणोत्तरं पात्री-स्थस्य** कुम्भीस्थस्य वा **नाशस्तदा** भाष्यकारमते **तावद्द्व्यवदानस्यैव हविष्ट्वात् शेषकार्या-**

---

**॥ शेषाद्द्व्यवदाननाशे स्यात् तदर्थत्वात् ॥**

गतो यथाशक्तिप्रयोगगतो विचारः। अधुना कीदृशेन निमित्तेन [1]कस्मिन्नैमित्तिके प्रायश्चित्तेऽधिक्रियते इति पादद्वयेन प्रायश्चित्ताधिकारो विचार्यते इति लक्षणसङ्गतिः। अत्र पूर्वपक्षकोटेरतिफल्गुत्वात् तन्मूलकं संशयमप्रदर्श्यैव व्यवस्थया सिद्धान्तं दर्शयति—**यदेत्या-दिना**। यस्य सर्वाणीति वाक्ये हविः पदश्रवणात् तस्य च कृत्स्नवाचित्वात् कृत्स्नहविर्नाश एव हविरन्तरापेक्षायामेतद्विधिनाऽऽज्यविधानेऽपेक्षितविधानानुग्रहसम्भवात् कृत्स्नहविर्नाश एवाज्य-विधानमित्यभिप्रेत्याह—**सकलस्येति**। उपांशुयाजार्थचतुर्गृहीतनाशे तार्तीयपञ्चमपादादिमाधि-करणरीत्या सर्वयज्ञार्थस्य ध्रौवाज्यस्य तच्छेषत्वासम्भवेन चतुर्गृहीतमात्रस्यैव सर्वहविष्ट्वात् तत्रैकदेशनाशप्रयुक्तावशिष्टापादानकोपादानपूर्वपक्षस्यायोगात् पूर्वोत्तरपक्षयोरपि तत्र सम्पूर्णनाश-निमित्ताज्यप्राप्तेर्निर्विवादत्वमभिप्रेत्योपांशुयाजाज्यनाशसंग्रहाय **अन्यस्य** चेत्युक्तम्। **नाशादीना-मिति**। नाशोऽधः पातादिः। **कुम्भीस्थस्य वेति**। अवशिष्टस्येति शेषः। सकल-पुरोडाशमध्यात् द्व्यवदाने गृहीतेऽवशिष्टस्य पुरोडाशस्य विकलत्वात्तन्नाशोऽप्येकदेशनाशो भवत्ये-वेति नैकदेशनाशादौ त्वित्युपक्रमभङ्गः। **भाष्यकारमते तावदिति**—तृतीये चतुर्थपादे सर्वप्रदानं हविषस्तदर्थत्वादित्यधिकरणे आग्नेयोत्पत्तिवाक्ये सर्वस्याष्टाकपालस्याग्निदेवतासम्बन्ध-

---

1. P. अस्मिन्

**भावेऽपि** तेनैव **यागः। वार्तिककारमते तु यावन्निरुप्तव्रीहिपरिमितपुरोडाशस्य यावद्दुग्धं साम्नाय्यस्य च हविष्ट्वात् हविर्नाशसत्त्वेन पात्रीस्थनाशेऽपि आज्येनैव यागः। एवं तन्मते द्व्यवदाननाशेऽपि हविर्नाशाविशेषाद्धविरन्तरोत्पत्तिप्रसक्तौ वचनादाज्येन यागः। भाष्यकारमतेऽपि** तादृशविषये **आज्येनैव यागो न पुनः पात्रीकुम्भीस्थादवदानम्।**

---

प्रतीतेः प्रदानं विना च तद्देवतासम्बन्धानुपपत्तेः सर्वस्यैव प्रदानं इतरथा द्व्यवदानमात्रस्यैव यागसाधनत्वेऽष्टाकपालपदस्यावयवपरत्वे लक्षणापत्तेः चतुरवत्तं जुहोतीति वचनेन तु द्व्यवदानस्य होमोपायसाधनतया विधानं यत्सकलं जुहोति तत द्विरवदायेति। न चाभ्यासमन्तरेण सकलपुरोडाशसाध्यको यागः शक्यते द्व्यवदानेन कर्तुमित्यर्थात् पुनः पुनरवदाय यागाभ्यासं कृत्वा सकलपुरोडाशप्रदानमिति स्विष्टकृदादिशेषकार्याणां विद्यमानसन्निहितशेषाभावात् हविरन्तराक्षेपकत्वं, अथवा शेषकार्यवशात द्व्यवदानमात्रहोमोऽन्यस्य शेषस्य स्थापनात, शेषकार्याभावे तु सर्वस्यैव होम इति पूर्वपक्षं प्रापय्य गुणभूतद्रव्यानुरोधेन पुनः पुनः प्रधानयागावृत्तेः अन्याय्यत्वात् उत्पत्तिशिष्टपुरोडाशैकदेशद्व्यवदानप्रकृतित्वेनाप्यग्निसम्बन्धोपपत्तेः पुरोडाशस्य द्व्यवदानद्वारमेव यागसाधनत्वमिति द्व्यवदानमात्रस्यैव हविष्ट्वमिति **भाष्यकारेण** सिद्धान्तितम्।

**वार्तिककारेण** तु द्व्यवदानस्य द्वारत्वे प्रमाणाभावात् तदनुरोधेन पुरोडाशस्य सकलस्य न साधनत्वं बाधनीयं चतुरवत्तं जुहोतीत्यनेन आग्नेयादियागेषु जुहोतिचोदनाचोदितत्वाभावेन होमप्राप्त्यभावात तदनुवादेन चतुरवत्तस्य साधनत्वेन विधानानुपपत्तेः। उपस्तृणाति अभिघारयति द्विर्हविषोऽवद्यतीति वाक्यगतचतुरवत्तसंस्कारकत्वेन होमस्य प्रक्षेपरूपस्य कर्मान्तरस्यैव विधानमिति यागसाधनत्वं न द्व्यवदानमात्रस्य। अपि तु सर्वस्यैव पुरोडाशस्य तत्साधनत्वाद्धविष्ट्वमिति सिद्धान्तितम्। तेन सिद्धान्तद्वैविध्यात् **भाष्यकारमते** इत्युक्तम्। **तेनैवेति।** द्व्यवदाननाशाभावे हविर्नाशाभावात् तेनैव द्व्यवदानेन याग इत्यर्थः। **एवं तन्मते इति।** यथैव वार्तिककारमते द्व्यवदानग्रहणोत्तरं अवशिष्टस्य पुरोडाशस्य पात्रीस्थस्य नाशे द्व्यवदानस्य यथावस्थितत्वान्न सकलहविर्नाशस्सम्भवति येन सम्पूर्णहविर्नाशनिमित्ताज्यप्रतिनिधिः प्राप्येत तथापि यथावस्थितस्यापि द्व्यवदानस्यावशिष्टपुरोडाशस्य यागसम्बन्धाभावेऽनुपयुक्तस्य होमाख्यसंस्कारस्यापि असम्भवादुत्पन्नहविरयोग्यत्वरूपनिमित्ततावच्छेदकाक्रान्तत्वाद्भवत्येवाज्यप्राप्तिस्तथैव द्व्यवदाननाशेनावशिष्टपुरोडाशनाशाभावेऽपि सकलपुरोडाशसाध्ययागस्य द्व्यवदाननाशेन विगुणपुरोडाशेनानुत्पत्तेः अवशिष्टस्य यागयोग्यत्वमस्त्येवेति उत्पन्नहविरयोग्यत्वनिमित्ताज्येन भवत्येव याग इति **एवं तन्मतेपीति** पदद्वयेनोक्तम्। **तादृशविषये इति**—द्व्यवदाननाशविषये

'मध्यात् पूर्वार्धाच्चावद्यति' इत्यनेन कृत्स्नस्य यावदुपात्तस्य प्रकृतस्य पुरोडाशादेः यो मध्यादिदेशस्तदपादानतयोपरितनभागस्यैवावदेयत्वात्। तस्य च नष्टत्वेन पुनरवदाने मध्यादेरेवावदेयत्वप्रसङ्गात्। अतस्तत्रापि हविरन्तरोत्पत्तिप्रसक्तौ आज्येन यागः। न च सर्वमते हविष्ट्वावच्छिन्ननाशादिना हविरयोग्यत्वस्य निमित्तत्वे छिन्नयवयवनाशेऽपि आज्येन यागापत्तिः। निमित्तज्ञानस्यैव नैमित्तिकानुष्ठापकतया तादृशनाशस्य नित्यतया वा निमित्तत्वानुपपत्तेः। अङ्गुष्ठपर्वन्यूनावर्जनीयातिरिक्तावयवनाशे तु भवत्येवाज्येन यागः। तदेवं मीमांसकमर्यादा। याज्ञिकास्तु तां न मन्यन्ते। तेषामयमाशयः—एकदेशादाहवदेकदेशनाशस्य न निमित्तत्वं एकदेशनाशेऽपि पुरोडाशाज्यपयोदधित्वादेः प्रत्यभिज्ञायमानत्वात्तस्यैव हविष्ट्वावच्छेदकत्वेन यावन्निरुप्तव्रीहिपरिमितत्वादेस्तदनवच्छेदकत्वात् तन्नाशस्यावर्जनीयत्वाच्च। अतः एकदेशनाशेऽप्यवशिष्टस्यैव यागः। होमः परं मध्यापादानकत्वाभावे द्व्यवदानासम्भवाल्लुप्यताम्॥

वस्तुतस्तु—यावदवशिष्टं तस्यापि हविष्ट्वात्तन्मध्यापादानकत्वं सम्भवत्येवेति होमोऽपि कार्य एव। अत एवाश्वलायनः 'द्व्यवदाननाशे पुनरायतनादवदानम्' इति। अतश्च यद्यपि मीमांसकमतं न्यायसिद्धं भवेत् तथाऽपि स्मृत्यनुमितवचनेन तद्बाधोऽग्निष्टुति सुब्रह्मण्योहवत्। ('आग्नेयी सुब्रह्मण्या कार्या' इत्यनेन ऐन्द्र्याः बाधः)।

---

इत्यर्थः। एकदेशभूतद्व्यवदाननाशेऽपि हविष्ट्वावच्छिन्ननाशाभ्युपगमेनान्यविधिप्रवृत्त्यङ्गीकारे अतिप्रसङ्गमाशङ्क्य निराकरोति—**न चेति**। तथाच तादृशस्यावर्जनीयत्वेन तद्ज्ञानासम्भवेन न निमित्तत्वमित्यर्थः। **अङ्गुष्ठपर्वेति**। अङ्गुष्ठपर्वन्यूनतापरिहाराय ये अवर्जनीया अधिका अवयवास्तेषां नाशे सत्यङ्गुष्ठपर्वपरिमाणहविर्नाशादाज्येनैव याग इत्यर्थः। एकस्यापि हविषः कृत्स्नस्यैकदेशस्यापि वा नाशे यस्य सर्वाणीति वचनादाज्यं प्रवर्तत इति सिद्धान्तमभिप्रेत्याह—**तदेवमिति**। कृत्स्नस्यैकहविर्नाशे प्रायश्चित्तान्तरविधानाद्युगपत् अनेकहविर्नाश एवाज्यं एकदेशनाशे तु अवशिष्टादेव पुनरादाय याग इति भेदेन याज्ञिकमतमुपपादयति—**याज्ञिकास्त्विति**। **तस्यैवेति**। प्रत्यभिज्ञायमानपुरोडाशत्वाज्यत्वादेरित्यर्थः। **सुब्रह्मण्योहवदिति**। ज्योतिष्टोमे इन्द्र आगच्छ हरिव आगच्छेत्यादीन्द्रप्रकाशकस्य सुब्रह्मण्यानिगदस्य पठितस्य अग्निष्टुत्यतिदेशप्राप्तस्य ग्रहेष्वाग्निदेवत्यत्वानुरोधादग्न आगच्छेत्यादिरूह इति पूर्वपक्षं प्रापय्यारोपितेन्द्रत्वादिगुणानामग्नावपि सम्भवान्नोह इति सिद्धान्तितं **नवमे**। तत्र मीमांसान्यायसिद्धो यद्यप्यनूहोऽनुप्राप्तः, तथापि छन्दोगसूत्रे अग्न आगच्छ रोहिताश्व बृहद्भानो इत्याद्यूहितस्यैव तस्य पाठाद्वचनेनानूहन्यायस्य बाधस्तद्वदित्यर्थः। यत्र दर्शपूर्णमासादावेव

कृत्स्नहविर्नाशे **तु** अनेकहविष्कायामिष्टौ कतिपयहविर्नाशे वा हविरन्तरोत्पत्तिरेव। **सर्वहविर्नाश एवाज्येन** पुनरुत्पादितेन **यागः। अत एवापस्तम्बः** "यद्यप्रत्तदेवतं **हविः व्यापद्येत अन्यद्धविस्तद्दैवत्यं निर्वपेत्। यस्य सर्वाणि हवींषि आज्येनैता देवताः परिसङ्ख्याय यजेत" इति। यद्यपि चोत्तरवाक्ये श्रुतौ च सर्वत्वमविवक्षितं, तथाऽपि पूर्ववाक्यवैयर्थ्याद्यापत्तेः** हविरुभयत्ववद**विरुद्धा सर्वनाशस्य निमित्तता** ॥ १ ॥

---

तत्तत्प्रधानयागात्पूर्वं तत्तत्प्रधानीयद्रव्यान्यतमस्य कृत्स्नस्यैव हविषो नाशोऽथवा सर्वेषामेव हविषां नाशस्तत्रानुष्ठानभेदं दर्शयति—**कृत्स्नहविर्नाशे त्विति। अनेकहविष्कायामिति।** उत्तरसूत्रेणानेकहविर्नाशे आज्येन समापनविधानादनेकहविष्कायामेव चानेकहविर्नाशसम्भवेन तत्रैव पूर्वसूत्रेणाप्येकहविर्नाशे हविरन्तरोत्पादादि प्रदर्शयितुमेवा**नेकहविष्कायामि**त्युक्तं, न त्वेकादिहविष्कव्यावृत्त्यर्थमिति द्रष्टव्यम्। **कतिपयेति**। कतिपयशब्दोऽत्र एकद्व्यादिहविःपरः। तथाच एकद्व्यादिहविर्नाशे इत्यर्थः। **पुनरुत्पादितेनेति**। सर्वहविर्नाशमध्ये आज्यस्यापि नष्टत्वेन पुनरुत्पादनापेक्षणादित्यर्थः। **यद्यप्रत्तदेवतमिति**। न प्रत्तं हुतं देवतायै इत्यप्रत्तदेवतं कृते आवाहने हविर्देवतायै प्रत्तं भवत्यावाहनात्पूर्वं तु अप्रत्तं भवति। तद्धविर्यदि व्यापद्येत—केशकीटादिभिरुपहतं विनष्टं वा स्यादयोग्यतामापद्येतेत्यर्थः; तदा यद्देवताकं तद्भवति तस्या एव देवतायै तद्धविरन्तरोत्पत्तिप्रदर्शनपरपूर्वोक्तापस्तम्बवाक्यं व्यर्थं स्यादतो लक्षणाया सर्वत्वस्यापि निमित्तान्तर्गतत्वमङ्गीकृत्य पूर्वोक्तव्यवस्थया वाक्यद्वयसार्थक्यमुपपादनीयम्। अत एवैता देवताः परिसङ्ख्याय यजेतेति देवतापरिसङ्ख्यानं तत्तदनेकदेवत्यतत्तदनेकहविर्नाशे निमित्ते एवोपपद्यते। इतरथा एकादिदेवत्यैकादिहविर्नाशस्यापि निमित्तत्वे नानादेवतापरिसङ्ख्यानानुपपत्तेः। अतो विधेयसामर्थ्यादपि सर्वहविर्नाशस्य निमित्तत्वम्। **हविरुभयत्ववदिति**। यथैवापस्तम्बसूत्रे सान्नाय्यान्यतरहविर्नाशे प्रत्येकं प्रायश्चित्ताम्नानादुभयार्तौ विधीयमाने प्रायश्चित्तान्तरे वैयर्थ्यापत्त्यैवोभयत्वविवक्षेति वक्ष्यते; तद्वदिहापि सर्वत्वं विवक्षितमित्यर्थः। **एतेन** यदत्र भाष्यकारादिभिः शास्त्रदीपिकायां च सर्वत्वमविवक्षितं कृत्वा सर्वहविर्नाशस्य निमित्तत्वमित्युक्तं तदापस्तम्बवचनविरुद्धं भवतीति। आश्वलायनेन हविषां व्यापत्तावेतासु देवतास्वाज्येनेष्टिं समाप्य पुनरिज्या प्रागावाहनाच्च दोष इत्युक्तेः, तद्वृत्तिकृता **नारायणेनापि** एकद्व्यादिहविर्नाशेप्यावाहनोत्तरमाज्येन समापनमावाहनात्पूर्वं हविरन्तरोत्पादनं चोक्तम्। तथा चैकद्व्यादिकृत्स्नहविर्नाशेऽपि मीमांसकमते आवाहनपूर्वोत्तरयोरपि हविरन्तरोत्पत्तौ प्राप्तायां यस्य सर्वाणीति वचने सर्वत्वबहुत्वयोरविवक्षणादाज्येनैव समापनं वचनाद्विधीयते। एवं प्रयोगसमाप्त्यनन्तरं पुनरन्वाधानाद्यारभ्य पुनरिज्या वचनाद्भवति।

## (२)—अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥

यत्र तु **त्यागांशयुक्तानि शेषकार्याणि यथा स्विष्टकृदादौ तत्रोत्तरार्धादिनाशे** उत्तरार्धान्त**राभावादवशिष्टस्य प्रतिपत्त्यन्तरगृहीतत्वाच्च न तावच्छेषेण करणम्।**

---

**आपस्तम्बाद्याश्वलायनादिमते** एकादिहविर्नाशे तु "यद्यप्रत्तदेवतं हविर्व्यापद्येत अन्यद्धविस्तद्देवतं निर्वपेत् तत्र स्रुगादापनप्रभृतयो मन्त्रा आवर्तेरन्, यावदन्ते वा व्यापद्येत। यदि प्रत्तदेवतमाज्येन शेषं सस्थापयेत्" इति वचनाद्वानस्पत्योसि दक्षायत्वेत्यग्निहोत्रहवण्यादानादिसमन्त्रककर्मावृत्त्या, अथवा यावति संस्कारे कृते यदुपहतं विनष्टं वा हविस्तावदन्तं तूष्णीं कृत्वोत्तरं मन्त्रैः सर्वं कृत्वा[1] हविरन्तरोत्पत्त्या सर्वप्रयोगसमाप्तिर्नतु एकदा तं प्रयोगमाज्येन समाप्य पुनरिज्या **आश्वलायनमते** ।

**आपस्तम्बमते** तु सापि न भवति अप्रत्तदेवतसर्वहविर्नाशे तु आज्येन तत्तद्देवतागणनया तस्यै तस्यै आज्यं हुत्वा सर्वप्रयोगसमाप्त्यन्ते पुनरिज्येति सर्वमते समानम्। एकदेशनाशे तु पुनर्हविरन्तरोत्पत्तिराज्येन वा समापनं **मीमांसकमते**।

**याज्ञिकमते** तु अवशिष्टादवदाय प्रधानयागकरणं न पुनरत्रेज्या। आवाहनानन्तरं तु हविषः प्रधानयागनिष्पत्त्यनन्तरं अवशिष्टस्य स्विष्टकृदाद्यर्थगृहीतावदानस्य वा नाशे न हविरन्तरावृत्तिः[2]। किन्तु यदि प्रत्तदेवतमित्युक्तेराज्येनैव शेषसस्थापनमिति वक्ष्यते इति विवेकः। अत्र यस्य सर्वाणीत्यारभ्य अथान्यामिष्टिमुल्बणां तन्वीतेत्यादिश्रुत्या आपस्तम्बादिवाक्येषु **कर्कदेवयाज्ञिकादि**सम्मतो यागान्तरविधिरथवा पुनस्तस्यैव प्रयोगान्तरमिति तु विस्तरभयान्नोपपाद्यते।

---

**॥ अपि वा शेषभाजां स्यात् ॥**

यदि स्विष्टकृद्यागः स्वतन्त्रद्रव्यप्रयोजको भवेत् तदा यादृश उत्तरार्धात् एकदा गृहीतो नष्टः तदा तादृशस्य मध्यादेरिवाभावात् न पुनरवदानं प्राप्नोतीति पूर्वाधिकरणन्यायेन हविरन्तरोत्पत्तिरापद्येत न त्वेतदस्ति। तस्य परप्रयुक्तद्रव्योपजीवित्वेन द्रव्यसंस्कारकत्वात् संस्कार्ये द्रव्ये कस्मिंश्चिदंशे नष्टेऽपि शिष्टस्य विद्यमानत्वात् संस्कार्यस्य संस्कारप्रयोजकत्वाच्चावशिष्टात्पुनरवदानं प्राप्नोत्येवेत्याशङ्कां निराकरोति—**यत्र त्विति। उत्तरार्धान्तराभावादिति।**

---

1. P. हुत्वा 2. P. हविरन्तरापत्तिः

नापि **हविरन्तरोत्पत्तिः अप्रयोजकत्वात्।** किन्त्वाज्ये**नैव समापनम्। उक्तवचनस्य श्रुतद्रव्यनाशे द्रव्यापेक्षामात्रेणैव प्रवृत्तेः।** याज्ञिकमते **तु "यदि प्रत्तदेवतमाज्येन शेषं संस्थापयेत्" इत्यापस्तम्बवचनादवधेयम्।** अविशेषप्रवृ**त्तमपीदमपेक्षानुरोधात्स्विष्ट-**

---

**अयमर्थः** सकलपुरोडाशोत्तरार्धरूपः स्विष्टकृद्यागस्य संस्कार्यः न तु सकलावयवी पुरोडाशादिः उत्तरार्धात् स्विष्टकृते समवद्यतीति वचनात्। तथाच सकृद्गृहीतस्योत्तरार्धावयवस्य नाशे उत्तरार्धान्तराभावात् न पुनरवदानम्। यदि शिष्टादवदानं तदा स्विष्टकृदुपयुक्तावशिष्ट-भागस्य प्रतिपत्त्यन्तरसाधनस्य स्विष्टकृतैव पुनर्ग्रहणात् तद्भागस्याभावे प्रतिपत्त्यन्तरलोपापत्तिरतो न पुनः शेषादवदाय स्विष्टकृदिति। ननु स्विष्टकृत आश्रयिकर्मत्वात् द्रव्यप्रतिपादकत्वेन दृष्टार्थस्य त्यागांशेनापूर्वार्थस्यापि स्वीकारात् तदपूर्वनिष्पत्त्यर्थं पुनश्शेष उत्पादनीय एवापतेत् इत्यभिप्रायेणाशङ्क्य परिहरति—**नापीति। एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगादित्यधि-**करणे चतुर्थे परप्रयुक्तद्रव्योपजीवियागसाध्यापूर्वस्य द्रव्यप्रतिपत्त्यनुनिष्पाद्यत्वसमर्थनात् तादृश-द्रव्याभावे यागस्यैवाभावात् तज्जन्यापूर्वार्थं हविरन्तरोत्पत्तिप्रसक्तिरिति भावः। एवं न्यायप्राप्त एव स्विष्टकृदादिशेषकार्याणां लोपस्तथापि स्विष्टकृति विशेषमाह—**किन्त्विति।** यस्य सर्वाणीति वचने स्वमते सर्वत्वबहुत्वयोरविवक्षणादेकहविर्नाशस्याज्यप्राप्तौ निमित्तत्वावगतेः स्विष्टकृदर्थावत्तनाशस्यापि हविर्नाशत्वाविशेषेण निमित्तान्तर्गतत्वात् तन्निमित्ताज्यप्राप्तेराज्येन समापनं युक्तमित्यर्थः। यदि त्वाज्यविधिर्यत्रश्रुतद्रव्येऽयोग्ये सति द्रव्यापेक्षायां द्रव्यान्तरोत्पत्ति-प्रसक्तिः तत्रैवाज्यं विदध्यात् तदा स्विष्टकृति परप्रयुक्तद्रव्याभावेऽपि स्वतो द्रव्यान्तरप्रयोजकत्वा-भावेन द्रव्यान्तरोत्पत्त्यप्रसक्तेर्नाज्यं प्रापयेन्न त्वेतदस्ति। द्रव्यापेक्षामात्र एव तत्प्रवृत्तेः। अतो यद्यपि प्रक्षेपांशेन द्रव्यमपेक्षते तथापि त्यागांशेन त्वस्त्येव तदपेक्षेति युक्तैव तदपेक्षया आज्यप्रवृत्तिः द्रव्यापेक्षामात्रेणैवेत्यत्रत्यमात्रपदेन सूचितम्। येषां तु **आपस्तम्बसूत्रानुयायिनां** याज्ञिकानां आज्यविधिस्सर्वहविर्नाश एव प्रवर्तत इति मतं तेषां स्विष्टकृदर्थावत्तनाशेऽपि सर्वहविर्नाशाभावात् कथं स्विष्टकृत्याज्यप्राप्तिरित्याशङ्कां परिहरति—**याज्ञिकमते त्विति।** पूर्व-लिखित यद्यप्रत्तदेवतं हविरिति वाक्यशेषभूतमेवेदं वचनं प्रत्तं देवतायै द्रव्यं यत्तत्प्रत्तदेवतं यथा पूर्वं व्याख्यातम्। आवाहनानन्तरं प्रधानयागद्रव्यव्यापत्तौ शेषं शेषकार्यं आज्येन समाप-येदित्यर्थः। अत्र सर्वेषामपि स्विष्टकृदादियावच्छेषकार्याणामवदाननाशे आज्येन समापन-मित्येतत् सूत्रव्याख्याने सर्वैरपि **रुद्रदत्तप्रभृतिभिर्याज्ञिकैरुक्तम्। रामाण्डारेण** तु इडादिषु देवतातृप्तेर्भक्षणेन पुरुषसंस्कारस्यापि अदृष्टरूपस्य जननात् तत्सिद्धये आज्येन समापनं युक्तमित्युपपत्तिरप्युक्ता तद्दूषणायाह—**अविशेषप्रवृत्तमपीति।** स्विष्टकृति त्यागांशे

**कृत्परमेव। अतस्त्यागांशाभावदिडादेः लोप एव। इदं चोत्तरार्धत्वादिनाऽनेकप्रतिपत्तिविधाने। शेषत्वेनानेकप्रतिपित्तविधाने तु शेषैकदेशविनाशेऽप्यवशिष्टेनैवावयवशस्सर्वप्रतिपत्तिकरणमिति ध्येयम्॥**

---

द्रव्यापेक्षायामाज्यविधिरयमाकाङ्क्षितविधिर्भवति इडाभक्षणादिषु देवतातृप्तिजनने प्रमाणाभावात् पुरुषसंस्कारस्य तृप्त्याख्यस्य नान्तरीयकतया जननेऽपि तस्यादृष्टरूपत्वाभावेन नियमेन प्रयोजकत्वाभावात् तज्जनकापेक्षाभावे तत्राज्यविधिरनाकाङ्क्षितविधिः स्यादतः स्विष्टकृत्परमेवैतद्वचनमिति तस्यैवाज्येन समापनं, तदतिरिक्तानामिडाप्राशित्रचतुर्धाकरणशम्युवाककालभक्षरूपाणां शेषकार्याणामर्थे शेषाणां नाशे पुरोडाशरूपहविरेकदेशत्वेन तन्निमित्तत्वानपायात् यद्यपि हविर्नाशत्वमस्ति निमित्तमाज्यप्राप्तौ प्रयोजकं, तथापि भेदनादिहोम इव क्रत्वङ्गभूतानां क्रतुनिमित्तोभयप्रयोज्यत्वाङ्गीकारात् क्रत्वभावेनादृष्टकार्याभावाल्लोप एवेति भावः। स्विष्टकृत्परमेवेत्येवकारेणेडादीनां व्यावृत्तिः, न त्वावाहनानन्तरं प्रधानहविर्नाशस्याविशेषप्रवृत्तत्वादाश्वलायनवचनसंवादाच्च।

अथ वा प्रत्तदेवतपदयो **रामाण्डारेण** हुतद्रव्यपरतया व्याख्यानकरणात् हुते द्रव्यापेक्षाया अभावेन प्रधानयागीयद्रव्यव्यापत्तावप्राप्तेर्हुतावशिष्टद्रव्यव्यापत्तिपरत्वमेव युक्तमित्यभिप्रेत्य स्विष्टकृत्परमेवेत्येवकारो द्रष्टव्यः। **वस्तुतस्तु** आश्वलायनवचनमूलभूतश्रुत्यपेक्षया एतादृशार्थकरणे श्रुत्यन्तरकल्पने गौरवापत्तेः पूर्वोक्तविधया मदुक्त एव तच्छब्दयोरर्थो दुक्त इति ध्येयम्।

इडादेर्लोप इति मूले इडाद्यर्थगृहीतशेषनाशे इति पश्चात् पूरणीयम्। अन्यथा स्विष्टकृत आज्येन समापनेऽपि इडादेर्लोप इति लिखनस्यासङ्गतत्वापत्तेः। एवं प्राचां मर्यादया सिद्धान्तितेऽर्थे विशेषमाह—**इदं चेति**। उत्तरार्धत्वादिनेत्यादिपदेनेडावदाने दक्षिणमध्यापादानकत्वस्य प्राशित्रावदाने मस्तकापादानकत्वस्य च संग्रहः। **अयमर्थः**। शाखान्तरे शेषात्स्विष्टकृते समवद्यति इत्यादिशेषपदघटितान्येव शेषकार्यविधायकवचनानि दृश्यन्ते तदा प्रधानयागीयमध्यपूर्वार्धापादानकगृहीतद्रव्यवदानादुर्वरितस्य तेनैव साधनभूतशेषेणावयवशः स्विष्टकृदादिशेषाणां करणं भवत्येव। **यद्यपि** सकृद्गृहीतोऽवयवः पुरोडाशोत्तरार्धापादानकः संभवति न द्वितीयवारं गृहीतः तस्य विशिष्टदेशस्याभावात् **तथाप्यस्मिन्** पक्षे शेषस्यैवोत्तरार्धादवदानग्रहणप्रतीतेः पुनरपि शेषसंबन्ध्युत्तरार्धादवदानग्रहणे न कोऽपि विध्यर्थबाध इति ध्येयम्।

(३)—निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥ सर्वैर्वा समवायात्स्यात् ॥ ५ ॥ निर्देशस्य गुणार्थत्वम् ॥ ६ ॥ प्रधाने श्रुतिलक्षणम् ॥ ७ ॥ अर्थवदिति चेत् ॥ ८ ॥ न चोदनाविरोधात् ॥ ९ ॥

शेषप्रसङ्गादिदम्। दर्शपूर्णमासयोश्शेषभक्षाः श्रुताः। तत्रेडाभक्षे, यजमानपञ्चमाः इडां भक्षयन्ति' इति श्रुताः कर्तारः। तथा प्राशित्रभक्षे 'प्राशित्रं ब्रह्मणे परिहरति' इति श्रुतः। चतुर्धाकरणभक्षेऽपि व्यादेशाम्नानाच्चत्वार ऋत्विजः। यजमानभागब्रह्मभागयोस्तावेव। शंयुवाककालभक्षे तु 'हविश्शेषान् भक्षयन्ति' इत्याम्नातेन बहुवचनेन आध्वर्यवसमाख्याबाधेऽपि कर्मकरत्वात्सर्वे ऋत्विजो भवन्ति। न चेडाभक्षे न्यायप्राप्तर्त्विक्पुनश्श्रवणस्य परिसङ्ख्यार्थत्वात् शंयुवाककालभक्षे तदन्य एव भवेयुरिति वाच्यम्। ऋत्विजां प्राप्तत्वेऽपि अप्राप्तयजमानसाहित्यस्यैव तत्र विधेयत्वेन तस्य भक्षान्तरे ऋत्विक्परिसङ्ख्यार्थत्वाभावात्। अत्र हि इडोद्देशेन कर्तृविशिष्टभक्षान्तरविधानेऽपि विशेषणविधिवेलायां प्राप्ताप्राप्तविवेकेन भक्षो यजमानसाहित्यं च विधीयते। ऋत्विजां तु भक्षस्य

---

॥ निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥

अत्र भाष्यकारेण—स्तो दर्शपूर्णमासौ तत्र भक्षाः प्राशित्रचतुर्धाकरणशम्युवाककालास्तेषु सन्देहः। किमन्ये एव तेषां भक्षयितारः, उत प्रकरणगता इति सर्वभक्षेषु सन्देहपूर्वं प्रकृताप्रकृतकर्तृविचारः कृतः। तत्र केषुचिद्भक्षेषु वाचनिककर्त्राम्नानादप्रकृतकर्तृकत्वपूर्वपक्षो न सम्भवतीति दर्शयितुं भक्षेषु केषुचित् कर्तृनियमं वाचनिकं दर्शयति—तत्रेडाभक्षेत्यादिना। व्यादेशाम्नानादिति। इदं ब्रह्मण इदं होतुरित्यादिव्यपदेशाम्नानादित्यर्थः। तावेवेति। यजमानब्रह्माणावेवेत्यर्थः। कदाचिच्छंयुवाककालभक्षे प्रकृतकर्तृनिर्देशाभावादन्यकर्तृकत्वपूर्वपक्षः सम्भवतीति वर्णयितुं युक्तः सोऽपि न सम्भवतीति सिद्धान्तमुखेनैव वदति—शंयुवाककालभक्षे त्विति। अत्र च तन्त्ररत्ने इडाम्भक्षयन्ति प्राशित्रं ब्रह्मणे परिहरति इत्यादिवचनेषु द्वितीयानिर्दिष्टेडादिस्थद्रव्याणां संस्कार्यत्वात् पुरुषसंस्कारकत्वाभावेन वपनादिष्विव यजमानस्याप्राप्तेर्यजमानपञ्चमा इति वाक्येन यजमानसाहित्यमप्राप्तं विधीयत इत्युक्त्वा कथं तर्हि भाष्यकारेण पुरुषसंस्कारकत्वमुक्तमित्याशङ्क्य प्रकरणसमाख्याभिः प्रमाणैरेभिरेव ऋत्विग्भिः भक्षयितव्यमित्यस्यापि कर्तृनियमस्य दृष्टमेव प्रयोजनम्।

तथाहि—कर्तॄणामपि कियत्यपि तृप्तिरुपजायते । अतस्तन्नियमप्रयोजनं क्रियाप्रयोजनानुनिष्पाद्यपेक्ष्य भाष्यकारेणोक्तमिति परिहृतम् । तदेतत् प्रयाजशेषाधिकरणे हविराधारतानियमं प्रति हविषां यथा संस्कार्यत्वमुक्तं तथेह कर्तृत्वनियमं प्रति कर्तॄणां संस्कार्यत्वमुक्तं भवति, तत्तदधिकरणीयस्वोपपादितरीत्या तद्दूषणेनैव दूषणीयमित्यभिप्रेत्य स्वाभिप्रेतप्रयाजशेषप्रतिपत्तिविधिकल्पनं, इह तु श्रुतेन प्रतिपत्तिविधिना कर्तृसंस्कारार्थत्वविधिकल्पनमिति ।

वस्तुतस्तु तत्र श्रुतविधिना हविरर्थत्वेऽवगतेपि प्रयाजशेषगतप्रतिपत्त्यपेक्षया तदनुरोधेन प्रतिपत्तिविध्यन्तरकल्पनं कथञ्चिद्युक्तं; इह तु कस्यापेक्षया विध्यन्तरकल्पनमिति विवेचनीयम् । न ह्यवशिष्टपुरोडाशसम्बन्धिविशेषस्य प्रतिपत्त्यपेक्षावत्कर्तॄणामस्ति भक्षरूपसंस्कारापेक्षा यदनुरोधेन कर्तृसंस्कारार्थत्वविधिकल्पनं भवेत् ।

अस्तु वा ऋत्विजां तृप्त्यर्थं अथवा करिष्यमाणकर्मणि बलाधानार्थं वा तदपेक्षा, तथापि भक्षस्य सामर्थ्यात् स्नानस्य सामर्थ्यात् मलापकर्षणार्थत्वद्वारा पुरुषार्थत्वस्येव तृप्तिजननद्वारा करिष्यमाणकर्मणि बलाधानद्वारा वा पुरुषार्थत्वप्राप्तौ तद्बाधेन द्वितीयाश्रुत्या शेषभूतद्रव्यार्थत्वमेव प्राप्नोतीति न पुनः कर्तृसंस्कारार्थत्वं कल्पनीयम् । यद्यपि तदानुषङ्गिकं फलमुत्पद्यते प्रत्यक्षत एव तथापि न तदर्थत्वे अलौकिकप्रमाणापेक्षेति न विधिकल्पनं तदर्थं युक्तम् । अतश्च स्वोक्तप्रयाजशेषन्यायस्यात्रानवतारात् प्रयाजशेषन्यायेनेत्यत्र मूले न्यायपदमुत्सृज्य यथा हविरर्थस्याभिघारणस्य प्रयाजशेषार्थत्वं, तथा शेषार्थस्य भक्षणस्य कर्तृसंस्कारार्थमित्येवमुभयार्थत्वप्रतिपादनांशे स्वमतेन प्रयाजशेषदृष्टान्तप्रदर्शनमेव कार्यं तदभिप्रायकमेव न्यायपदमपि कथञ्चिद्योजनीयमिति द्रष्टव्यम् । कर्तृसंस्कारार्थत्वमिति तन्त्ररत्नोपपादितमयुक्तं तथात्वे एकेनैव वाक्येनोभयविधाने वाक्यभेदापत्तेः । भक्षणस्य श्रुत्या शेषसंस्कारत्वेऽवगते कर्तृनियमजन्यादृष्टस्यापि भक्षणप्रतिपत्तिनियमादृष्टस्येव प्रतिपाद्यनिष्ठत्वकल्पने लाघवाद्वाक्यान्तरकल्पनामूलोच्छेदेन वाक्यन्तरकल्पनया नियमांशेन कर्तृसंस्कारकत्वकल्पने मानाभावाच्च ।

यत्तूक्तं तेनैव कर्तृनियमस्य दृष्टमेव प्रयोजनं तृप्त्याख्यं क्रियाप्रयोजनानुनिष्पादीति तद्द्वारा नियमांशेन कर्तृसंस्कारकत्वमिति । तदसत् ॥ तृप्त्याख्यप्रयोजनस्य भक्षणक्रियाऽनुनिष्पादित्वेऽपि तस्य कर्तृनियमजन्यत्वे प्रमाणाभावात् । नियमविधिविषयस्य नियमस्य वैधत्वेनादृष्टफलकत्वावश्यकत्वे तृप्तिफलस्यापि तज्जन्यत्वकल्पने गौरवाच्च । अतश्च शेषभक्षणरूपप्रतिपत्तेः शेषसंस्कारभूतायाः कर्तृनिष्ठतृप्तिरुपपद्यते नान्तरीयकयेति तस्या एवानुषङ्गिकं दृष्टं

**प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारकत्वस्यापि वक्ष्यमाणत्वेनानत्यर्थत्वात् प्राप्तिसम्भवेन न विधानं, स्वत एवानतत्वाच्चाप्राप्तं यजमानसाहित्यं तु विधीयते। यदि तु करिष्यमाण-**

---

तत्फलमिति न तत्प्रयोजकम्। प्रयोजकस्तु शेषसंस्कार एवेति अदृष्टद्वारा पुरुषसंस्कारकत्वं यदुक्तं **रामाण्डार**प्रभृतिभिर्याज्ञिकैस्तदयुक्तमेवेति।

**आनत्यर्थत्वादिति।** **एतेने**डाभक्षस्य हौत्राध्वर्यवयोराम्नानाद्धौत्राध्वर्यवसमाख्याभ्यां तयोरेव तत्र कर्तृत्वेन प्राप्तेर्नेतरर्त्विक्प्राप्तिरित्याशङ्का **परास्ता।** आनतिजनकत्वरूपलिङ्गेन तयोर्बाधात्। अथवा पञ्चमत्वविशिष्टयजमानविधेरर्थाद्दत्विक्चतुष्टयस्य प्राप्त्युपपत्तेश्च।

**यद्यपि** शेषभक्षाश्च तद्वदिति दशमद्वितीयपादाधिकरणे शेषभक्षाणां प्रीत्युत्पादनद्वारा आनतेः प्रत्यक्षेण जननादानत्यर्थत्वमाशङ्क्य द्वितीयादिश्रुत्या देवतायै दत्तस्यानीशेन यजमानेन पुनः ऋत्विग्भ्यो दानासम्भवाच्च प्रतिपत्तिरूपशेषसंस्कारार्थत्वमेवेति **प्राचीनै**स्सिद्धान्तितं, तथापि **पूज्यपादै**स्तदधिकरणे दृष्टप्रयोजनत्वाविशेषात् प्रतिपत्तेरानतेः करिष्यमाणकर्मणि बलाधानस्य च प्रयोजकत्वं न त्वानतिमात्रस्येति सूत्रे आनतिरूपप्रयोजनाभावेऽपि प्रयोजकान्तरस्य सत्वात् सत्रेष्वपि शेषभक्षाः कर्तव्या इति सिद्धान्तकरणात् तदभिप्रायेणानत्यर्थत्वमुक्तं नायुक्तम्। एतदभिप्रायेणैव 'यदि तु करिष्यमाणकर्मणि बलाधानार्थत्वमपि भक्षस्य विभाव्यत' इति अग्रिम-ग्रन्थे अपिशब्दः प्रयुक्तः।

**वस्तुतस्तु** पूर्वोक्तरीत्या शेषप्रतिपत्त्यर्थत्वस्यैव युक्तत्वात् दृष्टप्रयोजनकत्वमात्रेण नानत्यर्थत्वं, न वा करिष्यमाणकर्मणि बलाधानार्थत्वमपि, लिङ्गापेक्षया द्वितीयादिश्रुतेः बलवत्त्वात्। न ह्यत्र हविरर्थश्रौताभिघारणविधेर्धारणप्रयोजकत्वकल्पनापत्तिभिया प्रतिपत्ति-विध्यन्तरकल्पने तस्यैवानुमानिकत्वेन धारणप्रयोजकत्वकल्पनमिवेहापि कल्पितकर्तृसंस्कारविधेरेव धारणप्रयोजकत्वं कल्पनीयं, न तु श्रुतशेषसंस्कारविधेस्तदिति सम्भवति। तत्र क्लृप्त-कल्प्यान्यतरविधेर्धारणप्रयोजकत्वकल्पनेऽनुष्ठानभेदे सत्यपीह तत्कल्पनेऽनुष्ठानाविशेषात् विध्यन्तर-कल्पनसाधारणप्रयोजकत्वकल्पनस्य निष्प्रयोजनत्वात्। किञ्च तन्त्ररत्नाद्युक्तकर्तृगततृप्तिरूप-संस्कारस्य क्रतावनुपयोगेन फलत्वानुपपत्तेरुत्तरकर्मोपयोगिप्राणधारणापरपर्यायबलाधानार्थत्वमेव कल्पितविधिना बोध्यत इति स्वीकारे कर्तृनिष्ठबलाधानसंस्कारद्वारा शेषभक्षाणां द्रव्यसंस्काराणामपि उत्तरकर्माङ्गत्वमात्रापत्तेः कदाचिच्छेषद्रव्यनाशे प्रयोजकस्योत्तरकर्मणः सत्वात् स्विष्टकृद्वदेवाज्येन समापनापत्तेः पूर्वाधिकरणे इडादेर्लोपाभिधानानुपपत्तिः।

**कर्मणि बलाधानार्थत्वमपि भक्षस्येति विभाव्यते** तदाऽस्तु **यजमानपञ्चमत्वग्रहणं पत्नीपरि-**

---

किञ्च द्वादशे प्रथमपादे शेषभक्षास्तथेति चेदित्यधिकरणे स्वयमेव ऋत्विग्भक्षाणामन्वाहार्यदक्षिणानियमविधिबलेनैवानत्यर्थत्वस्य निराकरिष्यमाणत्वात् तद्विरुद्धमेवानत्यर्थत्वाभिधानं दाशमिकम्। अत एव प्राचीनैः सर्वथा दाशमिकाधिकरणे आनत्यर्थत्वं निराकृतम्। अपि च द्वादशे एव प्रथमपादे **शेषभक्षास्तथेतिचेन्नानत्यर्थत्वादित्य**धिकरणे प्रकृतावारण्याशननियमविधिना तेनैव यजमानस्य प्राणधारणकर्तव्यत्वप्रतीतेः यजमानकर्तृकभक्षस्य शेषप्रतिपत्तिमात्रार्थत्वं स्वयं साधितम्। तथाचेडाभक्षणादौ बलाधानार्थत्वपक्षेऽपि यजमानप्राप्त्युपपादनमयुक्तमेव। एवं स्थिते इडाभक्षणस्य यजमानकर्तृत्वांशे केवलप्रतिपत्तिकर्मत्वं न बलाधानार्थत्वं, ऋत्विक्कर्तृत्वांशेनोभयार्थत्वमिति वैरूप्यापत्तेः सर्वसाधारण्येन प्रतिपत्त्यर्थत्वमेव, आनुषङ्गिकतया परं तृप्तिर्बलाधानं आनतिर्वोत्पद्यतां, न त्वेतावता तदर्थं विध्यपेक्षा येन तत्कल्पनया तदपि प्रयोजकत्वेन सम्भाव्येतेति। सर्वशेषभक्षणामानत्यर्थत्वं बलाधानार्थत्वं वा तदुपपादनाय च तत्तदधिकरणस्थं प्रयाजशेषन्यायोपन्यसनं सर्वमपि प्राचीनमर्यादामतिक्रान्तमेव।

अत एव द्वादशे शेषभक्षास्तथेति चेन्नानत्यर्थत्वादित्यधिकरणं तन्त्ररत्नादौ पुरुषसंस्कारार्थत्वं यत् षष्ठे निराकृतं तस्यैव प्रयोजनाभिधानपरतया व्याख्यातम्। अतः सर्वोऽप्ययं ग्रन्थः पक्षान्तराभिप्रायेणैव नेयः। अत एवाभिप्रेत्य **पूज्यपादैरस्मिन्** पक्षे तस्मिन्नित्यग्रिमग्रन्थे पक्षपदोपादानं कृतम्। तथाचर्त्विजां भक्षस्येति प्रभृतिग्रन्थेन प्रयाजशेषाभिघारणन्यायेन यस्मिन् पक्षे कर्तृसंस्कारकत्वं तस्मिन् पक्षे यद्यानतिद्वारा अथवा बलाधानद्वारा वा तत्संस्कारकत्वाङ्गीकारस्तदापि प्रकृते यजमानविधानं नानुपपन्नम्।

**वस्तुतस्तु** नानतिद्वारा न वा बलाधानद्वारा तत्संस्कारकत्वेन क्रतूपयोगित्वं अपि तु शेषप्रतिपत्तिद्वारैव तत् नान्तरीयकस्तु तृप्त्याख्यः क्रत्वनुपयोग्यपि कर्तृसस्कार उत्पद्यते इत्येव **पूज्यपादानां** तात्पर्यम्। न ह्यत्र बलाधानार्थत्वलिङ्गेन शषभक्षेषु ऋत्विजां यजमानस्य चं कर्तृत्वेन प्राप्तिः कैरप्युक्ता। अत एव **तन्त्ररत्ने** वाक्यप्रकरणसमाख्याभिः प्रमाणैः एभिरेवर्त्विग्भिः क्षयितव्यमित्यस्यापि कर्तृनियमस्य दृष्टमेव प्रयोजनमिति ग्रन्थेन वाक्यप्रकरणसमाख्यानामेतत्प्रापकत्वमुक्तमिति सर्वमनवद्यम्।

**तदाऽस्त्विति।** करिष्यमाणकर्मणि बलाधानार्थत्वेन यथा तस्मिन् ऋत्विजां प्राप्तिस्तथा यजमानस्यापि प्राप्तेः पुनर्यजमानविधानं पत्नोपरिसङ्ख्यार्थमिति भावः। **तस्मिन्निति।** शंयु-

सङ्ख्यार्थम्। सर्वथा भक्षान्तरे कर्तृपरिसङ्ख्याभावात् शंयुवाककालभक्षे ऋत्विज एव कतारः। अस्मिंश्च पक्षे तस्मिन् पत्नीयजमानयोर्निवृत्तिः 'अत्रैव ऋत्विजो हविश्शेषान् भक्षयन्ति' इति कल्पसूत्रकारवचनादवगन्तव्या ॥ ३ ॥

---

(४)—अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥ न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥ स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्न हि तस्य गुणार्थेनानित्यत्वात् ॥ १२ ॥ गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयस्स्यात् ॥ १३ ॥ भेदार्थमिति चेत् ॥ १४ ॥ शेषभूतत्वात् ॥ १५ ॥ अनर्थकश्च सर्वनाशे स्यात् ॥ १६ ॥

दर्शपूर्णमासयोः प्रायश्चित्ताधिकारे 'भिन्ने जुहोति स्कन्ने जुहोति' इति श्रुतम्। तत्र कृत्स्नभेद एवेदं उतैकदेशभेद एव उतोभयत्रापीति चिन्तायां–द्वयोस्सङ्घर्षे सति एकदेशभेदस्यावर्जनीयत्वेन नित्यत्वान्निमित्तत्वानुपपत्तेस्सर्वभेद एवेदं चूर्णतादशायां प्रायश्चि-

---

वाककालभक्षे इत्यर्थः। एतच्च कल्पसूत्रकाराणां मतेऽध्वर्य्वादिष्वेवर्त्विक्पदस्य योगरूढ्या पत्नीयजमानयो ऋत्विक्पदाप्रवृत्त्यभिप्रायेणोक्तम्। यदा तु कर्मकार्यादिति तार्तीयाधिकरण-दर्शितरीत्या सप्तदशर्त्विज इति श्रुतेश्च तयोरपि तत्पदप्रवृत्तिस्तदा हिरण्यमालित्वादेरिव तयोस्त-त्प्राप्तिरनिवार्येति ध्येयम्।

---

॥ अर्थसमवायात्प्रायश्चित्तमेकदेशेपि ॥

यत्पूर्वं किं कृत्स्नभेदे प्रायश्चित्तमिति सन्देहकोटौ उपक्षिप्तं तस्यार्थं वक्तुमाह— चूर्णतादशायामिति। यद्भिन्नं सत् कार्याक्षमं चूर्णीभूतं तद्गतो भेदः कृत्स्नभेदशब्दार्थः। युक्तं चैतत्। भिन्नमिति क्तप्रत्ययेन भेदनाश्रयद्रव्यस्याभिधानात् तस्य प्रत्ययार्थत्वेन प्राधान्यात् प्रकृत्यर्थस्य धात्वर्थभेदस्य विशेषणत्वेनान्वये सर्वतो द्रव्यप्राप्तेरावश्यकत्वात्। अन्यथा तस्य सर्वतो व्यवच्छेदकत्वाभावेन विशेषगुणत्वानुपपत्तेः। न ह्यङ्गुलिमात्रे रक्ते रक्तो देवदत्त इति भवति प्रत्ययः। तस्मात् कृत्स्नमेव भिन्नं निमित्तमिति तत्रैवैतत्प्रायश्चित्तमिति भावः।

त्तमिति प्रथमः पक्षः। सङ्घर्षेण कतिपयावयवानां चूर्णीभावेऽपि भिन्नमिति प्रतीत्यभावात् कापालिकादिस्थूलावयवविभाग एव भेदनप्रतीतेः तस्यैवानित्यत्वेन सर्वभेदनवदेकदेशभेदनस्यापि निमित्तत्वोपपत्तेः तत्रैवायं होमः। अयं हि भेदनस्य निमित्तत्वेऽपि होमस्य प्रयोजनापेक्षायां सन्निपत्योपकारकत्वलाभाय भिन्नकपालसंस्कारार्थः। कपाले हि भेदनेनोक्तपरिमाणबाधात् वैगुण्यप्रसक्तौ तत्परिहाररूपः होमेन संस्कारो नानुपपन्नः। तस्य नानुपयुक्तस्य संस्कारायोगात् सर्वभेदने चोपयोगायोगादेकदेशभेदनमेव निमित्तम्। अस्तु वा सप्तमीयं संस्कार्यत्वपरैव न तु निमित्तत्वार्थिकाऽपि। न च भिन्नस्य कादा-

---

प्रतीत्यभावादिति। सङ्घर्षजन्यचूर्णीभावे हि सङ्घृष्टमिति प्रतीतिसत्वेपि न भिन्नमिति प्रतीतिरित्यर्थः। अतो यद्यपि विशिष्टं द्रव्यं निमित्तत्वेन प्रतीयते तथापि विशेष्यांशस्य नित्यत्वेन निमित्तत्वानुपपत्तेर्विशषणे भेदे एव तत्पर्यवसानात् कृत्स्नैकदेशभेदनयोरुभयोरपि न निमित्तत्वानुपपत्तिरिति भावः। ननु एवं सर्वभेदनवत् एकदेशभेदनस्यापि निमित्तत्वे उभयत्रापि न प्रायश्चित्तापत्तिरिति सिद्धान्तासिद्धिरेव स्यादित्याशङ्कानिरासायाह—अयं हीति। अत्र तन्त्ररत्नादौ होमस्य भिन्नसंस्कारकत्वोपपादनायागारे गावो वास्यन्तामित्यत्रेव सप्तम्या लक्षणया संस्कार्यत्वपरत्वमेव। निमित्तत्वे[1] तु प्रकरणेन होमस्य यागसम्बन्धः स च दुर्बलो वाक्यादिसम्बन्धादित्युक्तम्। तद्दूषयति—निमित्तत्वेऽपीति। भिन्नस्य निमित्तत्वेऽपि यावत्तस्य प्रयोजनापेक्षया प्रकरणादारादुपकारकविधया प्रधानाङ्गत्वं कल्प्यं तावत् सन्निपत्योपकारकत्वलाभाय वैमृधन्यायेन भिन्नवाचकपदान्तरकल्पनया तत्संस्कारार्थत्वमेव कल्प्यते प्रकरणापेक्षया वाक्यस्य प्राबल्यात्। आनर्थक्यपरिहाराय भिन्नसंस्कारद्वारा प्रधानापूर्वार्थत्वकल्पनाया आवश्यकत्वेन सर्वथा प्रकरणबाधाभावाच्च। भवन्मते तु सर्वथा सन्निपत्योपकारकत्वस्यात्यन्तं बाध इति किमिति लक्षणां विनैव निर्वाहे संस्कार्यलक्षणाश्रयणमिति भावः। कपालयोग्यताधानरूपं संस्कारमुपपादयति—कपाले हीति। अधिकरणातिरिक्तेष्वर्थेषु सप्तम्या लाक्षणिकत्वस्यैवाङ्गीकारान्निमित्तत्वे इव संस्कार्यत्वे लक्षणासाम्येपि सन्निपत्योपकारकतालाभाय संस्कार्यत्वपरत्वाङ्गीकारेऽपि न बाधकमित्यभिप्रेत्याह— अस्तु चेति। अत्र सिद्धान्ते प्रकाशकारैः प्राचीनोपपादितं नित्यानित्यसंयोगविरोधं परिहृत्य निमित्तसप्तम्याः सूत्रानुशिष्टत्वेन निरूढलाक्षणिकार्थग्रहणं युक्तं न तु संस्कार्यत्वे अनुशासनाभावे साम्प्रतिकलाक्षणिकार्थग्रहणमित्येवं सिद्धान्तसाधकहेतूपन्यसनं कृतं, तदनेनापास्तम्। सन्निपत्योपकारकत्वानुरोधेन साम्प्रतिकतदङ्गीकारेऽपि बाधकाभावात्।

---

1. T. अनिमित्तत्वे तु

चित्कत्वान्नित्यानित्यसंयोगविरोधः रथन्तरस्य कादाचित्कत्वेऽपि सम्मीलनादिधर्मविधिवदुपपत्तेरिति प्राप्ते—

---

अत्र भाष्यकारादिभिः परमसिद्धान्ते स्थित्वा संस्कार्यत्वपक्षे नित्यानित्यसंयोगविरोधे दूषणमापादितम् । तथाहि—यदा भिन्नसंस्कारार्थो होमस्तदा तस्यानैमित्तिकत्वादनैमित्तिकेतराङ्गानामिव नवमाद्यन्यायेन प्रधानापूर्वमेव होमस्यानुष्ठापकमिति तदपूर्वेण नित्यवत् प्रयोजनस्य होमस्य नानित्यभिन्नद्वारकत्वं सम्भवति नित्यवदनुष्ठेयस्यानित्यार्थत्वायोगात् । अनित्यार्थत्वे च नित्यवदनुष्ठानबाधापत्तेः । भेदनस्य निमित्तत्वे तु निमित्तप्रयुक्तं नैमित्तिकं सत्येव निमित्ते कर्माङ्गं भवति नासतीति नित्यवदनुष्ठानप्रसङ्गाभावात् न नित्यानित्यसंयोगविरोधदोषापत्तिः । अत एव यत्रानुष्ठापकं फलं च नित्यं भवति तत्र तयोरेककर्मणा सम्बन्धो भवति, यथा निमित्तस्य जीवनस्य निरसनीयपुरुषपापस्य च सर्वदा सत्वात् जीवनानुष्ठाप्यस्य होमस्योपात्तदोषोपघातार्थत्वसम्भवादविरुद्धः सम्बन्धः । एवं यत्रानुष्ठापकस्य फलस्य चानित्यत्वं; यथा—ब्रह्महत्याद्यनित्यं प्रायश्चित्तनिमित्तं पुरुषदोषश्चानित्यः तत्र प्रायश्चित्तं ब्रह्महत्याप्रयुक्तं दोषनिर्घातं चेति नास्ति विरुद्धः सम्बन्धः । तथाच यावत् प्रयोजकं उपकार्यफलं वाऽस्ति तत्र न नित्यानित्यसंयोगविधिः । इह तूपकार्यं भिन्नं कदाचित्प्रयोजकं स्वपूर्वं नित्यमिति विरोधः इति न भिन्नसंस्कारार्थो होम इति ।

तमिमं नित्यानित्यसंयोगविरोधमाशङ्क्य प्रतिबन्द्या परिहरति—**रथन्तरस्येति** । रथन्तरे प्रस्तूयमाने सम्मीलयेत् नोच्चैर्गेयं बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत् उच्चैर्गेयमित्यादिवचनविहिताः सम्मीलनादयो धर्माः यद्यपि रथन्तरादिपदयोः सप्तमीश्रवणात् तत्तन्निमित्ते विधीयमाना इव प्रतीयन्ते तथापि उच्चैर्गेयमित्युच्चैष्ट्वादिप्रायपाठात् सप्तम्या लक्षणया प्राधान्यपरत्वमङ्गीकृत्य रथन्तरादिसाम्नः उद्देश्यत्वमेव, न तु निमित्तत्वमितरत् तत्साम्नोऽङ्गमिति नवमे वक्ष्यते । ततश्चेहापि सम्मीलनादिधर्माणां अनैमित्तिकानां स्तोत्रापूर्वस्यैवानुष्ठापकत्वात्तेन नित्यवत्प्रयोज्यानां तेषां कादाचित्करथन्तरार्थत्वानुपपत्तिस्तुल्येत्यगत्या तत्र नित्यानित्यसंयोगविरोधाङ्गीकारवदिहापि न बाधकमिति भावः ।

अत्र सिद्धान्ते "गुणानां च परार्थत्वात् वचनाद्व्यपाश्रयः स्यात्" इति सिद्धान्तैकदेशिसूत्रव्याख्याने भाष्यतन्त्ररत्नयोर्होमस्य प्रकरणात् प्रधानार्थत्वात् भिन्नस्यापि होमप्रयोजकत्वद्वारा प्रधानार्थत्वाद्गुणभूतयोर्होमभिन्नयोः न परस्परमङ्गाङ्गिभाव इति सिद्धान्तसाधकनया युक्ति-

भाव्युपयोगित्वे **भूतोपयोगित्वे वा तस्योपधानावश्यकत्वे—'भिन्नं कपालमप्सु प्रक्षिपति अन्यदुपदधाति' इतिवाक्यविरोधात् नायं स्वतन्त्रो होमो भिन्नसंस्कारकः। नापि प्रकरणपठितहोमानां तत्संस्कारकत्वम्।** एतेन **प्राकरणिकहोमानुवादेन लौकिकस्य भिन्नकपालस्यैवाधिकरणत्वेन विधिराहवनीयबाधेनेत्यपास्तम्।** होमस्य **प्राकरणिकस्य**

---

रुपन्यस्ता। न चासौ युक्ता, निमित्तस्य प्रधानानङ्गत्वेन गुणत्वाभावात्। न हि होमस्य प्रयोजकं निमित्तमिति प्रधानार्थत्वं वक्तुं शक्यं, येन यत्प्रयुज्यते तस्यैव तदर्थत्वनियमात् गुणत्वस्य श्रुत्यादिषट्प्रमाणगम्यस्य तदभावे तत्कल्पनस्य निष्प्रमाणत्वाच्च। इतरथा प्रधान-फलस्य प्रधानद्वाराऽपूर्वार्थत्वस्य ब्रह्महत्यादीनां प्रायश्चित्तद्वारा पापक्षयार्थत्वस्य चापत्तेः बहुतर-व्यवहारोच्छेदप्रसङ्गात्। अतो यथा नित्यानित्यसंयोगविरोधो न संस्कारकत्वपक्षे दूषणं तथेदमपीत्यभिप्रेत्य प्रकारान्तरेणेमं पक्षं दूषयन् सिद्धान्तमाह—**भाव्युपयोगित्वे इति। स्वतन्त्र इति।** प्राकरणिकसर्वहोमापेक्षया कर्मान्तरभूत एव स भिन्नसंस्कारार्थो नेत्यर्थः। अनेनैव न्यायेन प्रकरणपठितानामेव होमानां भिन्नादिसंस्कारकत्वं न सम्भवतीत्याह—**नापीति।** अत्र भाष्यादौ होमानुवादेन भिन्नस्याधिकरणत्वेनैव विधानं; सप्तम्या संस्कार्य-त्वानभिधानस्येव निमित्तत्वस्यापि शक्त्यानभिधानेऽपि अधिकरणत्वस्य मुख्यवृत्त्याऽभिधानादित्या-शङ्क्य अधिकरणत्वेन विधानेऽपि प्रकरणोपस्थिताग्नेयादियागाङ्गत्वस्यैव प्राप्त्याङ्गेषु तद्विधाना-भावात् तत्रैवाहवनीयस्य अस्य[1] च विकल्पापत्त्या पक्षे आहवनीयबाधापत्तेः। नहि निमित्त-परत्वे सम्भवत्यधिकरणपरत्वाश्रयणेन विकल्पाङ्गीकरणं युक्तमिति **परिहृतम्।**

तत्र प्रकरणात् प्रधानयागमात्रार्थत्वं आहवनीयेन सह विकल्पाभिधानं चायुक्तं भिन्ने जुहोतीति वाक्येन होमत्वावच्छिन्नस्य प्रकरणेन सङ्कोचनेऽपि वेद्यां हवींष्यासादयतीत्यत्र हविर्मात्र-स्यैव प्राकरणिकाङ्गप्रधानसाधारणहोमत्वावच्छिन्नमात्रस्य वाक्येनानुवाद्यत्वप्रतीतेर्बाधायोगात् सर्व-प्राकरणिकहोमेष्वपि भिन्नाधिकरणत्वविधाने सति होमाङ्गत्वावच्छिन्नमात्रस्येतरेषु सावकाशस्या-हवनीयस्य बाधस्यैवापत्तेः विकल्पासम्भवात्। अतो नित्यवदेवाहवनीयबाधेन प्राकरणिक-होममात्रे भिन्नाधिकरणताविधानाशङ्कैव युक्तेति तामेवाशङ्कां निराकरोति—**एतेनेति।** तव मते भिन्ने कपाले होमस्य प्रायश्चित्तरूपत्वाभावात्तदनन्तरं अन्यदुपदधातीति वचनेनान्यस्य कपालस्योपधानं व्यर्थमेवापद्येतेत्यर्थः। किञ्च लौकिकस्यापि भिन्नस्य कपालस्योपधानात् प्राक् प्राकरणिकहोमाधारताऽनुपपन्नेत्याह—**होमस्येति।** कपालोपधानानन्तरहविः श्रपणोत्तरं तेषां

---

1. A and T. आहवनीययोः

**कपालोपधानोत्तरत्वात् 'अन्यदुपदधाति' इत्यस्य वैयर्थ्यापत्तेः** प्रायश्चित्तसमाख्यामुपपत्तेश्च । **अत एवेदं कर्मान्तरं** तच्च नैमित्तिकं **आरादुपकारकं** क्रतुवैगुण्यपरिहारार्थं **क्रत्वङ्गत्वेन विधीयते** । अतस्सर्वभेदनमेकदेशभेदनमुभयमप्यत्र निमित्तम् ॥ ४ ॥

---

कपालानामुद्वासने सति पश्चात्सर्वहोमानुष्ठानात् भिन्ने जुहोतीत्यस्य च हविः श्रपणरूपकार्यनिष्पत्तेः प्रागाम्नानेन तदानीमुत्तरत्र करिष्यमाणप्राकरणिकहोमानां तदधिकरणकानुष्ठानसम्भवादित्यर्थः । ननु लौकिक[1]भिन्नकपालाधिकरणतैव विधीयतां प्रयोगान्तः पातिकपालनाशे परं तस्याप्सु प्रक्षेपपूर्वकमन्यकपालोपधानविधिरर्थवान् भवत्येवेत्याशङ्कानिराकरणायाह— **प्रायश्चित्तसमाख्येति**। प्रायश्चित्ताधिकारे सर्वेषामेषां वाक्यानामाम्नानात् एतद्वाक्यविहितानां प्रायश्चित्तसमाख्यया प्रायश्चित्तरूपत्वमेवेति भिन्नादौ निमित्ते होमरूपं प्रायश्चित्तं कर्मान्तरमेव विधीयते इत्येव युक्तमिति भावः। यदि कदाचिद्धोमेन प्रत्यक्षदृष्टकपालगताकारनाशादिदोषापनयनद्वारा कपालसन्धानमुपलभ्येत तदा संस्कार्यत्व[2]बोधकद्वितीयाद्यभावेऽपि दृष्टार्थत्वानुरोधादेव सन्निपत्त्योपकारकताऽऽश्रीयेतापि, न त्वेतदस्ति । अतः प्रकरणबाधे प्रमाणाभावात साक्षादारादुपकारकमेव सत्क्रत्वङ्गमयं होम इत्याह—**तच्च नैमित्तिकमिति**। किं तर्ह्ययं होमः प्रयाजादिवदेवाङ्गं नेत्याह—**क्रतुवैगुण्यपरिहारार्थमिति**। अस्य प्रायश्चित्तरूपत्वात् सर्वेषां च प्रायश्चित्तानां पुरुषगतोत्पन्नदोषक्रतुगतदोषान्यतरनिबर्हणार्थत्वेन प्रकृते पुरुषगतदोषनिवर्तकत्वाभावेपि प्रकरणपाठादङ्गवैगुण्यप्रयुक्तप्रकरणिगतवैगुण्यदोषनिवर्तकत्वेनैव क्रत्वङ्गतया विधानं तत्सत्वेऽपि दृष्टस्य क्रतुवैगुण्यपरिहारस्यानुपलब्धेरारादुपकारकत्वमेवेत्यर्थः। अत उभयविधभेदनस्यापि निमित्तत्वोपपत्तेरुभयनिमित्तेऽप्येतत्प्रायश्चित्तमिति सिद्धान्तमुपसंहरति—**अतः सर्वेति**—वस्तुतस्तु उपधानात प्राक् यदि कपालानां अन्यतमं भिद्येत तद्गायत्र्या शताक्षरया सन्दधामीति सन्धानकैः द्रव्यैः सन्धायोपरि गार्हपत्ये धारयित्वा तस्योपर्याज्येन मनोज्योतिर्जुषतामित्यृचा हुत्वा ब्रह्मणा भूमिरित्यनेनाभिमन्त्र्याभिन्नो घर्मो जीरदानुरित्यप्सु प्रक्षिपेदन्यदुपध्यात् इत्यादिविधिना **आपस्तम्बानुसारियाज्ञिकानां** प्रयोगान्तः पातिभिन्नकपालाधिकरणकमेव होमानुष्ठानमिति भिन्ने जुहोतीति शाखान्तरत्वेन **मीमांसकैर्लिखिते** वाक्ये सप्तम्या शाब्दमधिकरणत्वमेवोच्यते । अर्थात्तु निमित्तत्वं तस्याप्यशाब्दनिमित्तत्वमिव आपस्तम्बादिवचनान्तरादधिकरणत्वमपीति न प्राकरणिकसर्वहोमाधिकरणत्वस्य न वा भिन्नसंस्कारकत्वस्यापत्तिरिति ध्येयम् ।

---

1. P. लौकिके 2. P. संस्कारार्थत्व

(५)—क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १७ ॥ दर्शनाद्वैकदेशे स्यात् ॥ १८ ॥ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १९ ॥ तद्धविश्शब्दान्नेति चेत् ॥ २० ॥ स्यादन्यायत्वादिज्यागामी हविश्शब्दस्तल्लिङ्गसंयोगात् ॥ २१ ॥

तत्रैव 'यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति यदा तद्धविस्सन्तिष्ठते अथ तदेव हविर्निर्वपेत्' इति श्रुतप्रायश्चित्ते सर्वपुरोडाशदाहरूपं क्षाणमेव निमित्तम्। अग्निपाक्ये हविषि एकदेशक्षाणस्यावर्जनीयत्वात्। न चावर्जनीयक्षाणातिरिक्तैकदेशक्षाणस्यैव निमित्तत्वं, तस्यैव परिच्छेत्तुमशक्यत्वात्। न च 'तद्धविस्संतिष्ठते' इति श्रवणात् अवशिष्टेन हविषा यागप्रतीतेः एकदेशक्षाणस्यैव निमित्तत्वं, प्रयोगसमाप्तावेवैवंजातीयशब्दप्रयोगस्य सर्वत्र दर्शनेन प्रयोगसमाप्तेरेव लक्षणया प्रकृतेऽपि प्रतिपादनीयत्वात्। अतस्सर्वक्षाण एवेदं पुनः प्रयोगरूपं प्रायश्चित्तम्। 'यद्दैवत्यं हविर्व्यापद्येत, अन्यत्तद्दैवत्यं निर्वपेत्' इत्यापस्तम्बवचनात्सर्वदाहे प्रायश्चित्तम्। 'यदि वाऽवदानेभ्यो न प्रभवेत्' इत्यापस्तम्बेन सर्वदाहे अवदानापर्याप्तैकदेशदाहे वा पुनःप्रयोगविधानेन तद्भिन्नैकदेशदाहे प्रायश्चित्तानुपपत्तेः। अत एवैकदेशदाहस्य परिच्छेत्तुं शक्यत्वेऽप्येतन्मूलभूतश्रुत्यैव तत्र प्रायश्चित्तासम्भवः। तादृशैकदेशक्षाणे तु प्राक्तननाशाधिकरणन्यायेनाज्येन दग्धावशिष्टेन वा प्रयोगसमाप्तिमात्रम्। एवं सर्वक्षाणेऽपि प्रयोगसमाप्तिः आज्येन पुरोडाशान्तरोत्पत्त्या वा द्रष्टव्या ॥ ५ ॥

---

॥ क्षामे तु सर्वदाहे ॥

**परिच्छेत्तुमिति।** अवर्जनीयक्षाणातिरिक्तं क्षाणमधिकं कियता भवति कियता वा अवर्जनीयमिति परिच्छेत्तुमशक्यमित्यर्थः। **लक्षणयेति।** तद्धविः पदेन तद्धविष्ककर्मणि लक्षणा, अथवा तद्धविर्यस्येति बहुव्रीहिर्वा आश्रयणीय इति प्रकान्तकर्मसमाप्तिरेवोच्यत इत्यर्थः। **नाशाधिकरणन्यायेनेति।** एतच्चतुर्थपादाद्याधिकरणोक्तन्यायेनेत्यर्थः। तथा च मीमांसकमते एकदेशनाशेन पुरोडाशपरिमाणबाधाद्यस्य सर्वाणीति वचनप्रवृत्तावाज्येन समापनम्। अथवा याज्ञिकमते अवदानपर्याप्ताक्षामभागशेषे सति दग्धावशिष्टादवदाय यागो न तु अन्वाधानादिसमाप्त्यन्तः पुनः प्रयोग इति मात्रचा सूचितम्। **एवं सर्वक्षाणेपीति।** अत्रायं विवेकः। सर्वक्षाणेऽपि यदि अवदानपर्याप्तः शेषो न लभ्यते किं तु ततोऽप्यल्पः शेषोऽदग्धः तदा क्षामे

(६)—यथाश्रुतीति चेत् ॥ २२ ॥ न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३ ॥

दधिपयसोरेकैकस्य नाशे प्रायश्चित्तमुक्त्वा 'यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्याम्नातम्। तत्र च नार्तिमात्रस्य निमित्तता सर्वदैव कस्यचिदार्तिसत्त्वेन नित्यतया निमित्तत्वानुपपत्तेः। अतः 'अर्धमन्तर्वेदि' इतिवल्लक्षणया हविरार्तिर्निमित्तमिति तावदविवादम्। अतश्च तद्वदेवोभयत्वमपि उभयपदवैयर्थ्यापत्तेः

---

शिष्टेनेष्ट्वा पुनर्यजेतेत्याश्वलायनवचनात्तेन शेषेण प्रक्रान्तं कर्म समाप्य पुनरन्वाधानादिसमाप्त्यन्तो यागः कार्यः। यदा तु सर्वस्यापि सर्वथा क्षाणं तदा नष्टस्य पुरोडाशादेः पुनरुत्पत्त्या प्रक्रान्तकर्मसमाप्तिः, न तु प्रयोगः। तथा चाश्वलायनसूत्रं—"अशेषे पुनरावृत्तिः"। अशेषक्षाणे द्रव्यमात्रस्यैवावृत्त्या प्रक्रान्तप्रयोगसमाप्तिरित्यर्थः।

आपस्तम्बानां तु यस्य हविः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति तत्संस्थाप्यान्यद्धविः तद्दैवतं निर्वपेदिति सूत्रान्निरवशेषेण हविर्दाहे सर्वप्रायश्चित्तं हुत्वा तस्य हविषः स्थाने चतुरवत्तमाज्यं प्रतिनिधिं कृत्वा अदग्धैरन्यैः सह तत्कर्म समाप्य पुनरन्वाधानाद्यारभ्य तेष्वेवाग्निषु नष्टं हविरुत्पाद्य पुनर्यागं कृत्वा प्रयोगं समापयेदित्यशेषक्षाणे पुनर्यागः। आज्येनेति तु मीमांसकमतेनोक्तम्। वस्तुतस्तु एतादृशे विषये तत्तद्वाक्यविहितद्रव्याणामेव प्राप्तेः सामान्यविहितमाज्यं नैव प्रवर्तते इत्यभिप्रायेण याज्ञिकमतसङ्ग्रहाय पुरोडाशान्तरोत्पत्त्या वेत्युक्तम्।

---

॥ यथाश्रुतीति चेत् ॥

अत्रार्त्या हविर्विशेष्टव्यमिति यथाश्रुतशास्त्रदीपिकाग्रन्थे आपाततः प्रतीयमानमार्तेर्हविर्विशेषणत्वं समर्थयितुं प्रकाशकारैः सावयवस्य हविषः सर्वदा नाशसत्वेन कादाचित्कत्वाभावाद्यस्य हविरेवार्तमित्यन्ययोगव्यावृत्त्या वा हविषः आर्तिविशेषणत्वासम्भवादार्तमेव हविर्नानार्तमित्ययोगव्यवच्छेदेनार्तिरेव हविर्विशेषणमिति हविष आर्तिविशेषणत्वमयुक्तमित्युक्तं—तद्विषयः सर्वदा नाशसत्वेऽपि यथावस्थिताविनश्यदवस्थहविरपेक्ष्य हविर्नाशस्य कादाचित्कत्वोपपत्तेः इतरथा भवन्मतेऽपि नाशविशिष्टस्य तस्य सर्वदा सत्त्वेन निमित्तत्वानुपपत्तेस्तुल्यत्वादिहार्तिपदस्यायोग्यतामात्रपरत्वेन हविरयोग्यतायाः कादाचित्कत्वोपपत्तेश्चायुक्तमिति सूचयितुं यथाश्रुतवाक्ये प्रतीयमानमार्तौ हविषो विशेषणमभिप्रेत्याह—हविरार्तिरिति। शास्त्रदीपिकायामार्तेति

**लक्षणया** निमित्तकोटिप्रविष्टमिति **उभयहविरार्तिरेव निमित्तम्।** न ह्यत्रैकवचनादिवत् **साधुत्वादिकं प्रयोजनमस्तीति प्राप्ते—**

**ग्रहैकत्वाधिकरणन्यायेनेप्सितोद्देश्यविशेषणस्येव निमित्तरूपोद्देश्यविशेषणस्यापि विवक्षाऽयोगात् विशिष्टलक्षणायाश्चैकवचनाद्यनुरोधेनेव उभयपदानुरोधेन हविरादिपदेषु**

---

पदं सहार्थतृतीयामादायोपपन्नमिति न कोऽपि विरोधः। विशेषनश्यानेन न्यायेन ज्योतिष्मतीष्टि-निमित्तत्वमग्निनाशस्यैव नवमे पूज्यपादैः साधयिष्यते तद्वदेवापूर्वसाधने हविरार्तेस्तदाश्रयणे न विरोधः। ननु ग्रहैकत्वाधिकरणे उद्देश्यविशेषणस्येव निमित्तविशेषणस्याप्यविवक्षा समानन्याया-देव सिद्धेति किमत्र चिन्त्यत इत्यत आह— **निमित्तकोटिप्रविष्टमिति। अयमर्थः** सत्यं वाक्यभेदापत्तिहेतोस्तुल्यत्वादुद्देश्यविशेषणवन्निमित्तविशेषणमप्यविवक्षितमिति पौनरुक्त्यं प्रसज्यते तथाप्यत्र निमित्तस्य सतो विशेषणवन्निमित्तविशेषणविवक्षाविवक्षे न विचार्येते। अपि तु निमित्तविशेषणमेवेह चिन्त्यते—किमुभयार्तिर्निमित्तमुत हविरार्तिमात्रमिति। यथाच ग्रहाधिकरणे उद्दिश्यमानविशेषणाविवक्षायां साधितायामप्युद्देश्यविवक्षाया असाधनादिह निमित्तरूपोद्देश्यस्वरूपविवक्षानिर्णयायाधिकरणारम्भ इत्यपौनरुक्त्यं **कोटिप्रविष्टपदेन** सूचितम्। अतस्सायन्तनहविर्नाशे सति न निमित्तकर्मण्यनारब्धे एव प्रातर्दोहस्य नाशोऽथवा प्रातर्दोहेन सहैव सायङ्कृतहविर्नाश[1] इत्येवंरूपोभयविधोभयहविरार्तिर्निमित्तमिति पूर्वपक्षो युक्त इति। अत्रैव ग्रहैकत्ववैलक्षण्यमुपपादयति—**न ह्यत्रेति। अयं भावः** ग्रहं सम्मार्ष्टीत्यत्र प्रातिपादि-कार्थस्येवैकत्वस्यापि समानाभिधानश्रुत्या कर्मत्व एवान्वयादेकत्वे ग्रहे च प्राधान्यादारुण्या-दिवत्परस्परनियमासिद्धेः प्रत्येकमेवोद्देश्यत्वे वाक्यभेदापत्तेः एकत्वस्य प्रातिपादिकार्थे ग्रहेऽन्वया-सम्भवेन सर्वथैकत्वविशिष्टग्रहस्योद्देश्यत्वायोगादविवक्षितं सदप्येकत्वप्रतिपादकमेकवचनं न केवला प्रकृतिः प्रयोक्तव्या न केवलं प्रत्यय इति न्यायेन केवलप्रकृतेः प्रयोगासम्भवेन साधुत्वार्थ-मुच्चार्यमाणकर्मत्वादिप्रतिपादनेन कथञ्चित्प्रयोजनवत्तां लभेतापि; न त्विहोभयत्वं निमित्ता-ननुपाति सत् प्रयोजनवत्तां लभत इति सर्वथोभयपदवैयर्थ्यापत्त्या लक्षणयोभयार्तिरेव निमित्त-मिति, उभयहविः पदार्थयोरसमस्तपदप्रतिपाद्यत्वेन परस्परान्वयानर्हयोरपि परस्परवैशिष्ट्येन निमित्तत्वं विशिष्टलक्षणया वाच्यं; सा च निमित्ततापर्यवसानपरिहारार्थमाश्रीयते उतोभयपद-वैयर्थ्यपरिहारार्थं वाऽनाद्यः, आर्तिहविषोः परस्परनिरपेक्षयोः सर्वदा सत्वेन निमित्तत्वानुपपत्तेरगत्या तावन्मात्रविशिष्टलक्षणामाश्रित्य निमित्ततापर्यवसाने सत्युभयपदार्थवैशिष्ट्यलक्षणाया गुरुभूताया-

---

1. A. सायं दोहहविर्नाशः

**करणे प्रमाणाभावादुभयपदस्य चोभयमपीत्येवं पूर्वोक्तैकैकनाशप्रायश्चित्तापेक्षयाऽस्य उत्कर्षेण स्तावकतयाऽप्युपपत्तेरुभयत्वस्य निमित्तकोटिप्रविष्टत्वाभावादेकैकहविर्नाशेऽपीदं प्रायश्चित्तम् ॥**

वस्तुतस्तु **उभयार्तिरेवात्र निमित्तम्। न च तस्यापि नित्यत्वान्निमित्तत्वानुपपत्तिः प्रकरणादेव** हविर्विशेष**विषयत्वोपपत्तेः। इतरथा भवन्मतेऽपि दधिपयोविषयत्वानुपपत्तेः।**

---

अनपेक्षिताया आश्रयणे मानाभावात्। द्वितीयं दूषयति—**उभयपदस्येति**। न चोभयपदार्थस्यार्तिसम्बन्धनोभयार्तिनिमित्तप्रतिपादकत्वेनैवोभयपदसार्थक्यमस्त्विति युक्तं, तथात्वे उभयं किमिति आकाङ्क्षोपशमस्य हविः पदार्थेनान्वयं विनाऽनुपपत्तेरगत्या हविः पदार्थेनान्वये पूर्वोक्तदूषणापत्तेः। अतो हविरार्तिपदयोरवश्य विवक्षितार्थत्वे आवश्यके सति व्यवहितस्योभयपदस्यैव कथञ्चिदुक्तार्थपरत्वं युक्तं कल्पयितुमिति भावः। परमार्थतस्तु अन्यतरदोषे व्यासिच्य प्रचरेयुरिति पूर्वसूत्रे **आश्वलायनेन** द्वयोर्दोहयोरन्यतरस्यादोषे अर्थादन्यतरदोषे यथोचितं प्रत्येकं प्रायश्चित्तं विधायोभयोर्दोहयोर्युगपन्नाशेऽपेक्षितं प्रायश्चित्तमुभयोर्दोषे ऐन्द्राग्नं पञ्चशरावमोदनं इत्युत्तरसूत्रेण विहितम्।

**आपस्तम्बेनापि** यस्य सायं दुग्धं हविरार्तिमार्च्छति इन्द्राय व्रीहीन्निरुप्योपवसेत् इत्यादिना प्रत्येकं सायं प्रातर्दोहनाशे प्रायश्चित्तमुक्त्वा यस्योभौ दोहावार्तिमार्च्छेयातां आग्नेयमष्टाकपालं निर्वपेत् ऐन्द्रं पञ्चशरावमोदनं इत्यादिनोभयदोहार्तौ प्रायश्चित्तमाम्नातम्। तैत्तिरीयब्राह्मणे तथेति मीमांसाभाष्यकारेणाप्युल्लिखिते तैत्तिरीयशाखास्थेऽस्मिन् वचनेऽपि तदनुसाराद्युगपदुभयार्तिरेव निमित्तं युक्तेत्याह—**वस्तुतस्त्विति**। अत्र पञ्चशरावे ओदने इन्द्रेन्द्राग्न्योः विकल्पेन देवतात्वेनाम्नानात् आश्वलायनवचनस्य भाष्यकारलिखितवचनस्य च नैकार्थत्वविरोधः तथाचाश्वलायनसूत्रमैन्द्रमेवेत्येके इति भाष्यकारलिखितैतद्वचनमेवैतस्य मूलमिति तद्वृत्ताविति न विरोधः। **हविर्विशेषेति**। एतच्चार्तेरप्युपलक्षणम्। यथा हविः प्रक्रमादुभयहविर्लाभस्तथापि हविर्गतार्तिप्रकरणादुभयहविरार्तेरपि विनैव लक्षणावाक्यभेदादिना निमित्तत्वलाभस्सुलभ एवेत्यभिप्रेत्यैव। **वस्तुतस्तु** उभयार्तिरेव निमित्तमित्युक्तं, न तु वाक्ये यच्छब्दसमभिव्याहारेणोभयार्तेर्निमित्तत्वं शाब्दमित्यर्थे तात्पर्यम्। प्रकरणादिलभ्येऽर्थे शब्दतात्पर्यकल्पने प्रयोजनाभावात्। तथाचोभयमेव निमित्तं वाक्ये प्रतीयते। अत एवाधिकरणान्ते **तन्त्ररत्ने** परमार्थतो वाक्यार्थदर्शनावसरे तस्माद्यस्योभयमित्येतावन्मात्रं वाक्ये विहितं हविरार्तिशब्दौ तु

अतो दोहद्वयनाश एवेदं प्रायश्चित्तम्। हविः पदमेव त्वविवक्षितम्। अधिकरणं तु हविः प्राप्त्यभावं कृत्वाचिन्तया। वस्तुतस्तु पक्षद्वयेपि न हविरार्तिपदे लक्षणा सर्वेषां पदार्थानामाख्यातार्थान्वयोत्तरं पश्चात्परस्परान्वयोपपत्तेः। एवं च विशिष्टस्य निमित्तत्वानादरो निमित्ततावच्छेदकगौरवभिया अन्यतरविवक्षयापि निमित्तश्रुत्युपपत्तेरन्यतरपदस्य चाधानवाक्यगतपुंस्त्वस्येवानुवादत्वेनाप्युपपत्तेश्चेति द्रष्टव्यः॥ ६॥

---

## (७)—होमाभिषवभक्षणं च तद्वत् ॥ २४॥ उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥ २५॥

सोमे 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इत्यत्र हविर्धानाधिकरणकग्रावकरणकाभिषवस्याहवनीयाधिकरणकहोमस्य प्रत्यग्गमनस्य सदोऽधिकरणत्वस्य च प्राप्तत्वाद्धोमाभिषवसमानकर्तृकं भक्षान्तरमेवेदं गुणा-

---

प्रकरणप्राप्तानुवादकावित्युक्तम्। यद्यपि प्रत्येकं तत्तद्दोहनाशे प्रायश्चित्ताकाङ्क्षाया हविर्मात्रे प्रायश्चित्तविधाने नाशान्तरेऽनाकाङ्क्षितविधित्वापत्तेः कदाचित् प्रकरणोपस्थितपरिशेषालोचनेन तद्विधित्वोपपत्तावपि विलम्बोपस्थितिकाकाङ्क्षितविधित्वकल्पनापेक्षया झटित्येव तत्कल्पनौचित्याभिप्रायेणोभयमात्रस्यैव निमित्तत्वमुक्तं तन्त्ररत्नीयं नानुचितमिति द्रष्टव्यम्। **हविः पदमेव त्वविवक्षितमिति**। हविरर्थस्याविवक्षणाद्धविर्भिन्नोभयार्तावप्येतत्प्रायश्चित्तमिति नार्थः। किन्तु हविरर्थस्य प्रकरणप्राप्तत्वाद्धविः पदं निमित्ताननुपातित्वेनाविवक्षितमित्यर्थः। **हविः प्राप्त्यभावमिति**। अस्य वचनस्य केवलं दर्शपूर्णमासप्रकरणे अपाठं[1]कृत्वा चिन्तेयम्। तथाच हविरार्तिसम्बन्धस्य प्रकरणेनालाभात् वाक्येनैव निमित्ततापर्यवसाने वक्तव्ये वाक्यभेदादिपरिहारेण हविरार्तेरेव निमित्तत्वं तस्मिन् पक्षे युक्तमिति भावः। अत्र चान्ते **वस्तुतस्तु पक्षद्वयेपि** इति पक्षद्वयपरिहारयोरपि सङ्ग्रहः। तथैव **धूर्तस्वामिना** व्याख्यातत्वादिति ध्येयम्।

---

॥ **होमाभिषवभक्षणं च तद्वत्** ॥

**प्राप्तत्वादिति**। ग्रावभिः सोममभिषुणोतीति वचनाद्धविर्धानमण्डपाधिकरणकग्रावकरणकाभिषवस्य प्राप्तिः होमस्य तावत् ग्रहैर्जुहोतीति वचनेनाहवनीयाधिकरणकहोमस्य च प्राप्तिः।

---

1. A. पाठम्

द्विधीयते इत्युक्तम्। तत्र च होमाभिषवयोः क्लृप्तप्रयोजनयोरेव कर्तृपलक्षणत्वान्निमित्तत्वमिति तद्विशेषणस्यैकवाक्योपादानलभ्यसाहित्यस्याविवक्षितत्वम्। यदि त्वत्रार्थिकं निमित्तत्वं होमाभिषवकर्तुरेव तूपादेयत्वात्तद्विशेषणं साहित्यं विवक्षितमित्याशङ्क्येत तथाऽपि प्रयाजशेषाभिघारणन्यायेन भक्षस्य तद्गतकर्तृनियमस्य वा कर्तृसंस्कारकत्वात् हविर्विशेषणस्येव तद्विशेषणस्याप्यविवक्षा। अतः अभिषवमात्रकर्त्रा नेष्ट्रन्त्रादिना होममात्रकर्तृभिश्चमसाध्वर्य्वादिभिरपि स भक्षः कर्तव्य इति प्राप्ते—

---

सदोऽधिकरणत्वस्य च होत्रादीनां सदसि कर्मप्रवृत्तेरवश्यं वषट्कारसमाख्यानिमित्तभक्षार्थं सदः सोमा आनेतव्याः। अध्वर्युणा चोपहवो दातव्य इत्येवं प्राप्तिः। तथा आहवनीयाद्धि सदः आगच्छन्तः प्रत्यञ्च एव प्रतिपद्यन्त इति प्रत्यक्त्वस्य प्राप्तिः। अत एव होमात्पूर्वमेवाभिषवादभिषवहोमयोः क्रमस्य तथा होमोत्तरकालमेव भक्षणार्थं प्रत्यगागमनस्य प्राप्तत्वेन तत्क्रमस्याप्यर्थसिद्धत्वमिति नैते पदार्थाः श्रूयमाणा अपि विधीयन्ते प्राप्तत्वादित्यर्थः। इत्युक्तं तृतीये अध्याये पञ्चमपादे होमाभिषवाभ्यां चेत्यधिकरणे इति शेषः। कर्तृपलक्षणत्वादिति। यथैव जञ्जभ्यमानकर्तृकेऽनुवचने कर्तुरुपलक्षणत्वेन अविवक्षैवं होमाभिषवयोश्च निमित्तत्वेपि तयोर्यत्साहित्यं तत्तद्विशेषणत्वादविवक्षितमेव। ननु कथं साहित्यं प्रतीयत इत्यत आह—एकवाक्येति। क्त्वाप्रत्ययेनैकवाक्यताप्रतीतेरेकवाक्योपात्तारुण्यादीनां भावनाविशेषणामामिव होमाभिषवयोस्तल्लभ्यसाहित्यप्रतीतिर्नासुलभेत्यर्थः। यद्यप्यभिषुत्येत्यस्य हुत्वेत्यनेनान्वयात् होमाभिषवकर्त्रोः समानत्वान्यथानुपपत्त्यैकाधिकरणवृत्तित्वरूपं तयोः साहित्यं शास्त्रावगतमेव, तथापि तद्विवक्षायां वाक्यभेदापत्तेर्ग्रहैकत्ववदविवक्षितमेव तत्। अथवा अभिषुत्येत्यस्य हुत्वेत्यस्य च परस्परसाकाङ्क्षत्वेनान्वयायोगात् प्रधानभूतभक्षणक्रियायामेवान्वयाङ्गीकारेण होमाभिषवक्रिययोर्भक्षणक्रियासमानकर्तृकत्वप्रतीतावपि परस्परं होमाभिषवयोः समानकर्तृकत्वाप्रतीतेः न तयोः साहित्यापेक्षेत्याशयः। यदि त्विति। अयमर्थः—नात्र लक्षणार्थकशत्रादिप्रत्ययाभावे होमाभिषवयोः लक्षणत्वप्रतीतिर्येन निमित्तत्वं जृम्भादिवदुच्येत किन्तु कर्तृविशेषणतयोपादानात् भक्षणं प्रति गुणभूतः कर्ता तद्विशेषणं सत् होमाभिषवकर्तृव्यावर्तकत्वेन अर्थान्निमित्ततापर्यवसायि भवति तयोश्च विशेषणयोर्यद्यपि परस्परानपेक्षयोरेव भक्षणभावनायामन्वयान्न परस्परं समानकर्तृकत्वनियमो येन समानकर्तृकत्वानुरोधलभ्यं साहित्यं सम्पद्येत तथापि एकस्मिन् विशेष्ये अनेकविशेषणानामन्वयस्थले दण्डी कुण्डली वासस्वी देवदत्त इत्यादौ सर्वविशेषणानां युगपदन्वयात्तावद्विशेषणसत्ताश्रयत्वमेककालावच्छेदेन प्रतीयत एवेति विशेषणताबलादेव प्रतीयते साहित्यमु[illegible]विवक्षितमापद्येतेति। तद्विशेषणं साहित्यमिति। तस्य

**नियमं प्रति कर्तुस्संस्कार्यत्ववादिनः** पार्थसारथेर्मते **तदायत्तावप्यार्थिकेन विधिना भक्षं प्रति संस्कार्यत्वे उच्यमाने श्रूयमाणे विधौ कर्तृणामुपादेयत्वाद्विशेषणविवक्षोपपत्तौ आर्थिकेन विधिना विशेषणविशिष्टस्यैव कर्तुरुद्देश्यत्वाङ्गीकारेण साहित्याविवक्षाऽनापत्तिः। अतोऽत्र मिलितयोरेव होमाभिषवयोरार्थिकं निमित्तत्वम्। यदि तु क्त्वाप्रत्ययस्य द्वितीयक्त्वाप्रत्ययान्तपदोपात्तक्रियायामप्यन्वयो नाव्युत्पन्न इत्यभिषव-समानकर्तृकत्वं होम एव विशेषणं विशिष्टहोमसमानकर्तृकत्वस्य च भक्षणभावनाया-मन्वय इत्युच्यते तदा सुतरां विशेषणविवक्षा।** इतरथाऽभिषवस्याप्य-**विवक्षापत्तेः ॥ ७ ॥**

---

कर्तुर्विशेषणं होमाभिषवयोस्साहित्यमित्यर्थः। इतरथा कर्तुरेकत्वेन तद्विशेषणत्वेन साहित्यासम्भवापत्तेः। **पार्थसारथिमते इति**। **अयं भावः**—पार्थसारथिमते हि प्रयाजशेषविधौ श्रूयमाणे लक्षणया हविषामधिकरणत्वेन विधानादुपादेयगतत्वेन हविर्बहुत्वविवक्षायां प्राप्तायामपि हविराधारता-नियमेन हवींषि संस्कुर्यादिति कल्प्ये विधौ हविषामुद्देश्यत्वात्तद्विशेषणबहुत्वं विवक्षितमिति साधितं तद्विदिहापि श्रूयमाणेन विधिना द्रव्यसंस्कारार्थत्वेन विहिते भक्षे कर्तॄणामुपादेयत्वेन तद्विशेषणसाहित्यविवक्षायां प्राप्तायामपि कल्प्माने कर्तृनियमेन कर्तॄन् संस्कुर्यादिति विधौ कर्तॄणामुद्देश्यत्वात् तद्विशेषणसाहित्याविवक्षा सर्वथा दुर्निवारैव।

**मम तु** मते प्रयाजशेषवाक्ये श्रूयमाणे हविषामुद्देश्यत्वादविवक्षितसङ्ख्यानामेव हविषा-मुपस्थितानामेव हविरभिघारणेन प्रयाजशेषं संस्कुर्यादिति कल्प्ये विधावुपादेयत्वकल्पनात् गुणत्वेऽपि न हविर्गतसङ्ख्यायाः विवक्षाप्रसक्तिस्तथेहापि तुल्यन्यायात् द्रव्यसंस्कारार्थत्वेन श्रूयमाणे विधौ कर्तॄणामुपादेयत्वेन विवक्षितसङ्ख्यानामेवोपस्थितानां कर्तृसंस्कारार्थत्वेन कल्प्ये विधावप्युद्देश्यत्वकल्पनान्न कर्तृगतविशेषणाविवक्षाप्रसक्तिरिति वैलक्षण्यम्। **एतावांस्तु विशेषः** प्रयाजशेषस्थले श्रूयमाणे विधौ हविषामुद्देश्त्वं कल्प्ये तूपादेयत्वमिति। एतावता श्रूयमाणे विधौ यस्य यादृशं रूपं निर्णीतं तस्य तादृशस्यैवोपस्थितत्वात् कल्प्ये उद्देश्यत्वकल्पनमित्येवं न्यायशरीरमुभयत्र समानमेवेति। **इतरथेति**। यदि प्रयाजशेषन्यायेन कर्तॄणां संस्कार्यत्वात् तद्विशेषणीभूतहोमाभिषवसाहित्यमविवक्षितमुद्देश्यविशेषणत्वात्तर्हि तद्विशेषणयोर्होमाभिषवयोरप्य-विवक्षापत्तिस्तथा भक्षणकर्तृविशेषणस्य होमाभिषवकर्तृसमानत्वस्याप्यविवक्षापत्तिश्चेत्यर्थः। अतो मिलितं यद्धोमाभिषवकर्तृत्वं तदाश्रयस्यैव भक्षणे कर्तृत्वेनान्वयात् नैककर्तुर्भक्षणमिति सिद्धम्।

(८)—पुनराधेयमोदनवत् ॥ २६ ॥ द्रव्योत्पत्तेर्वोभयोस्स्यात् ॥ २७ ॥

'यस्योभावग्नी अनुगतौ आदित्योऽभ्युदियादस्तमियाद्वा पुनराधेयमेव तस्य प्रायश्चित्तिः' इति श्रुतप्रायश्चित्तं किमेकैकाग्न्यनुगमेऽपि भवेत्? उत सर्वाग्न्यनुगतावेवेति चिन्तायां—उभयत्वस्य निमित्तविशेषणत्वेन त्वन्मतेऽप्यविवक्षितत्वादेकैकाग्न्यनुगमेऽपीदं प्रायश्चित्तम्। न च हविरुभयत्ववदेकैकाग्न्यनुगमे व्रातपत्यादिप्रायश्चित्तान्तराम्नानादस्योभयविषयत्वम्। तस्यादित्योदयाद्यभावविषयत्वात्। न चैवमपि प्रकरणादेवकारश्रवणात्पुनःपदयोगाच्च कर्मान्तरत्वानुपपत्तेराधानस्य चोत्पत्तिवाक्ये सर्वाग्निजनकत्वस्यैव क्लृप्तत्वेन विधेयसामर्थ्यानुरोधेनोद्देश्यनिर्णय इति वाच्यं, उत्पत्तिवाक्येऽप्यग्नीनामुद्देश्यत्वेनाविवक्षितविशेषणत्वात्। अत एव योगसिद्ध्यधिकरणन्यायेनाधानस्य प्रत्यग्नि भिन्न एव प्रयोग इति प्राप्ते—

---

॥ पुनराधेयमोदनवत् ॥

पुनराधेयमेवेति। अग्नीनां सम्भारेषु विधानेन स्थापनमग्न्याधेयम्। पुनः कल्पसूत्राद्युपदिष्टविधानान्तरेण स्थापनं पुनराधेयपदस्यार्थः। अत्र प्राचीनैः किमन्यतराग्न्यनुगमनेऽपि प्रायश्चित्तमिदमुतोभयाग्न्यनुगमने इति संशयः प्रदर्शितः तत्र त्रितयाग्न्यनुगमनेप्येतत्प्रायश्चित्तप्राप्तेः स्वयं वक्ष्यमाणत्वात्तत्सङ्ग्रहो न भवेत् अतः तत्सङ्ग्रहाय साधारण्येन संशये सिद्धान्तकोटिं दर्शयति--सर्वाग्न्यनुगतावेवेति। त्वन्मतेऽपीति। सिद्धान्ते हि नोभयपदार्थविवक्षयोभयाग्न्यनुगमने एव प्रायश्चित्तं साधयिष्यते तदविवक्षाया हविरुभयत्वाविवक्षाधिकरणेनैव सिद्धत्वात्। अपि तु विधेयसामर्थ्यादेवेत्यभिप्रायेण त्वन्मतेपीत्युक्तम्। हविरार्त्यधिकरणे यद्वस्तुतस्तु उभयार्तिरेवात्र निमित्तमित्युक्तं तदभिप्रायेणाशङ्कते—नन्विति। उद्देश्यनिर्णय इति। निमित्तरूपोद्देश्यनिर्णय इत्यर्थः। तामिमां प्राचीनोक्तां सिद्धान्तयुक्तिं पूर्वपक्षे दूषयति— उत्पत्तिवाक्येऽपीति। विधेयसामर्थ्यानुसारेणेति। तथाचान्ययतराग्न्नुगमनेप्येतत्प्रायश्चित्ते सति तेन स्वसामर्थ्यात सर्वाग्न्युत्पत्त्यापत्तेः अधुनोत्पन्नस्य पूर्वस्य वऽन्यतरस्य वाग्नेर्यावज्जीवं निष्प्रयोजनं धारणापत्तिरतो नान्यतराग्न्यनुगमनेप्येतत्प्रायश्चित्तमित्यर्थः। ननु तर्हि हविरार्तिमात्रस्य निमित्तत्वेप्युभयमपीत्येवं पूर्वोक्तैकैकनाशप्रायश्चित्तापेक्षयोत्कर्षप्रदर्शनेनोभयपदस्य स्तावकतयाप्युपपत्तिसम्भवेपीह सर्वानुगतौ प्रायश्चित्तविधाने सत्युभयपदस्य निमित्तगतस्य कथमुपपत्तिरित्यत आह—अत एवेति। तथाच कारिका।

"योनिश्च दक्षिणाग्निश्च गार्हपत्यस्तथैव च।

'आयतनेषु सम्भारान् निवपति' इत्यत्रायतनबहुत्वस्य विवक्षितत्वादाधानस्यैकेनैव प्रयोगेण सर्वाग्न्युत्पादकत्वावगतेः विधयसामर्थ्यानुरोधेन सर्वानुगम एवेदं प्रायश्चित्तम्। अत एव दक्षिणाग्नेर्भिन्नयोनित्वपक्षाभिप्रायेणात्रोभाविति श्रवणम्। समानयोनित्वे तु त्रितयाग्निनाशे बोध्यम्॥ ८॥

---

(९)—पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिस्स्यात्॥ २८॥ चोदना वा द्रव्यदेवताविधिरवाच्ये हि॥ २९॥

'ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र हविर्नाशे आज्यादिना समापने प्रसक्ते प्रतिनिधित्वेन लाघवात्सन्नाय्यानुवादेन पञ्चशरावपरिमितौदनमात्रविधानम्। न च वाक्यभेदः पञ्चशरावौदनपदयोस्समानाधिकरणत्वेन 'अग्नये दात्रे' इतिवद्विशिष्टविधानो-

---

यत्रेधाग्निविधानाच्च लौकिको वा यथाविधि॥ इति। व्याख्याता चेयं याज्ञिकग्रन्थेषु "यत्रेधाग्निराधीयत" इति प्रकरणवाक्यादेकयोनय इत्याश्वलायनमताच्च गार्हपत्यादेवाहृत्य दक्षिणाग्न्यन्वाधानम्। यद्वा लौकिकाग्निमाधाय मथित्वा वा अध्वर्युरासीनो दक्षिणमग्निमादधातीति। एवं च दक्षिणाग्नेर्लौकिकाग्नियोनित्वपक्षेऽग्निद्वयस्यैवाधानजन्यत्वात्पुनराधानरूपं प्रायश्चित्तं विधीयमानमुभयाग्निसमनुगमन एव भवतीत्यभिप्रायेण उभयशब्दग्रहणम्। एकयोनित्वपक्षे तूभयशब्दस्तृतीयान्तर्गतत्वेन प्राप्तोभयानुवादक एवेति भावः।

---

॥ पञ्चशरावस्तु॥

अग्नये दात्रे इति वदिति। एतेन यच्छास्त्रदीपिकायां—ननु पञ्चशरावपरिमाणमोदनद्रव्यं इन्द्रश्च देवतेति बहवोऽर्थाः प्राप्ते कर्मणि कथं विधीयेरन्नित्याशङ्कायां पञ्चशरावमेव विधास्यामस्तेन बहुव्रीहिणा अन्यपदार्थ ओदन एव परिमाणविशिष्टो विधीयते इति समाहितं तदभ्युदितेष्ट्यधिकरणविरुद्धम्। अभ्युदितेष्ट्यधिकरणे अग्नये दात्रे इति समानाधिकरणपदार्थानां परस्परान्वयाङ्गीकारेण विशिष्टविधानाद्वाक्यभेदपरिहारवदिहापि पञ्चशरावोदनपदार्थयोस्समानाधिकरणयोः परस्परान्वयेन तत्परिहारोपपत्तेर्बहुव्रीहिसमासान्तेन तत्परिहारप्रयासवैयर्थ्यापत्तेः। यदि समास एव समानाधिकरणनामप्रतिपाद्यार्थानां परस्परान्वयो नान्यत्रेत्यभिप्रायेण

**पपत्तेः,** ओदनपदस्य **तात्पर्यग्राहकत्वेन पञ्चशरावमिति** बहुव्रीहिणैवौ**दनस्योक्तत्वाच्च ऐन्द्रमिति**

---

समासपर्यन्तानुधावनं तदाऽभ्युदितेष्ट्यधिकरणे परस्परान्वयव्युत्पादनमेतद्विरुद्धमेवेति सूचितम् । **वस्तुतस्तु** समासं विना नैव नामार्थयोः परस्परान्वयः इत्येव एककार्यकारणभावलाघवाद्युक्त-मित्यभिप्रेत्य बहुव्रीहिसमासत्वेनैव वाक्यभेदपरिहारो युक्त इत्याह—**ओदनपदस्येति**। अत एव हविरार्त्यधिकरणेऽपि शास्त्रदीपिकायामुक्तं सिद्धान्ते—यथैव हि हविःशब्दः आर्च्छेदित्य-नेनाख्यातेन सम्बन्धात्तत्र यस्य हविरार्तं यस्योभयमार्तमिति द्वयं निमित्तीकृत्य पञ्चशरावे विधीयमाने वाक्यभेद इति ।

**बहुव्रीहिणैवेति**। **यत्त्वत्र** याज्ञिकरुद्रदत्तेन तदस्य परिमाणमित्यर्थे लुप्ततद्धितः इत्युक्तं तत् प्रास्थिको राशिरित्यादौ ठगः प्राप्तावपि इह शरावशब्दस्य परिमाणद्रव्यसाधनपरस्य परिमाणवाचित्वाभावेन तद्धिताप्राप्तेः । प्राप्तावपि वा अर्हीयाणां तद्धितप्रत्ययानां ठगधिकारेण प्राप्तस्य ठगः प्राग्दीव्यतीयत्वाभावेन प्राग्दीव्यतीयप्रत्ययप्रयुक्तत्वेन द्विगोर्लुगनपत्ये इति सूत्रविहितस्य लुगोऽप्राप्त्या पाञ्चशराविक इति प्रयोगापत्तेरयुक्तमित्येवकारेण सूचितम् । **यद्यपि** पञ्च शरावा अस्येत्यर्थकबहुव्रीहिणा परिमाणवैशिष्ट्यबोधो न सम्भवति **तथापि** पञ्चशरावपदस्य पञ्च शरावसम्बन्धिन्यन्यपदार्थे शक्तेर्लक्षणाया वा आश्रयणे सम्बन्धस्य परिच्छेद्यपरिच्छेदकभाव-विशेषस्यैव स्वीकारादर्थात्तत्साधनपरिमाणबोधसम्भवान्नानुपपत्तिः ।

**अथ वा** बहुव्रीहिपदं बहुव्रीह्यर्थकपरं, तथाच पञ्चशरावशब्दात् द्विगुसमासान्तात् पञ्च शरावाः प्रमाणमस्येति विग्रहेण 'प्रमाणे द्वयसज्दघ्नञ्मात्रच' इत्यनेन प्रमाणार्थे मात्रच्-प्रत्ययं कृत्वा तस्य प्रमाणे लः द्विगोर्नित्यं इत्येकसूत्राद्विगोर्नित्यमित्यनेन द्विशतमित्यादिवत् लुकि कृते पञ्चशरावशब्दो व्युत्पादनीयः । न च

"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वशः[1] ।
आयामस्तु प्रमाणं स्यात् सङ्ख्या बाह्या तु सर्वदा ॥

इति कोशादायामे एव प्रमाणत्वाभिधानात् न तादृशार्थस्य प्रमाणस्यात्र सम्भव इति वाच्यम् । तत्सूत्रे द्वयसज्दघ्नचोः प्रत्यययोर्नियमेनायामरूपप्रमाणाभिधायकत्वेपि मात्रचः

---

1. P. परिमाणस्य सर्वशः

तादृशप्रमाणवाचकस्यापि प्रस्थमात्रमित्यादिमात्रच्प्रयोगानुरोधेन परिच्छेदकतारूपप्रमाणाभिधायकत्वस्यापि वैयाकरणैरुपपादितत्वेन परिच्छेदकत्वमात्राङ्गीकारेऽपि मात्रच्प्रत्ययोपपत्तेर्बाधकाभावात् ।

**यद्यपि** व्युत्पत्तिद्वयेप्योदनपदसामानाधिकरण्यात् सिद्धौदनस्यैव पञ्चशरावपरिमितत्वं प्रतीयते **तथापि** निर्वपत्यनुवादबलात् सिद्धोदनस्य निर्वापानुपपत्तेर्जघन्ये ओदनपदे स्वसाधनलक्षणामथवा पञ्चशरावपदे वा स्वप्रकृतिकलक्षणया विशेषणप्राधान्यं, अन्यथा कार्यकारणयोरभेदोपचारेण सामानाधिकरण्यमाश्रित्यौदनप्रकृतिभूतव्रीहिष्वेव पञ्चशरावपरिमाणं ज्ञेयम् । यत्तु **प्रायश्चित्तप्रदीपादौ** पञ्चशरावपदं पञ्चपुरुषभोजनपर्याप्तार्थकत्वेन व्याख्यातं तत् किंमूलमिति विवेचनीयम् ।

**अत्रेदमवधेयम्** । याज्ञिकास्त्वत्र मुष्टिबाधेन शरावेण निर्वापं कुर्वन्ति तत्र पञ्चशरावशब्द एव मूलम् । अत एवैकेनैव शरावेण चतुरावृत्त्या मिलितं धान्यं कृत्वा पुनरेकेन शरावेण मितं धान्यं पृथक् पात्रैः तस्य चतुर्विभागं कृत्वा एकैकभागमिलितैकशरावपरिमितधान्यस्यैकदा तावत्परिमाणसमर्थेन शरावेण निर्वापे कृते तेनैव क्रमेण पुनर्निर्वापत्रयं कार्यमिति शरावेण मुष्टिबाधेऽपि न तद्गतचतुस्सङ्ख्याबाधः । अत एवैतदविरोधेनैव पञ्चशरावत्वोपपादनेनानुष्ठानं **कातीयानाम्** । तथाच तन्निबन्धेषु—

वृत्तं प्रादेशमात्रं तु शरावं निगमोदितम् ।
तत्सपादप्रमाणेन पात्रेण ग्रहणं भवेत् ॥

इति कारिकामुदाहृत्य सपादशरावपात्रमात्रेण चतुर्वारं ग्रहणमित्युक्तम् । **श्रीअनन्तभाष्येऽपि** पञ्चशरावं प्रकृत्यात्र मुष्टिगतचतुः सङ्ख्यायोगो न त्याज्यः शब्दावगतपञ्चत्वसङ्ख्ययेत्युक्तम् ।

**आपस्तम्बादयस्तु** याज्ञिकाः शरावेण पात्रेण निर्वापमिच्छन्तः त्रिर्यजुषा द्विस्तूष्णीमित्येवमनुष्ठानेन चतुस्सङ्ख्याया मुष्टीनां च बाधं कुर्वन्ति । उभयथापि शरावपात्रेण निर्वापो निर्विवादः । तत्र बहुव्रीहिसमासस्य मात्रचो वा आश्रयणे पञ्चशरावपरिमितधान्यस्य चतुर्मुष्टिकरणकनिर्वापासम्भवाच्छरावस्य मुष्टिप्रत्याम्नायेन निर्वापकरणत्वं कथमिवोपपादनीयम् । अतो याज्ञिकानुष्ठानसंवादार्थः पञ्चशरावशब्दस्य तदैवोपपद्यते यदा पञ्चशरावशब्दोऽत्र पूर्वं व्युत्पादित एव सन् क्रियाविशेषणपरतया स्वीकार्यस्तत्र शरावशब्दो मृन्मयपात्रविशेषपरत्वेन

**साम्नाय्यस्येन्द्रदेवताकत्वस्यापि सत्त्वात् 'तावब्रूतां' इतिवत्पाक्षिकानुवादः॥**

अथ वा **तत्तदुत्पत्तिवाक्ये इन्द्रमहेन्द्रभेदेन साम्नाय्यस्य भेदादैन्द्रयागानुवादेनैव प्रतिनिधिविधानमिति प्राप्ते—**

**सुबन्तपदद्वयस्य परस्परान्वयाव्युत्पत्तेः बहुव्रीहिणा सामान्यतो द्रव्योपादानेऽपि ओदनत्वादिरूपेणोपादाने प्रमाणाभावात् तात्पर्यग्राहकत्वमङ्गीकृत्य एकत्रैव पदे विशिष्टलक्षणाङ्गीकारे च** क्वापि **प्राप्तकर्मानुवादेनानेकविधाने वाक्यभेदानापत्तेर्वाक्यभेदापादक-**

---

यथा प्रसिद्धः तथा मागधीयपरिमाणविशेषपरत्वेनापीत्यन्यतरग्रहणमेव प्रसिद्धं भवति। तत्राप्येकतरपक्षे पात्रनियमोपपत्तावपि परिमाणविशेषग्रहणे पञ्चशरावपरिमाणपरिच्छेद्यत्वस्य निर्वापक्रियायां मुष्टिभिः क्रियमाणायामसम्भवात् अर्थात्तद्ग्रहणसमर्थपात्रेणैवेति सिद्धे मृन्मयपात्रेऽपि शरावपदस्य शरावपरिमाणसाधनयोगेनैव प्रवृत्तेर्लाघवेन स्वीकारात्। प्रकृते शरावपरिमाणेनैकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणविधयोपस्थितमृन्मयशरावपात्रग्रहणनियमोपपत्तेः तेनैव निर्वापः सम्पद्यत इति मुष्टिबाधो नासुलभः। मीमांसकमते तु मुष्टिभिरपि तत्सम्भवान्न मुष्टिबाध इत्याद्यस्तु प्रासङ्गिकम्। **तावबूतामितिवदिति।** उपांशुयाजस्य विष्णुप्रजापत्यग्नीषोमीयदेवताकस्यापि तावबूतामिति पौर्णमासीकालविधायके वाक्ये अग्नीषोमदेवताकत्वेनानुवादस्तद्वदेवोभयदेवताकसान्नाय्यस्यापीन्द्रदेवताकत्वेनानुवादः सम्भवतीति। यदोभयं हविरार्तिमाच्छेत् तदेन्द्रदेवताकनिर्वापोद्देशेन पञ्चशरावौदनविधानात् प्रतिनिधिरेवायमर्थः। यत्तु **सिद्धान्ते** प्राचीनैरिन्द्रपदस्य पाक्षिकानुवादत्वापत्तेरेव हेतोरवश्यं तद्विधाने वाक्यभेदापत्तेः तद्देवत्यं कर्मान्तरमेवैतद्विधीयत इत्युक्तं तत्पूर्वपक्षे प्रकारान्तरेण दूषयति—**अथवेति। क्वापीति।** यदि वाक्यभेदापत्तिभियैकस्य तात्पर्यग्राहकत्वेन विशिष्टलक्षणाश्रयणं तदा उभयपदस्यापि विशेष्यसाकाङ्क्षत्वात् हविः पदस्य तात्पर्यग्राहकत्वमाश्रित्योभयहविर्लक्षणया विशिष्टस्य निमित्तत्वोपपत्तेः तत्रापि न वाक्यभेदापत्तिः स्यात्। अतो यावता विना यत्र वाक्यार्थानुपपत्तिः तत्रागत्या विशिष्टलक्षणयापि तदुपपादनं यथा हविरार्तेर्निमित्तत्वे। यत्र तु ग्रहं संमार्ष्टीत्यत्र ग्रहमात्रस्यैवोद्देश्यतया तत्पर्यवसानं[1] तत्र नैकत्वविशिष्टलक्षणया विशिष्टोद्देश्यत्वमिति प्रत्येकमेवोद्देश्यत्वे स्फुट एव वाक्यभेदः। प्रकृते च कर्मान्तरविधानेनापि वाक्यार्थोपपत्तौ न विशिष्टलक्षणायां प्रमाणं गौरवात् इति भावः। न चानपेक्षितविधानापेक्षया प्राकृतसान्नाय्यसमाप्त्यनुरोधेन

---

1. A. उद्देश्यतात्पर्य

**गुणादेव कर्मान्तरमिदं प्रायश्चित्तत्वेन विधीयते।** समाप्तिस्त्वाज्यादिनैव। **'अग्नये दात्रे' इत्यत्रापि तु न देवतामात्रविधि**पक्षाश्रयणं **वाक्यभेदप्रसङ्गात् अपि तु भावनान्तरविधिपक्ष एव। न चैवमत्रापि भावनान्तरत्वापत्तेर्यागान्तरत्वानापत्तिः, उत्पत्त्यन्वयिनो गुणस्य वाजिनवद्यागभेदकत्वावश्यंभावात्। अभ्युदितेष्टौ तु पूर्वदेवतापनयविधानात्** यच्छब्दश्रवणाच्च **विशिष्य पूर्वयागीयत्वप्रतीतेर्भावनामात्रभेद इति विशेषः ॥ ९ ॥**

---

## (१०)—स प्रत्यामनेत् स्थानात् ॥ ३० ॥ अङ्गविधिर्वा निमित्तसंयोगात् ॥

**तदिदं कर्मान्तरं द्रव्यनाशप्रयुक्तवैगुण्यपरिहारार्थत्वेन** सान्नाय्याङ्गतया विधीयते **न तु**

---

तस्मिन्नपेक्षितद्रव्यविधानं युक्तमित्यत आह—**समाप्तिस्त्विति**। सर्वत्र द्रव्यनाशादौ निमित्ते तत्तत्कर्मसमाप्त्यर्थं प्रवृत्तेन यस्य सर्वाणीति विधिनैवाज्यस्य सत्त्वे तेनैव समाप्त्या न तदर्थमपेक्षेति भावः। **एतेनाधिकरणप्रयोजनकथनावसरे** लौकिकदधिपयोभ्यां सान्नाय्ययाग इति सिद्धान्ते प्रयोजनं **प्रकाशकारोक्तमयुक्तमिति** सूचयितुमेवकारप्रयोगः। आदिपदं च न्यायप्राप्तद्रव्यान्तरोत्पत्तिपक्षाभिप्रायेण। एतद्द्रव्यान्तरोत्पत्तितात्पर्यकमेवोत्तराधिकरणगतं दध्यन्तरपयोन्तराभ्यां सान्नाय्ययागनिर्वृत्तिवचनं **पार्थसारथेर्न** तु लौकिकतद्द्रव्योपादानपरमिति द्रष्टव्यम्। **पक्षाश्रयणमिति**। प्राचीनरीत्येति शेषः। **यच्छब्दश्रवणादिति**। ये मध्यमा इत्यादिपूर्वद्रव्यपरामर्शकयच्छब्दश्रवणादित्यर्थः।

---

**॥ सप्रत्यामनेत् स्थानात् ॥**

अत्र प्राचां ग्रन्थेषु सामान्यतोऽमावास्यास्थानापन्नं सत्तत्फलार्थमिति पूर्वपक्षान्तेऽमावास्याङ्गमिति सिद्धान्तितम्। तत्र सामान्यपरामावास्याशब्दप्रयोगस्यायमभिप्रायो भाति। यदा सान्नाय्ययागस्य द्रव्यनाशेन लोपस्तदा सान्नाय्याभावे इतराग्नेयादियागेभ्योऽपि तत्साहित्याभावात् फलानुत्पत्तेर्विगुणसाहित्यस्य च फलानुपयोगात् सर्वमेवामावास्याकर्म निष्फलमिति सर्वामावास्याकर्मणः प्रत्याम्नाय इति पूर्वः पक्षः। हविर्वैगुण्यकृतसान्नाय्यलोपाभावाद्धविर्वैगुण्यजनितदोषपरिहाराय विधीयमानः पञ्चशरावः सर्वामावास्याकर्माङ्गमिति सिद्धान्त इति। तच्च सान्नाय्यहविर्नाशेन सान्नाय्यस्यैव लोपेऽपि सर्वयागानां पार्थक्येनैव फलजनकत्वस्यैकादशे वक्ष्यमाणत्वेन सान्नाय्याभावे फलाजनकत्वे प्रमाणाभावादेकतरयागीयद्रव्यनाशेऽपि इतरयागसमाप्तेस्तत्तत्कल्पसूत्रेषु विधानाच्च न सर्वामावास्याकर्मणोऽभावेन तत्स्थानापत्तिपूर्वपक्षो युक्तः। नतरां तदङ्गत्वसिद्धान्त इत्यभिप्रायेण सान्नाय्याङ्गत्वकोटिमेव सिद्धान्ते दर्शयति—**सान्नाय्याङ्गतया विधीयत इति**। अत्र दध्यन्तरपयोऽन्तराभ्यां सान्नाय्ययागनिष्पत्त्युपपादनपरशास्त्रदीपिका-

**तत्फलार्थं तत्स्थाने। तत्फलस्य पापक्षयादेश्शिष्टविगर्हणनिमित्तकस्य वा सान्नाय्ययागेनैव सिद्धेस्साधनान्तरानपेक्षत्वात्। न हि द्रव्यनाशे यागलोपः,** द्रव्यान्तरोत्पत्त्या **आज्येन वा तत्समापनोपपत्तेः। न च स्वर्गादिरूपस्य फलस्य वैगुण्ये सत्यनुत्पत्तेः तस्य साधनापेक्षायां यागस्य विधानमिति वाच्यं, तथात्वे तत्कामनाभावे तदननुष्ठाने निमित्तश्रुते-**स्सङ्कोचापत्तेः **अतः अपेक्षितवैगुण्यसमाधानार्थत्वेनैवास्य विधानम्।** अपेक्षा **च सान्नाय्ययागस्यैवेति तस्यैव विशिष्योपस्थितत्वात् तद्वाचकपदकल्पनया वाक्यात्तदङ्गत्वमेव। न तु प्रकरणात्सर्वाङ्गत्वम्। अनुष्ठानसादेश्यादर्शमात्राङ्गत्वं वा। अत एव नाशे निमित्ते प्रयोगान्तः पात्येवेदमङ्गं न तु क्षाणनिमित्तकपुनः प्रयोगवत्प्रयोगबहिर्भूतम्॥ १०॥**

---

ग्रन्थगतदध्यन्तरपयोन्तरपदे लौकिकदधिपयोभिप्रायकत्वेन प्रकाशकारैर्व्याख्याते; तदयुक्तमिति सूचयन् तदभिप्रायमर्थतो दर्शयति—**द्रव्यान्तरोत्पत्त्येति**। तदयुक्तत्वं च पूर्वाधिकरणे दर्शितम्। **सङ्कोचापत्तेरिति**। उभयहविरार्तिरूपनिमित्तश्रवणं नित्यकाम्यसाधारण्येन प्रवृत्तं नित्यकाम्यप्रयोगसाधारण्येन पञ्चशरावं प्रयोजयति। तत्र स्वर्गसाधनयागसाधनत्वेन पञ्चशरावविधाने नित्यप्रयोज्यस्वर्गकामनाभावे पञ्चशरावाननुष्ठानादविशेषप्रवृत्तनिमित्तश्रुतेः सङ्कोचापत्तिरित्यर्थः। यत्सान्नाय्याङ्गतया विधीयत इति प्राक्सिद्धान्तस्वरूपं प्रतिज्ञातं तस्योपपत्तिं दर्शयति—**अपेक्षा चेति**। **पुनः प्रयोगवदिति**। अशेषपुरोडाशक्षाणे सति आज्येन सहादग्धैरन्यैर्हविर्भिरितरयागसहितं तं प्रयोगं समाप्य पुनः प्रयोगरूपं विधीयमानं प्रायश्चित्तं स्वसामर्थ्यादेव प्रयोगबहिर्भूतं भवति। इदं तु यदैव निमित्तमुत्पन्नं तदैव वैगुण्यसमाधानार्थमपेक्षितत्वेन प्रयोगान्तः पाति कृत्वा आज्येन यागसमापनमिति विशेषः। यद्यप्यत्र कल्पसूत्रकारैः पुनरिज्यापि विहिता। सा न प्रायश्चित्तत्वेन, अपि तु नैमित्तिक्येवादृष्टार्थम्। प्रायश्चित्तं तु पञ्चशरावयाग एवेति भावः। अनेनैव **पञ्चशरावन्यायेन** भेदनहोमस्य सामान्यतः प्रकरणादुक्तमपि क्रत्वङ्गत्वं यद्यागीयश्रपणार्थस्य कपालस्य यस्मिन् काले गृह्यमाणविशेषस्य सतो भेदस्तदा तन्निमित्तेन विहितस्य होमरूपस्यान्यस्य वा प्रायश्चित्तस्य तद्यागगतवैगुण्यसमाधानार्थत्वेनापेक्षितत्वात् विशिष्योपस्थिततद्यागाङ्गत्वपर्यवसाय्येव द्रष्टव्यम्।

अत एवोपधानात्प्राक् तद्भेदेऽगृह्यमाणविशेषत्वात् यावत्तत्साध्यं हविः तद्धविष्कयागमात्राङ्गत्वमेव। तदत्राधिकरणत्रयेणान्यतरदोहनाशेऽपि पञ्चशरावौदनद्रव्यकमिन्द्रदेवताककर्मान्तरमेतत्प्रायश्चित्तं सान्नाय्याङ्गत्वेन विधीयते। ततश्च पयस्यादिविकृतौ निमित्ते सति करणमिति साधितं मीमांसकमतम्।

**कातीयभिन्नयाज्ञिकास्तु** सान्नाय्यहविर्नाशप्रायश्चित्तप्रकरणमात्रे यस्य हविषे वत्सा अपाकृता धयेयुः तत्स्थाने वायव्यां यवागूं निर्वपेदित्यादिबोधायनापस्तम्बाश्वलायनादिवचनैर्यवागूप्रभृतिपञ्चशरावान्तानां द्रव्याणां सान्नाय्यहविः स्थाने विधानात् तैस्तैरेव द्रव्यैः तत्तद्देवत्ययागाः सान्नाय्ययागस्थाने, न तु सान्नाय्ययागस्याज्येनानुष्ठानम्। तथाच यद्यपि व्रीह्यादिधर्माः सान्नाय्ये न भवन्ति द्वाराभावात् तथापि सान्नाय्यस्थाने नैमित्तिकत्वेन विहितेषु यवागूपुरोडाशपञ्चशरावौदनादिषु द्रव्येष्वौषधिद्रव्यकत्वेन द्वारलाभाद्धविरुत्पत्तिपर्यन्तं न सान्नाय्यधर्माः अर्थलोपात् किन्त्वौषधधर्माः अनन्तरं च सान्नाय्यस्थानापत्त्या सान्नाय्यहविर्धर्माः कर्तव्या इति वदन्ति।

**वस्तुतस्तु** सान्नाय्यहविषः स्थाने तेषां तेषां द्रव्याणां विध्यङ्गीकारेण प्रधानानुष्ठाने कृतस्य कर्मणः पुनरनुष्ठानायोगात् पुनरिज्याविधानस्य वैयर्थ्यापत्तेर्न तत्स्थानापन्नत्वं तेषाम्। अपितु प्रायश्चित्तरूपत्वमेव। अत एव तादृशस्थले प्रारम्भे निमित्ते समापनस्यावश्यकत्वादाज्येन तत्समापनं पापक्षयार्थमात्रम्। न तु एतावतापि प्रक्रान्तदोहद्रव्यककर्मणः प्रारब्धस्य समाप्तिरित्येतदर्थं पुनरिज्याविधानं सार्थकम्। **यत्तु** यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेदित्याद्यापस्तम्बादिवचनेषु तत्स्थाने इति पदं तैत्तिरीयब्राह्मणे वायव्यां यवागूं निर्वपेदित्येव पाठात् तत्स्थाने रामाण्डारदर्शितरीत्या तत्तत्काले इत्यर्थेन सायंदोहार्थद्रव्यपाने सायं काले निर्वापः। प्रातर्दोहार्थद्रव्यपाने प्रातः काले निर्वाप इत्येतत्परतया व्याख्येयम्।

**परमार्थतस्तु** उभयोर्तैरेव निमित्तत्ववत् सान्नाय्यद्रव्यस्थाने पुरोडाशपञ्चशरावादिविधानमापस्तम्बाद्युक्तं युक्तम्। तथाच बह्वृचब्राह्मणं "तदाहुर्यस्य सायं दुग्धं सान्नाय्यं दुष्येद्वापहरेद्वा कात्र प्रायश्चित्तिरिति प्रातर्दुग्धे द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेत सा तत्र प्रायश्चित्तिः। तदाहुर्यस्य प्रातर्दुग्धं सान्नाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वेति समापनं सा तत्र प्रायश्चित्तिः" इति। अत एवैन्द्रं वा माहेन्द्रं वेति सान्नाय्यदेवतालिङ्गात्तस्य स्थाने इत्यपि पदं मुख्यवृत्त्या सान्नाय्यस्थानापत्तिबोधकं प्रायश्चित्तत्वेन कर्मान्तरत्वपक्षे।

**मीमांसकमते** त्वौषधधर्मा एव न सान्नाय्यहविर्धर्माः। **यद्यपि** बह्वृचब्राह्मणे ऐन्द्रं वा माहेन्द्रं वेति समानमित्युक्तेः सर्वसान्नाय्यहविरार्तौ पुरोडाशो विहितो न तु पञ्चशराव-

(११)—विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ ३२ ॥ निष्क्रय-वादाच्च ॥ ३३ ॥

सत्रप्रकरणे 'यस्सत्रायागुरते स विश्वजिता यजेत' इति श्रुतो विश्वजित्। सत्रसङ्कल्परूपमागूरणं कृत्वा यस्सत्रं न करोति तस्येदं सत्रफलार्थत्वेन विधानं न तु सत्राङ्गतया। तथात्वे आगूरणस्य निमित्तत्वश्रवणवैयर्थ्यात्। न चैवं सत्राकरणस्यापि निमित्तान्तः प्रवेशाद्गौरवापत्तिः। अतस्सङ्कल्पमात्रे निमित्ते नैमित्तिकमिदं फलान्तरार्थं विधीयत इति वाच्यं, फलान्तरकल्पनापेक्षया सत्रफलस्यैव साधनसाकाङ्क्षस्य फलत्वकल्पने

---

स्तथापि आश्वलायनसूत्रकारादिभिः पञ्चशरावस्यापि विधानात्पुरोडाशस्थानकत्वेन पुरोडाशगत-सान्नाय्यस्थानकत्वधर्मलाभो नायुक्तः। यत्तु पुनरिज्याविधानं न तत् प्रारब्धस्य समाप्त्यर्थमिति हेतोः किन्त्वदृष्टार्थमेव। अत एव क्वचित्प्रयोगे पुनरिज्या सूत्रकारैर्नोक्तेति दिक्।

---

॥ विश्वजित्त्वप्रवृत्ते ॥

अत्र विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् इत्यत्रत्यसूत्रे तुशब्देन पूर्वोक्तपञ्चशराव-वैलक्षण्यद्योतकेन सिद्धान्तमात्रस्यैव निरूपणान्नात्र प्राचामिव पूर्वपक्षप्रदर्शनमपि कर्तव्यमित्यभि-प्रायेण सिद्धान्तमेव दर्शयति—**सत्रफलार्थत्वेन विधानमिति**। पञ्चशरावे यत्सान्नाय्याङ्गत्वं साधितं तद्वैलक्षण्यं तुशब्दसूचितं दर्शयति—**न तु सत्राङ्गतयेति**। **तथात्वे इति**। अन्याङ्गानामपि अगूरणोत्तरमेवानुष्ठानादस्यापि तदुत्तरमनुष्ठानोपपत्तेरङ्गस्य नित्यमनुष्ठेयत्वेन नैमित्तिकत्वानुपपत्तेर्निमित्तत्वश्रवणानुपपत्तिरित्यर्थः। अत एव **तन्त्ररत्नादौ** आगूर्येति क्त्वाप्रत्ययान्तपाठलिखनात्तस्य क्रमविधायकत्वेनागूरणाव्यवधानेन विश्वजिदङ्गस्याविधानमित्य-**पास्तम्**, यः सत्रायागुरत इति यच्छब्दोपात्तनिमित्तत्वानुपपत्तेः। **सत्रफलस्येति**। **यद्यपि** यः सत्रायागुरते इत्यविशेषश्रवणात् सत्रे प्रवृत्तेऽप्रवृत्ते वापि विश्वजित् प्राप्नोति **तथापि** प्रवृत्तेऽङ्गत्वेन विधानमप्रवृत्ते तत्फलार्थं स्वतन्त्रफलार्थं वा विधानमिति वैरूप्यापत्तेः प्रवृत्त-पक्षमात्राश्रयणेऽङ्गत्वापत्त्या निमित्तश्रुतिवैयर्थ्यापत्तेरुक्तत्वादप्रवृत्तपक्ष एव तत्सङ्कल्पे निमित्ते स्वतन्त्र-फलार्थत्वं कल्पनीयम्। तदपेक्षया सत्रफलस्य साधनाकाङ्क्षस्य फलत्वं प्रकल्प्य तदर्थत्वमेव युक्तमाश्रयितुम्। सत्रफलं च साधनाकाङ्क्षं कदा यदा तत्फलकामनया तत्सङ्कल्पं कृत्वाऽशक्त्यादिनाऽकरणं भवतीत्यर्थाल्लाघवात्तर्केण सत्राकरणस्यापि निमित्तकोटौ निवेशः सम्पद्यते न तु शब्दवृत्त्येत्यर्थः।

लाघवात्। तच्च फलं **यद्यपि न मुख्यमेव स्वर्गादि फलत्वेन कल्पयितुं शक्यं,** तथात्वे **वीतायां फलेच्छायां सङ्कल्परूपस्य निमित्तस्य सत्त्वेन नैमित्तिकाननुष्ठाने निमित्तसङ्को-**

---

**अत्र तन्त्ररत्नकृता यः** सत्रेण फलं करिष्ये इति सत्रं सङ्कल्पयति तस्य सत्रकर्तव्यताशक्तौ यत्फलमभिप्रेतं तन्मनसि विपरिवर्तमाने साकाङ्क्षे विश्वजिदुपायत्वेन विधीयते। ततश्च सत्रकरणत्वेनागूर्य तदशक्तौ विश्वजितं तस्मिन् फले मनसि विपरिवर्तमाने उपायत्वेन कुर्यादित्येवं वाक्यार्थो वर्णितः तेन च यथैवान्यप्रक्रान्तकाम्यकर्मादौ मध्ये मुख्यद्रव्यालाभे प्रतिनिध्युपादानेनाप्युपक्रमानुरोधेनावश्यसमापनीयकर्मणस्तदेव फलं स्वर्गाद्यवीतेच्छस्येत्युक्तं **सामान्यं तच्चकीर्षा** हीत्यधिकरणे **तन्त्ररत्ने,** तथेहापि मुख्यद्रव्याद्यशक्तिप्रयुक्ते सत्राकरणे प्रसक्ते यावत्प्रतिनिध्युपादानेनाप्यवश्यसमापनीयत्वेनोपक्रान्तसत्रप्रयोगस्तत्फलार्थं प्रसक्तस्तस्यावीतेच्छस्य तत्फलार्थं तत्स्थाने विश्वजिद्विधीयत इत्युक्तं भवति तद्दूषयितुमनुवदति—**तच्च फलमिति।**

अत्र प्रतिनिधिना क्रियमाणोपक्रान्तकाम्यकर्मणो न पूर्वोपस्थितं स्वर्गादि फलं सकलविहितसामग्र्या एव तत्फलजनकत्वेन क्लृप्ताया अभावे तत्फलोत्पत्त्यसम्भवात्। न च काम्यकर्मस्वङ्गहाने सति तत्फलजनकयावद्विहिताङ्गयुक्तत्वाभावेन तत्फलोत्पत्त्यसम्भवेऽपि उपक्रान्तकाम्योत्तरं मुख्यद्रव्यालाभेऽपि तत्फलोत्पत्त्यसम्भवेऽपि तत्प्रतिनिध्युपादानेन यावद्विहिताङ्गयुक्तत्वसम्भवे कुतो न तत्फलोत्पत्तिरिति वाच्यम्। प्रतिनिध्युपादानादिनाऽऽरब्धप्रयोगसमाप्तिसम्भवेऽपि प्रतिनिधिघटितसामग्र्याः काम्यमानतत्फलजनकत्वे प्रमाणाभावेन तदनुत्पत्तेः। अत उपक्रान्तकाम्यस्य प्रतिनिधिना समापनीयस्य न स्वर्गादिफलमित्युक्तं प्राक्। न ह्यत्र तन्न्यायेन विश्वजितः सत्रफलस्वर्गार्थत्वं निरसितुं शक्यम्। प्रतिनिध्युपादानादिनाऽवश्यसमापनीयस्य सत्रप्रयोगस्य तत्फलजनने क्लृप्तसामग्रीत्वाभावेपि विश्वजित एव वचनेन तत्सामग्रीत्वबोधनेन तत्फलोत्पत्तौ बाधकाभावादतो युक्त्यन्तरेण स्वर्गादिफलत्वं निरस्यति—**तथात्वे इति। अयमर्थः** सत्रसङ्कल्पं कृत्वा सत्राकरणं ह्यनेकप्रकारेण भवति। सामग्र्यभावात्, मध्ये फलेच्छाया वीतत्वात्, फलावाप्तेर्वा, प्रतिबन्धकान्तराद्वा; तत्र सकलसामग्रीं सम्पाद्यैव सत्रसङ्कल्पानुष्ठानात् प्रायस्तत्सङ्कल्पोत्तरं सामग्र्यभावकृतं तदकरणमसम्भव्येव। अस्तु वा तथाविधमपि। फलेच्छाभावादिकृतं तदकरणं तु निमित्तं भवत्येव। तत्र विश्वजितः काम्यमानसत्रफलस्वर्गार्थत्वे स्वीक्रियमाणे फलेच्छायां सत्यां प्रतिबन्धकान्तरेण सत्राकरणे निमित्ते तत्फलसाधनत्वेन विश्वजितो विधानमित्यर्थः सिद्ध्येत्। न तु फलेच्छाभावप्रयुक्तसत्राकरणस्यापि निमित्तत्वं

**चापत्तेः ।** तथाऽपि **प्रारब्धाकरणनिमित्तदोषपरिहारार्थं** त्रैधातवीयास्थाने **विधीयते । अत एव** तादृशफलवाचकपद**कल्पनयैवाकरण**विषयत्वसिद्धेर्न **तस्यापि निमित्तान्तः प्रवेशः । अत एवैकस्याप्यकरणे अन्यैः कर्त्रन्तरं सम्पाद्य,** असम्पाद्यैव **वा सत्रप्रयोगेऽप्यनेनैव विश्व-**

---

सिद्धयति । फलेच्छाऽभावे सत्राकरणे निमित्ते सत्यपि तव मते विश्वजितोऽननुष्ठानादतः सामान्यप्रवृत्तसत्राकरणनिमित्तश्रुतेः फलेच्छासद्भावविशेषे व्यवस्थापनरूपसङ्कोचापत्तिः । यदि तु फलेच्छाभावेऽपि केवलनिमित्तश्रुत्यनुरोधेन विश्वजितोऽनुष्ठानमित्युच्येत, तदा काम्यमानत्वेनोपस्थितस्वर्गफलार्थत्वोक्तेरकिञ्चित्करत्वं क्वचित्स्वर्गादिफलं क्वचिच्च पापक्षयादीत्याश्रयणे ऐकरूप्येण शास्त्रार्थस्यासिद्धिरिति । **ननु** मुख्यस्वर्गादिफलासम्भवेऽपि प्रारम्भे निमित्ते सत्राकरणनिमित्तप्रत्यवायापत्तिभिया प्रसक्तसत्रप्रयोगजन्यपापक्षयोऽस्य फलं भविष्यतीत्याशङ्कानिराकरणाय फलान्तरं दर्शयति— **तथापीति । त्रैधातवीयास्थाने इति ।** यो यक्ष्ये इत्युक्त्वा न यजते स त्रैधातवीयेन यजेतेति सामान्यवचनविहितत्रैधातवीयास्थाने इत्यर्थः । **यद्यपि** "त्रैधातवीयेनेष्ट्वा सङ्कल्पोत्सृष्टयज्ञेन यजेत" इति वचनात्त्रैधातवीयायामनुष्ठितायामपि पुनरुत्सृष्टप्रयोगो विहितः तथापि इह पुनः प्रयोगे मानाभावात् । सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानं निष्क्रीणीते" इति निष्क्रयद्वारेण विश्वजित्संस्तवाच्च न पुनः सत्रप्रयोग इति ध्येयम् । एतेनैव निष्क्रयवचनेनैव नैमित्तिकयागाङ्गत्वेन विधानं विश्वजित इत्यपि निरसनीयम् । **तादृशफलवाचकेति ।** करणस्याकरणजन्यदोषपरिहारफलकत्वासम्भवस्यान्यत्र पूर्वमुपपादितत्वेऽपि सत्राकरणप्रयुक्तदोषपरिहारार्थं यत्सत्रकरणं तज्जन्यपापक्षयफलार्थत्वकल्पनापेक्षया लाघवात् विश्वजितः फलापेक्षायां पुरुषस्य च सत्राकरणप्रयुक्तदोषपरिहारापेक्षायां चोपस्थितत्वात् सत्राकरणदोषपरिहारार्थमिति फलवाचकपदकल्पनया तदकरणप्रयुक्तदोषरिहारः सत्रकरणे सम्भवी यस्तत्फलकत्वमेव कल्प्यते त्रैधातवीयविभ्रष्टेष्ट्यादिनैमित्तिकेष्टिवत् । न तु सत्रकरणजन्यपापक्षयपर्यन्तफलकत्वमपि गौरवात्तावतापि सत्रस्थानापत्त्युपपत्तेश्चेति भावः । **असम्पाद्यैव चेति ।** वाशब्दोऽप्यर्थे । तेनान्यैः सत्रप्रयोगेपीत्यत्रैव तात्पर्यम् । नहि **स तद्धर्मा** स्यात्तत्संयोगादित्यधिकरणे स्वप्रदर्शितरीत्या अनुमतिद्वारा कर्तृत्वसम्भवेन न कर्त्रन्तरसम्पादनमिति युक्तं, प्रयोगकर्तव्यतायां कर्तुः साहित्यसत्त्वे तदीयानुमतिसम्भवेऽपि तदभावे अनुमतिकरणाप्रसक्तेः । न ह्येकस्यासामर्थ्येन सत्रानुष्ठाने सत्रसङ्कल्पमात्रानन्तरं सत्रकरणं ममाशक्यमिति निश्चयेन व्युत्थितस्य ममानुमतिरस्ति मदीयद्रव्यत्यागादिकर्तव्यपदार्थाः भवद्भिः कर्तव्या इत्येवमनुमतिः सम्भवति । यदा तु समर्थस्य सङ्कल्पानन्तरं सत्रकर्तव्यतेच्छायां सत्यामपि प्रतिबन्धकान्तरेण सन्निधानाभावे सम्भाविते यत्रानुमतिः सम्भवति तत्र प्रयोगे

जित्कार्यं इत्येकवचनस्याप्युपपत्तिः ॥ ११ ॥

---

(१२)—वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥ कालो वा उत्पन्नसंयोगात् यथोक्तस्य ॥ ३५ ॥ अर्थापरिमाणाच्च ॥ ३६ ॥ वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३७ ॥ कालस्तु स्याद्चोदना ॥ ३८ ॥ अनर्थकश्च कर्मसंयोगे ॥ ३९ ॥ अवचनाच्च स्वशब्दस्य ॥ ४० ॥

सत्रेऽप्रवृत्तस्य विश्वजिदित्युक्ते सान्नाय्येऽप्रवृत्तस्यैव व्रतमित्युक्त्यर्थमुत्तराधिकरणं, तदुपोद्धातत्वेनेदं विचार्यते। दर्शपूर्णमासयोः 'बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्या-

---

साहित्याभावेप्यनुमतिद्वारा तत्सम्भवात् सत्रकरणमेव तस्य जातमिति न तत्र सत्राकरणनिमित्तो विश्वजिद्यागः प्राप्नोतीत्यसम्पाद्येत्येतदनादरेणैव द्रष्टव्यम्। उपपत्तिरिति। एकवचनान्तयच्छब्दसमानाधिकरणयजेतेत्याख्यातोपात्तस्येति शेषः। अत एवैकवचनं यच्छब्दबलात् सप्तदशानामपि युगपत्सङ्कल्पानन्तरं सत्राकरणप्रसक्तौ प्रत्येकमेव विश्वजिदनुष्ठानं द्रष्टव्यम्।

---

॥ वत्ससंयोगे ॥

अत्र तन्त्ररत्ने वत्सो व्रताङ्गं, वत्सलक्षितो वा कालः इति शेषशेषिचिन्तायाः कथं सङ्गतिरित्याशङ्कोत्तरं किमनेन कालेन सन्नयत्पक्षेऽधिकार उतासन्नयत्पक्षेपीति करिष्यमाणाधिकारचिन्ता कालविधाने स्थितेऽवकल्पते नान्यथेति तदुपोद्धातोऽयं विचार इत्युक्त्वा सङ्गतिस्तां दर्शयति—सत्रेऽप्रवृत्तस्येति। सान्नाय्येऽप्रवृत्तस्यैवेति। वत्सापाकरणकालविधाने सान्नाय्येऽप्रवृत्तेन पूर्वदिवसे वत्सापाकरणकाले व्रतमनुष्ठेयमित्यप्रवृत्ते विश्वजिद्वदनुष्ठानमिति वक्तुमुत्तराधिकरणमित्यर्थः। एवकारोऽप्यर्थे। तदनेनोत्तराधिकरणस्य प्रासङ्गिक्यातिदेशिकी वा सङ्गतिरुक्ता भवति। प्रकाशकारास्तु अत एव सिद्धान्ताभावेपि पुरा वत्सानपाकर्तोरित्यस्य कालविधित्वानिरासात्त कालविधिमादायोत्तराधिकरणविचारोपपत्तेर्नास्याधिकरणस्योपोद्धातत्वमित्यभिप्रेत्य कालस्याङ्गत्वेपि अनुपादेयत्वेन निमित्तत्वात् नैमित्तिकत्वविचारेण नैमित्तिकाधिकारसङ्गतेः साक्षादेव सम्भवमातिदेशिकीं चानन्तरसङ्गतिमाहुः। व्रतमुपैतीति। पयो व्रतं ब्राह्मणस्येत्यादौ द्रव्यवाचकपय आदिपदसामानाधिकरण्यात् व्रत्यते

**याम्' इति श्रुतम्। तत्र तृतीयया वत्सकरणकभक्षणापरपर्यायव्रतविधिः रागप्राप्तभक्षानुवादेन '**अमाष**ममांसमसर्पिष्कं व्रतं व्रतयति' इति वचनान्तरप्राप्तभक्षानुवादेन वा वत्समात्रविधिरिति प्राप्ते—**

**न तावद्वत्सस्य व्रते हस्तादिवत्करणत्वं नापि भक्ष्यत्वेनाशक्यत्वात् नापि मांसप्रकृतित्वे विना वचनं विशसने प्रमाणाभावात्। अतः 'पुरा वत्सानपाकर्तोर्दम्पती अश्नीयाताम्' इति** वचनान्तरैकवाक्यता**लाभाय 'बर्हिषा पूर्णमासे' इत्येतत्**प्रायपाठाच्च **वत्सप्रातिपादिकेन वत्सापाकरणं लक्षयित्वा तृतीयां चेत्थंभूतलक्षणे व्याख्यायामावास्योद्देशेन वत्सापाकरण**पूर्वकालो **व्रताश्रितत्वेन विधीयते। व्रतं च प्रकरणप्राप्तमिति न कश्चिद्विरोधः॥**

---

भुज्यते तद्व्रतमित्यवयवयोगेन द्रव्यपरत्वेपीह करोतीत्यर्थको पैतिपदसामानाधिकरण्यान्नियमवद्भोजनं व्रतपदस्यार्थः। अत एव व्रतं व्रतयतीत्युत्तरवाक्ये अमांसमित्यादिपदानुरोधेन तस्य द्रव्यपरत्वमेव। अमावास्यायामित्यस्याग्रे व्रतमुपैतीत्यस्यानुषङ्गः। **ननु** भक्षणस्य रागप्राप्तत्वेपीह व्रतपदेन नियमवद्भोजनाभिधानात तस्य रागतः प्राप्त्यभावेनानुवादानुपपत्तेरावश्यक एव तद्विधिरित्यत आह—**अमाषमिति**। अनेन वचनेनामाषादिनियमस्यापि रागप्राप्ते भोजने प्राप्तेर्नियमवद्भोजनरूपव्रतस्यापि प्राप्तत्वादनुवादत्वं संभवतीत्यर्थः। वचनान्तरप्राप्तभक्षानुवादेनेत्यत्र भक्षपदात्पूर्वं व्रतपदं प्रयोज्यम्। तथा च वचनान्तरप्राप्तत्वं नियमरूपव्रतांश एव, भक्षांशे तु रागप्राप्तत्वमेव। तथा च विशिष्टांशेप्यनुवादत्वं संभवतीत्याशयो न तु तत्र भक्षविधौ तात्पर्यं, तस्य रागप्राप्तेस्तत्रापि तुल्यतया तदनुवादेनैवामाषत्वादिगुणमात्रविधानात्। अत एव **प्रकाशकारैः** रागप्राप्ते भक्षणे अमाषत्वाद्यनेकगुणविधानादमाषमिति वाक्ये वाक्यभेद एव स्वीकृतः। **वचनान्तरैकवाक्यतेति**। पुरा वत्सानित्यस्या**पस्तम्ब**वचनत्वेन तन्मूलभूतश्रुत्यन्तरकल्पनापेक्षया अस्या एव श्रुतेः तन्मूलत्वकल्पने लाघवात् तन्मूलतया तेन सहैकवाक्यतालाभायेत्यर्थः। **प्रायपाठाच्चेति**। **यद्यपि** पुरा वत्सानित्यस्मात् पूर्वं पठितस्य पुरा बर्हिष आहर्तोरित्या**पस्तम्ब**वचनस्य मूलतयैव बर्हिषा पौर्णमासे इति श्रुतावप्येकवाक्यतालाभाय बर्हिःपदे काललक्षणेति नैकवाक्यतां विनाऽस्य बर्हिःपदस्य कालपरत्वं निस्सन्दिग्धं येन प्रायपाठस्य पार्थक्येन साधकत्वं उपन्यस्येत तथापि वत्सवत् बर्हिषो भक्ष्यत्वेनायोग्यस्य पक्षेऽपि व्रते साधनत्वेनाप्राप्तेः साधननियमविधिविषयत्वासम्भवात् एकवाक्यतां विनापि बर्हिःपदस्य कालपरत्वं निस्सन्दिग्धं इत्यभिप्रेत्य हेत्वन्तरत्वेनोक्तिः। यतश्च यथा बर्हिराहरणार्थस्वधित्यादानकालपरत्वं तथेहापीत्यर्थः। **पूर्वकाल इति**। **यद्यपि** वत्सपदेन तदपाकरणलक्षणात् तदुत्तरतृतीयया

(१३)—कालश्चेत्सन्नयत्पक्षे ताल्लिङ्गसंयोगात् ॥ ४१ ॥ कालार्थत्वाद्वोभयोः प्रतीयेत ॥ ४२ ॥

यद्यपि **वत्सापाकरणं कालोपलक्षणं न तु स्वयमङ्गं** परार्थत्वात्। **तथाऽपि तदभावे कालस्यैव ज्ञातुमशक्यत्वात् सान्नाय्ययाजिन एव वत्सापाकरणसत्त्वाद्व्रतम्**। अत **एवै-कपुरोडाशायामग्नीषोमीयाभावेऽप्याग्नेयसत्त्वात्कालोपलक्षणसत्त्वेन उपांशुयाजेऽपि न क्षतिरिति प्राप्ते—**

**'शङ्खवेलायामागन्तव्यम्' इत्यादौ उपलक्षणापायेऽप्युपलक्ष्यानपायाद्वत्सापाकरणा-भावेऽप्यन्वाधानपश्चाद्भावरूपतत्कालानपायात्सान्नाय्याभावेऽपि कर्तव्यमेव व्रतम्** ॥ १२ ॥

---

(१४)—प्रस्तरे शाखाश्रयणवत् ॥ ४३ ॥ कालविधिर्वोभयोर्विद्यमान-त्वात् ॥ ४४ ॥ अतत्संस्कारार्थत्वाच्च ॥ ४५ ॥ तस्माच्च विप्रयोगे स्यात् ॥ ४६ ॥ उपवेषश्च पक्षे स्यात् ॥ ४७ ॥

---

तन्मात्रस्यैव लक्षणत्वापरपर्यायं ज्ञापकत्वं वक्तव्यं तस्य वत्सापाकरणसम्बन्धिनोर्वर्तमानोत्तर-कालयोरपि व्रतानुष्ठानेप्यस्त्येव सम्भव इति न नियमेन तत्पूर्वकाललाभः, तथापि वत्सा-पाकरणानुष्ठानात प्रागप्यनुष्ठानार्थं बुद्धिस्थस्यापि तस्य ज्ञापकत्वसम्भवे तदुल्लङ्घनेन तस्य ज्ञापकत्वाङ्गीकारे प्रयोजनाभावादर्थसिद्धपूर्वकालस्यैव पूर्वलिखितापस्तम्बवचने पुरेति पदेनोपादानात तदभिप्रायेण **पूर्वकाल** इत्युक्तम्। इतोऽनन्तरं **प्रस्तरे** इत्यधिकरणपर्यन्तं स्पष्टार्थत्वान्न व्याख्यायते।

---

तत्र—**कालश्चेत्यधिकरणम्**

ननु एकपुरोडाशायां उपांशुयाजो भवतीत्यनया यो हि कालस्य लक्षणं **द्विपुरोडा-शायामिति** न्यायेन दशमे वक्ष्यते तेनेहाप्यसन्नयतो व्रतं स्यादित्याशङ्क्य परिहरति **—यद्यपीति। परार्थत्वादिति।** दोहार्थत्वादित्यर्थः। **अत एवेति।** एकोपलक्षणा-भावादेवेत्यर्थः। तथा यत्रोपलक्षणद्वयं, तत्रैकतराभावेऽपि अन्यस्य कालोपलक्षणस्य सत्वात् सुलभं तत्कालज्ञानम्।

'सह शाखया प्रस्तरं प्रहरति' इत्यत्र प्रहरण एव शाखासाहित्यं प्रस्तरस्य न तु होम इत्युक्तं चतुर्थे। तत्तु न समप्रधानत्वेन प्रस्तरप्रहरणस्येव शाखप्रहरणस्यापि शाखाप्रतिपत्तितया, किन्तु प्रस्तरप्रहरणे शाखासाहित्यं गुणत्वेन मैत्रावरुणग्रह इव पयस्साहित्यं 'सह युक्तेऽप्रधाने' इत्यनुशासनेन गुणत्वावगमादिति प्राप्ते—

शाब्दबोधे गुणत्वश्रवणेऽपि प्रयाजशेषाभिघारणन्यायेनार्थिकप्रतिपत्त्यन्तरविधिकल्पनेन प्रस्तरवच्छाखाया अपि कृतार्थत्वाविशेषेण प्रतिपाद्यत्वं, अत एव शाब्दबोधे गुणत्वश्रवणमपि प्रस्तरप्रहरणकाले प्रतिपत्त्यर्थमित्युक्तं न तु स्वयं तन्त्रम् ।

---

यत्र त्वेकमेव तत् तत्र तस्यैकस्यैव ज्ञापकस्याभावे दुर्लभं तज्ज्ञानं इति विशेषाशङ्कयाऽगतार्थत्वमिति भावः ।

---

॥ प्रस्तरे शाखाश्रयणवत् ॥

इदं तु प्रासङ्गिकमधिकरणम् । व्रतकालेऽसन्नयतोऽपीत्युक्तं शाखाहरणं तु नैव, किन्तु सन्नयत एव । अथवा वत्सापाकरणं कालोपलक्षणमित्युक्तं, प्रस्तरप्रहरणमपि कालोपलक्षणमिति प्रतिपाद्यते इति । लक्षणसङ्गतिस्तु प्रस्तरप्रहरणे अमावास्यायामेवाधिकारः उत पौर्णमास्यामपीति विचारात् स्पष्टा । ननु शाखाप्रहरणं प्रतिपत्तिरिति प्रतिपत्तिर्वा शब्दस्य तत्सन्धानत्वादिति सूत्रेण चतुर्थे सिद्धान्तितं तथाच शाखाया अपि प्रतिपाद्यत्वेन प्राधान्यमेवेति कथं शाखाया गुणत्वपूर्वपक्षारम्भ इत्यत आह—सह शाखयेति । न तु होमे इति । देवतोद्देशपूर्वकद्रव्यत्यागरूपे होमे इत्यर्थः । तथा चतुर्थे शाखायाः सूक्तवाकसम्बन्धान्यथानुपपत्तिकल्पितप्रस्तरद्रव्यकाग्न्यादिदेवताकयागे न साहित्यमपितु प्रक्षेपरूपप्रहरणे एवेत्युक्तेऽपि प्रहरणेऽपि समप्राधान्यं न किं तु गुणत्वमेवेति पूर्वपक्षोत्थानं दर्शयति-तत्त्विति । प्रस्तरप्रहरणस्येवेति । यथा प्रस्तरप्रहरणस्य प्रस्तरप्रतिपत्तितया तं प्रति प्रतिपाद्यत्वात् प्रस्तरस्य प्रधानत्वं तथा शाखाप्रहरणस्य शाखाप्रतिपत्तितया तं प्रति शाखायाः प्रतिपाद्यत्वाविशेषात् प्रधानत्वेन साहित्यं नेत्युक्तम् । प्रस्तरप्रहरणस्येवेति व्यतिरेके दृष्टान्तः । कृतार्थत्वाविशेषादिति । जुह्वासादनेन प्रस्तरस्येव वत्सापाकरणार्थत्वेन शाखाया अपि कृतार्थत्वाविशेषादित्यर्थः । इत्युक्तं चतुर्थे इति शेषः । नतु स्वयं तन्त्रमिति । सहार्थकतृतीयावत् स्वयं गुणत्वे तन्त्रं नेत्यर्थः । अत्र तन्त्ररत्ने पूर्वपक्षे शाखया विना प्रस्तरप्रहरणासम्भवात् पौर्णमास्यां प्रस्तरप्रहरणसिद्ध्यर्थं शाखोत्पादनीया । सिद्धान्ते तु शाखायाः प्राधान्येन प्रस्तरप्रहरणप्रयोज्यत्वाभावात् शाखाऽभावे तत्प्रहरणप्रतिपत्तिलोपेऽपि प्रस्तरसत्त्वे प्रतिपाद्यलाभात्तन्मात्रस्यैव प्रहरणमिति पौर्णमासीविषयं पूर्वसिद्धान्तपक्षप्रयोजनमुक्तं

**अतश्चासन्नयतश्शाखां विनैव प्रस्तरप्रहरणम् । पौर्णमास्यां च यथाशक्तिप्रयोगे प्रस्तराभावे 'गुणलोपे च' इति न्यायेन शाखाप्रहरणम् ॥ १४ ॥**

**इति खण्डदेवविरचितायां भाट्टदीपिकायां**
**षष्ठस्याध्यायस्य चतुर्थः पादः ॥**

---

तद्युक्तमेव । परन्तु तत्र तस्य सम्भव इवामावास्यायामपि पूर्वोत्तरपक्षप्रयोजनसम्भवोऽस्त्येवेति तत्र प्रयोजनं दर्शयन् व्यतिरेकेण पूर्वपक्षप्रयोजनमर्थाज्ज्ञास्यत एवेत्यभिप्रायेण सिद्धान्तपक्ष एव तद्दर्शयति—**अतश्चासन्नयत इति । शाखां विनैवेति ।** यथा सन्नयतोऽपि शाखाभावेऽपि शाखामुत्पाद्य तद्गुणकं प्रस्तरप्रहरणं पूर्वपक्षे न तथा सिद्धान्ते । अपितु शाखां विनैव तत्प्रहरणं इत्यर्थः । अत्र भाष्यकारेण प्रस्तराभावे शाखा न प्रहर्तव्या पूर्वपक्षे । सिद्धान्ते तु तदभावेपि प्रहर्तव्येति प्रयोजनमुक्तं, तद्दर्शपूर्णमासयोः सर्वदा प्रस्तरसद्भावान्नेदं प्रयोजनं सम्भवतीति तन्त्ररत्ने प्रथमतो दूषयित्वा दर्शपूर्णमासयोस्सर्वदा प्रस्तरसत्वेऽपि यत्र प्रस्तराभावस्तद्विषयकमेव भाष्यमिति दर्शयितुमुक्तमुदाहरणम् । सवनीयेषु हि पशुतन्त्रमेव प्रसङ्गेनोपकरोतीति वक्ष्यते । तेन पाशुक एव प्रस्तरस्सवनीयानां तस्य च प्रहरणं तार्तीयसवनिकाग्निमारुतादूर्ध्वमुत्कृष्यमाणैरनूयाजैरुत्कृष्टम् । शाखा तु पशोरनुपयुज्यमानत्वात् पयस्यार्थमेवाद्रियते । तस्याश्च प्रहरणं वैशेषिकत्वान्न प्रासङ्गिकैरनूयाजैरुत्कृष्टमिति प्रातस्सवन एव कर्तव्यं शाखाप्रतिपत्त्यर्थत्वात् । प्रस्तराङ्गत्वे तु न कर्तव्यमिति । तदेतत्तन्त्ररत्नीयं भाष्यसमर्थनायोदाहरणं विलम्बोपस्थितिकमिति विहाय दर्शपूर्णमासयोरपि प्रयोजनभाष्यसमर्थनात् तत्र प्रस्तराभावं दर्शयति—**यथाशक्तिप्रयोगे इति । गुणलोपे चेति ।** प्रस्तराभावे तत्प्रहरणकालरूपगुणलोपेऽपि शाखाप्रहरणं प्रधानमात्रं कर्तव्यं सिद्धान्ते । पूर्वपक्षे तु शाखायाः प्रस्तरप्रहरणाङ्गत्वात् प्रधानप्रस्तराभावे गुणभूतशाखालोपान्नास्याः प्रहरणमित्यर्थः ।

**इति श्रीशम्भुभट्टीये षष्ठस्य**
**चतुर्थः पादः**

---

# अथ षष्ठाध्यायस्य पञ्चमः पादः

(१)—अभ्युदये कालापराधादिज्याचोदना स्यात् यथा पञ्चशरावे॥ १ ॥
अपनयो वा विद्यमानत्वात् ॥ २ ॥ तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥
आतञ्चनाभ्यासस्य दर्शनात् ॥ ४ ॥ अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥
पयोदोषात्पञ्चशरावेऽदुष्टं हीतरत् ॥ ६ ॥ सान्नाय्येऽपि तथेति
चेत् ॥ ७ ॥ न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥
लक्षणार्था शृतश्रुतिः ॥ ९ ॥

दर्शपूर्णमासयोः "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात् स त्रेधा तण्डुलान्विभजेत् ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्" इति श्रुतम्।

---

॥ अभ्युदयये कालापराधात् ॥

यद्यप्यत्र भाष्यकारेण ये क्षोदिष्ठास्तानिति तृतीयवाक्यं लिखितं तन्त्ररत्नेऽपि तथा, तथापि शास्त्रदीपिकायां विधिरसायने च येऽणिष्ठा इत्येवं पठितमिति तदभिप्रायेणैव विषयवाक्यमुदाहरति—यस्य हविरिति। स्थविष्ठक्षोदिष्ठशब्दौ हि स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः इत्यनेनेष्ठनप्रत्ययान्तौ। तेनातिशयेन क्षुद्राश्च क्षोदिष्ठपदेनोच्यन्ते। अणिष्ठपदेनाप्यतिशयेनाणव उक्ताः तैत्तिरीयशाखासु इत्यैकार्थसंवादः। तथा चार्धखण्डतन्न्यूनखण्डा मध्यमाः, स्थविष्ठा अखण्डाः, अणिष्ठा अर्धाधिकखण्डाः इत्येकार्थतया तैत्तिरीयशाखान्तरस्थतया अणिष्ठा इति पठितमिति भावः। सिद्धान्ते तदेवेदं प्रकृतं कर्मेति साधयिष्यते। तदर्थं प्रकृतकर्मप्रत्यभिज्ञापनाय दर्शपूर्णमासयोरित्युक्तम्। तत्र प्रकरणे इति शेषः।

अत्र तन्त्ररत्ने निमित्तांशो विचारितः यावता विशेषणेन विना अभ्युदयस्य निमित्तता न घटते तावदगत्या निमित्तं स्वीकार्यं, यथा हविष आर्तिः। तदिहाभ्युदयस्य कर्ता चन्द्रमा

तत्र निमित्तं तावत् **चन्द्राभ्युदयावच्छिन्नदिने प्रारम्भ इति वक्ष्यते। स च** निमित्त-स्वाभाव्येनैव **दर्शस्येत्यपि सिद्धमेव। नैमित्तिकं पुनरत्र किं कर्मान्तरं उत गुणान्तरयुक्तं**

---

विवक्षित एव। अन्यथा यत्किञ्चिदभ्युदयस्य नित्यत्वेन निमित्तत्वानुपपत्तेः। नियत-दिक्त्वादेवाभ्युदयस्य पुरस्तात्पदं नित्यानुवादः।

**यत्तु** शुक्लादौ पश्चादपि चन्द्रमसोऽभ्युदयस्स न मुख्यः उदयाचलसंयोगाभावात्। अपि त्वौपचारिक एव। चन्द्रमसोऽभ्युदयस्य नित्यत्वेन निमित्तत्वानुपपत्तेः। हविर्निरुप्त-मित्यस्यापि विवक्षावश्यकत्वाद्धविः प्रक्रमेण चाभ्युदयोऽवश्यं विशेषणीयः। निर्वापस्य त्वविवक्षा **निरुप्ते** स्यात्तत्संयोगादित्यधिकरणे वक्ष्यते। एवं च चन्द्राभ्युदयावच्छिन्नदिने हविः प्रक्रमो यः स निमित्तमित्युक्तं भवति। अत एव **निरुप्ते स्यात्तत्संयोगा**दित्यधिकरणे स्पष्टमेव भाष्यकारेण प्रवृत्तं हविश्चन्द्राभ्युदयोपलक्षणत्वेनोक्तम्। शास्त्रदीपिकायामपि तथैव। एवं च तन्त्ररत्नादिसकलग्रन्थपर्यालोचनया हविःप्रक्रमोत्तरं चन्द्राभ्युदयेऽवगतेऽभ्युदयेष्टिर्न ततः प्रागित्यापाततो भाति तन्निराकर्तुं वक्ष्यमाणमपि निमित्तस्वरूपं प्रतिज्ञामात्रेण दर्शयति— **तत्र निमित्तं तावदिति। अयमर्थः** चन्द्राभ्युदयस्य निमित्ततानिर्वाहो यावता विशेषणेन भवति तावन्मात्रमेव तु विवक्षितमत एव हविरभ्युदियादित्येतावताप्यप्रवृत्तस्याभ्युदयासम्भवात् प्रवृत्तं हविरर्थान्निमित्तनिवेशि कृत्वा यथा निरुप्तमित्येतदविवक्षितमेवं प्रवृत्तमात्रेणापि निमित्त-तापर्यवसानोपपत्तेः हविः पदोक्तमप्यविवक्षितमेव युक्तम्। अत एव **निरुप्ते स्यादि**त्यधिकरण-पूर्वपक्षे उत्तरसूत्रे वा **प्रवृत्ते वा प्रायणान्निमित्तस्ये**त्यत्र प्रवृत्तमात्रस्यैव निमित्तत्वं स्पष्टं दर्शितम्। एतस्मिन्नेव सूत्रे तदुत्तरस्मिन् **लक्षणमात्रमितरदिति**गुणसूत्रे च हविर्निरुप्तमितिपदयोः चन्द्राभ्युदयं प्रत्युपलक्षणत्वेनान्वयं भाष्यकारेणोपपाद्य हविर्निरुप्तमित्यस्यांशस्य कस्मिंश्चित्पदार्थे[1] तस्य प्रवृत्ते इत्यर्थ इति ग्रन्थेन कर्मप्रवृत्तिमात्रस्य निमित्तकोटिनिवेशो दर्शितः। अत एव **तन्त्ररत्नादि**-ग्रन्थेष्वपि अकाले तन्त्रप्रवृत्तेरेव निमित्तत्वं बहुश आवेदितम्। तथा **विधिरसायनादिनव्य**-ग्रन्थेष्वपि दर्शोपक्रममात्रस्यैव निमित्तत्वमुक्तम्। अतश्चतुर्दश्याममावास्याभ्रमेण दर्शोपक्रममात्रस्य निमित्तत्वं युक्तमिति हविः प्रक्रमात्प्रागपि कर्मप्रवृत्तौ चन्द्राभ्युदयज्ञानेप्यभ्युदयेष्टिरिति सूचयितुं प्रारम्भपदं प्रयुक्तम्। अत एवोक्तं **रामाण्डरेण** मीमांसकानां तु निरुप्तानिरुप्तविनिरुप्तादी-नामप्यविवक्षा अकाले तन्त्रप्रवृत्तिमात्रं निमित्तमिति पूर्वचतुर्दश्यां प्रातरन्वाधाने कृतेऽभ्युदयेष्टि-सम्भव इति। **निमित्तस्वाभाव्येनैवेति**। निमित्तस्वभावो हि कादाचित्कत्वं, तच्च न

---

1. P. धात्वर्थे

**तदेवेति चिन्तायां—**वाक्यभेदापादकगुणात्कर्मान्तराण्येवात्र त्रीणि तत्तद्वाक्यैर्विधीयन्ते। न ह्यग्न्यादयो देवताः दातृत्वादयस्तद्गुणाः मध्यमादीनि द्रव्याणि अष्टाकपालत्वादयः तद्धर्माः दधिशृतयोरधिकरणत्वं चरुत्वं चेत्यनेकार्थविधानं प्राप्ते कर्मणि सम्भवति। न चाष्टाकपालकत्वस्याग्नेये प्राप्तत्वेनाविधानं तत्र प्राप्तत्वेऽप्यैन्द्राग्नेऽप्राप्ततया विधेयत्वा-

---

पौर्णमासस्य सम्भवति पौर्णमास्यां चन्द्रोदयस्य नित्यत्वात्। अतोऽर्थाच्चन्द्राभ्युदयावच्छिन्नदिने प्रारम्भो दर्शस्यैव सम्भवतीति दर्शप्रारम्भ एव निमित्तमित्यर्थः।

अत्र च त्रेधा तण्डुलान् विभजेदिति वचने न तण्डुलानां मध्यमादिभावेन त्रेधाविभागो विधीयते। स हि ये मध्यमा इत्यादिवाक्येषु सिद्धवदनुवादकल्पितविधिनैव सिद्धः। किं तु सर्वेषां दार्शिकहविषां पूर्वदेवताभ्योऽपनयो विधीयते। विभजेदित्युक्ते ह्ययमर्थोऽवगम्यते यानि संयुक्तानि तानि विभजेदिति। तण्डुलादीनि हवींषि देवताभिः संयुक्तानि। अतस्तण्डुलशब्दो विभागकर्मत्वेनार्थप्राप्तदार्शिकहविर्मात्रोपलक्षक इति तेषां पूर्वदेवतापनयो विधीयत इति युक्तम्। मध्यमाद्युत्तरवाक्यैश्चापनीतदेवतासम्बन्धानि देवता-साकाङ्क्षाणि दार्शिकहवींष्युद्दिश्य दातृत्वादिगुणविशिष्टाग्न्यादिदेवतान्तराणि विधीयन्ते।

अथवा "मनुः पुत्रेभ्यो दायं व्यभजत्" इति प्रयोगदर्शनादिह त्रेधावाक्ये वक्ष्यमाणदातृत्वादिगुणकाग्न्यादिदेवताभ्यो विभजनं संयोजनरूपं विधीयते। पूर्वदेवतापन-यस्त्वर्थसिद्धः। कस्यै देवतायै कस्य हविषः संयोजनमित्यपेक्षायामुत्तरवाक्यानि विशेषमात्र-समर्पकाणीति पक्षद्वयेन सिद्धान्तो **भाष्यकृतोपपादितः**। तत्रापनयो नाम द्रव्यदेवतासम्बन्धेन यत्पदार्थानुष्ठानं तत्काले पूर्वसम्बन्धदेवतावाचकपदनिवृत्तिः। एवं तादृशपदार्थानुष्ठानकाले वक्ष्यमाणदेवतावाचकपदोच्चारणं संयोजनं नामेति भेदः। तत्रोत्तरपक्षे पृथग्भाववाचिनो-ऽप्युपसर्गस्य संयोजनपर्यन्तार्थपरत्वे लक्षणापत्तेर्विश्लेषापरपर्यायविभागरूपार्थविधिपक्षस्याद्यस्यैव युक्तत्वमुपपादितं वार्तिकतन्त्ररत्नयोः। तदेतत्प्रथमसिद्धान्तपक्षस्य युक्तत्वं पूर्वपक्षे दूषयन् पूर्वपक्षमारचयति—**वाक्यभेदापादकेति**। अग्न्यादिवाक्यैः देवताविधानं प्राप्तकर्मानुवादेन? उत प्रकृतकर्मसम्बन्धिद्रव्योद्देशेन वा स्यात्। उभयथापि न सम्भवति विधेयानेकत्वप्रयुक्तवाक्य-भेदापत्तेरित्युपपादयति—**नहीति**। अत्रानेकार्थविधानप्रदर्शनावसरे प्राचीनैः यदाशयेनाष्टा-कपालरूपार्थविधानप्रदर्शनं न कृतं तमनूद्य दूषयति—**नचाष्टाकपालत्वस्येति**। **ऐन्द्राग्नेति**।

**वश्यकत्वात्। न च दात्रादिपदानां यौगिकत्वात्सामानाधिकरण्यादेवाग्नयादिपदार्थेष्वन्वयोपपत्तेः दातृत्वादिगुणविशिष्टाग्नयादिविधानं आग्नेयोऽष्टाकपालः पञ्चदशान्याज्यानि इत्यादिवदिहासमस्तपदानां क्रियाव्यतिरेकेण परस्परान्वयस्याव्युत्पन्नत्वात्। अत एव प्रकृतमध्यमादिद्रव्योद्देशेन देवतान्तरमात्रविधिरित्यपास्तं, देवतातद्गुणरूपानेकविधौ वाक्यभेदतादवस्थ्यात्। किञ्चैवं, स्थविष्ठादिवाक्ययोर्द्रव्यद्वयोद्देशात् वाक्यभेदः। न चासौ स्वीक्रियत इति तन्त्ररत्नोक्तं युक्तं प्रमाणाभावात् सर्वत्रैव तदापत्तेश्च। किञ्च—मध्यमादिषु यच्छब्दप्रयोगेण प्रकृतग्रहणेऽपि दधिश्रृतयोस्तदभावात् प्रकृतग्रहणे** प्रमाणाभावे-

---

असोमयाजिनः सान्नाय्याभावेऽप्यभ्युदयेष्ट्यामधिकारोऽनुपदमेव साधयिष्यते। तदा चासोमयाजिन ऐन्द्राग्नेऽधिकारात् सान्नाय्याभावे चतुर्दश्यामैन्द्राग्नोपक्रमं कृतवन उपक्रान्ताग्नेयस्यैवाभ्युदितेष्टिः प्रायश्चित्तं भवतीति तत्रैकादशकपालत्वस्यैव प्राप्तस्य निवृत्तये अष्टाकपालत्वविधिरावश्यक एव। अतोऽष्टाकपालपदस्य नानुवादत्वं सम्भवतीत्यर्थः। सिद्धान्तिनो वाक्यभेदपरिहारमाशङ्क्य निराकरोति—**न च दात्रादीति**। समानाधिकरणनामार्थयोरपि समासं विना न परस्परान्वय इति तत्प्रख्याधिकरणे पञ्चशरावाधिकरणे च **शास्त्रदीपिकाया**मन्यत्राप्युपपादितम्। युक्तिसिद्धं चैतत् अतोऽत्र तयोः परस्परान्वयाभिधानं अयुक्तं पूर्वविरुद्धं च। अथापि यदि तेषामर्थानां प्रथमतो विधीयमानक्रियायामन्वयो यत्र भवति तत्रैकक्रियावशीकाराद्विशेषणसाहित्यसिद्धये पार्ष्ठिकः परस्परान्वयोऽपि स्वीक्रियत एव, यथाऽरुणवाक्योपात्तेषु। प्रकृते तु तव पक्षे यागभावनानामविधेयत्वात् प्रथमतोऽपि यौगपद्येनान्वीयमानानां न पार्ष्ठिकोप्यभेदान्वयः सिद्ध्यतीति विशिष्टविधानसम्भवात् वाक्यभेदतादवस्थ्यमित्यर्थः **क्रियाव्यतिरेकेणे**त्यनेन सूचितः। **अत एव** शब्दार्थं विवृणोति—**देवतातद्गुणेति**। **द्रव्यद्वयोद्देशादिति**। स्थविष्ठवाक्ये स्थविष्ठाः दधि च द्रव्यद्वयम्। अणिष्ठवाक्ये अणिष्ठाः श्रृतं चेति एवं द्रव्यद्वयमित्यर्थः। **प्रमाणाभावेनेति**। **एतेनात्यन्तविशेषणार्थविचारप्रसङ्गे** यच्छब्दोपबन्धबलात् तण्डुलानां प्रकृतानां ग्रहणं, तत्समभिव्याहाराद्दधिश्रृतयोरपि प्रकृतयोः ग्रहणमिति **विधिरसायनकारेणोक्तमपास्तम्**। समभिव्याहाररूपवाक्यापेक्षया सप्तमीश्रुतेर्बलीयस्त्वेन अधिकरणत्वेनोपादेयतया प्रकृतग्रहणे प्रमाणाभावात्। **यद्यपि** सप्तमीश्रुत्याऽधिकरणत्वं बोधितं प्रकृतसान्नाय्यग्रहणेऽपि न विरुद्ध्यते, अतो लौकिकदधिश्रृतग्रहणप्रतिबन्धकः समभिव्याहार इति शक्यते वक्तुं, तावतापि तयोरुद्देश्यत्वेन स्थविष्ठादिसाधारण्येन स्थविष्ठमङ्गीकृत्य देवताविधानं सिद्धान्त्यभिमतं त्वयुक्तमेवेति भावः।

**नोद्देश्यत्वानुपपत्तिः ।** न च तथाऽपि **प्रयोगान्तरमात्रस्यैव स्वीकारेण कर्मान्तरत्वे प्रमाणाभाव इति वाच्यं,** निमित्तस्य **विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे स्थापि-**

---

**अत्र** च सिद्धान्तिना वाक्यभेदपरिहारार्थं न मध्यमादिवाक्यानां प्रकृतप्रारब्ध-दर्शप्रयोगापेक्षया तत्तद्द्रव्यदेवताविशिष्टैकप्रयोगान्तरविधायकत्वमङ्गीक्रियते मध्यमादिवाक्येषु पृथक् लिङ्श्रवणेन तावद्विकारविशिष्टैकप्रयोगविधायकत्वायोगात । न च मध्यमादिवाक्येष्वे-कैकवाक्योदितविकारविशिष्टप्रयोगत्रयविधायकत्वं, प्रक्रान्तप्रयोगस्य यावज्जीववाक्येन कामवाक्येन वा विहितस्य विध्यन्तरानपेक्षत्वात । प्रक्रान्त एव प्रयोगे विकारोपपादनमङ्गीकृत्यैवास्मिन् पक्षे दधिशृतयोः देवतान्तरविधानार्थमनुवाद्यत्वात् । तस्य च यथा प्राप्तिसापेक्षत्वेन पाक्षिकानुवादतयोपपन्नत्वात् । असन्नयतोऽप्यधिकारस्वीकाराच्च । इतरथा दधिशृतविशिष्ट-प्रयोगस्यासन्नयताऽनुष्ठातुमशक्यत्वेन तदधिकारसिद्धान्तानुपपत्तेरतोऽधिकरणसिद्धान्तिनोऽनभिमत-मेव प्रयोगान्तरविधानं पूर्वपक्षे नाशङ्क्य दूषयितुमुचितं, तथापि वाक्यभेदपरिहारार्थं केषाञ्चिन्मतेन प्रयोगान्तरविधानस्वीकरणमेवाशङ्क्य निराकरोति—**न च तथापि इति ।** विशिष्टैकप्रयोगविधाने हि अनेकगुणविशिष्टकर्मविधाविव न वाक्यभेदप्रसरः प्रकृतहानं, अप्रकृतकल्पनं, अपूर्वकर्मान्तर-कल्पनं, च नापद्यते प्रकृतस्यैव प्रयोगान्तरविधानादित्याशङ्काभिप्रायः ।

**यत्त्वत्र तन्त्ररत्नकृता** प्रयोगान्तरविधानमाशङ्क्योक्तं प्रारब्धस्यावश्यसमापनीयत्वात् प्राप्त[1] एव प्रयोगो न विधेयः । तदनुवादेन त्वित्थं प्रयोक्तव्यमिति विशेषमात्रं विधेयमिति । **तदयुक्तम् ।** प्राप्तस्य प्रयोगस्य विधानासम्भववत् प्राप्तप्रयोगानुवादेनानेकगुणविधानस्यापि वाक्य-भेदापत्त्याऽसम्भवादेव प्रयोगान्तरविधानस्य विशिष्टभावनान्तरदेवतान्तरविधानपक्षयोरिव स्वीकारे बाधकाभावादित्यभिप्रेत्य प्रकारान्तरेण दूषयति—**निमित्तस्येति ।** **अयमर्थः**—निमित्तस्य विनियोगविधावेवान्वयो न तूत्पत्तिप्रयोगविध्योरिति यावज्जीवाधिकरणे प्राक् अत्रापि चोक्तं, देशकालकर्त्रादीनां प्रयोगान्वयित्वं द्रव्यदेवतादीनां उत्पत्त्यन्वयित्वमित्यपि तत्र तत्र दर्शितम् । यस्य च गुणस्य यस्मिन् प्रकृते निवेशो न सम्भवति स स गुणोऽनिविशमानः स्वस्वान्वयिनं भिनत्ति । अत एवावेष्टिसंज्ञकपञ्चेष्टिप्रयोगेषु क्षत्रियकर्तृकेषु यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवं इत्यादिवचनविहित-

---

1. P. स एव ।

**तत्वेनात्र प्रयोगान्वयिगुणाभावेन वाजिनवदेव तद्भेदानुपपत्तेः।** अत **एवोत्पत्त्यन्वयिनो गुणस्य कर्मभेदकत्वादेव न वाजिनवदेव भावनामात्रभेदकत्वं,** अतः **पञ्चशरावबदेव कर्मान्तराण्येव तत्तद्द्रव्यदेवताविशिष्टानि तत्तद्वाक्यैर्विधीयन्ते।** तत्प्रकृतिभूत**तण्डुलानां च 'त्रेधा तण्डुलान् विभजेत्' इत्यनेन मध्यमादिभावेन त्रिधा विभागः** प्रयोगान्तः

---

ब्राह्मणादिकर्तृकत्वमनिविशमानं प्रयोगान्तरमापादयति। यथा वा आमिक्षायागे वाजिनद्रव्य-वाजिदेवते वाऽनिविशमाने उत्पत्तिशिष्टत्वेनैव यागान्तरमापादयतः। प्रकृते च निमित्तरूप-गुणभेदाद्विनियोगस्येव प्रयोगान्वयिगुणाभावेनैव प्रयोगस्य भेदः सिद्ध्यति। प्रत्युत द्रव्य-देवतयोरुत्पत्त्यन्वयिनोः प्रकृतकर्मनिवेशासम्भवे उत्पत्तिविशिष्टकर्मण एव भेद इति कर्मान्तर-विधानमेवात्र युक्तं, न प्रयोगान्तरविधानमिति। **यत्तु** सिद्धान्तपक्षत्वेन भाष्यानारूढमेव वार्तिककृता द्रव्यदेवताविशिष्टभावनान्तरविधानं वाक्यभेदपरिहाराय दर्शितं तदप्ययुक्त-मित्याह—**अत एवोत्पत्त्यन्वयेति।** ननु तत्र भवत्युत्पत्त्यन्वयिनो गुणस्य कर्मभेदकत्वं, यत्र प्रकृतं कर्म निराकाङ्क्षभावेन प्रकृते कर्मण्यनिविशमानस्योत्पन्नशिष्टस्य गुणस्य बलादेव भवति कर्मभेदकत्वं यथा वाजिनादेः। प्रकृते त्रेधा तण्डुलानिति वाक्येन वार्तिकरीत्या संयुक्तस्य द्रव्यदेवतादेः यागेभ्योऽपनयविधानात्तत्साकाङ्क्षयागेषु द्रव्यदेवतान्तरनिवेशोपपत्तेर्न यागान्तरा-पादकत्वमिति वाक्यभेदपरिहाराय प्रकृतयागाश्रितद्रव्यदेवताविशिष्टभावनान्तरापादकत्वमेव युक्तमित्याशङ्कां परिहरन् कर्मान्तरत्वसाधनोपसंहारमुखेन त्रेधावाक्यार्थं निरूपयति—**अतः पञ्चशरावबदेवेति।** यथा पञ्चशराववाक्ये वाक्भेदापादकगुणात् कर्मान्तरविधिस्साधितः तद्वदिहापीत्यर्थः। **तत्प्रकृतिभूतेति।** मध्यमसाध्यपुरोडाशस्य स्थविष्ठादिसाध्यचर्वोश्च प्रकृतिभूतेत्यर्थः। **प्रयोगान्तः पातितयेति।** त्रेधावाक्यं हि मध्यमादिभावेन तण्डुलानां त्रेधाविभागविधानपरं यदि तदा मध्यमादिवाक्यश्रुतसिद्धवन्निर्देशानुपपत्त्या तद्विभागस्य सिद्धत्वात् व्यर्थमापद्येतेति हेतोः सिद्धान्तिना तण्डुलपदं संयुक्तमात्रोपलक्षणमङ्गीकृत्य यागसयुक्तस्य द्रव्यदेवतादेः यागेभ्योऽपनयविधिपरं; त्रेधापदं च दर्शयागानां त्रित्वात् तदीयद्रव्यदेवतागत-नित्यप्राप्तत्रित्वानुवादकमित्युच्यते। तथा च द्रव्यदेवतासाकाङ्क्षतया विद्यमानान् शुद्धान् यागानेवाग्रिमवाक्यविहितद्रव्यदेवताविशिष्टभावनाः यागरूपाश्रयापेक्षिण्यो ह्याश्रयत्वेन गृह्णन्ति। इन्द्रवाय्वादिदेवताकद्रव्यसंस्कारकग्रहणभावनाः सोमयागं प्रकृतमिव न त्वप्रकृतान्, प्रकृत-हानाप्रकृतकल्पनाप्रसङ्गादित्येव त्रेधावाक्यबलेन प्रकृतयागभेदभावनाभेदौ सिद्ध्यतः, तदेव तु त्रेधावाक्यं मध्यमादिभावेन प्रयोगान्तःपातितया त्रेधाविभागविधायकत्वेन सार्थकमेव। अन्यथा लोकसिद्धमध्यमादिग्रहणापत्त्या नियमेन प्रकृततण्डुलानां त्रेधा विभागाप्राप्तेरतः

**पातितया विधीयते। न तु देवतापनयादि। तथात्वे लक्षणापत्तेः** देवतान्तरविधिबलेनैव

---

तण्डुलपदस्य भवन्मते लक्षणापत्त्या न द्रव्यदेवतापनयविधायकत्वं, न तरां तद्बलेन मध्यमादि-वाक्यानां विशिष्टभावनान्तरविधायकत्वमपि तु तत्तद्द्रव्यदेवताविशिष्टकर्मान्तरत्रयविधायकत्व-मेवेति भावः। यथा सामान्यतो वक्ष्यमाणदेवतान्तरसंयोजनरूपविधिबलादेव पूर्वदेव-तापनयस्यार्थात्प्राप्तिः तथैव देवतापनयविधिपक्षेऽपि विशेषतो देवतान्तरविधिबलादेव तस्यार्थात्प्राप्तिः सम्भवत्येवेति। प्रत्युत सिद्धान्त एव देवतापनयविधिवैयर्थ्यापत्तिरित्याह— **देवतान्तरविधिबलेनेति।**

**एतेन यदत्र विधिरसायनकृता**

नास्त्येवोपांशुयाजो दधिशृतसहितः पौर्णमास्यां विधानात्
तद्वश्यं दर्शतन्त्रे पठितमपि ऋगाम्नातयाज्यानुवाक्यम्।
कृत्वाचिन्तैव तस्य क्वचिदधिकरणे दार्शिकेष्वस्तितोक्तिः
तत्त्रेधा तण्डुलानित्यनुवदनमतस्तत्र नाप्याप्तिरस्ति॥

तर्हि स्याद्देवताभ्यः प्रविभजनविधिस्तत्र तद्गामिनीभ्यो
न स्यादेवं हि सर्वास्वपि दधिशृतयोर्देवतास्वन्वयः स्यात्।
तस्मिन् वाक्ये विधेयं विभजनमिति चेत् वक्ष्यमाणप्रकारं
न स्यादौपांशुयाजे हविषि तदिति तत्सर्वथा व्यर्थमेव॥

इति श्लोकद्वयेन सिद्धन्ते त्रेधावाक्यस्य सर्वथाऽनुवादत्वमेवापादयता कर्मान्तरत्वपक्षेऽपि तस्यानुवादत्वमेवेति प्रतिपादितम्। **तथाहि**—सिद्धान्ते त्रेधा तण्डुलानित्यस्य विधिरर्थद्वय-पक्षेऽपि तण्डुलदधिशृतेषु न तस्य चारितार्थ्यं देवतान्तरसयोजनेन पूर्वदेवतापनयस्य विशेषतो विभजनेन सामान्यविभागस्याप्यर्थप्राप्तत्वात्। किन्तु तण्डुलशब्देन दार्शिकहविर्मात्रोप-लक्षकत्वेन लक्ष्यमाणोपांशुयाजाज्यस्याग्रे देवतान्तरसंयोजनाभावे पूर्वदेवतापनयस्य सामान्य-विभजनस्य चार्थप्राप्त्यभावात्। अत एव देवतापनयपक्षे उपांशुयाजाज्यस्य पूर्वदेवताया अपनयात देवतान्तरस्य चाविधानात् देवतान्तरेण यष्टुमशक्यत्वात् उपांशुयाजस्य लोपः सामान्यविभजनपक्षे। उपांशुयाजाज्यस्यापि सामान्येन वक्ष्यमाणदेवताभ्यो निर्दिष्टत्वादग्रे

देवतान्तरविशेषस्यानिर्देशात्[1] वक्ष्यमाणाभ्यः सर्वेभ्यो देवताभ्यः विभज्य दातव्यमिति भाष्यटुप्टीयोकरूपांशुयाजे च वचनाद्यथाप्रकृतीत्यभ्युदयेष्ट्यधिकरणोत्तराधिकरणे बह्वृच-ब्राह्मणानुरोधेनामावास्यायामुपांशुयाजसत्वमभ्युपेत्य प्रयोजनं निरूपितम् ।

न चैतद्वास्तवं त्रेधावाक्यस्य प्रयोजनं सम्भवति पौर्णमास्यामेवोपांशुयाजस्य प्रत्यक्षविधि-विधेयत्वेनामावास्यायामुपांशुयाजाभावस्य दशमे समर्थनेनास्य प्रयोजनाधिकरणस्य कृत्वाचिन्ता-रूपत्वात् । अतः त्रेधावाक्यविहितापनयविधेर्नास्त्येवाभ्युदयेष्टेरकर्मान्तरत्वपक्षे उपयोगः । सुतरां च कर्मान्तरत्वपक्षे । तदाहि तत्रोपांशुयाजाभावात्तण्डुलादीनां च प्रकृते स्थितानां ग्रहणे प्रमाणाभावेन लोकसिद्धानामेव ग्रहणात्तेषु पूर्वदेवतापनयापेक्षाभावात् । न चास्मिन् पक्षेऽमावास्यायां उपांशुयाजसत्वमभ्युपेत्य तदीयाज्यसाधारण्येन तण्डुलपदोपलक्षितदार्शिकहविषां कर्मान्तररूपाभ्युदयेष्टिदेवताभ्यो हि सामान्यतः संयोजनरूपविभजनविधानस्योपांशुयाजाज्ये सार्थक्यमिति वाच्यम् । तथात्वे प्रकृतहविषां अविशेषेणाभ्युदयेष्टिदेवताभ्यो विभजनमिति पक्षे उपांशुयाजाज्यस्येव दधिशृतयोरपि वक्ष्यमाणाभ्युदयेष्टिसर्वदेवतान्वयापत्तेः । उत्तरत्र तयोर्विशिष्य सङ्कीर्तनं तु स्थविष्ठैरणिष्ठैश्च तण्डुलैः सह श्रयणनियमार्थमित्यस्यापि वक्तुं शक्यत्वात् । यदि वक्ष्यमाणप्रकारमेव विभजनं विधीयत इति दधिशृतयोः देवताविशेष-व्यवस्था न भज्यते इति पक्षस्तदा उपांशुयाजाज्ये वक्ष्यमाणदेवताप्रकारो नास्तीति विभजनवाक्यं न तद्विषयत्वेनार्थवद्भवेत् ।

एतच्चाकर्मान्तरत्वसिद्धान्ते संयोजनरूपविभजनविधिपक्षाश्रयणेऽपि दूषणं समानं द्रष्टव्यम् । अतस्सिद्धान्ते कर्मान्तरत्वपूर्वपक्षे वा त्रेधावाक्यस्य मध्यमादिवाक्यलभ्यमध्यमादिभेदत्रयेण प्राप्तविभागानुवादकत्वमेवेति तदपास्तम् । सिद्धान्ते वक्ष्यमाणविधया कर्मान्तरत्वपूर्वपक्षे वाक्यस्य मध्यमादिभेदत्रयेण प्राप्तविभागानुवादकपूर्वोक्तरीत्या च मध्यमादिभावेन विभागविधाय-कत्वेनार्थवत्त्वोपपत्त्याऽनुवादकत्वानापत्तेः । न चैवं प्रकारेण विभागविधायकतया सिद्धान्तेऽर्थवत्वमुपपादयितुं शक्यं; तथात्वे दार्शिकहविषामेव ग्रहणे प्रमाणाभावेन मध्यमादि-वाक्यैस्तदुद्देशेन वाक्यैर्दैवताविधानमिति सिद्धान्तानुपपत्तेः । ननु हि तदानीमपनयविध्यभावे देवतासाकाङ्क्षाणि दार्शिकहवींषि भवन्ति यदाकाङ्क्षया तत्र देवतान्तरविधानं स्यात् ।

1. P. उद्देशात्

**तत्सिद्धावपनयविधिवैयर्थ्याच्च।** अत एव **संस्कारविधिबलादेव प्रसिद्धत्वात् 'ये मध्यमाः'**

---

**यत्त्वत्यन्तविशेषणार्थविचारे विधिरसायने** अपनीतपूर्वदेवतानां दार्शिकहविषां देवताकाङ्क्षाऽभावेन तत्संयोजनानुपपत्तिमाशङ्क्य पूर्वदेवतापनयाकाङ्क्षाविरहेऽपि तदपनयवद्देवतान्तरसंयोजनाकाङ्क्षाविरहेपि तत्संयोजनस्य वचनबलादुपपत्तेः सामान्यतो विभजनपक्षे विना पूर्वदेवतापनयं देवतान्तरसंयोजनस्यात एव पूर्वदेवतापनयस्यार्थसिद्धतायाश्च सम्प्रतिपत्तेश्चेति परिहृतं तद्देवतान्तरापनयस्यार्थसिद्धत्वमित्यर्थस्य असिद्धेरुपेक्ष्यम्। यदा तु देवतान्तराकाङ्क्षाभावेऽपि अपूर्वदेवताभिधानं सम्भवत्येवेति समुपपादितं तत्सिद्धान्तनिरूपणे पूज्यपादैर्निराकरिष्यते।

स्थिते एवं यदत्र मूले देवतान्तरविधिबलेनापनयविध्यानर्थक्यापादनं तत्प्राचीनसिद्धान्तरीत्या न तु वास्तवतयेति ज्ञेयम्। अतस्सिद्धान्ते आवश्यकापनयविधायकतया कर्मान्तरत्वपक्षे प्रयोगान्तः पातित्वेन विभागविधायकतया च त्रेधावाक्यस्यार्थवत्वं भवत्येवेति नोभयपक्षेऽपि तस्यानुवादकत्वापादनं युक्तमिति भावः। ननु ये मध्यमा इति प्रकृतपरामर्शकयच्छब्देन प्रकृतानां दार्शिकतण्डुलानामेव मध्यमादिभेदभिन्नानां कर्मान्तरपक्षे करणत्वेनान्वयात् तदन्यथानुपपत्तिकल्पितो मध्यमादिविभागोऽन्तः प्रयोगं सिद्ध्यत्येवेति विभागविधिवैयर्थ्यं दुरुद्धरमित्याशङ्कां परिहरन्नाह—**अत एव संस्कारेति।** **अयमर्थः**—यच्छब्दो हि प्रकृतमात्रस्य परामर्शको न तु दार्शिकत्वेन परामर्शकः तथा च यथा दार्शिकानां प्रकृतत्वेन ग्रहणं एवं लौकिकानामपि समाहृतानां[1] तण्डुलानां अन्तः प्रयोगं मध्यमादिविभागेन सस्कृतानामस्त्येव प्रकृतत्वमिति लौकिकानामेव विभागसंस्कृतानां ग्रहणेन वाक्यभेदानापादकविशिष्टकर्मान्तरविधिसम्भवेन वाक्यभेदापादकं दार्शिकतण्डुलग्रहणं युक्तमिति। सस्कारशब्दश्च मूले विभागरूपसंस्कारपरः।

**एतेन** पूर्वपक्षेपि मध्यमादिवाक्यश्रुतयच्छब्दबलात् प्रकृतयागीयमध्यमादीनामेव करणत्वं दधिशृतयोस्त्वधिकरणत्वाल्लौकिकयोरेव तदिति **प्रकाशकारोक्तमपास्तम्।** यच्छब्देन विभागसंस्कृततण्डुलपरामर्शेऽपि प्रकृतयागीयतण्डुलानामेव विभागे उद्देश्यत्वे मानाभावात्।

**वस्तुतस्तु** वक्ष्यमाणलिङ्गदर्शनालोचनेन शक्यत एव विभागेऽपि प्रकृतानामेव तेषां ग्रहणमिति मत्वेव तत्तद्द्रव्येत्यत्र न लौकिकपदोपादानं **पूज्यपादानामिति** ध्येयम्। अतः

---

1. P. adds अपि

इति यच्छब्दोऽप्यनुवादः। दधिशृतयोश्च न मन्मतेऽप्यधिकरणत्वेन विधिः। तथात्वे प्रणीताकार्यापन्नत्वेन सह श्रपणस्यार्थसिद्धत्वादभ्युदितेष्टिप्रकरणस्थ सहश्रपयतीत्येतद्वाक्यवैयर्थ्यापत्तेः। अनेन हि न सर्वेषां भिन्नदेवताकानामपि हविषामेककालावच्छेदेन सहश्रपणं विधीयते। एकप्रयोगविधिवशेनैव तत्प्राप्तेः। अतस्तेन सम्प्रतिपन्नदेवताकानां सहश्रपणं विधीयते। अत एवैतद्वैयर्थ्यभियैवोत्पत्तिवाक्ये दधिशृतयोर्नाधिकरणत्वेन विधिः किन्तु करणत्वेनैव। लक्षणाऽपि सिद्धान्तवन्न दोषः। अतश्चरुत्वाधिकरणत्वयोरर्थप्राप्तत्वादेवाविधानम्। एतेषां च नैमित्तिकानां कर्मणां स्वकाले क्रियमाण-

---

पञ्चशरावददेव भिन्नं कर्मत्रयं; इतरथा पञ्चशराववाक्येपि वाक्यभेदाङ्गीकारेण कर्मान्तरत्वानापत्तेरिति सिद्धम्। यत्तु कैश्चित् अभ्युदयेष्टिप्रकरणे सह श्रययतीति वचनाम्नानात्तस्य सम्प्रतिपन्नदेवताकाभ्युदयेष्टिसम्बन्धहविःश्रपणविधानपरत्वेनैव सार्थक्यादवश्यमभ्युदयेष्टौ सम्प्रतिपन्नदेवताकहविष्कत्वमभ्युपेयं; तच्च न मध्यमवाक्येन विहितदातृत्वगुणविशिष्टाग्निदेवतासम्बन्धेन भवति तत्र द्रव्यान्तरस्यानुपात्तत्वात्। अपि तु स्थविष्ठवाक्ययोः दधिशृतद्रव्यान्तराम्नानात् तत्र देवतासम्बन्धेन सम्भावितमपि तद्दधिशृतयोरधिकरणत्वेनान्वये न घटते इत्यगत्या सप्तम्या द्वितीयार्थे लक्षणामङ्गीकृत्य स्थविष्ठाणिष्ठयोरिव दधिशृतयोरप्युद्देश्यत्वस्यावश्याङ्गीकारे बलादापतन्नुद्देश्यानेकत्वप्रयुक्तवाक्यभेदोऽङ्गीक्रियते। पञ्चशराववाक्ये तु वाक्यभेदाङ्गीकारे प्रमाणाभावात् कर्मान्तरत्वमेवेति वैषम्यमुपपादितं तत्परिहरति—दधिशृतयोश्चेति। यदि प्राचां रीत्या कर्मान्तरपक्षे दधिशृतयोरधिकरणत्वमङ्गीक्रियते तदा सह श्रपयतीति वाक्यवैयर्थ्यापत्तिमूलो वाक्यभेदोऽपि स्वीक्रियते न त्वेवमधिकरणत्वमङ्गीक्रियत इति वैषम्यं मन्मते इत्यनेनोक्तम्। सिद्धान्तवदिति। यथा सिद्धान्ते सप्तम्या उद्देश्यत्वे लक्षणा तथा ममापि करणत्वे लक्षणेति समानमित्यर्थः। अन्यदपि सिद्धान्तिना समानं दर्शयति—अतश्चरुत्वे इति। अत्र शास्त्रदीपिकायां पूर्वपक्षोपसंहारे तस्मात्कर्मान्तरमेवाकालोपक्रमप्रायश्चित्तत्वेन विधीयते इति लिखनादकालोपक्रमस्य पुरुषापराधजन्यत्वात्तत्प्रायश्चित्तत्वेन विधीयमानस्य पुरुषार्थत्वं भाति। तथा तन्त्ररत्ने प्रकृतं तु कर्मकाले प्रवृत्तं लुप्यत इति लिखनात् कर्मणो लोपात्तदङ्गत्वमिति नास्तीति प्रतीयते तन्निरासायाह—एतेषां चेति। तथाचाकालोपक्रान्तस्य लोपेऽपि नित्यामावास्याविधिव्यतिक्रमायोगात् स्वकाले कर्तव्य एव दर्श इति तदङ्गत्वमेव पञ्चशरावस्येव प्रकरणाद्युक्तम्। एतेन तत इदं प्रायश्चित्तं कृत्वा परेद्युर्दर्शकर्म नानुष्ठेयमिति पूर्वपक्षे अधिकरणमालोक्तमपास्तमित्यर्थः। प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वेषु निर्घातः समुच्चयस्त्वदोषार्थेषु इति द्वादशाध्यायस्थतृतीयपादपूर्वोत्तरसूत्राभ्यां कर्मवैगुण्य-

दर्शाङ्गत्वं प्रकरणात् तच्चाकालोपक्रमनिमित्तदोषनिर्घातार्थत्वाच्च द्वादशाधिकरणन्यायेन विकल्प्येत ॥

यदि तु अकालेऽनुष्ठितस्याविहितत्वेन वृथा चेष्टारूपत्वात् विहितानुष्ठानविषिद्धानुष्ठानप्रयुक्तदोषाभावेन तन्निर्घातार्थत्वानुपपत्तेरदृष्टार्थत्वमेवैतेषां नैमित्तिकानामिति विभाव्यते तदाऽस्तु समुच्चयः। यस्त्वग्नेरायतनाद्बहिर्नयनप्रयुक्तः प्रणयनपक्षे दोषो नासौ दर्शवैगुण्यापादक इति न तत्रादायाप्यस्य दोषनिर्घातार्थत्वमिति प्राप्ते—

भेदकप्रमाणाभावात् न कर्मान्तरत्वम्। न च वाक्यभेदापादको गुणः द्रव्योद्देशेन देवतामात्रविधानेन तस्य वाक्यभेदानापादकत्वात्। देवतायाश्चोपपादकीभूतयागापेक्षायामैन्द्रवायवादिवत्प्रकृतानामेवोपपादकत्वोपपत्तेः भवदुक्तरीत्यैव चरुत्वाधिकरणत्वयोरर्थप्राप्तत्वादनुवादः। यच्छब्दप्रयोगादुद्देश्यत्वाच्च मध्यमादेर्दध्यादेश्च प्रकृतस्यैव ग्रहणम्। देवताकारकस्यैकत्वाच्च परस्परविशेष्यविशेषणभावेनाग्निपदस्य तात्पर्यग्राहकत्वमङ्गीकृत्यैकपदोपादानेन वा विशिष्टस्य व्युत्पन्नत्वान्न विधेयानेकता। यथाचाष्टाकपालत्वस्य प्राप्तिस्तथाऽसन्नयतोऽधिकारप्रस्तावे वक्ष्यते। अन्त्ययोरुद्देश्यानेकत्वनिमित्तो वाक्यभेदः परमगत्या स्वीक्रियते इति मूलानुयायिनः ॥

---

समाधानार्थानि यान्यनेकानि प्रायश्चित्तानि तेषां विकल्पः। यानि त्वदृष्टार्थानि न कर्मवैगुण्यनिर्घातार्थानि अनेकानि तेषामदृष्टार्थत्वात् समुच्चय इति निर्णीतं तेन न्यायेनेहापि विकल्पस्त्रयाणां कर्मणामथवा समुच्चय इति सोपपत्तिकं निरूपयति—तच्चेति। अविहितत्वेनेति। दर्शावच्छिन्नजीवननिमित्तस्यैव विहितत्वेनास्याविहितत्वमित्यर्थः। वस्तुतस्तु दोषनिर्घातार्थत्वपक्षेऽपि पूर्वतण्डुलानां त्रेधाविभागेन संस्कृतानां प्रयोजनापेक्षणात् दृष्टार्थत्वाच्च त्रयाणां कर्मणां समुच्चयस्सुलभ एव। यत्त्वमावास्यायां द्व्यहसाध्यत्वात् पूर्वेद्युरमावास्यायां इति श्रुत्यावेदिकरणे प्रणयनस्य वृथानुष्ठानरूपत्वेन अग्नेरायतनाद्बहिर्नयनप्रयुक्तदोषस्य सत्वात् तत्साधानार्थत्वेनैषां दोषनिर्घातार्थत्वं प्रकाशकारैरुक्तं तन्निरस्यति—यस्त्विति। दर्शवैगुण्यापादक इति। तत्राग्नौ दोषापादकत्वेऽपि दर्शवैगुण्यानापादकत्वेन तद्दोषनिर्घातार्थत्वानुपपत्तेस्तत्र प्रायश्चित्तान्तराम्नानेनैव तद्दोषापाकरणसम्भवेनानपेक्षितविधानापत्तेरकाले कर्मोपक्रमेण कर्मगतदोषपरिहारार्थं तदपेक्षया तद्विधाने युक्तेपि तस्य दोषजनकत्वाभावेन तन्निमित्तप्रायश्चित्तस्य क्रतूपकारजननद्वारैव क्रत्वङ्गत्वे नादृष्टार्थत्वमित्यर्थः। अतः पञ्चशरावदेव कर्मान्तरमभ्युदयेष्टिः। अस्मिंश्च पूर्वपक्षे असन्नयतोऽधिकारो नासुलभः सान्नाय्ययागीयदधिशृतयोः उद्देश्यत्वस्य साधनत्वस्य वाऽनभ्युपगमेन

वस्तुतस्तु स्वीकारे प्रमाणाभावात् पञ्चशराववाक्येऽपि चेन्द्रदेवतोद्देशेन त्वत्पक्षे नैमित्तिकपञ्चशरावौदनरूपैककारकविधानापत्तेः प्रकृते उद्देश्यानेकत्वाङ्गीकारे च तत्र विधेयानेकत्वस्वीकारस्य वारयितुमशक्यत्वात् द्रव्योद्देशेन देवतामात्रविधिपक्षानुपपत्तेर्द्रव्यदेवताविशिष्टभावनान्तरविधिपक्षेणैव सिद्धान्तोपपत्तिः। न चास्मिन्नपि पक्षे उत्पत्त्यन्वयिनो गुणस्य वाजिनवद्यागभेदकत्वापत्तिः, भावनामात्रभेदकत्वेऽपि वा पञ्चशरावावाक्येऽपि तदापत्तिरिति वाच्यं, यच्छब्देन पूर्वपरामर्शकेन पूर्वयागीयत्वोपस्थित्या यागान्तरप्रमापकत्वानुपपत्तेः। अत एव वाक्यभेदपरिहारार्थं परं भावनाभेदमात्रमभ्युपगम्यते। वाजिनपञ्चशरावादौ तु तदभावाद्यागान्तरत्वमिति विशेषः। अत एव धर्मिग्राहकप्रमाणेन यागैकत्वेऽवधारिते पूर्वद्रव्यावरुद्धे तस्मिन् द्रव्यान्तरयोर्दधिपयसोर्विकल्पेन समुच्चयेन वा निवेशायोगात्तयोरपि तत्तद्यागीययोरेव विधेयभावनाविशेषणत्वम्। अतश्च द्रव्य-

---

लौकिकोपादानेनाथवोत्तरवाक्यविहितयागयोर्दधिपयोद्रव्यकत्वेन सान्नाय्यविकारत्वात् तद्धर्माणां प्राप्तेस्तद्धर्मवतोर्दध्यन्तरपयोन्तरयोरुत्पत्त्या वा तस्याप्यनुष्ठानसम्भवात्।

यत्तु भाट्टालङ्कारकृता प्रकृतयागाभेदसाधनायोक्तं—अकाले प्रारब्धानां दर्शयागानां वृथाचेष्टारूपत्वेनाविहितत्वात् निष्फलत्वेनाकर्तव्यतापत्तौ तण्डुलवाक्येन निष्फलप्रकृतयागोद्देशेन विधानानुपपत्तेरगत्याऽस्यैव तण्डुलविधेः अपनीतपूर्वदेवाविधानार्थं प्रवृत्तेषूत्तरवाक्येषु बलादापतन् वाक्यभेदोऽपीष्यते इति तदप्यपास्तम्। निष्फलयागोद्देशेन विभागविधानासम्भवेऽनिष्फलतापादकवैगुण्यपरिजिहीर्षायाश्च करिष्यमाणतद्दर्शप्रयोगाङ्गत्वेन त्रेधाविभागकरणपूर्वककर्मान्तरानुष्ठानसम्भवेन कर्मान्तरपक्षेप्युपपादितदिशा तण्डुलवाक्यसार्थक्येनापनयविधेरेव मानाभावात्। अतो युक्तं कर्मान्तरत्वम्।

अत्र च प्रायस्सिद्धान्तो निर्युक्तिकत्वात्पूर्वपक्षे दूषित एव तथापि पार्थक्येन प्राचां सिद्धान्तयुक्तीर्दर्शयता तन्त्ररत्नकारादिभिः विशिष्टभावनान्तरविधिपक्षात् सामान्यविभागविधिपक्षरूपात् तृतीयाच्च पक्षात् प्रकृतयागीयद्रव्योद्देशेन देवतान्तरविधिपक्षस्य युक्तत्वमुक्तं न सम्भवतीति प्रतिपाद्यते। तत्र भावनान्तरविधानं त्रेधावाक्यस्यापनयविधायकत्वाभावे वैयर्थ्यमात्रं च पूर्वपक्ष्युक्तदूषणपरिहारेण सिद्धान्तोपपादनमूलं साधनीयमित्येतावन्मात्रमेव कर्तव्यमिति स्पष्टत्वात् पूर्वपक्षोपसंहारग्रन्थानन्तरसिद्धान्तोपपादनग्रन्थः प्रतिपदं न व्याख्यायते। यच्छब्देनेति। त्रेधावाक्यवैयर्थ्यानुपपत्त्या सिद्धान्तोपपत्तिर्युक्त्यन्तरतयाऽनुपदमेव वक्ष्यते। तत्र

च प्रयोगान्तः पातिद्विभागविधायकत्वं पूर्वपक्ष्युक्तं खण्डयिष्यते। तथा च विभागसंस्कृतत्वे नोद्देश्यताप्रसिद्धिर्न सम्भवतीति वक्ष्यमाणमुररीकृत्य यच्छब्दानुपपत्तिपरिहारो दार्शिकहविः परामर्शं विना न सम्भवतीति ह्यभिप्रायेण यच्छब्दबलादेव सिद्धान्तपक्षः प्रथमतः साध्यते। तत्र द्रव्यदेवताविशिष्टभावनान्तरविधाने यच्छब्देन दार्शिकमध्यमानां परामर्शेन उपस्थितदर्शयागस्यैव भावनोपपादकत्वं लाघवात्। **यद्यपि** ऐन्द्रवायवादिवाक्येष्विव यच्छब्दाभावेऽपि प्रकरणमात्रेणोपस्थितसर्वदर्शयागस्योपपादकत्वं नासुलभं, **तथापि** वाजिनपञ्चशराववैलक्षण्योपपादनदत्तदृष्ट्या उपक्रान्तव्यक्त्युपपादकत्वविवक्षया यच्छब्द एव भारो दत्त इति भावः।

अस्यानन्तरं **वस्तुतस्त्वि**त्यादिग्रन्थः।

तस्याभिप्रायोऽसन्नयतोऽधिकारसाधनाधिकरणे वक्ष्यते।

**स्यादेतत्**—विशिष्टभावनान्तरविधानपक्षे प्रकरणोपस्थितिमात्रेण सर्वदर्शयागानामुपपादकत्वं उत यच्छब्देनोपस्थितविशेषेण?आद्ये पञ्चशरावववाक्येऽपि भावनान्तरत्वापत्तिः। तत्रापि प्रकरणात् सर्वयागानां अवान्तरप्रकरणात सान्नाय्ययागस्य वा उपपादकत्वापत्तेः। द्वितीये मध्यमादिसमानाधिकरणयच्छब्देन पूर्वप्रकृततण्डुलोपस्थितिद्वारोपस्थिताग्नेययागस्योपपादकत्वसम्भवेऽपि सान्नाय्ययागोपस्थापकाभावे विशेषाभावे उपपादकत्वानापत्तेः। अत एव वाक्यान्मध्यमादिद्रव्यकाग्नेययागस्यैव भावनोपपादकत्वोपपत्तेः तत्रैव कथञ्चित्सान्नाय्ययागीययोरथवा लौकिकयोरेव दधिपयसोरधिकरणत्वमात्रमेवापद्यते।

**यदि** तु सम्प्रतिपन्नदेवताकद्रव्याभावे सह श्रपयतीतिं वचनवैयर्थ्यापत्तेः तद्बलान्न दधिशृतयोरधिकरणत्वं किन्तु द्रव्यत्वात् करणत्वमित्युच्येत **तदाऽपि** अग्नेययाग एव तयोर्द्रव्यत्वापत्त्या तत्रैव सम्प्रतिपन्नदेवताकत्वमुपपद्यत एवेति न बाधकम्। किञ्च यागैकत्वाववारणोत्तरं पूर्वद्रव्यावरुद्धे यागे द्रव्यान्तरभूतयोर्दधिशृतयोर्निवेशायोगात् सान्नाय्ययागीययोरेव तयोर्द्रव्यत्वेन विधेयभावनाविशेषणत्वमित्युच्यते तर्हि पूर्वदेवतावरुद्धे तस्मिन् यागे देवतान्तरविधानमप्यसङ्गतम्। यदि तु वचनबलादेव देवतान्तरसम्बन्धस्तर्हि तद्बलाद्द्रव्यान्तरसम्बन्धोऽपि नानुपपन्नः। प्रत्युत पूर्वदेवतावरुद्धत्वेन तयोरग्रहणस्यैवापत्त्या लौकिकयोरेव ग्रहणापत्तिः। तण्डुलेषु तु पूर्वदेवतावरुद्धेष्वपि यच्छब्देनोपस्थितत्वादपूर्वदेवतासम्बन्धो नानुपपन्नः इति वैषम्यम्। एवं चाग्नेयमात्रस्यैव निमित्ते देवताद्रव्यविकारेणाभ्यासत्वं सम्पाद्य तदनन्तरं च यथावस्थितपूर्वद्रव्येण सान्नाय्ययागानुष्ठानापत्तिरिति नात्र विशिष्टभावनान्तरविधानमाश्रित्यापि सिद्धान्तसिद्धिर्यच्छब्दस्य पशुकामार्थेष्टिवाक्य इव कर्मान्तरत्व-

देवताविशिष्टभावनान्तरविधानेऽपि पूर्वयागीयद्रव्याणां मध्यमादीनामेतद्भावनां प्रत्युपादेयत्वान्न लौकिकमध्यमादिग्रहणप्रसक्तिः न वा लौकिकदध्यादिग्रहणम्। भवदुक्तरीत्यैव चरुत्वाधिकरणत्वयोरनुवादत्वेन ममाप्यविधेयत्वात्॥

वस्तुतस्तु स्थविष्ठादिप्रकृतिकपुरोडाशेन दध्यादेस्सहश्रपणापत्तेर्न चरुत्वप्राप्तिरिति तद्विधिरावश्यक एव दध्यादिना च सहश्रपणविधानात्तदधिकरणत्वं परमनुवादः। सर्वथा न लौकिकग्रहणम्। किञ्च 'त्रेधा तण्डुलान्विभजेत्' इत्यस्यापनयविधित्वादप्ययमर्थो निर्णीयते। तथाहि—न तावदत्र तण्डुलानां मध्यमादिभावेन त्रेधाविभागो विधीयते तस्य मध्यमादिवाक्यैरेव प्राप्तत्वात्। न चास्मन्मते चित्रेष्टितण्डुलवत्पुरोडाशादिप्रकृतित्वेनापि लोकसिद्धानामेव मध्यमादीनां तण्डुलानां ग्राह्यत्वापत्तेः प्रयोगान्तःपातिविभागसिद्धयर्थं विधिरर्थवानिति वाच्यं, लोकसिद्धमध्यमादिग्रहणे तण्डुलप्रकृतिभूतव्रीहिसंस्कारकनिर्वापप्राप्त्यभावेन महारात्र एव हवींषि निर्वपेदित्यनुवादानुपपत्तेः व्रीहीणामेवावश्योपादेयतया विभागस्याप्यर्थप्राप्तत्वाच्छ्रपणसत्त्वेन चित्रेष्टिन्यायाभावाच्च। अतस्त्रेधा तण्डुलानिति पदद्वयमानर्थक्यभिया प्रकृतहविः परमङ्गीकृत्य तस्यापरित्यक्तयागान्वयस्यैव प्रकृतदेवताभ्योऽपनयो विधीयते। आनर्थक्यभिया च लक्षणाऽप्यदोषः। तदपनये च प्रकृतदेवतानां

---

प्रतिबन्धकत्वासिद्धिश्चेत्यभिप्रेत्यापनयविधिबलादेव सिद्धान्तोपपत्तिमनुसरति—किञ्चेति। ननु महारात्रे इत्यनेन लोकसिद्धमध्यमादिहविषामेवास्तु निर्वाप इत्यत आह—व्रीहिसंस्कारकेति। निर्वापस्य तण्डुलनिर्वृत्तिद्वाराऽपूर्वसाधनसंस्कारकत्वान्न तण्डुलावस्थायां निर्वापप्राप्तिरित्यर्थः। मध्यमादिवाक्येषु शाखान्तरे कुर्यादिति पाठान्निर्वापानुवादानुपपत्तिं साधयितुं महारात्रवाक्यपर्यन्तानुधावनं कृतम्। अत एवावश्यकर्तव्यतण्डुलानां मध्यमादिवाक्यैरेवार्थतो विभागस्यापि प्राप्तिमाह—विभागस्यापीति। पदद्वयमिति। दर्शयागानां त्रित्वात् त्रेधापदमनुवाद इति तन्त्ररत्नकारोक्तौ उपांशुयाजस्यापि अमावास्यायां सत्त्वाद्यागत्रैविध्येन हविस्त्रैविध्यं न प्राप्नोतीत्यनुवादासम्भवदूषणमभिप्रेत्य लक्षणयैव प्रकृतहविर्मात्रपरेण पदद्वयेनोपांशुयाजाज्यस्यापि सङ्ग्रहार्थं पदद्वयमित्युक्तं द्रष्टव्यम्। ननु हविषो देवतासम्बन्धापनयेऽपि यागदेवतासम्बन्धापनयाभावात् पूर्वदेवतावरुद्धेषु तेषु देवतान्तरनिवेशो न सम्भवतीत्याशङ्कां परिहरति—तदपनये चेति। द्रव्येण सह देवतायाश्च सम्बन्धस्य स्वत्यागसमानकालीनोच्चारणकर्मत्वरूपातिरिक्तस्य शब्दे, तादृशशब्दप्रतिपाद्यत्वातिरिक्तस्यार्थे वा निरूपयितुमशक्यत्वात् तस्मिन्नेव सम्बन्धे द्रव्येण

**यागसम्बन्धोऽप्यपनीतो भवति।** न चायम**पनयोऽपि नैमित्तिकदेवतान्तरविधिबलादेव सिद्ध इति विधिवैयर्थ्यं, एतद्विध्यभावे पूर्वयागस्य पूर्वदेवताऽवरुद्धतया देवतान्तरानपेक्षत्वेन तत्र नैमित्तिकदेवतान्तरस्य तद्विशिष्टभावनान्तरस्य वा विधानानुपपत्तेः।** नैमित्तिकस्य हि **निरवकाशतया नित्यबाधकत्वं वक्ष्यते। यागान्तरविधानेनैव सावकाशत्वोपपत्तेर्न निरवकाशता। अत एव यत्र यागान्तरविध्यसम्भवः** प्रमाणान्तरप्रमितः **तत्र फलचमसादौ निरवकाशेन नैमित्तिकेन नित्यापनयाभावेऽपि नित्यस्य बाधः।** अत एवापनय**विध्यभावादेव पञ्चशरावबाक्ये कर्मान्तरं "यः पशुकामस्स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान्विष्णवे शिपिविष्टाय** श्रृते **चरुं ये स्थविष्ठास्तानग्नये सनिमते**

---

सह निषिद्धे अर्थात् स्वसमानकालीनोच्चारणकर्मत्वरूपदेवतात्वस्य यागनिरूपितस्य निषेधात् सिद्ध्यत्येव तस्या यागसम्बन्धापनयः।

**एतेन** विशिष्टभावनापक्षे देवतायामपि यागसम्बन्धापनयसिद्ध्यर्थं तण्डुलपदस्य संयुक्तद्रव्यदेवतापर्यन्तं लक्षणान्तरविधानत्वात्द्रव्यदेवतयोरुभयोरपि यागापनयविधिपरत्वं त्रेधावाक्यस्य वार्तिके तत्र **तन्त्ररत्ने** चोपपादितं **तदपास्तम्।** पूर्वरीत्या देवतायां यागापनयस्य सिद्धत्वेन तण्डुलपदेन सजातीयहविर्लक्षणायामपि विजातीयदेवतापर्यन्तलक्षणाश्रयणे मानाभावात् प्रयोजनाभावाच्च। अतो भाष्यरीत्या संयुक्तहविर्मात्रपरमेव तण्डुलपदम्। तत्रापरित्यक्तयागसम्बन्धपरित्यक्तदेवतासम्बन्धानि हवींष्युद्दिश्य वक्ष्यमाणवचनैर्गुणविशिष्टदेवताविधानं भाष्ये, वाक्यभेदपरिहाराय विशिष्टभावनान्तरविधानमस्मन्मते, इत्येतावान्परं भेदः। यत्तु सामान्यविभागविधानपक्षे प्राचां रीत्या यथाऽपनयस्यार्थसिद्धत्वं तथैवापनयविधिपक्षेप्यपनयस्यार्थसिद्धत्वं देवतान्तरविधिबलादेव सिद्धमित्युभयथापि त्रेधावाक्यं व्यर्थमिति **विधिरसायन**कृतोक्तं तदनूद्य दूषयति—**न चायमिति।** न च नैमित्तिकत्वेन पूर्वदेवताबाध इत्याशङ्क्य परिहरति — **नैमित्तिकस्य हीति। प्रमाणान्तरप्रमित इति।** फलचमसवाक्ये न सोममित्यनुवादरूपप्रमाणान्तरप्रमित इत्यर्थः। पञ्चशरावे तु द्रव्यस्य नाशात्तत्र पूर्वदेवतापनयविध्यभावाच्च देवताकाङ्क्षाद्वारा प्राकृतद्रव्यापूर्वदेवताविशिष्टभावनान्तरविध्यसम्भवेन कर्मान्तरत्वमेवेति वैषम्यमाह —**अत एवापनयेति।** एतच्च सान्नाय्ये सोमयाजिनो महेन्द्रस्यापि देवतात्वेन द्रव्यनित्यप्राप्त्यभावेनानुवादत्वासम्भवमभिप्रेत्य। तत्र महेन्द्रदेवतापनयाभावे इन्द्रदेवतापञ्चशरावौदनद्रव्यविशिष्टभावनान्तरविध्यसम्भवात् कर्मान्तरत्वमेव वाक्यभेदपरिहाराय़ाङ्गीकार्यमिति तात्पर्येण द्रष्टव्यम्।

अष्टाकपालं येऽणिष्टास्तानिन्द्राय प्रदात्रे दधंश्चरुम्" इति वचनविहितायां पशुकामेष्टावपि चापनयनविध्यभावादेव कर्मान्तरं, यच्छन्दस्तु लोकप्रसिद्ध्यनुवादतयैव कथञ्चित्तत्र व्याख्येयः ॥

अतश्चापनयविधिरेव पूर्वदेवतासम्बन्धं पूर्वयागानामपनयंस्तेषां देवतान्तराकाङ्क्षोद्भावनद्वारा तत्र देवतान्तसम्बन्धमुपपादयन् क्रियान्तरत्वं प्रतिबध्नाति। प्रकृतानामेव च मध्यमादीनां दधिपयसोश्च भावनान्तरे उपादेयत्वमापादयति "यद्यगृहीतं हविरभ्युदियादेषैव व्रतचर्या यदि गृहीतं हविरभ्युदियात् अथो तर्ह्येतानेव तण्डुलान् सुफलीकृतान् दधिपयश्च'

---

अतश्चापनयविधिरेवेति। एतेन यदुक्तं विधिरसायनकृता प्रकृतदार्शिकहविषां पूर्वदेवतावरुद्धानां देवतान्तराकाङ्क्षया न तावन्मध्यमादिकेषु देवतान्तरविधिस्सम्भवति। नापि त्रेधावाक्यस्य देवतान्तरविधिपरत्वं स्पष्टं, येन तद्विधिबलादपनीतपूर्वदेवतानां हविषां देवताकाङ्क्षाऽस्तीति समर्थ्येत। किन्तु तण्डुलशब्दस्य दार्शिकहविः सामान्यलक्षकत्वकल्पनया तद्विभागप्रतियोगिनां शब्दानुपात्तानां कथञ्चित् बुद्धिस्वीकरणेन चातिक्लिष्टं कल्पनीयम्। न चैवं कल्पनायां किञ्चित्कल्पकमस्ति। न वा मध्यमादिवाक्येषु प्रकृतहविषां देवतान्तरविधिरेव तदाकाङ्क्षार्थं पूर्वदेवतापनयमपेक्षमाणस्त्रेधावाक्यस्य तत्कल्पक इति सम्भवति, वाक्यभेदप्रसङ्गेन तेषां प्रकृतहविः सम्बन्धिदेवतान्तरविधिपरत्वासिद्धेः। देवतापनयविधिबलादेव तेषां देवतान्तराकाङ्क्षया सोढ्वापि वाक्यभेदं मध्यमादिवाक्येषु देवतान्तरविधिरभ्युपगम्यते चेत् परस्पराश्रयो न निर्वर्तयितुं शक्यते। अतः कर्मान्तरत्वमेव युक्तमिति।

तदपास्तम्। मध्यमादिवाक्येषु विशिष्टभावनान्तरविधिस्वीकारेण वाक्यभेदाप्रसरात् तदपेक्षामूलकत्वेन वैयर्थ्यानुपपत्त्यैव वा त्रेधावाक्यस्यापनयविधिकल्पनायामन्योन्याश्रयाद्यनापत्तेरित्यपनयविधिरेवेत्येवकारेण सूचितम्। ततश्चानपनीतयागसम्बन्धानामपनीतदेवतसाम्बन्धानां द्रव्याणां प्रकृतानामेवाकाङ्क्षितदेवतासम्बन्धसम्भवे नानाकाङ्क्षितसम्बन्धेनाप्रकृतग्रहणं युक्तमित्यभिप्रेत्याह — प्रकृतानामेव चेति। उपादेयत्वमापादयतीति। अत्रेदमवधेयम्। यद्यनपनीतयागसम्बन्धानामपनीतदेवतासम्बन्धानां हविषामुपादेयत्वं तर्हि तेषां भावनाविशेषणत्वेन विधेयत्वं वक्तव्यम्। न च तेषां विधाने प्रयोजनं, तण्डुलादिप्रकृतद्रव्यकयागानामेव देवतान्तरविशिष्टभावनाश्रयत्वाङ्गीकारेण तेषां यागसम्बन्धस्यार्थादेव लभ्यत्वात्। न च देवतान्तरसम्बन्धार्थं विधेयभावनाविशेषणत्वेन विधानं, तथात्वे यागसम्बन्धित्वेन प्राप्तद्रव्याणा-

मुद्देश्यत्वेनापि देवतान्तरसम्बन्धस्य भाष्यरीत्यैवोपपन्नत्वेन विधेयत्वाभ्युपगमस्य निरर्थकत्वात् । तथा च भाष्यमते इव उद्देश्यानेकत्वप्रयुक्तो वाक्यभेदो दुरुद्धर एव । नहि केवलं वाक्यभेदनिरासप्रयोजनकमेव विधेयत्वं मीमांसकेन शक्यमङ्गीकर्तुं तथा चाग्न्यादिदेवतातद्गुणदातृत्वादिविशिष्टभावनान्तरविधानेन विधायानेकताप्रयुक्तवाक्यभेदपरिहारसम्भवेपि तस्य भावनान्तरस्यापरित्यक्तयागान्वयपरित्यक्तदेवतान्वयतत्तद्द्रव्योद्देशेन विधाने बाधकाभावात्, द्रव्याणामयनयविधिना देवतापनयकरणेन देवतान्तरसाकाङ्क्षतया विशिष्टभावनान्तरे विधेयतासमानाधिकरणोपादेयत्वमपनयविधिरेवानुमन्यते इत्येवार्थः । न त्वेतावता विशिष्टभावनान्तरे विधेयतासमानाधिकरणोपादेयत्वमपनयविधिमूलं सिद्ध्यति । इष्टापत्तौ विधेयानेकताप्रयुक्तवाक्यभेदस्याप्यपनयविध्यनुमतत्वोपपत्तेः । तत्परिहारायापि विशिष्टभावनान्तरविधानस्यात्यन्तगुरुभूतस्य स्वीकारोऽतिनिरर्थक एव । अतोऽपनयविधेर्विशिष्टभावनान्तरे द्रव्याणामुपादेयत्वपर्यन्तव्यापारकल्पने वाक्यभेदानुमतिपर्यन्तव्यापारकल्पने वा प्रमाणाभावात् यावताविनाऽपनयविधिः स्ववैयर्थ्यं परिहर्तुं न शक्नोति तावदेव तात्पर्यविषयीभूतं विधत्तेऽनुमन्यते चेत्यपरित्यक्तयागान्वयेषु द्रव्येषु देवतापनयमात्रमेव कृत्वाचिन्तार्थोऽपनयविधिर्न कर्मान्तरत्वं प्रतिबध्नाति, न वा उपादेयत्वं द्रव्याणामापादयति । यथा च कर्मान्तरत्वाभ्युपगमेऽपि अपनयविधेश्चारितार्थ्यं तथोपपादयिष्यते । एवं च द्रव्याणामुद्देश्यत्वेनैवान्वयापत्त्या तत्प्रयुक्तवाक्यभेदस्यागत्याङ्गीकार्यत्वे विधेयानेकत्वप्रयुक्तवाक्यभेदेऽपि बाधकाभावाद्विशिष्टभावनान्तरविधानपक्षाश्रयणे प्रयोजनाभावाद्भाष्योक्तद्रव्योद्देशेन देवतान्तरमात्रविधानमेव युक्तम् ।

अपि च भाष्यमते चमसाधिकरणन्यायेन त्रेधावाक्ये तण्डुलत्वविवक्षां प्राप्तामपि परित्यज्य हविः सामान्यपरत्वे लक्षणाश्रयणे ज्ञापकं लभ्यते, न तु भवन्मते । **तथाहि**—स्थविष्ठाणिष्ठवाक्ययोः तावत् सम्प्रतिपन्नदेवताकहविषोः सह श्रपणविधायकवाक्यवैयर्थ्यपरिहारार्थं स्थविष्ठदध्नोरणिष्ठपयसोरवश्यं कल्प्यमानसम्प्रतिपन्नदेवताकत्वनिर्वाहाय दधिपयसोः हविष्ट्वेनैवान्वये वक्तव्येऽपि यदि तयोर्विधेयत्वमाश्रीयते तदा त्रेधावाक्यविहिततण्डुलमात्रविषयापनयविधिना स्थविष्ठादिभावापन्नापरित्यक्तयागान्वयानां परित्यक्तदेवतान्वयानां तण्डुलानां उद्देश्यत्वस्यैव भाष्यकृताङ्गीकारात् तादृशस्थविष्ठाद्युद्देशेन देवतान्तरविधानस्येव दध्यादिद्रव्यान्तरस्यानपेक्षितत्वेन विधानमनुपपन्नमित्यगत्या दधिपयसोः उद्देश्यत्वेनैवान्वयः स्थविष्ठादीनामिवाश्रयणीयः । न च यागसम्बन्धित्वेनाप्राप्तयोः पूर्वदेवतातोऽप्रच्युतयोः देवतान्तरसम्बन्धायोद्देश्यत्वं सम्भवतीत्यगत्या तयोरपरित्यक्तयागान्वयतापरित्यक्तदेवतान्वयरूपतासिद्ध्यै अपनयविध्युद्देश्यत्वं वक्तव्यम् । नहि

तत्तण्डुलत्वविवक्षायां सम्भवतीत्यतः तण्डुलपदं हविर्मात्रपरं भवति। भवन्मते तु स्थविष्ठादीनां उपादेयत्वेनेव दधिपयसोरप्युपादेयत्वेनान्वये बाधकाभावात् लौकिकयोरेव तयोर्ग्रहणेन तत्र यागसम्बन्धापनयदेवतासम्बन्धापनययोरनपेक्षणे अपनयविध्युद्देश्यत्वाभावात् किमनुरोधेन तण्डुलत्वाविवक्षया हविः परत्वाश्रयणम्?।

न च तण्डुलानां पूर्वं त्रेधात्वेनाप्रसिद्धानां त्रेधापदार्थान्विततण्डुलपदेनोद्देश्यत्वासम्भवाद-पनयस्य च त्रेधारूपत्वाभावेन तेन सह त्रेधात्वस्योद्देश्यविशेषणत्वेनाविवक्षितत्वादुपांशुयाजाज्य-साधारणहविर्मात्रलाभ इति वाच्यम्। तथात्वे त्रेधाभूतहविर्मात्रपरमभ्युपगम्यते, तत्र त्रेधात्वस्य पदस्यैव लक्षणया हविः सामान्यलक्षकत्वापत्तेस्त्रेधापदस्याव्ययत्वेन तण्डुलपदलक्ष्यहविर्विशेषणत्वस्य व्युत्पन्नत्वेनाविवक्षाकारणाभावाच्च। त्रेधाभूतहविषश्चोपांशुयाजाज्यसङ्ग्रहेण वा त्रैविध्यमथवा पय आदाय तदिति संशये वक्ष्यमाणस्थविष्ठाणिष्ठवाक्यविहितदेवतान्तरसम्बन्धे दधिशृतयोरेवानुवाद-ज्ञापकबलादेव दधिपयोद्रव्ये एवादाय संशये वक्ष्यमाणस्थविष्ठाणिष्ठवाक्यविहितदेवतान्तरसम्बन्धे त्रैविध्यनिश्चयार्थं मध्यमादिवाक्यपर्यालोचनावश्यकत्वे तत एव मध्यमादिभावापन्नतया प्राप्तत्रैविध्य-तण्डुलानामपि त्रेधात्वेन त्रेधापदार्थस्य तण्डुलपदशक्यार्थेप्यन्वयोपपत्तेः तण्डुलत्वाविवक्षायां मानाभावात्। अत एव त्रेधापदाम्नानबलात् भाष्यसिद्धान्ते उपांशुयाजाज्ये पूर्वदेवतापनय-प्राप्तिः भवन्मते च तण्डुलाविवक्षायां मानाभावादुपांशुयाजाज्यदधिपयोद्रव्येषु पूर्वदेवतापनय-प्राप्तिश्च दुर्धरैव। सम्भवति त्रेधापदस्य विशेषणतयाऽर्थवत्वे पाक्षिकानुवादत्वकल्पने माना-भावात्। अतो न स्थविष्ठादिद्रव्याणां यागसम्बन्धेऽपनीते सति देवताविकारवत्सु तेष्वेव यागेषु द्रव्याणां विधानावश्यकत्वम्।

अत एवास्मिन् पक्षे वार्तिके त्रेधावाक्यवैयर्थ्यानुपपत्त्या तण्डुलपदं प्रकृतहविर्देवता-सामान्येन संयुक्तमात्रपरं, विधेयविभागसामर्थ्यात्। असंयुक्तस्य विभागानुपपत्तेः द्रव्यदेवते यागेनैव संयुक्ते भवत इति यागेभ्यो द्रव्यदेवतयोरपनये विहिते द्रव्यदेवतारहिताः शुद्धाः प्रकृता यागाः तत्साकाङ्क्षा अवस्थिता भवन्ति मध्यमादिवाक्येष्वपि मध्यमाद्यनेकगुणविशिष्ट-भावना विधीयमाना यागरूपाश्रयमन्तरेणानुपपन्नाः प्रकृतानेव शुद्धतयाऽवस्थितान् द्रव्यदेवता-काङ्क्षिणो यागानाश्रयत्वेन गृह्णन्ति।

तत्र यथाक्रममेवावस्थिताः आग्नेयादियागाः यथाक्रमं पठितोत्तरवाक्यविहिततत्तद्देवता-द्रव्यविशिष्टभावनाभिः प्रथमः प्रथमया द्वितीयो द्वितीयया तृतीयः तृतीयया भावनयेत्येवं

क्रमेणाश्रयत्वेन सम्बध्यते। न त्वप्रकृताः अप्रकृतोपस्थित्यपेक्षया झटित्युपस्थितानां प्रकृतानां साकाङ्क्षत्वेनापि प्राबल्यात् इत्येवं विशिष्टभावनान्तरविधाने द्रव्यदेवतयोस्समतुल्यं विधेयत्वं कर्मान्तरप्रतिबन्धश्चोपपन्ने भवतः। न च द्रव्ये एव देवतापनये प्रकृतदेवतानां यागसम्बन्धोप्यपनीतो भवति इति पूर्वोक्तं युक्तं, येन देवतायाः द्रव्यद्वारैव यागसम्बन्धात् द्वारभूतद्रव्यस्यैव देवतासम्बन्धेऽपनीते तद्द्वारा देवताया यागसम्बन्धापनयोऽर्थात् सिद्ध्यत्येवेति देवताया यागापनयविधानं व्यर्थं प्रसज्येतेति वाच्यम्। हविर्नाशादिष्विव द्रव्ये देवतापनयेऽपि द्रव्यान्तरद्वारा देवताया यागसम्बन्धदर्शनेन एकान्ततो द्रव्ये देवतासम्बन्धापनयस्य देवताया यागसम्बन्धापनयाक्षेपकत्वाभावात्।

ततश्च प्रकृततण्डुलादिद्रव्यकत्यागकालीनोच्चारणकर्मत्वनिषेधेपि द्रव्यान्तरमादायापि त्यागसमानकालीनोच्चारणकर्मत्वस्यैवार्थतः सिद्ध्यापत्तेरनिवारणात द्रव्यापेक्षामेव पूर्वदेवताकयागाश्रितापूर्वदेवताद्रव्यविशिष्टभावनान्तरविध्यापत्त्या देवताद्वयसमुच्चयो दुर्वार एवेति देवताया यागापनयविधानमावश्यकम्। अतोऽपनयविधिमूलं कर्मान्तरं क प्रतिबन्धकं तत्तद्द्रव्याणां विधेयत्वं च वार्तिकोपपादितरीतिमनुसृत्यैवाश्रयितुं युक्तमिति तदुक्तविशिष्टभावनान्तरविधिपक्षेणैवात्र सिद्धोपपत्तिर्ज्यायसी न त्वर्धजरतीयाश्रयणेनोक्तरीत्या।

अत एवाधिकरणान्ते **तन्त्ररत्ने** उक्तं—तस्माद्यथोक्तेन न्यायेन भावनान्तरविधानं वाक्यभेदपरिहारार्थं आद्येऽभिहितं तत्किमिति नाङ्गीक्रियते। तथा हि सर्वं सुस्थं भवति तत्राह—विशिष्टविधानं तु मन्दधियां निर्णयोपायमात्रत्वेन भवति न तु न्याय्यमिति। विशिष्टविधानमेव दर्शयति—**स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुमिति**। पञ्चपदविशिष्टा भावना विधीयते। कथं तर्ह्यकर्मान्तरवाचोयुक्तिरत आह—**यागस्तु** धात्वर्थः सन्निहित एव गृह्यते यदि सन्निहितो न स्यात् ततः कर्मान्तरं भवेत् अस्ति तु सः तस्माद्यागाभेदादकर्मान्तरत्वं भावनान्तरं तु विधीयत एव। **वाक्यभेद इति**। अस्माच्च ग्रन्थात् द्रव्येषु यागसम्बन्धापनये सत्येवाप्राप्तद्रव्यवैशिष्ट्यमप्राप्तदेवतावैशिष्ट्यमिव विधेयभावनायां सम्भवतीति प्रकारान्तरेण द्रव्यविशिष्टभावनान्तरविधानं नास्तीति प्रतीयते।

**यत्त्वस्य** पक्षस्य तत्तद्विशेषणविकल्पनागौरवग्रस्तत्वेन तात्पर्यभेदनिमित्तवाक्यभेदस्यापरिहार्यत्वेन च द्रव्योद्देशेन देवतान्तरमात्रविधिपक्षादत्यन्तलघुभूतात् भाष्योक्ताज्जघन्यत्वं वार्तिकतन्त्ररत्नयोरुपपादितं तत्सूत्रकारानभिमतत्वाशयमात्रेण ज्ञेयम्। इतरथाऽन्यत्रापि वाक्य-

रूपनैमित्तकानुष्ठानेन विगुणतापनयद्वारा सगुणत्वेनानुष्ठाने सति तस्य फलजिज्ञासायां उपस्थितं काम्यमानं पापक्षयो वा फलत्वेन कल्प्यत इति न निष्फलत्वम्। अत एवाकाले आरब्धस्यापि दर्शप्रयोगस्याकालोपक्रमत्वज्ञाने वृथाचेष्टारूपत्वेन त्यागस्यैव प्राप्तावपि प्रारम्भे निमित्तेऽवश्यं समापनीयत्वानुरोधेनानुष्ठाने कर्तव्ये द्रव्यदेवताविकारो विधीयमानो भवत्येवाभ्युदयेष्टिप्रयोगानन्तरावश्यसमापनीययागाङ्गम्। तत्फलं चान्यत्रेव पापक्षयादि शक्यत एव वक्तुम्। अत एतत्समापनीयप्रयोगाङ्गत्वमेव युक्तं, न स्वकालकर्तव्यप्रयोगाङ्गत्वमिति चेत्।

उच्यते। प्रक्रान्तप्रयोगसमाप्तेरावश्यकत्वेऽपि तस्योपदिष्टविकृतप्रयोगेणैव समाप्तिविधाने नाग्नेयानुष्ठानमिति न तदङ्गत्वं, अतः प्रकरणपाठादावश्यके दर्शाङ्गत्वेऽस्य स्वकालक्रियमाणप्रयोगद्वारा तद्यागव्यक्त्यङ्गत्वं, प्रधानारम्भस्याकृतत्वात् प्रयोगस्यैवाकाले आरम्भात्। तद्दोषपरिहारार्थत्वेन तद्द्वारकत्वमेव युक्तमित्यभिप्रेत्य प्रयोगाङ्गमित्युक्तम्। एवं चाग्नेयाङ्गत्वासम्भवोपि नापद्यत इत्याशयः।

भाष्यवार्तिककारादीनामप्ययमेवाभिप्रायो दृश्यते। स्पष्टमेव तन्त्ररत्ने पूर्वपक्षोपसंहारे प्रकृतं तु कर्माकाले प्रवृत्तं लुप्यत इति ग्रन्थेन पूर्वपक्षप्रयोजने उक्ते सत्यर्थात् तद्व्यतिरेकेण सिद्धान्ते आरब्धकर्मणः समाप्तेरुक्तप्रायत्वाद्वा, मध्यमादिवाक्यानां विशेषतः प्रयोगान्तरविधायकत्वानिराकरणे परेण प्रारब्धस्यावश्यसमापनीयत्वात् प्राप्त एव प्रयोगो न विधेयस्तदनुवादेन त्वित्थं प्रयोक्तव्यमिति विशेषमात्रं विधेयमिति ग्रन्थेन प्रारब्धस्यैव प्रयोगस्य द्रव्यदेवताविकारविशिष्टत्वेन विधानं दर्शितम्। न च तर्हि तस्य प्रारम्भनिमित्तकसमाप्तिमतः पापक्षयार्थत्वादेव नान्याङ्गत्वमथवा शास्त्रविहितारम्भस्यैव समाप्तिनिमित्तत्वात् पापक्षयार्थत्वानुपपत्तेः द्रव्यदेवताविशिष्टभावनान्तररूपाभ्युदितेष्ट्याश्रयभूतयागव्यक्तेरपि प्रायश्चित्तादिना निर्हृतदोषायास्तत्प्रयोगे करिष्यमाणत्वात् तदङ्गत्वमेव स्यान्न स्वकालक्रियमाणतद्व्यक्त्यङ्गत्वमित्यत आह— **तस्यैवाकाले इति।** यद्यागव्यक्तीनां अकालोपक्रमजनिताभ्युदयेष्टिः सा तद्यागव्यक्तीनामेव

सामान्यमुखेनात्रैव 'विवा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तम्' इत्यादिनाऽर्थवादे द्रष्टव्यम् ॥

एवमातञ्चनाभ्यासदर्शनं "यदि बिभीयादभिमोदेष्यतीति महारात्र एव हवींषि निर्वपेत् फलीकृतैस्तण्डुलैरुपासीत अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न यद्यभ्युदियात्तेनातञ्च्य प्रचरेत् यदि न प्रातरेतेन ब्राह्मणान् भोजयेत्" इत्यकर्मान्तरत्वे उपपद्यते। बिभीयात् शङ्केयत। महारात्रे चन्द्रोदयात्पूर्वम्। उपासीत प्रतीक्षेत। आतञ्चनार्थं स्वकाले क्रियमाणदर्शार्थदध्यातञ्चनार्थम्। अर्धं न किन्तु तदभ्युदितेष्टावेव विनियुञ्जीत, न च तत्सान्नाय्ययाग एव। तेन आतञ्चनार्थं निहितेन। एतेन आतञ्चनार्थं स्थापितेनैवेति हि तस्यार्थः। तद्यदि कर्मान्तरं स्यात् तदा तेनाकालप्रारम्भनिमित्तदोषपरिहारात् दर्शार्थमुत्पादितेन दध्ना कर्मान्तरकरणानुपपत्तेस्स्वकालक्रियमाणदर्शस्यैव तेन करणापत्तेस्तत्र हविरन्तरोत्पादाप्रसक्तौ तत्रातञ्चनाप्रसक्तेरर्धविध्यनुपपत्तिः। कर्मान्तरे च दध्यन्तरस्यैव संस्कारविशिष्टस्योत्पादनापत्तेर्दर्शार्थोत्पादितस्य दध्नः प्रसक्त्यभावादर्धविधानानुपपत्तिः ॥

---

वैगुण्यं परिहरेत्, नाभ्युदयेष्ट्याश्रयव्यक्तीनां, तासामकालोपक्रमेण फलवत्वाभावात्, स्वस्मिन् स्वाङ्गत्वासम्भवाच्च। अत एव व्यक्तिभेदेऽपि एकजातीयत्वेनैवाकर्मान्तरत्वमिति भावः।

तद्यागानामित्यत्र तच्छब्देन तस्यैवेत्यनेनापि तच्छब्देनोपक्रान्ताः परामृश्यन्ते। सामान्यमुखेनेति। यस्य कस्याप्यकाले प्रारम्भो दोषजनक इति सामान्यविशेषरूपेणार्थवादात् कल्पनया दोषजनकत्वावगतिरित्यर्थः। न च तर्हि प्राकृतस्य प्रयोगस्य प्रायश्चित्तनिर्हृतदोषस्य सकृदनुष्ठानात् पुनः स्वकाले तदनुष्ठानं व्यर्थमिति वाच्यं; अकाले तस्य करणेऽपि स्वकालावच्छिन्नजीवनस्य निमित्तस्य सत्वेनातिपातेन पुनरनुष्ठानस्य न्यायत एव प्राप्तेः। अत एव तैत्तिरीयश्रुतौ न द्वे यजेतेत्यनेनैकेष्टिपक्षे उपपाद्यानादृत्यं तदिति तं निन्दित्वा द्वे यजेतेत्यादिना इष्टिद्वयविधानातञ्चनाभ्यासलिङ्गदर्शने पुनस्तत्प्रयोगकर्तव्यताज्ञापनमुपपन्नं भवति। प्रदर्शितं च सिद्धान्ते अधिकरणमालायां पुनः प्रयोगानुष्ठानम्।

एतेनैतत्प्रकरणे कातीयसूत्रभाष्ये पुनरिज्यावैयर्थ्यापादनं श्री अनन्तोक्तं अपास्तम्। इति हि तस्यार्थ इति। अस्यार्थः प्रवृत्तदर्शतन्त्रो यजमानः किमद्य चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शः प्रारब्धः, किं चन्द्रमा अभ्युदेष्यतीति शङ्कया भयं प्राप्नुयात् समाप्तामेव रात्रौ

**इत्यादिलिङ्गाच्चायमर्थो विज्ञायते । तेन मध्यमादिभेदेनाग्नेयस्य वारत्रयमावृत्तिः दधिपयोयागयोस्तु स्थविष्ठाणिष्ठसाध्याग्नेयाभ्यासेन सह तन्त्रेण करणम् 'सह श्रपयति' इति वाक्याच्च श्रपणमपि तेषां सम्प्रतिपन्नदेवताकानां सहैव ।** अत एव दधिशृतयोः **श्रपणाप्राप्तावपि**

---

याजानुष्ठानमपि पूर्वोक्तरीत्या नासुलभमित्यनुष्ठाने महदन्तरमभिप्रेत्यैव भाष्योक्तदेवतान्तरविधानपक्षस्य न्याय्यत्वमुक्तं तन्त्ररत्नादौ । एवमनुष्ठानभेदे सत्यपि मध्यमादिवाक्येषु वाक्यभेदपरिहाराय प्रयतमानैः द्रव्याणामुद्देश्यत्वेनान्वयपरिहारेणोपादेयत्वेनान्वयं यागादिभेदं चेच्छद्भिः मीमांसकैर्वार्तिकोक्तविशिष्टभावनान्तरविधिपक्ष एव शरणतयेष्टव्यो नान्य इत्यवधेयम् । एवं सत्यप्येतादृशविशिष्टभावनान्तरविधिपक्षे पूर्वदेवतास्विव पूर्वद्रव्येष्वपि यागसम्बन्धापनयात्तेषामेवोत्तरत्र ग्रहणे मानाभावेन लौकिकमध्यमादीनामेवोपादानापत्तिं दुर्निवारां तत्परिहारार्थं प्रकृतानामेव द्रव्याणां पुनस्तेषु यागेष्वेव ग्रहणे तदपनयविध्ययोगं चापरित्यज्य यागान्वयिद्रव्येषु यागसम्बन्धापनयविधिं विनापि केवलदेवतामात्रापनयविधायकतयैव त्रेधावाक्योपपत्तिं भाष्योक्तपक्षानुष्ठानैक्यं चालोचयद्भिस्तु **पूज्यपादैः** वाक्यभेदपरिहारायापरित्यक्तयागान्वयानामेव द्रव्याणां विशिष्टविधौ उपादेयत्वं स्वीकृतमिति द्रष्टव्यमिति ।

प्रस्तुतमनुसरामः । कर्मान्तरत्वपक्षेऽनुपपन्नं लिङ्गं स्वोक्तविशिष्टविधिपक्षसाधकत्वेनोपन्यस्यति—**यद्यगृहीतमिति** । अगृहीतेऽनिरुप्ते हविषि यदि चन्द्राभ्युदयस्तदा तस्यां पञ्चदश्यां पूर्वचतुर्दश्यां कृतस्यानशनसत्यवदनादिव्रतमात्रस्य पुनरावृत्तिमात्रं कृत्वा श्वोभूते आमावास्याकर्म कार्यम् । यदि निरुप्ते हविषि तद्दर्शने अभ्युदयेष्टिं तैरेव द्रव्यैः कृत्वा श्वोभूते अमावास्याकर्म कार्यमिति लिङ्गदर्शनस्यार्थः, अस्मिंश्च लिङ्गदर्शने एतानेवेति पदेन निरुप्तप्रकृतिकानामेव परामर्शेन पूर्वयागसम्बन्धप्रतीत्या वार्तिकोक्तयागापनयविधेरनुपपत्तेरपरित्यक्तयागान्वय इन्द्रदेवताविशिष्टत्वेनैव भावनान्तरविधिपक्षो युक्त इत्यर्थः । ननु सह श्रपयतीति वचनेन न श्रपणमपूर्वं विधीयते किन्तु श्रपणे साहित्यमात्रमिति येषां हविषां श्रपणं अन्यतः प्राप्तं तेषां श्रपणे साहित्यसम्भवेपि दध्नः श्रपणस्यैवाप्राप्तौ कुतः साहित्यं तत्रेत्याशङ्कां परिहरति—**अत एव दधिशृतयोरिति** । अत्र शृतशब्दोऽनवधानलिखितः, तस्योखायां श्रपणविधानेन श्रपणप्राप्तेः ।

**साहित्यविध्यन्यथाऽनुपपत्त्यैव श्रपणं शाखासाहित्यवशेन तत्प्रहरणवत्।** साहित्यं हि **केनचिदावश्यकं तत्र सम्प्रतिपन्नदेवताकत्वात्प्रदानवेलायां तेन तदावश्यकत्वे श्रपणवेलायामपि तस्यैव साहित्यप्रतियोगित्वकल्पनात्।** अतश्च **अभ्युदितेष्टिर्न कर्मान्तरं अपि तु निमित्ते नैमित्तिकं तद्यागानामेव भावनान्तरं** स्वकाले **क्रियमाणदर्शप्रयोगाङ्गम्।**

---

**प्रहरणवदिति।** सह शाखया प्रस्तरं प्रहरतीति वचनेन प्रस्तरप्रहरणे शाखासाहित्येपि तदन्यथानुपपत्त्या शाखाया अपि प्रहरणं भवति तद्वदित्यर्थः। **ननु** तत्र शाखासाहित्यस्येवात्र दधिसाहित्यस्य विधानाभावात् कथं दध्नः साहित्यस्यापि प्रातिर्येन दध्नः श्रपणं सिद्ध्येदित्यत आह—**साहित्यं हीति।** येषां च पुरोडाशश्रृतानां श्रपणं प्राप्तं तत्रैव साहित्यविधानेऽपि साहित्यप्रतियोगिजिज्ञासायां येषां प्रदानवेलायां येन सह तत् कॢप्तं तस्यैव श्रपणेऽपि साहित्यप्रतियोगित्वकल्पनात दध्नि साहित्यवशेन श्रपणप्राप्तिरित्यर्थः। अनयैव रीत्या चरुश्रृतयोरपि साहित्यं ज्ञेयमिति भावः। सिद्धान्तमुपसंहरति—**अतश्चाभ्युदितेष्टेरिति। स्वकाले क्रियमाणदर्शप्रयोगाङ्गमिति।**

ननु द्रव्यदेवताविशिष्टं भावनान्तरं भवन्मते विधीयमानं यद्यप्याश्रयत्वेन प्रकृतान् यागान् गृह्णाति तथापि अपनयविधिबलात् द्रव्यदेवतासाकाङ्क्षानेव तान् गृह्णाति अपनयविधिरपि न सर्वयागीयद्रव्येषु देवतापनयं विधत्ते, तथात्वे निमित्तसम्बन्धरहितयागीयद्रव्येष्वपि तदापत्तेः। अपि तु यद्यागीयप्रयोगमध्ये निमित्तसन्निपातस्तद्यागीयद्रव्येष्वेवेति तत्प्रयोगीययागव्यक्तीनामेव देवतापनय इति तेषामेवाश्रयत्वम्। एवं च तदाकाङ्क्षया गृह्यमाणं भावनान्तरं तद्यागाङ्गमेव स्यात। न ह्यग्नेः स्वकालकर्तव्यदर्शयागाङ्गम्। अन्यथा स्वकालक्रियमाणयागव्यक्तीनामकाले उपक्रमाभावेनानुष्ठानवेलायां च स्वकाल एवानुष्ठानेन निमित्तसम्बन्धरहितानां भावनान्तरानपेक्षणात। अत एव भेदनहोमोपि भेदनरूपनिमित्तसन्निपातिप्रयोगीययागव्यक्त्यङ्गमेव। वक्ष्यते चोद्गातृप्रतिहर्त्रपच्छेदयोर्यौगपद्ये प्रायश्चित्तद्वयस्य विकल्पसाधनाय यस्मिन् प्रयोगे निमित्तं तस्यैव नैमित्तिकं प्रायश्चित्तमङ्गं, न प्रयोगान्तरे क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यं भवतीति **तत्र प्रतिषेधाद्विकल्पः** स्यादित्यधिकरणे। न चाकालकृतस्य निष्फलत्वेनाङ्गानपेक्षत्वं तस्य भेदनहोमेऽपि तुल्यत्वात।

**वस्तुतस्तु** नैवास्य निष्फलत्वं यत्फलकामनया पापक्षयार्थं वा प्रारब्धस्य यागत्रयप्रयोगस्यान्तरालकालकृतत्वेन विगुणतायां प्राप्तायां अकालोपक्रमनिमित्तप्रयुक्तद्रव्यदेवताविकार-

भेदपरिहारार्थं विशिष्टभावनापत्तेः, विशिष्टविधानकृतगौरवस्य फलमुखत्वेनादोषत्वाच्च । सूत्रकारो ह्युत्तराधिकरणयोरुपांशुयाजस्याभ्युदितेष्टावप्रवृत्तिमसन्नयतोऽपि तत्राधिकारं साधयति, न चेदं विशिष्टभावनान्तरविधिपक्षे सम्भवति । तदानीं प्रकृतद्रव्यग्रहणे द्रव्याणामुपादेयत्वेन साहित्यविवक्षणादसन्नयतो दध्यादीनां सान्नाय्यप्रयुक्तानामभावेनाधिकारानुपपत्तेः । द्रव्याणामुद्देश्यतयैव साहित्याविवक्षया तदधिकारस्य वर्णनीयत्वात् ।

वस्तुतस्तु उपादेयत्वात् प्रकृतग्रहणे प्रमाणाभावेन कथञ्चित् व्यर्थमवस्थितानां वैदिकत्वसामान्येनोपस्थितानां प्रकृतानां तेष्वेव यागेषु पुनर्ग्रहणे पूर्वविहिततद्विषयकयागापनयवैयर्थ्यापत्ते लौकिकतण्डुलानामेव भावनान्तरवैशिष्ट्योपपत्तेस्सन्नयतोऽसन्नयतश्च लौकिकतण्डुलदध्यादिरभ्युदयेष्टिसम्भवेनासन्नयतोऽभ्युदितेष्टेरकर्तव्यतापूर्वपक्षस्यैवानुत्थानात् व्यर्थमेव तदधिकारप्रसाधानार्थमधिकरणान्तररचनम् । **भाष्यकारमते** तु द्रव्याणां देवतापनयविधानेपि यागापनयविध्यभावात् यागसम्बन्धानामेव देवतासाकाङ्क्षाणां तेषामेवोद्देश्यत्वेन देवतान्तरमात्रविधानादुपपद्यते तदधिकरणपूर्वपक्षः अप्रकृतग्रहणाप्रसक्तेः । **एतेन** विशिष्टभावनान्तरविधिपक्षे सन्नयतोऽधिकारानापत्तिरत एवायं पक्षोऽनादृत आकरे इति **भाट्टालङ्कारोक्तमपास्तम्** । तस्मिन् पक्षे प्रकृतण्डुलदध्यादीनामेव ग्रहणे प्रमाणाभावेन तदनापत्तेः । तथेतराग्नेयसान्नाय्ययागीयद्रव्यदेवतयोरिवापनयवाक्येनोपांशुयागीयद्रव्यदेवतयोरप्युपांशुयाजापनयविधानात्तस्यापि द्रव्यदेवतासाकाङ्क्षस्य मध्यमादिवाक्यविहितयागसाकाङ्क्षभावनान्तराश्रयत्वादस्त्येव प्रवृत्तिरभ्युदयेष्टाविति तत्र तल्लोपाभिधानार्थमधिकरणं नोपपद्यते । **यदि** तु यथाक्रमं पठितोत्तरवाक्यविहितभावनाभिः क्रमेणैवाग्नेयादियागत्रयमाश्रयत्वेन सम्बध्यत इत्युपांशुयागस्याश्रयत्वेन भावनान्तरसम्बन्धाभावात् तदीयद्रव्यदेवतयोश्च तस्मादपनयादगत्या लोप इत्युच्यते तदा न्यायसिद्धे लोपे पुनः पूर्वपक्षानुत्थानात् तद्विचारार्थमधिकरणारम्भो व्यर्थ एव ।

**वस्तुतस्तु** क्रमेण भावनाभिर्यागानां आश्रयत्वेन सम्बन्धे वक्तव्ये अनुष्ठानक्रमे आग्नेयानन्तरमुपांशुयाजानुष्ठानात मध्यमभावनायामुपांशुयाजस्य तदुत्तरभावनायां दधियागस्याश्रयत्वेनान्वयः पयोयागस्य तु तदुत्तरभावनानाम्नानादपनयविधिना द्रव्यदेवतयोरपनयाच्च लोप इत्यनुष्ठानस्यैवापत्तिरथवा सम्प्रतिपन्नदेवताकत्वेन सहानुष्ठेयतया ऐक्यभावापन्नसान्नाय्यद्रव्यकयागद्वयस्यैवान्तिमभावनाश्रयत्वं उर्वरितस्यान्ते निवेश इति न्यायादिति न कस्यापि अनुष्ठानलोपापत्तिरित्येव युक्तम् । अस्मिंश्च पक्षे सान्नाय्यद्रव्यकयागद्वयस्यान्तिमभावनाश्रयत्वमुपांशुयाजस्य मध्यमभावनाश्रयत्वमिति पक्षेऽपनयविधेः न वैरूप्यमापद्यते । इतरथा आग्नेयसान्नाय्ययागेषु

द्रव्यदेवताकाङ्क्षोत्थापनद्वारा द्रव्यदेवतान्तरसम्बन्धोत्पादनेन दृष्टार्थत्वमुपांशुयाजे च तदभावात् केवलमदृष्टार्थत्वमिति वैरूप्यापत्तेः। अपि च भाष्योक्तदेवतान्तरमात्रविधिपक्षादस्मिन् विशिष्टभावनान्तरविधिपक्षेऽयमनुष्ठानभेदोऽपि दृश्यते। भाष्यपक्षेऽपरित्यक्तयागान्वयतत्तद्द्रव्योद्देशेन देवतान्तरविधाने यद्यगीयं द्रव्यं तत्तद्यागसाधनमेव विकारविशेषेण देवतान्तरसम्बन्धं भजत इति आग्नेययागे साधनत्वेन विद्यमानास्तण्डुलाः, दधियागसाधनत्वेन च विद्यमानं दधि, पयोयागसाधनत्वेन विद्यमानं पयश्च नान्ययागसाधनं तद्देवतान्तरसम्बन्धायार्हं भवति। तथाच मध्यमादिभेदत्रयं प्राप्तास्तण्डुलाः आग्नेययागसाधनतापरित्यागेन वक्ष्यमाणतत्तद्गुणविशिष्टतत्तद्देवताभिः तिसृभिः सम्बध्यमाना वारत्रयमावर्त्यमानाग्नेययागसाधनं भवन्ति।

एवं दधियागीयं दधि पयोयागीयं पयश्चैकैकदेवतया सम्बध्यमानं स्वस्वयागसाधनं भवतीति सन्नयतो मध्यमतण्डुलप्रकृतिकाष्टाकपालपुरोडाशेन दातृत्वगुणविशिष्टाग्निदेवतया चाग्नेयमात्रानुष्ठानम्। एवमणिष्ठप्रकृतिकशृतसम्पादितचरुणा शिपिविष्टगुणकविष्णुदेवतया चानुष्ठीयमानाग्नेययागेन सह पयोयागस्यानुष्ठानमुभयत्रापि सम्प्रतिपन्नदेवताकत्वेन सहानुष्ठानप्राप्तेः। असन्नयतस्तु वक्ष्यमाणरीत्या स्थविष्ठदध्याद्युद्देश्यगतसाहित्यस्याविवक्षणेन सान्नाय्याभावेऽपि ऐन्द्राग्नस्यानुष्ठीयमानस्याग्नेयवत्तण्डुलप्रकृतिकद्रव्यत्वेनाप्यपनयविधिना देवतापनयात् तदीयतण्डुलानामपि मध्यमादिभावेन वक्ष्यमाणदेवतात्रयसम्बन्धादाग्नेयेन सहानुष्ठानं सम्प्रतिपन्नदेवताकत्वाद्भवति। तत्रापि सहश्रपणे कर्तव्ये एकादशकपालत्वविरोधे मुख्यत्वेनाष्टाकपालत्वानुग्रहेण तत्तद्देवताकास्त्रयोप्यष्टाकपालाः कार्याः। स्थविष्ठाणिष्ठयोः श्रूयमणं चरुत्वं तु सान्नाय्यपक्षे तदीयद्रव्ययोः स्थविष्ठाणिष्ठयोश्च सहश्रपणादर्थप्राप्तं पाक्षिकानुवाद एव न तु विधेयमिति न बाधकमित्येवमनुष्ठानं पूज्यपादैरेव व्यक्तीकरिष्यते। न ह्येवमनुष्ठानं वार्तिकोक्तविशिष्टभावनान्तरविधिपक्षे सम्भवति। स्थविष्ठाणिष्ठवाक्यविहितभावनाश्रयत्वस्य क्रमादाग्नेयोत्तरयागयोरेवाङ्गीकारेण तत्राग्नेययागानुष्ठानाप्रसक्तेः। तथाच सन्नयता क्रमेणैव यागत्रयं कार्यमस्मिन् पक्षे। असन्नता तु मध्यमाष्टाकपालेन प्रथममाग्नेयं कृत्वोपांशुयाजाभावे तदुत्तरत्वेनापतितैन्द्राग्नयागस्यैव स्थविष्ठवाक्यविहितभावनाश्रयत्वादाग्नेयोत्तरमनुष्ठानं अणिष्ठसाध्यभावनान्तरस्य तु लोपः। उपांशुयाजसत्वे तु तस्यैवाग्नेयोत्तरत्वेन मध्यमभावनाश्रयत्वेन तदुत्तरत्वेन चैन्द्राग्नस्यान्तिमभावनाश्रयत्वेनानुष्ठानम्।

अत एव स्थविष्ठाणिष्ठवाक्यविहितभावनाश्रयत्वं दधिपयोयागयोः न तत्तद्रूपेण, किन्तु आग्नेयोत्तरानुष्ठानत्वेनैव रूपेण। एवं कृत्वैव ऐन्द्राग्नानुष्ठानं लभ्यते इति समानन्यायेनोपांशु-

व्रीहीन्निरुप्यावहत्य फलीकृत्योदीक्षमाणः आसीतासायं, दोहसम्पादितं च दधि द्वेधा विभज्य तदर्धं मुख्यकाले करिष्यमाणस्य दर्शस्यार्थे तत्पूर्वदिनसायंदोहं सम्पाद्यातञ्चनाय निदध्यात् अर्धान्तरं तदर्थं निदध्यात् । एवं कृते यदि अभ्युदयः स्यात् तदा मुख्यकाले दर्शारम्भानन्तरमातञ्चनार्थनिहितार्धेन दध्ना सायं दुग्धे पयसि आतञ्चनं कृत्वा दध्युत्पाद्यान्येद्युर्दधियागं निर्वर्तयेत् । आतञ्चनार्थविहितार्धादन्येन स्थापितेनार्धेनाभ्युदयेष्टिं कुर्यात् । यदि नाभ्युदयस्तदानीं आतञ्चनार्थनिहितादर्धादन्येनार्धेन दर्शनिर्वृत्तेस्तदर्थं दध्युत्पादनानपेक्षणेनातञ्चनार्थनिहितमर्धं ब्राह्मणभोजनेन प्रतिपादयेदिति ।

अत्राभिमोदेष्यतीत्यत्र मा उदेष्यतीति पदच्छेदेन मा सम्मुखं अभ्युदेष्यतीत्यर्थः । अत्र महरात्रे इति पदस्य प्रायो महानिशारूपार्थवाचित्वेऽप्यसन्नयतोऽमावास्यातन्त्रस्य प्रागुदयारम्भेऽपि एन्द्राग्नतन्त्रारम्भोत्तरं चन्द्रोदयशङ्कायां तन्निमित्तकाभ्युदयेष्टयनुष्ठाने महानिशायास्तत्पूर्वभावित्वेन महारात्रे हविर्निर्वाप अवहननफलीकरणानुष्ठानानन्तरशुद्धतण्डुलोत्तरचन्द्रोदयप्रतीक्षणासम्भवापत्तेस्तदर्थं महारात्रपदं चन्द्रोदयपूर्वकालविधानपरतया व्याख्यातं पूज्यपादैः ।

एतेन केषुचिदधिकरणमालापुस्तकेषु महापात्रे इति पाठं धृत्वा प्रौढपात्र इति व्याख्यानदर्शनं तद्भाष्यादिष्वदर्शनात् प्रमादपतितमेवेति ध्येयम् । **यद्यपि** सन्नयतः सायं दोहमारभ्यैव तन्त्रारम्भात् तदनन्तरं चन्द्रोदयशङ्कायां महानिशाया निर्वापकालत्वं सम्भवति, तथापि प्रकारान्तरेण दध्युत्पत्त्यसम्भवात , दध्नोऽसिद्धस्य द्वेधाविभागकरणानुपपत्तेः, तस्यापि चन्द्रोदयपूर्वकाल एव दध्युत्पादनयोग्यो निर्वापकालो युक्त इति ध्येयम् । एवं विधज्ञापकबलादेवासन्नयतो नाधिकारं मन्यन्ते केचिद्याज्ञिकाः ।

**यद्यपि** चातञ्चनार्थनिहितार्धादपरार्धेनेत्येतावतेत्युक्तं न तु तस्यातञ्चनार्थनिहितार्धस्यैवाभ्युदयपक्षे स्पष्टमभ्युदितेष्टावभ्युदयाभावपक्षे च दधियागे विनियोग इत्यत्र ज्ञापकमुपलभ्यते, **तथाप्यभ्युदयाभावपक्षेऽनेनार्धेन** दर्शयागानुष्ठानादातञ्चनार्थनिहितार्धस्य ब्राह्मणभोजनरूपप्रतिपत्तिविधानस्येवास्याप्यर्धस्याभ्युदयपक्षे यत्किञ्चित्प्रतिपत्तिविधानस्यापेक्षायामपि यत्तदनभिधानं च दधियागे विनियोगमापादयतीत्यभिप्रायेणोक्तं अर्धं न, किन्तु तदभ्युदितेष्टावेव विनियुञ्जीत । न चेत सान्नाय्ययाग एवेति । इतरत् स्पष्टार्थम् ।

**दोषपरिहारादिति** । अकालप्रारम्भेण ये ये अग्निप्रणयनदेवतापरिग्रहदध्यादिद्रव्यगता दोषाः तेषां परिहाराद्दध्ना गतदोषेण मुख्यदर्शसम्भवादित्यर्थः । अत एवाकालक्रियमाण-

यत्तु मूले कर्मान्तरत्वपक्षे अधिकरणत्वेन दधिपयसोर्विधानात् लौकिकस्यैवा-संस्कृतस्य दध्नो ग्रहणापत्तेर्दर्शार्थोत्पादितस्य प्रसक्त्यभाव इत्युक्तं, तत् 'सह श्रपयति' इत्यस्य वैयर्थ्यापत्तेस्तुल्यत्वेन हविष्ट्वेनैव विधानस्यावश्यकत्वादुपेक्षितम्। सिद्धान्ते तु प्रायश्चित्तस्य दर्शत्वानपायादत्रैव सर्वस्य दध्नः प्रसक्तौ स्वकाले क्रियमाणदर्शे च दध्यन्तरो-त्पादनार्थमातञ्चनप्रसक्तावभ्युदयशङ्कायां निमित्ते आतञ्चनसाधनत्वेनार्धमात्रविधि-रुपपद्यते। अर्थान्तरस्यार्थादेवाभ्युदितेष्टौ प्राप्तत्वादनुवादो विधिर्वेत्यन्यदेतत्॥ १॥

---

कर्मणोऽभावेऽपि स्वकालक्रियमाणदर्शार्थेन पुनरन्वाधानादिमध्यसम्पादिते च कर्मान्तरेऽस्मिन् प्रसङ्गसिद्धेरेवेति न तदर्थमपि पृथक् इति ध्येयम्। संस्कारविशिष्टस्येति। हविष्ट्वेन विधानपक्षे सान्नाय्यातिदेशात्तद्धर्माणां प्राप्त्यभिप्रायेणैतदुक्तम्। अभ्युदितेष्टाविति दधियागस्योपलक्षणम्। अभ्युदये अभ्युदितेष्टौ तदभावे तु दधियागेवेत्यर्थः। इत्यन्यदेतदिति। अनेनाभ्युदितेष्टेः कर्मान्तरत्वेऽपि प्रकृतहविर्ग्रहणोपपत्तेः लिङ्गदर्शनोपपत्तिसम्भवात् लिङ्गदर्शनानुपपत्तौ सिद्धान्तपक्षे च वक्ष्यमाणा व्यवस्था सूचिता भवतीत्यवधेयम्।

तदेवं तस्मिन्नधिकरणे त्रेधावाक्यस्यापनयविधित्वपक्षे प्रकारत्रयेण सिद्धान्तकरणं उपपादनवेलायां दूषितप्रायमिति पञ्चशरावप्रतिबन्धापत्तेरप्ययुक्तम्। न चापनयविध्यभावेऽपि अपनयकार्यस्य देवतान्तराकाङ्क्षोत्थापनस्येव पञ्चशराववाक्ये हविर्नाशानुकीर्तनेनैव सान्नाय्ययागे द्रव्यान्तराकाङ्क्षोत्थापनस्य करणात् तथाच सान्नाय्ययागस्य तदीयदेवताया वा द्रव्याकाङ्क्षया सान्नाय्ययागोद्देशेन तदीयदेवतोद्देशेन वाक्यभेदमङ्गीकृत्य पञ्चशरावौदनपदार्थद्वयविधानं तत्परिहारेण विशिष्टभावनान्तरविधानं नोपपद्यत एव। इन्द्रपदस्येह त्रेधा तण्डुलचरुशब्दा-नामिव पक्षिकानुवादत्वस्य सान्नाय्ययागीयदेवतामात्रलक्षकत्वस्य वा कल्पने बाधकाभावात् विशिष्टभावनान्तरविधानाङ्गीकारे च महेन्द्रबाधार्थमनपेक्षितदातृत्वगुणादीनामिवैन्द्रस्यापि वैशिष्ट्याङ्गीकारेण विधानोपपत्तेश्च।

न च त्रेधावाक्यस्य वैयर्थ्यमस्ति, येन क्लिष्टकल्पनयाऽपनयविधायकत्वमाश्रीयेत। मनुः पुत्रेभ्यो दायं व्यभजदित्यत्रेव वक्ष्यमाणदेवतासंयोजनरूपविभागविधायकत्वेनापि सार्थक्यात्। न च संयोजनरूपार्थे विभजतेर्लक्षणापत्तिः। व्युपसर्गस्य विहितं भजनं, अथवा विशेषेण भजनमित्यर्थद्वयपरत्वेपि सम्भवति एकत्र लक्षणायां प्रमाणाभावात्। न च सामान्यसंयोजन-स्यापि विशेषमध्यमादिवाक्यैरेव सिद्धेः वैयर्थ्ये उपांशुयाजाज्ये सयोजनप्राप्त्यर्थत्वेन तत्परिहारे

च त्रेधापदस्वारस्यभङ्ग इति शङ्क्यम् । त्रेधापदस्वारस्यानुग्रहेणैव त्रेधाभूतहविषः देवतान्तरसंयोजनविधानस्य त्रयाणां हविषां सम्प्रतिपन्नदेवताकत्वफलकत्वाभ्युपगमेन वैयर्थ्यपरिहारोपपत्तेः । इतरथा दधिशृतवाक्ययोरधिकरणत्वश्रवणेन हवीरूपतयाऽन्वयाभावे सम्प्रतिपन्नदेवताकत्वसिद्धौ सह श्रपयतीति वचनविहितसहश्रपणविषयत्वाप्रातेश्श्रुत्वाधिकरणत्वश्रपणत्वयोरर्थप्राप्तयभिधानानुपपत्तेः । सह श्रपणान्यथानुपपत्त्या सम्प्रतिपन्नदेवताकत्वकल्पनं सम्प्रतिपन्नदेवताकत्वसिद्धौ सहश्रपणमित्यन्योन्याश्रयापत्तेश्च ।

अत एव सम्प्रतिपन्नदेवताकत्वं दधिपयसोः सिद्धं कृत्वैव लाघवात्तेनैव दध्ना साहित्यकल्पनया दधिश्रपणप्राप्तिरुपपादिता । अतः सम्प्रतिपन्नदेवताकत्वलाभायार्थवानेव सामान्यविभागविधिरिति न वैयर्थ्यम् । अस्मिंश्च पक्षे यदि त्रेधापदं वक्ष्यमाणमध्यमादिभावापन्नत्रित्वेन तण्डुलविशेषणं, तण्डुलत्वमपि विवक्षितमित्यङ्गीकारे वक्ष्यमाणवचनैरेव तत्तद्देवतान्तरेषु विधानेन संयोजनलाभात् पुनर्वचनवैयर्थ्यापत्तिरतस्त्रेधापदं तण्डुलपदस्य हविः परतामभ्युपगम्य तद्विशेषणं सत् मध्यमादिवाक्यनिर्दिष्टद्रव्यत्रयपरमथवा त्रेधापदं विभजेदिति क्रियान्वयेन तण्डुलपदं तण्डुलेषु त्रेधा सयोजनस्यापि मध्यमादिवाक्यैः प्राप्तत्वात् हविः परमेवेति वा स्वीकर्तव्यम् । उभयथापि मध्यमादिवाक्यनिर्दिष्टविशेषविभजनप्रकारस्यैव सामान्येन त्रेधावाक्येन विधानात् उपांशुयाजाज्ये तदप्राप्तेः केवलं परिशेषात् दधिशृतयोरेव सम्प्रतिपन्नदेवताकत्वफलं त्रेधावाक्यमिति सिद्ध्यति ।

**परामार्थतस्तु** अस्मिन्नपि पक्षे मध्यमादिवाक्येषु वाक्यभेदपञ्चशरावप्रतिबन्धोरपरिहारं पञ्चशराववदेव न कर्मान्तरत्वं मीमांसाऽद्वैतसाम्राज्यधुरन्धरैरप्पयदीक्षितैरुपपादितं युक्तम् । यद्यपि कर्मान्तरत्वपक्षेऽकर्मान्तरपक्षे च त्रेधावाक्यस्यानुवादत्वमेवोपपादितदिशा निरूपितं, तथापि, कर्मान्तरे यवप्रकृतिद्रव्यग्रहणसिद्ध्यर्थं द्रव्येषु यागदेवतापनयविधित्वं, अथवा सम्प्रतिपन्नदेवताकत्वसिद्ध्यर्थं सामान्यसंयोजनरूपविभागविधायकत्वमुपपद्यत एव । अथवा महारात्रे हवींषि निर्वपेदित्यादिना निरुप्तव्रीहिप्रकृतिकतण्डुलानामेव प्रयोगान्तः पातितया मध्यमादिविभागप्राप्तेः तदर्थं विधित्सार्थक्याभावेप्यर्थप्राप्ते विभागे अध्वर्युकर्तृत्वप्राप्तयर्थं, अथवा तद्बाधेन स त्रेधातण्डुलानिति तच्छब्दोपात्तयजमानकर्तृकत्वप्राप्तयर्थं तस्य विधायकत्वमभ्युपेयम् । एवं च त्रेधावाक्ये लक्षणादिक्लेशोऽपि नापद्यते । अस्मिंश्च पक्षेऽपनयविध्यभावेपि महारात्रे हवींषि निर्वपेदित्यादिना तण्डुलावस्थानाशकपेषणात् प्रागेव चन्द्रोदय प्रतीक्षणविधानात् तद्बलेन नूनमेतेषामेव

तण्डुलानां त्रेधाविभज्याभ्युदितेष्टावुपयोगः सम्भावित इति बोधिते कर्मान्तरेऽपि प्रकृतानामेव तण्डुलानां ग्रहणं सिद्ध्यति ।

तथा लिङ्गदर्शनबलादेव प्रकृतस्यैव दध्यर्धस्यात्र ग्रहणम् । यथैव सिद्धान्ते कर्मान्तरत्वाभावपक्षे अभ्युदितेष्टिकर्मणो दर्शत्वेन दर्शार्थोत्पादितस्य पूर्वदध्नः तत्रैवोपयोगप्राप्तौ स्वकालक्रियमाणदर्शार्थे दध्युत्पादनायाधातञ्चनविधिरुपपद्यते, एवं कर्मान्तरत्वपक्षे प्रायश्चित्तेनाकालकृताग्निप्रणयनदेवतापरिग्रहादिप्राप्तापचारनिर्हरणवदकालकृतदध्नः कर्मान्तरत्वमपि तेन कृतमित्यत्र प्रमाणाभावात् । न हि स्तेयप्रायश्चित्तेन स्तेयदोषनिर्हरणवत् स्तेयलब्धद्रव्यस्य कर्मार्हत्वमपि क्रियत इति **विधिरसायनो**पपादितदिशाऽकालकरणजनितदोषस्य कर्मान्तरेण निर्हरणेपि अकालकृतदध्नो मुख्यकालक्रियमाणदर्शाङ्गत्वबोधने प्रमाणाभावादावश्यकमेव पुनर्दध्यन्तरोत्पादनमिति द्वेधा विभक्तदध्नोऽर्धमातञ्चनार्थं विधीयते इत्येवं लिङ्गदर्शनमुपपादनीयम् । ततश्च सिद्धान्ते इवातञ्चनार्थनिहितार्धादन्यस्यार्धस्य प्रतिपत्त्यन्तरानुक्तेरेवाभ्युदितेष्टौ कर्मान्तररूपेऽपि सम्भवत्येव प्राप्तिरिति । एवमणिष्ठवाक्ये श्रृतशब्दप्रयोगात् **लक्षणार्था श्रृतश्रुति**रित्यत्रत्यगुणसूत्रदर्शितरीत्या वत्सापाकरणादिसंस्कारविशिष्टपयस एव श्रृतशब्दवाच्यत्वेन सम्भवति प्रातर्दोहसम्पादिते पयोग्रहणे न पयोमात्रपरत्वाश्रयणेन लौकिकस्य पयसो ग्रहणं युक्तम् । इतरथा संस्कृततण्डुलसाहचर्यबाधापत्तेः । अतः कर्मान्तरत्वपक्षेऽपि प्रकृतद्रव्यग्रहणोपपत्तेः वाक्यभेदपरिहाराच्च पञ्चशरावद्वैलक्षण्यानापत्तेश्चेमानि त्रीणि कर्मान्तराण्येवेत्येव युक्तम् ।

अत एव **कात्यायनेन** संस्कारात् सान्नाय्यमिति सूत्रेण प्राकृतमेव कर्मेति प्रतिपाद्य तत्रापरितोषेणैव अन्यद्वेज्यायोगात्तस्य तण्डुलापनयो वचनात् प्रकृत्या तु पूर्वं सर्वं वा निमित्तादिति चतुः सूत्र्या कर्मान्तरत्वं साधितम् । स्थिते चतुर्दश्यामन्वाधानोत्तरं सायं दोहात्प्रागेव चन्द्राभ्युदयावच्छिन्नकर्मप्रारम्भप्रज्ञानं तदाऽभ्युदयेष्टिनिमित्तसत्वेनानुष्ठाने प्राप्ते दर्शप्रयुक्ततण्डुलादिद्रव्याभावेऽपि यस्य हविर्निरुप्तमिति पदस्य पूर्वोक्तलिङ्गदर्शनेनैव व्याख्यानकरणात् सायं दोहोत्तरमिव चन्द्राभ्युदयसम्भावनानिमित्तकव्रीहिनिर्वापप्रभृतिफलीकरणान्तकर्मानुष्ठानद्वेधाविभागानुष्ठानपूर्वकतत्प्रतीक्षणोत्तरकालीनचन्द्राभ्युदयापेक्षज्ञानस्यैवाभ्युदयेष्टिनिमित्तत्वादभ्युदयेष्टिसमनुष्ठानादेव नान्यद्रव्यगवेषणमिति ध्येयम् । अत एव चन्द्राभ्युदयज्ञानं नात्र शास्त्रीयं विवक्षितम् । तथात्वे चन्द्रोदयप्रतीक्षाविधानानुपपत्तेः ।

**वस्तुतस्तु** आरम्भोत्तरं यदा कदापि पेषणात् प्राक् चन्द्राभ्युदयशङ्कायां फलीकरणान्तकर्मणो दध्नो द्वेधा कर्मणो नैमित्तिकतया प्रकारान्तररूपतया विधानेऽपि तादृशविशेषणविशिष्टतायाश्चन्द्राभ्युदयशङ्कोत्तरं यावच्चन्द्राभ्युदयनिश्चयं तादृशानुष्ठाने सति अर्थसमाजग्रस्तत्वेनोपलक्षणत्वमेव, न तु विशेषणत्वमिति केवलचन्द्राभ्युदयस्यैव निमित्तत्वमितरस्य सर्वस्याविवक्षितत्वम् । अत एव **तन्त्ररत्ने** अन्यत्रापि बह्ववयवे पदार्थे सामिकृते इत्यादिना चन्द्रोदयप्रतीक्षां विनैव चन्द्राभ्युदयज्ञानमात्रस्य निमित्तत्वमाश्रित्याभ्युदयेष्टिप्राप्तिर्दर्शिता ।

अत एव सन्देहापाकरणार्थमेव तादृशे विषये प्रतीक्षाविधानान्निश्चये सति सर्वस्यापि यथातथाभूतस्य निमित्तत्वम् । **यदाऽप्यन्वाधानानन्तरं** यावन्निर्वापानुष्ठानं मध्ये चन्द्रोदयाशङ्कारहितस्य निर्वापाव्यवहितपूर्वकाले एव तु चन्द्राभ्युदयज्ञानं तदापि सायं दोहप्रभृतिकदर्शप्रयोगस्य यथावस्थितस्यैवानुष्ठानात् मध्ये व्रीहिनिर्वापप्रभृतिफलीकरणान्तं चन्द्रोदयात्पूर्वमनुष्ठानं न सम्भवतीति न निरुप्तव्रीहिप्रकृतिकतण्डुलानां द्वेधाविभक्तदध्यर्धस्य वा द्रव्यत्वेन प्राप्तिस्संभवति **तथापि गुणलोपे च मुख्यस्येति** न्यायेन भूतनिर्वापसंबन्धद्वेधाविभागत्यागेन यथावस्थितव्रीहीणां दधिपयसोश्चोपादानोपपत्तेः सिद्ध्यत्येव प्रकृतद्रव्यग्रहणं अपनयविध्यभावेपि । अत एव महारात्रे हविर्निर्वापापकर्षः पूर्वोक्तविषये चन्द्राभ्युदयसन्देहविषयक एवेति ध्येयम् ।

एतावांस्तु विशेषः—सन्देहे निमित्तनिश्चयाभावात् महारात्रे निर्वापः प्राकृतीभ्य एव, न त्वनिरुप्तावस्थत्वेपि मीमांसकरीत्या वैकृतीभ्यः । निर्वापाव्यवहितपूर्वकाले तु तन्निश्चयात् वैकृतीभ्य एवेत्यवश्यमनयैव रीत्या संयोजनरूपसामान्यविभागविधानपक्षे सिद्धान्तिनापि प्रकृतद्रव्यग्रहणमुपपादनीयम् । उपांशुयाजाज्यस्य तु त्रेधापदानुरोधेन न यागैक्यपक्षेऽपि प्रसक्तिः । किमुत कर्मान्तरत्वपक्षे इत्युक्तमेव । सर्वथा युक्तं कर्मान्तरत्वम् । अलं भूयसा श्रमेण ।

प्रयोजनं दर्शाश्रितगोदोहनादिगुणकामानामप्रवृत्तिः पूर्वपक्षे, तथा मन्त्रे ऊहः ।

सिद्धान्ते गुणकामप्रवृत्तिः व्रीहिमन्त्रस्य यवप्रयोग इव मन्त्राणां लोपः । अथवा देवतासंयोजनरूपविभागस्योपदिष्टत्वात् तद्घटितमन्त्रप्राप्त्यविरोधेऽपि तद्भ्रेषे याजुर्वैदिकं प्रायश्चित्तमित्यादि द्रष्टव्यम् ।

## (२)—उपांशुयाजेऽवचनाद्यथा प्रकृति॥ १० ॥ अपनयो वा प्रवृत्त्या यथेतरेषाम्॥ ११ ॥

तत्रैवोपांशुयाजद्रव्यस्याज्यस्यापनयोऽस्ति न वेति चिन्तायां—तण्डुलग्रहणस्योपलक्षणत्वे प्रमाणाभावात् देवतान्तरसंयोगाभावाच्च नापनय इति प्राप्ते—

तण्डुलग्रहणस्य विवक्षितत्वे दधिशृतयोर्हविष्ट्वानुपपत्त्या अधिकरणत्वापत्तेः सह श्रपयतीति वाक्यवैयर्थ्यापत्तेरेव तण्डुलग्रहणस्य हविः परत्वावसायादाज्यस्याप्यपनयः। देवतान्तरसंयोगाभावात्तूपांशुयाजो लुप्यते। प्रजापतिविधिरपचारविषयत्वान्नेह प्रवर्तते॥

यत्त्वत्र भाष्यकारेण पक्षान्तरमुक्तं विभजेत् इत्यनेन नापनयविधिः किन्तु पूर्वयागीयं हविः वैकृतीभ्यो देवताभ्यो दद्यादिति सामान्यतो विभागरूपं दानं उपांशुयाजीयाज्यसाधारण्येन विधीयते। अपनयस्तु पूर्वदेवतानामर्थात्। तत्र विशेषवचनात् द्रव्यान्तराणां व्यवस्थायामप्याज्यस्य सामान्यवाक्यादेव त्रिभ्योपि दानमिति तदपनयविध्यभावे प्रकृतहवि-

---

॥ उपांशुयाजेऽवचनाद्यथाप्रकृति ॥

इतः प्रभृति साम्युत्थाने इत्येतत्पर्यन्तं यान्यधिकरणानि तेषु निरूपणीयोऽर्थ. प्रायः पूर्वाधिकरण एवाक्षेपसमाधानाभ्यां बहुशश्चर्चित एव तथापि क्वचित् किंचित् सन्दिग्धं पदवाक्यादिकं व्याख्यायते। दधिशृतयोर्हविष्ट्वानुपपत्त्येति। एतच्च मध्यमादिवाक्येषु द्रव्याणामुद्देश्यत्वेनान्वयः देवतान्तरमात्रस्य विधानमिति भाष्यकारमतेन यथावस्थितसिद्धान्तमादायोक्तम्। स्वपक्षे द्रव्यदेवताविशिष्टभावनान्तरविध्याश्रयणेन द्रव्याणामुपादेयतयाऽन्वयस्य स्वीकारात्। तत्र तण्डुलत्वविवक्षैवापद्यते उपलक्षणत्वे मानाभावादिति प्रागेवोक्तं न विस्मर्तव्यम्।

तदपनयविध्यभावे इति। वस्तुतस्तु यथैव महारात्रे हवींषि निर्वपेदिति निर्वाप्यानुवादानुपपत्त्या निरुप्तव्रीहिप्रकृतिकतण्डुलानामेवोपादेयतया तेषां मध्यमादिविभागोऽन्तः प्रयोगं सिद्ध्यत्येवेति न तद्विधायकतया त्रेधावाक्यस्य सार्थक्यमित्युक्तं; तथैव तदनुवादबलेनैव पूर्वोक्तरीत्या प्रकृतद्रव्यग्रहणं सिद्ध्यत्येवेति नापनयविधेः प्रयोजनमित्यावेदितमेव, तथापि

**ग्रहणे प्रमाणाभावात्सामान्यवाक्यस्यापि कर्मान्तरविषयकसामान्यविधित्वापत्तेरुपेक्षितम् ॥**

**अस्तु वा कर्मान्तरे सामान्यविधिवैयर्थ्यापत्तेरेव तथा। सर्वथाऽऽज्यस्यापि पूर्वदेवतापनयः। न चैवं प्रयाजादिद्रव्यस्यापि तदापत्तिः। चन्द्राभ्युदयकालीनकर्मप्रारम्भस्यैव निमित्तत्वेन वक्ष्यमाणत्वात् तादृशकर्मसम्बन्धिहविष एव देवतापनया-**

---

यागैक्यपक्षे प्रकृतद्रव्यसाधनके पूर्वदेवतावरुद्धे पूर्वयागे देवतान्तरविधानं न संभवति द्वयोर्देवतयोरेकयागीयैकद्रव्येषु समावेशायोगात् । कर्मान्तरपक्षे तु सकलस्यैव पुरोडाशस्याग्नेयत्वेन हविष्ट्वमिति मते अग्निदेवतासंबन्धिनोऽपि पुरोडाशोत्तरार्धस्य स्विष्टकृद्यागान्तरे भवति साधनत्वं वचनबलात् । एवमत्रापि अन्यदेवतासंबन्धिनः प्रकृतहविषो देवतान्तरविशिष्टकर्मान्तरे साधनताबोधकशास्त्रात् साधनत्वं उपपत्स्यत एव । न च यागैक्येपि वचनबलादेव पूर्वदेवताबाधेनोत्तरदेवतान्तरविशिष्टकर्मान्तरे साधनत्वबोधकशास्त्रात् साधनत्वनिवेशः सभवति, वचनस्य कर्मान्तरविधायकतयाप्युपपत्तेरित्युक्तमेव । अतो यागैक्यपक्षे कथंचित् प्रकृतद्रव्यग्रहणप्राप्तावपि पूर्वदेवताबाधेनोत्तरदेवताभ्यो दानं नापनयविधिं विना सिद्ध्यतीत्यभिप्रायेणैतद्द्रष्टव्यम् । **कर्मान्तरविधायकेति ।** त्रेधावाक्यस्यापनयविधित्व एव मध्यमादिवाक्ये कर्मान्तरविधानं न सिद्ध्यति अपनीतदेवताकानां देवतासाकाङ्क्षाणां हविषामुद्देशेन देवतान्तरमात्रविधाने सम्भवति विशिष्टकर्मान्तरविधित्वकल्पने गौरवात् । तदभावे कर्मान्तरविधित्वस्यैव वाक्यभेदपरिहारार्थमापत्तेः त्रेधावाक्येन तदीयद्रव्याणामेव सामान्यतो वक्ष्यमाणदानविधानापत्तिर्दुर्वारेत्यर्थः ।

**सामान्यविधिवैयर्थ्यापत्तेरिति ।** अत्र "तर्हि स्याद्देवताभ्यः प्रविभजनविधिः तत्र तद्गामिनीभ्य" इति पूर्वलिखित**विधिरसायन**श्लोकविवरणोपपादनरीत्या कर्मान्तरे सामान्यविधिवैयर्थ्यं द्रष्टव्यम् । अतस्तत्र तद्विधिवैयर्थ्यापत्तेस्तण्डुलपदेन प्रकृतहविर्मात्रलक्षणया उपांशुयाजाज्यसाधारण्येन वक्ष्यमाणदेवताभ्यो दानविधानमिति तथाशब्दस्यार्थः ।

**वस्तुतस्तु** कर्मान्तरे सामान्यदानविध्यसम्भवोपपादानरीत्या कर्मान्तरत्वाभावपक्षे सिद्धान्तेपि विध्यसम्भवोऽस्तीति प्रागेव सूचितम् । सम्प्रतिपन्नदेवतामध्ये विष्णुदेवत्यययाज्याम्नानात् तदनुरोधेनामावास्यायां प्राप्तमुपांशुयाजानुष्ठानं पौर्णमास्यामेव प्रत्यक्षविधिना तद्विधानात् प्र———(?)कत्वलाभप्रयोजनम् । अथवा विभागे यजमानकर्तृकत्वलाभप्रयोजनं चोभयत्राम्नाना-

**त्प्रयाजादीनां च दीक्षणीयादिवत्पृथगारम्भाभावात्तदीयद्रव्यस्यापनयानुपपत्तेः। इदं चोपांशुयाजद्रव्यस्यापनयाभिधानं शाङ्खायनानां 'अथ यत्सन्नयत्सान्नाय्यस्यान्तरेणोपांश्वाज्यस्य यजति तस्योक्तं ब्राह्मणम्,' इति वचनेनामावास्यायामप्युपांशुयाजविधानादवगन्तव्यम्। दाशमिकं तु पौर्णमास्यामेवोपांशुयाज इत्यधिकरणं कृत्वाचिन्तया। त्रयोदशामावास्यायामिति चावयुत्यानुवादः। एतद्बलादेव चामावास्यायां विकल्प इत्यपि गुरवः॥ २॥**

---

नुरोधेन पौर्णमास्यनुष्ठेयोपांशुयाजाङ्गत्वं तद्याज्यामन्त्रस्य भविष्यतीति न तद्बलेनामावास्यायां स इति निराकृतम्। अतस्तदनुरोधेनात्र तदीयाज्यापनयविचारकरणं कृत्वाचिन्तयेति सर्वनिर्णीतं तत्। पौर्णमास्यामिवामावास्यायामपि "अथ यदमावास्यायामिन्द्राग्नी यजतीति प्रतिष्ठे वा इन्द्राग्नी प्रतिष्ठित्या एव। अथ यत्सन्नयन्नमावास्यायामिन्द्रं यजेतेत्येतत् ज्योतिर्वा अमावास्या न ह्यत्र चन्द्रो दृश्यते। अथ यदसन्नयत् पुरोडाशान्तरेणोपांशुयाजाज्यस्य यजत्यजामित्वाय। अथ यत्सन्नयत्सन्नयन् सान्नाय्यस्यान्तरेणोपांश्वाज्यस्य यजति तस्योक्तं ब्राह्मणम्" इति शाङ्खायनब्राह्मणे तद्विधानं प्रत्यक्षमेव। पौर्णमास्याममावास्यायां च सोऽस्त्येवेति दाशमिकमेवोपांशुयाजाभावप्रतिपादनं कृत्वाचिन्तयेति दर्शयितुं फलतो दूषयति—**इदं चेति**। त्रयोदशामावास्यायामिति आहवनीयगतवषट्काराहुतिगणना, पौर्णमास्यमावास्ययोः "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायां" इति लिङ्गदर्शनेन क्रियते। सा च पौर्णमास्यां पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाः प्रधानत्रयं चेत्येवमुपांशुयाजमादाय चतुर्दशत्वम्। उपांशुयाजस्यामावास्यायामभावात् सान्नाय्यस्य सहानुष्ठानाच्च त्रयोदशत्वमिति व्यवस्थया भवति। यद्यमावास्यायामपि सः तर्हि तत्रापि चतुर्दशत्वापत्तेः त्रयोदशत्वानुवादकतदनुपपत्तिरतः सा पाक्षिकानुवादत्वेन परिहरणीयेत्यर्थः। यद्यप्यमावास्यायां उपांशुयाजसत्वेपि तस्योत्पत्तिवाक्येऽमावास्यासम्बन्धाभावेन फलसम्बन्धाप्राप्तेरङ्गत्वस्यैवापत्त्या प्रयाजाद्यङ्गद्रव्याणामिव नैतद्द्रव्यस्यापनयप्राप्तिः तथापि तदानीं तावन्नूतामिति वाक्यगतपौर्णमासीपदेनामावास्याव्यावृत्त्यसम्भवे पौर्णमासीपदममावास्योपलक्षणमेव। इतरथा हृदयमुपांशुयाग इति प्रधानप्रायपाठस्य पाक्षिकत्वापत्तेः। अत एव शाङ्खायनब्राह्मणेऽप्यैन्द्राग्नसान्नाय्यप्रधानयागविधिप्रायपाठोऽप्युपपद्यते। अतो युक्त्यैवामावास्यानुष्ठेयोपांशुयाजस्य फलसम्बन्धसिद्धिः। **एतेनाश्वलायनानां** उपांशुयागस्याङ्गत्वापादनं दाशमिकं **पार्थसारथेरपास्तम्**। गुरवस्तातचरणाः।

(३)—निरुप्ते स्यात्तत्संयोगात् ॥ १२ ॥ प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ १३ ॥ लक्षणमात्रमितरत् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥

यस्य हविर्निरुप्तमिति श्रवणात् निर्वापोत्तरकालीनचन्द्राभ्युदयस्यैव निमित्तत्वादमावास्यायां च सूर्योदयात्प्रागेवेष्ट्यारम्भविधानान्निर्वापात्प्राक्चन्द्राभ्युदयज्ञाने नेदं प्रायश्चित्तमिति प्राप्ते—

'हविरभ्युदियात्' इत्येतावतैव निमित्तत्वपर्यवसानेन निर्वापग्रहणस्याविवक्षितत्वादभ्युदयावच्छिन्नदिनप्रारम्भस्यैव निमित्तत्वं लाघवात्। पौर्णमास्यां च तस्य नित्यत्वादेव निमित्तत्वानुपपत्तेः परिशेषादेव दर्शविषयत्वम्। अतश्च निर्वापात्प्रागपि प्रक्रममात्रेण प्रायश्चित्तम्। अत एव 'यद्यगृहीतं हविरभ्युदियात्' इति लिङ्गमप्युपपद्यते ॥ ३ ॥

---

॥ निरुप्ते स्यात्तत्संयोगात् ॥

**इष्ट्यारम्भविधानादिति।** प्रागुदयादमावास्यायास्तन्त्रं प्रक्रामिति प्रागुत्तरपरिग्रहादिति वचनेनोत्तरपरिग्रहपर्यन्तं पूर्वदिनेऽनुष्ठानान्निर्वापस्यापि पूर्वमनुष्ठाने ततः पूर्वोत्तरं चन्द्राभ्युदयज्ञानं सम्भवत्येवेत्यर्थः। **इत्येतावतैवेति।** हविरभ्युदियादित्येतावतैव यथा निमित्तत्वपर्यवसानं तथा पूर्वाधिकरणारम्भ एवोक्तम्। अतो निरुप्तमिति निर्वापोऽविवक्षितः। **अत एव यद्यगृहीतमिति।** इदं च यद्यगृहीतं हविरभ्युदियात् प्रज्ञातमेतदेव व्रतं चरेत् यत् पूर्वेद्युरिति शापथवाक्यप्रतीकग्रहणम्। तच्चानिरुप्तेपि चन्द्राभ्युदयस्य निमित्ततावोधकं सत् निर्वापविवक्षायां ज्ञापकमित्यर्थः।

**मम तु प्रतिभाति**—चन्द्राभ्युदयस्याविशेषितस्य निमित्तत्वानुपपत्तेः केनचिद्विशेषणेन विशेषितत्वे कल्प्यमानेऽव्यवधानात् निरुप्तपदेनैव तत्कल्प्यते न तु हविः पदेन। निरुप्तस्य च हविष्ट्वादेव हविः पदमनुवादः। अतश्च प्रवृत्तिरूपक्रियान्तरापेक्षणाभावात् निर्वापोत्तरं चन्द्राभ्युदय एव निमित्तम्। यदि बिभीयादिति लिङ्गदर्शनेनापि तथा प्रतीतेश्च।

अत्र च **यद्यपि** नैमित्तिकनिर्वापादिविधेर्महारात्रे प्रतीतेर्न निर्वापोत्तरभाविचन्द्राभ्युदयस्य निमित्तत्वसम्भवः प्रत्युन प्रवृत्तमात्रस्यैव, **तथापि** यथावस्थितनिर्वापस्यैव चन्द्राभ्युदयशङ्कानिमित्ते पूर्वमपकर्षविधानेऽपि यथा चन्द्राभ्युदयस्य तादृङ्निर्वापोत्तरत्वं सम्भवति तथैव तादृशशङ्कारहितस्य निमित्ताभावेऽपकर्षासम्भवात् यथावस्थितकाले एव निर्वापानुष्ठानात् तदुत्तरत्वस्यापि चन्द्राभ्युदये सम्भवादुभयविधनिर्वापोत्तरं चन्द्राभ्युदय एव नैमित्तिकेष्टिकरणं नासुलभम् । अत एव त्रेधावाक्यस्यापनयविधित्वपक्षे तण्डुलपदस्योपलक्षणत्वेऽपि विभागरूपविधेयसामर्थ्यात् संयुक्तद्रव्यमात्रोपलक्षणत्वमङ्गीकृत्यापनयरूपविभागविधानं घटते । निर्वापोत्तरमेव द्रव्यस्य देवतासंयुक्तत्वात् ।

**वस्तुतस्तु** निर्वापविवक्षापक्षे त्रेधावाक्यस्य नापनयविधित्वं, किं तु मध्यमादिभावेन यजमानकर्तृकविभागविधित्वमेव याज्ञिकैरङ्गीक्रियते । अत एव निर्वापात् प्राक् अभ्युदितेष्ट्यप्राप्तौ यद्यगृहीतविभिवचनं सार्थकं अन्यथोभयथापि तत्प्राप्तौ तद्वैर्थ्यापत्तिः । अत एव निरुप्ते व्रताशक्तौ वा त्रेधातण्डुलान् विभज्य मध्यमानां अग्नये इत्यनेन सूत्रेण **कातीयानामपि** निर्वापानन्तरमेव त्रेधावाक्यविहितनैमित्तिकानुष्ठानं विहितम् । अतो युक्तैव तद्विवक्षेति । **ननु** चन्द्राभ्युदयादेर्निमित्तस्वरूपान्तः पातित्वेन विवक्षा तावत् प्रथमाधिकरणारम्भे तन्त्ररत्नादौ उक्तैवेति यदाऽपराह्णसन्धौ अपराह्णे अथवेति वचने सन्धिदिने विहितस्यान्वाधानस्य भ्रमेण चतुर्दश्यामुक्तक्रमस्तदा तदुत्तरं बहुतरामावास्यासत्वेऽपररात्रौ चन्द्राभ्युदयाभावादभ्युदयेष्टयनापत्तिरित्याशङ्कानिरासायाह—**उदयावच्छिन्नदिनप्रारम्भस्यैवेति** । **अयमर्थः**—नात्र दिनपदं **सावन**दिनपरं येन तस्मिन्नहोरात्रे चन्द्राभ्युदयावच्छिन्नदिनप्रारम्भासम्भवः शक्येत । अपितु **चान्द्र**तिथिरूपदिनपरम् । तथा च प्रातर्विद्यमानकतिपयघटिकावच्चतुर्दश्यामुपक्रमे तस्याश्चतुर्दश्यास्तत्पूर्वरात्र्यपरभागे चन्द्रोदयसम्बन्धवत्वेनोदयावच्छिन्नदिनप्रारम्भनिमित्तसत्त्वाद्भवत्येवाभ्युदितेष्टिः । अकाले तन्त्रप्रवृत्तिर्निमित्तमित्यस्याप्ययमेवार्थः नष्टचन्द्रायाममावास्यायां मुख्यकालत्वेन तद्व्यतिरिक्तचतुर्दश्यादेश्चन्द्रोदयवत्वेन नष्टचन्द्रत्वाभावेनाकालत्वात् । अत एव "त्रिमुहूर्तात् द्वितीया चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्" इत्यादिवचनैश्चतुर्दश्यामेवान्वाधानविधानं तच्चाकालत्वाभावान्न तस्य निमित्तत्वम् । अतः पुरुषभ्रमजनितोदयावच्छिन्नदिनप्रारम्भस्यैव तत् । एवं च यदा कदाचित् तथाविधनिमित्तज्ञानं नैमित्तिकप्रयोजकं तत्र सायंदोहात् प्रागूर्ध्वं वा यावच्चन्द्रोदयपर्यन्तं चन्द्राभ्युदयावच्छिन्नदिनप्रारम्भज्ञानं तदा चन्द्रोदयात् पूर्वं पूर्वोक्तलिङ्गदर्शनदर्शितार्थानुष्ठानपूर्वकं चन्द्रोदयप्रतीक्षणं कृत्वा यद्यभ्युदियादित्यर्थो

(४)—अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १६ ॥ व्यूर्ध्वभाग्भ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनयस्य ॥ १७ ॥

कर्मप्रवृत्तिमात्रस्य निमित्तत्वेऽपि नैमित्तिको देवतापनयस्तण्डुलग्रहणात्तण्डुलावस्थायामेव च कर्तव्यः। पूर्वं तु प्राकृतीभ्य एव निर्वापादि कार्यमिति प्राप्ते—

तण्डुलग्रहणस्य विवक्षितत्वे दधिपयसोरपनयाभावेन देवतान्तरसम्बन्धानापत्तौ सह श्रपयतीति वाक्यवैयर्थ्यापत्तेस्तस्य हविर्मात्रोपलक्षणत्वात् पूर्वमप्यभ्युदये वैकृतीभ्य एव निर्वापादि ॥ ४ ॥

---

(५)—विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥ अप्राकृतेन हि संयोगः तत्स्थानीयत्वात् ॥ १९ ॥ अभावाच्चेतरस्य स्यात् ॥ २० ॥

अर्धनिरुप्ते चन्द्राभ्युदये ज्ञाते अवशिष्टमुष्टयो न तावत्प्राकृतीभ्यो निर्वप्तव्याः निमित्तसत्वेन नैमित्तिकस्यापनयस्य प्रवृत्तौ बाधकाभावात्। नापि वैकृतीभ्यः, पदार्थैकदेश-

---

नुष्ठानम्। यदा तु चन्द्रोदयोत्तरं तज्ज्ञानं तन्निर्वापात् प्रागूर्ध्वं वा तदा वक्ष्यमाणविकरणेन निर्णयो ज्ञेयः।

---

॥ अनिरुप्तेऽभ्युदिते ॥

**तण्डुलग्रहणस्येति।** एतच्च द्रव्याणामुद्देश्यत्वेनान्वय इति **भाष्यकारमतेन** ज्ञेयम्। यथा चोपादेयत्वाङ्गीकारे तण्डुलग्रहणस्य विवक्षापत्तिः सह श्रपयतीत्यस्य च न वैयर्थ्यं तथोपपादितमधस्तात्। **पूर्वमपीति।** निर्वापात् पूर्वं व्रीह्यवस्थायामपीत्यर्थः।

---

॥ विनिरुप्ते न मुष्टीनामपनयः ॥

**अर्धनिरुप्ते इति।** अर्धशब्दोऽत्रैकद्व्यादिमुष्टिसमावयवपरः। ननु त्रेधावाक्येन वैभागरूपापनयविधाने तस्य भावरूपत्वादनुष्ठेयत्वावगतावन्यथा तदसम्भवे अग्नेरिदं न, इन्द्रस्येदं मेत्येवं वाचमिकतदनुष्ठानापत्तिरित्याशङ्कानिवारणायापनयविधेर्निषेधात्मकत्वमन्यनिषेधदृष्टान्तेन

स्याविहितत्वेन तत्र देवतान्तरसंयोगाप्रवृत्तेः। यथैव हि फलं न भक्षयेदित्यादिनिषेधाः अवयवावयविसाधारण्येन प्रवर्तन्ते एवमपनयात्मको निषेधोऽपि। यथैव फलं दद्यादित्यादिविधयो अवयविन्येव प्रवर्तन्ते एवं देवतान्तरसंयोगोपि। अतश्च तूष्णीमेवावशिष्टो निर्वापः। याज्ञिकास्तु पदार्थैकदेशस्याप्यार्थिकविधिविहितत्वमङ्गीकृत्य वैकृतीभ्य एवानुतिष्ठन्ति ॥ ५ ॥

---

(६)—सान्नाय्यसंयोगान्नासन्नयतस्स्यात् ॥ २१ ॥ औषधसंयोगाद्वोभयोः ॥ २२ ॥ वैगुण्यान्नेति चेत् ॥ २३ ॥ नातत्संस्कारत्वात् ॥ २४ ॥

---

प्रसङ्गादुपपादयति—यथैव हीति। नायमपनयविधिर्भावरूपमपनयं विधत्ते, किन्तु देवतया संयुक्तं देवतायै प्रदेयत्वेन प्राप्तं न दद्यादिति फलतो निषेधमेव बोधयति। तस्यैव निषेधस्य यद्विभजेदिति विधिरूपेणोपादानं तद्विकल्पापत्तिनिरासमात्रार्थं न त्वनुष्ठानसिद्ध्यर्थम्। एवं च कूश्माण्डं दद्यादिति विधिवाक्ये यत्र कूश्माण्डस्य साधनत्वं तत्र तत्पदवाच्यजातेः तदवच्छिन्नावयविव्यक्तेः तदाक्षिप्तानां तज्जात्यवच्छिन्नावयवानामपि तद्भवति। अवयवावयविसाधनत्वयोश्चैकपदोपादानादुपादेयस्थले साहित्यस्य विवक्षितत्वान्नावयवमात्रोपादानेन शास्त्रार्थसिद्धिः। यत्र तु कूश्माण्डं न भक्षयेत्" इति निषेधेषु तस्योद्देश्यत्वं, तत्रानुवाद्यगतत्वेन तत्साहित्यस्याविवक्षितत्वादवयवभक्षणेपि भवत्येव प्रत्यवाय इत्येवं वेदोपक्रमाधिकरणकौस्तुभे दर्शितरीत्येहापि द्रव्यस्य देवतासंबन्धनिषेधे द्रव्यदेवतान्तरविशिष्टभावनाविधाने च द्रव्यावयवसाहित्याविवक्षाविवक्षे समाने एवेत्येकदेशसंयुक्तस्य देवतापनयस्समस्तावयवसहितस्य देवतान्तरसंबन्धश्च सूपपाद एवेति भावः। एवं देवतान्तरसंयोगेऽपीति। देवतान्तरं हि प्राकृतीनां स्थाने विहितं, येन पदार्थेन प्राकृत्यः संयुज्यन्ते तेनैव पदार्थेन संयुज्यते न पदार्थैकदेशेन। चतुर्मुष्टिपरिमितनिर्वापपदार्थस्यैव देवतासंबन्धेन विधाने पदार्थावयवसाहित्यस्य विवक्षितत्वात्। अतो नैकदेशेन प्राकृतदेवतायाः संबन्धो नतरां च वैकृतीनामित्यर्थः। अवशिष्टो निर्वाप इति। प्राकृतवैकृतदेवतोल्लेखं विना तूष्णीं कर्तव्य इत्यर्थः। याज्ञिकास्त्विति। यद्यपि कातीयानां मीमांसकरीत्यैवानुष्ठानादापस्तंबानामापस्तंबसूत्रे विनिरुप्ते अभ्युदिते प्राकृतीभ्यः शेषमित्याम्नानान्न केषामपि याज्ञिकानां वैकृतीभ्यः शेषनिर्वापानुष्ठानं तथापि अनिरुप्तेऽभ्युदिते वृद्धभाग्भ्यो निर्वपेदिति सत्याषाढसूत्रमनुरुध्योक्तमेतदिति ध्येयम्। अन्यत्रापि बह्ववयवे पदार्थे द्रष्टव्यमित्युक्तं तन्त्ररत्ने।

किमियमभ्युदितेष्टिस्सन्नयत एव उतासन्नयतोऽपीति चिन्तायां—द्रव्योद्देशेन देवतामात्रविधिपक्षे यद्यपि द्रव्यस्य साहित्यमविवक्षितं, तथाऽप्युद्देश्यानेकत्वादेवैतत्पक्षापरितोषाद्भावनान्तरविधिपक्षे च तद्विशेषणयोर्दधिस्थविष्ठयोः शृताणिष्ठयोश्च साहित्यस्य विवक्षितत्वाद्विधेयसामर्थ्यानुरोधेन सन्नयन्मात्रविषयत्वमिति प्राप्ते—

न चेदन्येन शिष्टा इति न्यायेनाप्राप्तविशेषणस्यैव कल्प्यविशेषणविधिविधेयत्वेन द्रव्यसाहित्यस्य तत्तद्यागसाहित्यवशेनैव च प्राप्ततया विशेषणविध्यकल्पनादविवक्षितत्वेनासन्नयतोऽप्यभ्युदितेष्टावधिकारः। अतश्चैन्द्राग्नस्याप्यौषधद्रव्यकत्वान्मध्यमादिभेदेनाग्नेयवदावृत्तिः। तत्रापि सहश्रपयतीति वचनेनाग्नेयैन्द्राग्नहविषोस्सहश्रपणे विहिते अष्टा-

---

॥ सान्नाय्यसंयोगात् ॥

**तत्तद्यागसाहित्यवशेनेति।** यद्यपि प्रयोगविधिना यागानां समुच्चयविधानलभ्यं तत्तद्द्रव्यसाहित्यस्याप्यर्थसिद्धत्वेनाविधेयत्वापत्तेरौषधद्रव्यकदेवतान्तरभावनाया दधिद्रव्यकदेवतान्तरभावनायाश्च पृथगनुष्ठानापत्तिर्दुर्वारा। यदि तु मध्यमादिवाक्यैः स्थविष्ठदधिदेवतान्तरविशिष्टभावनान्तरविधानस्य विशिष्टरूपेणानुष्ठान एव सिद्धेर्न पृथगनुष्ठानेन शास्त्रार्थसिद्धिरित्युच्येत तदा असन्नयतोऽपि विशिष्टभावनाविध्यनुरोधेनैवारुण्यादिगुणानां औषधमात्रद्रव्यकभावनान्तरानुष्ठानेन शास्त्रार्थसिद्धिरिति सममेव। अत एवारुण्यवाक्ये विशिष्टभावनाविध्यनुरोधेनैवारुण्यादिगुणानां साहित्यं विशेषणविधिविधेयत्वेनाश्रित्य न पृथक् क्रियानुष्ठानमेवमिहापि साहित्यं विशेषणविधिविषयत्वेन विवक्षितमिति नासन्नयतोऽधिकारः सिद्ध्यति।

तथापि भिन्नविधिविधेयत्वाश्रयणेऽपि स्थविष्ठदध्नोरणिष्ठशृतयोः सम्प्रतिपन्नदेवताकयोः सहानुष्ठानस्य सहश्रपणविध्यनुरोधेनैव सिद्धिवदेकविधिविधेयत्वेपि तथैव सहानुष्ठानलाभाद्विशिष्टभावनाविधानेऽपि पृथग्भावनान्तरानुष्ठानापत्तेर्न द्रव्यगतपरस्परवैशिष्ट्यविषयविशेषणविधिकल्पनं प्रयोजनाभावात्। असन्नयतश्च सम्प्रतिपन्नदेवताकपरप्रयुक्तद्रव्यान्तराभावेन सहश्रपणसहानुष्ठानयोरशक्यानुष्ठानेऽपि स्थविष्ठादिद्रव्यस्यापनीतपूर्वदेवतासम्बन्धस्य देवतान्तरसम्बन्धेन सम्भवतो यागभावनाकरणत्वस्य त्यागे प्रमाणाभावात् सम्भवत्येवाधिकारः। अत एवारुण्यसम्भवे विशिष्टभावनानुष्ठानसम्भवेऽपि कदाचिदारुण्यासम्भवे क्रयभावनायामारुण्यादीनां प्रत्येकमेव करणत्वादेकहायनीमादायापि क्रयभावनानुष्ठानं भवत्येव, न तु तत्साहित्यानुरोधेनैकहायनीसाध्यत्वेन सम्भवतः क्रयस्य लोप इष्टः।

**कपालत्वद्वादशकपालत्वयोर्विरोधे मुख्यत्वादष्टाकपालत्वस्यैवानुग्रहेण** त्रयोऽप्यष्टाकपाला **एव कार्याः।** अथ वा आद्य **एवाष्टाकपालः। इतरौ तु जले एव चरू ॥ ६ ॥**

---

अत एव द्रव्यद्वयोद्देशेनैकेन वाक्येन देवतान्तरविधानमिति भाष्यसिद्धान्तपक्षे उद्देश्यभेदप्रयुक्तवाक्यभेदस्यागत्याऽङ्गीकारात् प्रत्येकमेवैकैकोद्देशेन भिन्नेन वाक्यद्वयेन देवतान्तरसम्बन्धविधानेपि सति द्रव्यद्वयविशिष्टैकभावनाभावेपि द्रव्यद्वयविशिष्टैकभावनानुष्ठानमेव निर्वहणीयं, अन्यथा भिन्नविधिविधेययोः सहानुष्ठानानुपपत्तेः। एवं स्थिते प्रकृतहविरुद्देशेन देवतामात्रविधानात् तत्र च हविषां साहित्यस्याविवक्षितत्वात् सान्नाय्याभावेप्यौषधस्य देवतान्तरसंयोगादसन्नयतोप्यस्त्येवाभ्युदयेष्टिरिति ग्रन्थेन **तन्त्ररत्ने शास्त्रदीपिकायां** च साहित्याधीनताप्रदर्शनमसन्नयतोऽभ्युदितेष्ट्यधिकरणस्य कृतं तदेकवाक्येनाप्युभयोद्देशेन देवतामात्रविधानमङ्गीकृत्यापि तस्य तत्राधिकारप्रदर्शनमात्रार्थम्।

**वस्तुतस्तु** उद्देश्यभेदेन वाक्यद्वयस्यैवाङ्गीकारे पार्थक्येनाम्नातयोरुद्देश्ययोः क्व साहित्यप्रसक्तिः यदर्थं तदविवक्षा साध्येत। अतो देवतामात्रस्याथवा द्रव्यदेवताविशिष्टभावनान्तरस्य वा विधिपक्षेपि तस्य तदधिकारः सुलभ एव। कर्मान्तरत्वाङ्गीकारेपि प्रकृतद्रव्याणामेव वचनाद्ग्रहणमिति पक्षाश्रयणेप्यसन्नयतः तत्राधिकारः साधनीयः।

**एतेन** मध्यमादिवाक्यैः प्रयोगान्तरविधानाक्षेपनिरासायासन्नयतोऽधिकारानापत्तियुक्तिर्विधिरसायने उपन्यस्ता **परास्ता।** पूर्वोक्तरीत्या भावनान्तरपक्ष इव प्रयोगान्तरपक्षेपि तत्र तस्याधिकारोपपत्तेः। अत एव **तन्त्ररत्नकृता** प्रयोगान्तरविधिनिरासे प्रयोगस्य प्रारब्धस्यावश्यसमापनीयत्वेन प्राप्तत्वमेव हेतूकृतमिति। **त्रयोप्यष्टाकपाला इति।** अत्र चासन्नयत आग्नेयैन्द्राग्नयोर्मध्यमसाध्य एवाष्टाकपालः। स्थविष्ठाणिष्ठसाध्यं तु अप्सु चरुद्वयमिति याज्ञिका वदन्ति। तदभिप्रेत्याह—**अथवेति।**

**अयमाशयः**—स्थविष्ठादिवाक्ययोरप्राप्तं चरुत्वं तावद्विधेयमेव। नहि सहश्रपणविधिविहितसहश्रपणबलादर्थसिद्धं चरुत्वं, तेन विधिना श्रपणसत्वे तेनैव सह दध्नः पयसो वा श्रपणप्राप्तावपि तण्डुलानां तदभावे दध्ना पयसा वा सह श्रपणस्यैवाप्राप्तेश्चरुत्वप्राप्त्यभावात्। नहि मध्यमादिभेदभिन्नानां तण्डुलानां श्रपणं विध्यन्तरेण केनचिदपि प्राप्तम्। एवं स्थिते चरुणा सह सप्तम्यर्थोऽनुवाद इति भाष्योक्तौ कपालेष्वौषधस्योखायां पयसश्च भिन्नविधिनैव श्रपणविधानाच्छ्रूयमाणस्यापि पयसः साहित्यासम्भवे यस्य तु दध्नः श्रपणमेव न विहितं तस्य कुतः

स्थविष्ठसाहित्यप्रत्याशेति सप्तम्यर्थानुवादत्वासम्भव इत्यनुपपत्तिमाशङ्क्याभ्युदितेष्टिप्रकरणे भाष्यकारलिखनात् सहश्रपणविधातृवाक्यं सह श्रपयतीत्येवमस्तीति कल्पनात् साहित्ये श्रपणस्य क्रियमाणेऽर्थप्राप्तः सप्तम्यर्थोऽनुवाद इति परिहारोत्तरं--ननु तेन वचनेन श्रपणस्य साहित्यं विधीयते न तु श्रपणमतः कथं दध्नः श्रपणप्राप्तिरित्याशङ्क्य साहित्यार्थमेव दध्नोऽपि श्रपणं भवतीति यत्समाहितं **तन्त्ररत्नाद्याकरग्रन्थेषु तदपि** पूर्वापरविरुद्धत्वात् युक्त्यसहत्वाच्चा[1]युक्तमेव, कपालेष्वौषधस्य श्रपणप्राप्तिरित्युद्भावनस्यासङ्गतत्वात् । न च पुरोडाशेन सह दध्नः श्रपणे पुरोडाशस्य सम्पादयितुमशक्यत्वम् । अत एव पुरोडाशाभावात् पेषणस्याविधानाभ्युपगमे तण्डुलश्रपणस्यैवाप्तौ तस्य दधिसाहित्यसम्पत्तये दध्नोपि पेषणस्य निवृत्तावर्थात् तण्डुलानामेव श्रपणं सिद्ध्यतीति **तन्त्ररत्नाभिप्रायवर्णनं** युक्तम् ।

**वस्तुतस्तु** पुरोडाशस्यात्र साधनत्वाभावेन कदाचित् दध्ना सह श्रपणकरणे तदाकारनाशेपि बाधकाभावात् । यथैव हि दध्नः श्रपणप्राप्तावपि तस्यैव दध्नः साहित्यप्रतियोगिकत्वं सह श्रपयतीति वचनविहितसाहित्यसम्पत्तये प्रकल्प्य श्रपणोपपादनमेवं श्रपणसम्पत्तये स्थविष्ठानां पुरोडाशं कृत्वा तस्य श्रपणेऽन्यत्र प्राप्ते सति दध्नः साहित्यविधानाद्दध्न्येव श्रपणे कृते पुरोडाशाकारस्य कदाचिन्नाशेपि दधिश्रृतस्य विनष्टपुरोडाशाकारद्रव्यस्यैव संप्रतिपन्नदेवताकत्वेन सहावदानपूर्वकं यागानुष्ठाने न किंचिद्बाधकम् । न च स्थविष्ठादिप्रकृतिकपुरोडाशकरण एव मानाभावः । स्थविष्ठादीनामाग्नेयद्रव्यतया तस्यैवाग्नेयदेवतान्तरसम्बन्धेनानुष्ठाने तदीयपुरोडाशप्रकृतित्वेनैव विधानोपपत्तेः पुरोडाशप्राप्तेः । अत एव मध्यमादिवाक्ये पुरोडाशाष्टाकपालत्वांशेऽनुवादत्वं सिद्धान्तेऽङ्गीकृतम् । अत एवाणिष्ठानां न पुरोडाशं कृत्वा श्रपणसम्पादनं, तत्र श्रृतस्योखायां श्रपणसत्वेन तत्र प्राप्ते श्रपणे अणिष्ठानामेव साहित्यप्रतियोगित्वकल्पनेन तेषु श्रृतसाहित्यसम्पत्तये श्रपणस्यार्थादेव प्राप्तत्वात् ।

अस्तु वा तत्रापि कथञ्चित् पुरोडाशेनैव सह श्रपणम् । यत्र तु दधिस्थविष्ठयोरुभयोरप्यप्राप्तमेव श्रपणं तत्रैकतरस्यापि श्रपणाप्राप्तौ तत्साहित्यसम्पत्त्यर्थं अन्यस्य श्रपणप्राप्तिरिति सह श्रपयतीति साहित्यविशिष्टश्रपणस्यैव विधानमङ्गीकार्यम् । अथवा येनोपायेनैकतरश्रपणं सम्भवत्प्राप्तिकं भवति तथैव यतनीयम् । तत्र श्रृतचर्वर्थाद्दध्निश्रपणप्राप्त्युपायादर्शनात् स्थविष्ठानां पशुपुरोडाशाकारतासम्पादनेन कदाचित् सम्भवति श्रपणम् । न हि पुरोडाशस्य दध्नि श्रपणे

---

1. T. अनुक्तिसहत्वाच्च

पुरोडाशाकारोपि नश्यति । प्रत्युत तस्मिन् श्रपणे दृढीभावस्यैवोपलम्भादिति तन्निरास-पूर्वकचरुत्वप्राप्त्यर्थमवश्यं चरुता विधेयैवेत्यवहितेन मनसाऽऽलोचनीयम् । तथा च तण्डुलानां चरुत्वाविधानादर्थात् प्राप्ते श्रपणे साहित्यमात्रस्य सह श्रपयतीति वाक्येन विधानेन दध्नोऽपि सह श्रपणसिद्धौ प्राप्तमेव दध्यादीनामधिकरणत्वमिति तावन्मात्रमेवानुवादो, न तु चरुतांशेपि प्राप्त्यभावादित्येतत्सर्वमभिप्रत्यैवाभ्युदितेष्ट्यधिकरणे "वस्तुतस्तु स्थविष्ठादिप्रकृतिक-पुरोडाशेनापि दध्यादेः सह श्रपणापत्तेः न चरुत्वप्राप्तिरिति तद्विधिरावश्यकः । दध्यादिना च सह श्रपणविधानात् तदधिकरणत्वं परं अनुवाद" इत्युक्तं **पूज्यपादैः** ।

**यद्यपि** यत्किञ्चिद्दधिभागश्रपणेनापि सहश्रपणशास्त्रार्थसिद्धेर्नियमेन चतुर्मुष्टिनिरुप्त-चरुनिष्पत्तिपर्याप्तदध्न एव श्रपणप्राप्तौ प्रमाणाभावात् न तदधिकरणत्वस्याप्यर्थतः प्राप्तिरिति न तदंशेप्यनुवादत्वं **तथापि** चरुत्वविघातकाधिक्यनिरासार्थमवश्योपास्येनैव **कांस्यभोजिन्यायेन** तण्डुलानां चरुत्वसिद्ध्यनुरोधेन तावत्पर्याप्तदध्यादिषु श्रपणेऽपि न बाधकम् ।

**वस्तुतस्तु** प्रणीतास्थानापत्त्या दधिपयसोरुपादानेन पिष्टसंयवनस्य तदुत्तरं पुरोडाशस्य वा करणेपि कपालेषु क्रियमाणे श्रपणे स्थविष्ठादिप्रकृतिकपुरोडाशयोर्दधिपयसोश्च परस्परं साहित्यसम्भवादुपपद्यत एव सह श्रपणमिति सह श्रपयतीति विधिः फलतो दधिपयसोः प्रणीतास्थानापत्तिमेव प्रापयन् न चरुत्वं न वा दधिपयसोरधिकरणत्वमित्यावश्यकमेव तयोर्विधानमिति ध्येयम् । एवं चासन्नयतोऽपि चरुद्वयसम्पादनावश्यकत्वे युक्तमेवाप्सु चर्वोः श्रपणमित्या**पस्तम्बानुयायिनां** वचः । **अथवा** सान्नाय्ययागप्रयुक्तदधिशृताभावेपि विशेष्यभूत-दधिशृतयोर्यावदनुसम्भवे त्यागायोगाल्लौकिकयोरेव तयोः श्रपणं चर्वोः कार्यमिति न बाधकम् । अत एव **वासुदेवगदाधरकारिकाकारादीनां कातीयानामेवानुष्ठानं** दृश्यते ।

**एतेन** सह श्रपयतीति वचनविहितसहश्रपणलभ्यचरुत्वस्यार्थात्सिद्धस्यानुवादत्वेनावि-वक्षितत्वादसन्नयतश्च दधिपयसोरभावेन सह श्रपणाभावात् प्रणीताभिः पुरोडाशत्रयमेवेति **तन्त्ररत्नोक्तमपास्तम्** । तथा च पेषणपुरोडाशयोर्मध्ये यत्पदार्थानन्तरं चन्द्राभ्युदयज्ञानं तदा पिष्टस्य पुरोडाशस्य वा त्रेधाविभागं कृत्वा एकेन भागेन पुरोडाशोऽपरभागद्वयेन दधिपयसो-श्चरुद्वयमित्येवं प्रकारेणानुष्ठानं **तद्देवयाज्ञिककृतपद्धतेरवधेयम्** । सर्वस्मिन्नपि पक्षे यागस्य तु पुनरावृत्तिर्भवत्येवेति दिक् ।

(७)—साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ २५ ॥ प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ २६ ॥ आदेशार्थेतरा श्रुतिः ॥ २७ ॥

'यदि सत्राय दीक्षितानां साम्युत्तिष्ठेरन् सोममपभज्य विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेरन्' इति श्रुतम्। तत्र विश्वजिदयं सोमक्रयोत्तरं उत ततः पूर्वमप्युत्थाने भवेदिति चिन्तायां, यद्यपि त्यागापरपर्यायं व्युत्थानमात्रं निमित्तं न तु सामिपदवाच्यार्धत्वमपि विशेषणं, नापि सोमक्रयः। तथाऽपि सोमविभागस्यापि विश्वजिदङ्गत्वेन विधेयत्वात्पुनराधानवदेव नैमित्तिकत्वरूपपर्यालोचनया सोमक्रयोत्तरमेव विधीयते। न हि पूर्वं सोमोऽस्ति येन सोमविभागरूपमङ्गमनुष्ठीयेत। न च वोधायनादिकल्पपर्यालोचनया पूर्वमपि सोमस्यसत्त्वाद्विभागोपपत्तिः विक्रेतृसोमस्यैव क्रयात्पूर्वमुपकल्पनेन तस्मिन् यजमानस्वत्वाभावात्। अतस्सोमक्रयोत्तरमेव व्युत्थाने विश्वजिदिति प्राप्ते—

नात्र विभागविधिः संसृष्टद्रव्याणां व्युत्थाने द्रव्यविभागस्यार्थप्राप्तत्वात्। अत एव सोमपदं संसृष्टवस्तुमात्रपरं, अतश्च सोममपभज्य इत्यस्यानुवादत्वाद्विश्वजिन्मात्रं नैमित्तिकं सोमक्रयात्पूर्वमपि व्युत्थानस्य निमित्तस्य सत्त्वात्कर्तव्यमेव। किञ्च यद्यपि विभागो विधीयते तथाऽपि तस्यादृष्टविधया विश्वजित्याराादुपकारकाङ्गत्वान्नावश्यं क्रीतस्यैव स्वस्यैव

---

॥ साम्युत्थाने विश्वजित् ॥

अत्र सिद्धान्तसूत्रविवरणभाष्ये **साम्युत्थाने विश्वजित् क्रीतेविभागसंयोगादिति** पूर्वपक्षसूत्रविवरणभाष्ये साम्युत्थाने विश्वजित क्रीते विभागसंयोगादिति पूर्वपक्षसूत्रस्थसाम्युत्थाने इति पदस्वारस्येन साम्युत्थानं निमित्तं विश्वजित इति प्रतीयते। **तन्त्ररत्नेऽपि** यद्यपि निमित्तं साम्युत्थानं न क्रयेण विशेष्टुं शक्यते, वाक्यभेदप्रसङ्गादिति ग्रन्थेन सोमक्रयमात्रं विशेषणं साम्युत्थानं तु निमित्तस्वरूपमिति च स्पष्टं भाति। तत्रोत्थानमात्रमेव निमित्तं न तु सामित्वमपि तद्विशेषणं विवक्षितमिति विशेषं दर्शयति—**व्युत्थानमात्रमिति**। **आरादुपकारकाङ्गत्वादिति**। यदि परिगृहीतसोमसंस्कारको विभागः स्यात् तदा सोमक्रयोत्तरमेव तदङ्गता सिद्ध्येत न त्वेतदस्तीत्यर्थः। **वस्तुतस्तु** सोमपदस्य संसृष्टद्रव्यमात्रपरत्वेन तदीयविभागस्यार्थप्राप्तत्वेपि विश्वजिति सत्रप्रयुक्तस्यैव तस्य नियमेन साधनत्वं नान्तरेण विभागविधिं सिद्ध्यतीति तस्य विधिरावश्यक एव। तद्विधिविधेयविभागसंस्कृतद्रव्यस्योपयोगापेक्षायां दृष्टद्वारैव विश्वजिदर्थत्व-

**वा सोमस्य विभागः, किन्तु लौकिकस्यैव सत्रासम्बन्धिनो यस्य कस्यचित्सोमस्य प्रत्येकं विभागः, अतश्च तादृशनैमित्तिकस्य पूर्वमपि सम्भवादविशेषः। अयं विश्वजित् गुणात्कर्मान्तरं स्वर्गार्थविश्वजिदपेक्षया, आगूरणविश्वजिदपेक्षयाऽपि। तयोस्त्वेतदपेक्षया यागान्तरत्वे अभ्यासः प्रकरणान्तरं च प्रमाणं बोध्यम्। एतत्फलमागूरण**विश्वजिद्वदेव **द्रष्टव्यम्॥**

**वस्तुतस्तु निमित्तभेदस्य** निर्वक्तुमशक्यत्वाच्छाखान्तरन्यायेन **एक एव विश्वजिद्वाक्यद्वयेन विधीयत इति नागूरणविश्वजितोऽस्य भेदः।** प्रवृत्तस्य **विश्वजित् उताप्रवृत्तस्येति विचारस्तु एतद्वचनाभावं कृत्वा चिन्तयेति ध्येयम्॥ ७॥**

---

कल्पनान्नादृष्टार्थत्वापत्तिर्नवा विश्वजित्यनेकस्वाम्याभावेन विभागविध्ययोगान्न तदर्थत्वम्। सत्रस्य च त्यक्तत्वादेव न तदर्थक्रमो विभागविधिनाऽऽक्षेप्तुं शक्यत इति न नियमविधित्वमिति **प्रकाशकारोक्तानुपपत्तिः,** अनुवादत्वाभावेपि सोमपदस्य द्रव्यत्वादिप्रकृतसिद्धान्तोपपत्तेरिति ध्येयम्। **गुणादिति।** अतिरात्रसंस्थासर्वस्तोमसर्वपृष्ठसर्ववेदसदक्षिणाद्यनेकगुणविधाने वाक्यभेदापत्तेर्वाक्यभेदापादकगुणात् कर्मान्तरमित्यर्थः। गुणादित्युपलक्षणं प्रकरणान्तरस्यापि निमित्तरूपानुपादेयगुणविधाने वाक्यभेदापत्तेर्वाक्यभेदापादकगुणसहकृतस्य तस्य सम्भवात्। **विश्वजिद्वदेवेति।** अत्रैव चतुर्थपादे **विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यादित्यधिकरणे** यथाऽऽगूरणनिमित्तकविश्वजितः फलं सत्राकरणप्रयुक्तदोषपरिहार एव, न तु सत्रजन्यसुखं फलमिति साधितं तस्यापीत्यर्थः। तेन यथा **तन्त्ररत्नकारादिभिः** तत्र सन्निहितं सत्रजन्यं फलं विश्वजित इत्युक्तं यया युक्त्या पूर्वमस्माभिः खण्डितं तयैव युक्त्याऽस्यापि तन्त्ररत्ने सत्रजन्यं मुख्यमेव फलमित्युपक्रम एव खण्डनीयमिति विश्वजिद्वदेवेति वतिना सूचितम्। **निर्वक्तुमशक्यत्वादिति।** आगूरणमपि सङ्कल्पस्तेन प्रवृत्तिमात्रमेव निमित्तमिहापि सत्राय दीक्षितानां प्रमीयेतेतिवत् अहीनव्यावृत्तये सत्रं तु निमित्तान्तः पात्येव। दीक्षितानामिति पदं तु निरुप्तानामितिवदविवक्षितार्थं सत् प्रवृत्तमात्रोपलक्षणं, अन्यथा त्यागापरपर्यायोत्थानानुपपत्तेरतोऽत्रापि प्रवृत्तिमात्रमेव तदिति निमित्तभेदस्य निर्वक्तुमशक्यत्वमित्यर्थः। **शाखान्तरन्यायेनेति।** यथैवाग्निहोत्रादिविध्यन्तराणां शाखान्तराम्नातानां तत्तदध्येतॄन् प्रति विधायकतया न वैयर्थ्यमिति शाखान्तराधिकरणे स्थितं तथेहापि न विधिद्वयवैयर्थ्यं अतो न कर्मभेद इत्यर्थः। **ननु** प्रवृत्तिं विनोत्थानासम्भवेनैतद्वाक्येन शाखान्तरस्थेनापि प्रवृत्तमात्रस्यैव विश्वजिद्विधाननिश्चये सति कथं तदधिकरणे प्रवृत्तस्याप्रवृत्तस्य वा विश्वजिदिति सन्देहपूर्वकं विचारकरणमित्याशङ्कां निराकरोति—**प्रवृत्तस्येति। इति विचार इति।** सङ्कल्पापरपर्यायागूरणे निमित्ते नैमित्तिकं

## (८)—दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥

**सोमे एका दीक्षा तिस्रो दीक्षाः इत्येवं बहवो दीक्षापक्षाश्श्रुताः।** तत्र सोमे **द्वादशदीक्षापक्ष एव, 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति विहितस्य भृतिपदवाच्यदक्षिणाद्रव्यार्जनानुकूलयाच्ञारूपस्य भृतिवननस्य पक्षान्तरेष्वसम्भवात्। अतोऽन्ये पक्षा विकृतिविषयाः 'एकं वृणीते' इत्यादिवदभ्युत्यानुवादा वा** इति भाष्यकाराभिप्रायः ॥

**वार्तिककाराशयस्तु लिङ्गप्रदेशस्थत्वेन एकं वृणीते इत्यादेरनुवादत्वायोगात् सर्वे एव विधय इति तावदविवादम्। प्रकरणानुरोधाच्च नान्येषां तत्कल्पना अतः तद्वरणैकस्यैव भृतिवननवाक्यस्य पाक्षिकत्वकल्पना।** द्वादशरात्रिशब्दो **वा दीक्षापरिमाणमात्रपरः यावतीषु रात्रिषु दीक्षा भवति तत्परः ॥**

---

विश्वजित्कर्म फलान्तरार्थं विधीयत इति पूर्वपक्षनिरासफलं तदधिकरणम्। इह तेनाधिकरणेन प्रवृत्तमात्रस्य विश्वजिदिति स्थिते क्रीतसोमकस्याक्रीतसोमकस्येति विचारपूर्वकमधिकरणमारभ्यते इति न बाधकमित्यर्थः।

---

**॥ दीक्षापरिमाणे याथाकाम्यविशेषात् ॥**

अस्याधिकरणस्य सङ्गतिस्तु **शास्त्रदीपिकायां** दर्शिता—नैमित्तिकप्रसङ्गाद्दीक्षानिमित्ता धर्माः कियन्तं कालमनुवर्तन्ते इत्येवमर्थं दीक्षापरिमाणं चिन्त्यते इति। तत्र **यद्यपि** दीक्षाया न धर्मेषु निमित्तत्वबोधकं किञ्चित् **तथापि** यो दीक्षित इति परप्रयुक्तदीक्षावत एवाधिकाराद्विशेषणविधया व्यावर्तकत्वेनार्थात् निमित्तत्वेन प्रवृत्तनैमित्तिकाधिकारे प्रसङ्गाद्विचार इति द्रष्टव्यम्। अत्र **भाष्यकारेणेदं** सूत्रद्वयमेकीकृत्यैकाधिकरणं व्याख्यातम्। **वार्तिककारेण** तु उत्सूत्रपूर्वपक्षद्वयेनैतत्सूत्रद्वयेनाधिकरणद्वयं दर्शितं तन्मतभेदं दर्शयति—**तत्र सोमे इति। इति भाष्यकारेति।** इति भाष्यकार इत्येतावत्येव वक्तव्ये एकं वृणीत इत्यादिवदनुवादत्वं भाष्येऽनुपलभ्यमानमेव युक्तिसहत्वादुक्तम्। एतज्ज्ञापनाय अभिप्रायपर्यन्तानुधावनम्। एवमग्रेपि वार्तिककाराशयपदतात्पर्यं द्रष्टव्यम्। **पाक्षिकत्वकल्पनेति।** दक्षिणाद्रव्यप्राप्त्युपायभूतयाच्ञारूपभृतिवननस्य रागतो द्वादशाहदीक्षापक्षस्य विधितश्च प्राप्तेः सम्पूर्णस्यैव भृतिवननवाक्यस्य पाक्षिकानुवादत्वकल्पनेत्यर्थः। सम्पूर्णस्य वाक्यस्य पाक्षिकानुवादत्वकल्पनमन्याय्यमिति हेतोः पक्षान्तरमाह—**द्वादशरात्रिशब्दो वेति।** तथा च द्वादशरात्रिपदेन एकाहादिकालरूपं परिमाणं

वस्तुतस्तु लक्षणाऽपीयं न विधौ दीक्षितकर्तृकभृतिवननस्यैव पक्षप्राप्तस्य, प्रयोगमध्ये अत्यन्ताप्राप्तस्यैव वा विधेयत्वात् द्वादशरात्रिशब्दस्यानुवादत्वोपपत्तेः। अतो नैतस्य पाक्षिकत्वकल्पनाऽपि। दीक्षापक्षाणामेव परं व्रीहियववद्विकल्पः। अस्तु वा तस्य विधेयत्वेऽपि लक्षणा तथाऽपि न दोष इति ॥ ८॥

---

(९)—द्वादशाहस्तु लिङ्गात्स्यात् ॥ २९ ॥

द्वादशाहेषु 'द्वादशरात्रीर्दीक्षितस्स्यात्' इति वाक्येन यवमयश्चरुरितिवत् द्वादशादीक्षाकत्वस्यैव नियमनान्न विकल्प इति प्रत्युदाहरणमात्रम्। अत एव 'षट्त्रिंशदह्नो वा एष द्वादशाहः' इति लिंङ्ग उपसत्सुत्यानां द्वादशत्वस्य प्रमाणान्तरसिद्धत्वात् दीक्षा अपि द्वादशेति गमयति। तथा, अभीन्धत एव दीक्षाभिः' इति दीक्षाबहुत्वं विधाय 'द्वाभ्यां

---

लक्षयित्वा तस्मिन् काले दीक्षितस्तदा भृतिवननमेव कुर्यादिति नियमो विधीयते। अथवा रागतः प्राप्तस्यापि तस्य दीक्षाप्रयोगमध्येऽप्राप्तत्वादपूर्वतयैव विधानं द्वादशरात्रिकालस्य दीक्षायां प्राप्तत्वात्तदनुवादरूपे द्वादशरात्रिपदे काललक्षणापि न दुष्यतीत्यर्थः। **वस्तुतस्तु** द्वादशरात्रिविधानाभावे आदीक्षाविमोकं दीक्षितत्वानपायात् यदा कदाचिदपि तत्कर्तृकभृतिवननापत्तिः। अतोऽवश्यं द्वादशरात्रिविधानमिति तदुत्तरमेव भृतिवननं सिद्ध्यति अतो न तस्यानुवादत्वं, तथाप्यनेकेषां वाक्यानामुत्कर्षकल्पनापेक्षया एकस्मिन् विधेयसमर्पकेपि द्वादशरात्रिपदे काललक्षणायां न दोषः। प्रत्युत पाक्षिकत्वकल्पनाभावकृतो गुण एवेत्याह—**अस्तु वा तस्येति**।

---

॥ द्वादशाहस्तु लिङ्गात् स्यात् ॥

**प्रत्युदाहरणमात्रमिति**। **एतेनै**तद्वचनाभावं कृत्वाचिन्तेयमिति तन्त्ररत्नकारोक्तमपास्तम्। द्वादशाहस्तु लिङ्गात् स्यादिति सूत्रस्थतुशब्देनैव प्रत्युदाहरणमात्रत्वस्य प्रदर्शनात् पूर्वपक्षोत्थानपूर्वकसिद्धान्तकरणाभावेन कृत्वाचिन्तात्वकथने प्रयोजनाभावात्। **प्रमाणान्तरसिद्धत्वादिति**। सुत्यानां द्वादशत्वस्य द्वादशाहेन प्रजाकामं याजयेदिति वचनेनोपसदां च तिस्र एव सान्हस्योपसदः द्वादशाहीनस्येति वचनेन द्वादशत्वस्य प्रमाणान्तरसिद्धत्वम्। दीक्षाव्यतिरिक्ताङ्गेषु द्वादशत्वस्य कदाप्यसम्भवात् सम्भवद्द्वादशत्वसङ्ख्यां दीक्षामादायैव षट्त्रिंशदहः साध्यत्वं द्वादशाहे उपपादनीयमित्यर्थः। **विधायेति**। यद्यप्ययमर्थवादः तथापि अतिदेशेन

लोमावद्यन्ति, द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानम्’ इति तद्वाक्यशेषे षड्ढिकानुक्रमणमपि ॥ ९ ॥

---

(१०)—पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥ आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥ माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥ अन्या अपीति चेत् ॥ ३३ ॥ न भक्तित्वादेषा हि लोके ॥ ३४ ॥ दीक्षाऽपराधे चानुग्राहत् ॥ ३५ ॥ उत्थाने चानुप्ररोहात् ॥ ३६ ॥ अस्यां च सर्वलिङ्गानि ॥ ३७ ॥

गवामयने ‘एकाष्टकायां दीक्षेरन् एषा वै संवत्सरस्य पत्नी यदेकाष्टका’ इत्युपक्रम्य ‘आर्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्ते व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्ते अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्ति’ इत्यनेन तत्र दोषानभिधाय ‘चित्रापूर्णमासे दीक्षेरन् मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासस्तस्य न काचन निर्या भवति’ इत्यनेन चैत्रीं स्तुत्वा ‘चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन् तेषामेकाष्टकायां क्रयस्सम्पद्यते तेनैकाष्टकां न छंबट् कुर्वन्ति तेषाम्’ इति श्रुतम्। आर्तं दुःखयुक्तं शीतात्। व्यस्तं अयनपरावृत्त्या। अपो नाभिनन्दन्ति शीतादेव। निर्या दोषः। छंबट् रिक्तम्। अत्र जर्तिलयवाग्वान्यायेन सर्वेषामुक्तानुवादत्वमिति तावदविवादं अतश्चतुरह इत्येव विधिः पयोऽग्न्यायेन तत्र पौर्णमासीवाक्यशेषे चैत्र्याःस्तुतत्वाच्चैत्र्येव। न च वाक्यशेष एवोपक्रमोपसंहारयोरेकाष्टकाया माघ्युत्तराष्टमीरूपायाः परामर्शात्तस्याः क्रयसम्पत्त्यनुग्राहत्वोक्तेश्च माघ्येव ग्राह्येति वाच्यं, अष्टकाशब्दस्य कर्मविशेषनामतया तत्कालत्वेनाष्टम्यामष्टकाशब्दप्रयोगे ‘हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः’ इति चतसृष्वपि तदष्टमीषु प्रयोगेण माघ्युत्तराष्टमीग्रहण एव प्रमाणाभावात् ‘द्वादशपौर्णमास्यो द्वादशैवाष्टकाः’ इति श्रुत्यन्तरे सर्वत्रैव प्रयोगाच्च। अतश्चैत्र्युत्तराष्टम्या अपि तस्यानपायाच्चैत्र्या एव पौर्णमासीपदेन ग्रहणात् तस्याः पुरस्ताच्चतुरहे एकादश्यां दीक्षेति प्राप्ते—

वृद्धव्यवहारेणैकाष्टकाशब्दस्य माघ्युत्तराष्टम्यामेव प्रयोगात्तस्याश्च संवत्सरपत्नीत्वेनोपक्रमे स्तुतत्वान्माघ्युत्तराष्टमीस्थकर्माङ्गदेवतायाश्च ‘यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली’ इति तन्मन्त्रे संवत्सर-

पत्नीत्वेन सङ्कीर्तनात् माघ्युत्तराष्टम्यामेव एकाष्टकात्वप्रतीतेस्तस्यां क्रयसम्पत्त्यनुरोधेनोपक्रमोपसंहारयोश्श्रुतत्वेन माघ्या एव पौर्णमासीपदेनाभिधानात्ततः पुरस्तादेकादश्यां दीक्षेति सिद्धम्। अत एव सर्वोऽयमर्थवादः एवं व्याख्येयः यद्यपि दोषान्तराभावादेकाष्टकैव दीक्षायां प्रशस्ता, तथाऽप्यार्तत्वव्यस्तत्वाभिनन्दकत्वरूपदोषत्रयात्तामतिक्रम्यापि चैत्र्यैव परं प्रशस्ता, माघ्येकादशी तु तदपेक्षयाऽपि प्रशस्ततरा, एकाष्टकायाः द्वादशदीक्षोत्तरं त्रयोदशदिनरूपायाः क्रयसम्पत्त्याऽनुगृहीतत्वादिति॥ १० ॥

## (११)—दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥ उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् ॥ ३९ ॥

सोमे 'दीक्षितो न जुहोति' इत्यादिना पुरुषार्थानामग्निहोत्रादीनां क्रत्वङ्गत्वेन पर्युदासः प्रतिषेधो वा दीक्षितस्य श्रुतः। अवभृथे च कृते दीक्षामुक्तिः। तद्यदा दैवादिना कारणेन सन्ध्यातः पूर्वं क्रियमाणावभृथस्योत्कर्षस्तदा काले अग्निहोत्रं कर्तव्यमेव यावन्तं कालं शास्त्रवशेन दीक्षाऽनुवृत्तिस्तावत्कालं न जुहोतीति तत्प्रतिषेधशास्त्रार्थावधारणादिति प्राप्ते—

काललक्षणायां प्रमाणाभावाद्दीक्षैव निषेधावधिः तस्याश्चानिवृत्तत्वान्न कर्तव्यमेवाग्निहोत्रादि ॥ ११ ॥

## (१२)—तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥ कालप्राधान्याच्च ॥ ४१ ॥

नियमतोऽप्राप्तं दीक्षाबहुत्वं तत्कल्प्यविधिना विधीयते। तच्च द्वाभ्यामिति वाक्यशेषादुत्तरा दोहयतीतिवन्नित्यपर्यवसायीत्याशयः। द्वाभ्यामिति पूर्वदीक्षाणामुपसदादावविहितानां शोधकत्वेनाग्नितुल्यानां देहादिज्वलनकर्तृत्वेन संस्तुतानामग्रे आत्मसत्रत्वमुच्यते। तत्र लोमादिषट्कमवदीयमानत्वेन हविरर्थे स्तूयते द्वाभ्यामुपसद्भ्यां चेत्यर्थो वेदभाष्ये द्रष्टव्यः।

इतोऽनन्तरमधिकरणद्वयं स्पष्टार्थम्।

॥ तत्र प्रतिहोमो न विद्यते ॥

अत्र प्राचीनैर्यथातथा वा यावद्दीक्षाऽनुवृत्ता भवति तावता चानधिकारदग्निहोत्रमकर्तव्यं कर्तव्याकरणे च प्रतिहोमस्तस्मान्न प्रतिहोम इति सिद्धान्तितम्। तत्र पूर्वपक्षे दीक्षानुवृत्तावपि

दीक्षायां सत्यां **सोमाङ्गत्वेनाग्निहोत्रप्रतिषेधेऽपि अग्निहोत्रवाक्ये** दीक्षितभिन्नस्य **कर्तृत्वा-न्मुख्ये काले तदकरणनिमित्तप्रत्यवायस्यावश्यकत्वात्तत्परिहारार्थं गौणकाले प्रायश्चित्तपूर्वकं कार्य एवाग्निहोत्रहोमः। दैवापराधकृतदीक्षोत्कर्षे तु सुतरामिति प्राप्ते—**

**यावज्जीवादिवाक्ये कालाद्यवच्छिन्नस्य जीवनादेर्निमित्तत्वमित्यविवादम्। तेषां च न सायंकालत्वशुचित्वादिना तत्त्वेन तत्त्वेनावच्छेदकत्वं गौरवात् अपि तु शब्दतोऽर्थतो वा यो निषिद्धः कालः तद्भिन्नकालत्वेन,** सायमादिकालविधेर्हि **नियमविधित्वात्तदितरकाल-निवृत्तिरार्थिकी। एवं शुचित्वादिनाऽशुचिकालादिनिवृत्तिरपि। निषेधोपि चात्र न** विधेयक्रियाङ्गभूत **एव विवक्षितः, अपि त्वन्याङ्गभूतोऽप्यविशेषात्, तस्मिन् सति विधेय-क्रियायाः अकरणस्य तवाप्यावश्यकत्वाच्च। अतश्च यथैव पश्वर्थेनापि गोदोहनेनावरुद्धस्य प्रणयनस्य न चमसप्रयोजकत्वं तस्मिन् सति तस्य कर्तुमशक्यत्वात्। अत एव न तदभाव-कृतं वैगुण्यमपि। एवं सोमाङ्गभूतेनापि निषेधेनावरुद्धस्य दीक्षाकालावच्छिन्नजीवनस्य नैमित्तिकानुष्ठापकत्वानुपपत्तेः न तदकरणे प्रत्यवायादि। अतः अपशुकामस्यैव चमसे अधिकारवददीक्षितस्यैवाग्निहोत्रादावधिकारो निषेधपक्षेऽपि फलितो भवति। यदा तु 'दीक्षितो न जुहोति' इत्यस्य अग्निहोत्रादिविध्येकवाक्यतया पर्युदासत्वमङ्गीक्रियते तदा स्पष्ट एव दीक्षितस्य तत्रानधिकारः। अतश्च मुख्यकालेऽनधिकाराद्गौणकाले करणम-**

---

प्राप्ते काले तदधिकारं साधयति—**दीक्षायां सत्यामिति। दीक्षितभिन्नस्येति।** अग्निहोत्र-वाक्ये तावत् सामान्येन दीक्षितादीक्षितयोरविशेषेणाधिकारबोधनात् दीक्षितेन सोमे तदनाचरणेन प्रतिषेधरूपाङ्गानुष्ठानेऽपि स्वस्याधिकारसत्वे प्राप्ते काले तदनाचरणस्य प्रायश्चित्तपूर्वकपुनरनुष्ठानं तयोर्निमित्तस्य सत्वे भवत्येव। प्रायश्चित्ताचरणपूर्वकं तस्य यावन्तः काला अतीताः तावन्तमेकैकं कालमुद्दिश्य पुनराचरणं प्रतिहोमपदवाच्यम्। यथावस्थितसोमानुष्ठानेऽपि दैवापराधकृतोत्कर्षे तु अपराधसत्वादेव प्रायश्चित्ताधिकारोऽस्त्येवेति भावः। **तद्भिन्नकालत्वेनेति।** ननु यः कालः सायमादिव्यतिरिक्तो न स्पष्टं निषिद्धः तस्यापि निषिद्धभिन्नकालत्वेन जीवनावच्छेदकत्वापत्तिरित्यत आह—**सायमादिकालविधेर्हीति। विधेयक्रियाङ्गभूतेति।** विधेया च क्रिया अग्निहोत्र-होमादिरूपा तदङ्गभूत एव सन्यः कालप्रतिषेधः तत्प्रतिषिद्धभिन्नकालत्वेनेति नार्थः। किन्तु यथाकथञ्चित्तस्य निषिद्धः यः कालः तद्भिन्नत्वेनावच्छेदकतयेत्यर्थः। **अनाशङ्क्यमिति।** कर्मणि कर्तव्ये सति मुख्यकालालाभे कदा कर्तव्यमित्याकाङ्क्षया विधीयमानस्य गौणकालस्ये-दृशविषयेऽनधिकारादेव कर्तव्यताया अप्रसक्तेर्गौणकाले करणमनाशङ्क्यमित्यर्थः। अत एवाधिकारेसत्यापत्तौ पक्षहोमानुष्ठानेपि पुनः प्रतिहोमानुष्ठानं भवत्येव। यथा वाऽधिकारे सति

नाशङ्क्यम् । **एवं दैवादिनाऽवभृथोत्कर्षेऽपि दीक्षावत्त्वस्य** कथमप्यविशेषान्मुख्यकालेऽ-**नधिकारस्य तुल्त्वेन गौणकाले न प्रतिहोमकरणम् ॥ १२ ॥**

---

## (१३)—प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥

**कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवादिना भवेत् तदा काले प्राप्ते अग्निहोत्रहोम एव कर्तव्यः तदकरणे वा प्रतिहोमः कार्यः दीक्षाया अवभृथेऽोन्मोचितत्वात् ।** यत्तु 'एतया **पुनराधेयसम्मितया इष्ट्या इष्ट्वाऽग्निहोत्रं जुहोति' इति वचनं तत् प्रकरणान्तरन्याया-त्सोमाङ्गतयोदवसानीयेष्ट्यङ्गतयैव वा कर्मान्तरविधायकमिति प्राप्ते—**

**निषेधप्रतियोगित्वेनाग्निहोत्रादेरुपस्थितत्वात् तदपेक्षितावधिसमर्पकत्वेनाप्युपपत्तौ यागान्तरविधायकत्वानुपपत्तेर्दीक्षोन्मोकेऽपि उदवसानीयेष्टिप्रतीक्षाया आवश्यकत्वात्पूर्व-वदेवानधिकारान्न प्रतिहोमादिकरणम् ।** यदा तु **दीक्षा संजाता यस्येति दीक्षित इति व्युत्पत्त्या वृत्तदीक्षोत्पत्तिकत्वमेव निषेधप्रयोजकं रूपमाश्रीयते तदा दीक्षाऽभावेऽपि सर्वदा निषेधप्रसक्तौ उदवसानीयाया अवधित्वमव्याहतमेवेति न तदुत्कर्षे प्रति-होमादि ॥ १३ ॥**

---

प्रतिपदिष्टेरकरणे पथिकृत्पूर्वकं गौणकाले तदनुष्ठानमिति । **कथमपीति ।** अनधिकारस्य शास्त्रकृतत्वेऽपराधात्तत्वे चापीति कथमपीत्यस्यार्थः । यथा च दीक्षितो न जुहोतीत्येवमादीनां प्रतिषेधत्वं पर्युदासत्वं वा युक्तमिति निर्णयस्तथा दशमे करिष्यते ।

---

**॥ प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥**

यत्तु सिद्धान्ते एतयेति वचनेनोदवसानीयोत्तरत्वस्याग्निहोत्राङ्गत्वेन विधानात् तदुत्तर-मेवाग्निहोत्र इत्युक्तं तदनूद्य पूर्वपक्षे दूषयति—**यत्त्विति । एतयेति ।** उदवसानीया एतच्छब्देन परामृश्यते । अस्याश्च होमातिपत्तौ पुनराधेयेनेवोत्तरत्र करिष्यमाणाग्निहोत्राधिकारलाभेन पुनरा-धेयसम्मितत्वं ज्ञेयम् । **निषेधप्रतियोगित्वेनेति ।** एतयेतिवचनात्पूर्वं न दीक्षितो जुहोतीत्यादि-निषेधाम्नानात् तन्निषेधप्रतियोगित्वेनाग्निहोत्रहोमोपस्थितिरित्यर्थः । **यदा त्विति । वस्तुतस्तु** दीक्षा सञ्जाता यस्येत्यर्थग्रहणे चयननिष्पादितस्थण्डिलाधिकरणकयागभावनासमापनोत्तरमेवाग्नि-चित्त्वादग्निचिद्व्रतानामिव समस्तदीक्षोत्पत्त्यनन्तरमेव दीक्षितत्वात्तदुत्तरमेव होमादिनिषेधानां प्राप्तया दीक्षाग्रहणमारभ्य तेऽनधिकारापत्तेः । कदाचिद्वचनवशादग्निहोत्रहोमे उदवसानीयारूपावधिलाभेन

(१४)—प्रतिहोमश्चेत् सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥ ४३ ॥ प्रातस्तु षोडशिनि ॥ ४४ ॥

**यदाऽवभृथोत्कर्षे प्रतिहोमस्तदा कृत्वाचिन्तया विचार्यते-अग्निष्टोमसंस्थाकज्योतिष्टोमे अवभृथस्य सायंकालात्पूर्वमेव कर्तव्यत्वेन** तदुत्तरं **रात्रौ करणे एकस्यैव सायंहोमस्य दीक्षाविमोकोत्तरं गौणकाले करणम्। आप्रातराहुतेः सायंहोमस्य गौणः कालो** वाचनिकः **प्रातर्होमस्य सायकालावधिवत्** गौणकालस्याप्यतिक्रमे **स्वकालक्रियमाणप्रातर्होमेन सह समस्यहोमविधया तन्त्रेण करणम्। अवभृथोत्कर्षेणानेकहोमकालातिपत्तौ च सर्वान् सायंहोमान्**

---

तदुत्तरं निषेधानामप्रवृत्तावप्यन्येषां अविहितावधीनां दानहोमानां सर्वदा निषेधापत्तेश्च वर्तमानकालीनदीक्षावानेव दीक्षितपदार्थो युक्तः। सम्भवति च वर्तमानार्थकप्रत्ययाधिकारे मतिबुद्धिपूजार्थेभ्यश्चेति सूत्रस्थचकारेणानुक्तसमुच्चयार्थेन शीलितो रक्षितः शान्त इत्यादिष्विवेहापि वर्तमानार्थक्तप्रत्ययविधानम्। **यद्यपि** दीक्षितपदस्योभयथापि सम्भवदर्थस्य प्रकृते वर्तमानार्थक्तप्रत्ययान्तत्वं न निश्चेतुं शक्यं, **तथापि** अविशेषप्रवृत्तानां दानहोमादिविधीनामधिकारसङ्कोचेन महाविषयत्वबाधापत्तेरुक्तार्थकत्वमेव ग्रहीतुं युक्तम्। एवं च सोमाङ्गभूतप्रतिषेधानां प्रयोगान्तः पातित्वमपि लभ्यत इत्येतत्सूचनाय **यदा त्विति** तुशब्दोपादानम्।

---

॥ **प्रतिहोमश्चेत्** ॥

**तदुत्तरमिति।** दैवादिनोत्कर्षे सतीति शेषः। **वाचनिक इति।** तथाच मण्डनवचनम्।

आसायमाहुतेः कालात् कालोऽस्ति प्रातराहुतेः।
प्रातराहुतिकालात्प्राक् कालः स्यात् सायमाहुतेः॥ इति।

**गौणकालस्याप्यतिक्रमे इति।** तेनैवावभृथोत्कर्षेण कारणेनेति पूर्वं शेषः। **समस्यहोमविधयेति।** यथैव प्रतिपदि पक्षहोमपक्षे एवाद्यतनसायमारभ्यागामिपर्वप्रातःकालपर्यन्तं सायं प्रातरग्निहोत्रहोमान् समस्य तण्डुलैर्होष्यामि इति सङ्कल्प्य तावन्ति देवतोन्नयनानि कृत्वा सायं प्रातर्होमानां तन्त्रेणानुष्ठानमिति समस्यहोमपक्ष आश्रीयते। एवमिहापि द्वयोरेव तन्त्रेणानुष्ठानं तदा भिन्नदेवताकत्वान्न प्रधानयोस्तन्त्रं, किं तु प्रयोगतन्त्रमात्रं, अनेकेषां सायं

प्रातर्होमांश्च पक्षहोमविधिना समस्यहोमविधिना च स्वकालक्रियमाणहोमेन सह तन्त्रेण कुर्यात्। न चातिपत्तिक्रमेण होमानां क्रमेणैव करणं शङ्क्यं, एकदेशकालकर्तृत्वेन समस्यहोमपक्षहोमविधिवैयर्थ्यप्रसङ्गेन चानेकदर्शपूर्णमासातिपत्तिनिमित्तकपथिकृद्वदेव पृथक्करणानुपपत्तेः। अत एव सर्वान् सायंहोमान् सायंकाले प्रातर्होमांश्च प्रातः काले कुर्यादित्यपास्तम्। स्वकालक्रियमाणहोमात्पूर्वमेवातिपन्नहोमानां कर्तव्यत्वात्। एवं च षोडशिस्तोत्रवति क्रतौ तस्य समयाध्युषितकालीनत्वेनावभृथस्य रात्रावेव क्रियमाणत्वात्तस्य द्वितीयदिने उत्कर्षे प्रातर्होमस्यैव पूर्वोक्तविधयाऽनुष्ठानं, अनेकहोमकालातिपत्तावपि तथैव। न च दर्शपूर्णमासयोः पौर्णमासोपक्रमयोरेव मिलितयोः फलसाधनत्ववत् सायमुपक्रमयोरेव सायंप्रातर्होमाभ्यासयोरेकफलसाधनत्वस्य कल्पसूत्रेष्वभिधानात् षोडशिना सायं होमेऽनधिकारे कथं प्रातर्होमेऽप्यधिकार इति वाच्यं 'प्रातस्तु षोडशिनि'

---

होमानां प्रातर्होमानान्त्वनुष्ठाने एकदेवताकानां तेषां प्रधानानामपि सहप्रयोगेण तन्त्रमिति ज्ञेयम्। **स्वकालेति**। सायं प्रातः कालयोर्य एव प्राप्तः कालः स स्वकालपदस्यार्थः। यद्यपि याज्ञिकानामतीतहोमातिपत्तौ प्रायश्चित्तमात्राचरणमेव दृश्यते, नातीतहोमानुष्ठानं, तथाप्यग्निहोत्रहोमे प्रतिहोममेके इत्याश्वलायनसूत्रोपन्यस्तैकीयमतेन विकल्पाभिधानाभिप्रायेणैतदिति ज्ञेयम्। अथवाऽन्यहोमानामतिपत्तौ प्रायश्चित्तमात्राचरणेपीह पुरुषकृतापराधाभावात् तदप्राप्तेः प्रतिहोमानुष्ठानमेव युक्तमित्याशयः। **समस्यहोमपक्षहोमेति**। यथैव सर्वेषां होमानां एकदेशकालकत्वाभावे न्यायेन तन्त्राप्रसक्तावपि पक्षहोमाचरणे पक्षहोमसमस्यहोमविधिबलादेवैककालत्वेन सर्वेषां होमानां तन्त्रेणानुष्ठानं, यथा वा शेषहोमानां तद्वदिहापीति भावः। एवं स्थिते यत्प्राचां ग्रन्थेषु येनैव क्रमेणातिपन्नास्तेनैव कर्तव्यास्तेनाग्निष्टोमादिषु सायमग्निहोत्रप्रभृतयः प्रतिहोमाः षोडशिनि प्रातः प्रभृतयः इत्येवमतिपत्तिक्रमेण होमानामनुष्ठानमुक्तम्। तत्सायं प्रातः कालीनहोमद्वयाभिप्रायेण, न तु सर्वेषामेककालपातेऽतिपत्तिक्रमेण, तेषामनुष्ठानाभिप्रायमिति ज्ञेयम्। **कर्तव्यत्वादिति**। सायंप्रातः कालयोः व्यवस्थयाऽतिपन्नहोमानुष्ठानेऽतीतप्रातर्होमानुष्ठानं विना स्वकालप्राप्तसायंहोमे तथाऽतीतसायंहोमानुष्ठानं विना स्वकालप्राप्तप्रातर्होमे चानधिकारादित्यर्थः। **रात्रावेवेति**। तथा च सायंहोमस्य षोडशिनि रात्राववभृथकरणे सायंकाले दीक्षितत्वादेव निषेधप्रवृत्तेः स्वत एवानधिकारान्नानुष्ठानमिति न तत्रावभृथोत्कर्षप्रयुक्तानुष्ठानप्रसक्तिः। किन्तु प्रातर्होमस्यैव। अतस्तत्प्रभृत्येवानुष्ठानं, तदकरणे च प्रतिहोम इत्यर्थः। या तु पूज्यपादैरत्रैकस्यातीतहोमस्य बहूनां वाऽतीतहोमानां स्वकालप्राप्तहोमेन सह तन्त्रतोक्ता सा दुरुपपादा। तत्तदतीतहोमाङ्गमुख्यगौणकालातिपत्तिप्रयुक्ततत्तद्विधि-

इति जैमिनिसूत्रकृद्वचनादेव सायमुपक्रमकत्वस्य नैयत्याभावप्रतीतेः। अत एव कृत्वाचिन्तोद्घाटनेऽपि यद्युदवसानीयाया रात्रौ करणं तदा प्रातर्होमानुष्ठानं जैमिनिमते नानुपपन्नम् ॥ १४ ॥

---

(१५)—प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥ प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥ अतद्विकारश्च ॥ ४७ ॥

'भिन्ने जुहोति' इत्यादि प्रायश्चित्तं नैमित्तिकमपि फलापेक्षायां प्रकरणात् क्रत्वङ्गम्। निमित्तमपि भेदनादिकं न लौकिककपालादेः, प्रायश्चित्तसमाख्याबलेन क्रत्वङ्गभूतकपालादिभेदननिमित्तवैगुण्यपरिहारार्थत्वस्यैव कल्पनेन स्वतन्त्रादृष्टकल्पने गौरवात् ॥ १५ ॥

---

(१६)—व्यपन्नस्याप्सुगतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥

'व्यापन्नमप्सु परिहरति' इति वाक्ये श्रुतस्य व्यापन्नशब्दस्य यदार्याणामभोज्यं केशकीटावपन्नादि तदर्थः। तत्रैव तेषां प्रयोगादिति शिष्यहितार्थमुक्तम् ॥ १६ ॥

---

विहिततत्तत्प्रायश्चित्ताचरणपूर्वकप्रतिहोमानुष्ठानोत्तरं पार्थक्येनैव स्वकालप्राप्तहोमानुष्ठानस्य वचनविहितस्य याज्ञिकव्यवहारे दर्शनेन सह तन्त्रतानुपपत्तेः। स्वकाले क्रियमाणहोमात् पूर्वमेवातिपन्नानां होमानां कर्तव्यत्वादिति लिखितोत्तरग्रन्थादेव स्वकालक्रियमाणहोमात्पूर्वं पृथक् तन्त्रतयैव तेषामनुष्ठानप्रतीतेश्च। पक्षहोमादौ तु प्रायश्चित्ताचरणाभावात् सहानुष्ठाने न किञ्चिद्बाधकम्। अतोऽतीतहोमानां परस्परं सह तन्त्रत्वेऽपि स्वकालप्राप्तहोमेन सह तन्त्रता न युक्तेत्यवधेयम्। अतएवेति। इदमपि षोडशिन्येव तत्रैव रात्राववभृथकरणेनोदवसानीयाया अपि रात्रावनुष्ठानात्। ततः पूर्वं सायंहोमानधिकारेण तदनुष्ठानाप्रसक्त्या पूर्वसिद्धान्तरीत्या सायंकालीनप्रतिहोमाभावेऽपि प्रातर्होमस्यैव स्वकालप्राप्तावनुष्ठानं, न तु सायंत्वहोमोपक्रमकत्वनियमानुरोधेन सायंहोमस्यापीति जैमिनिमते नानुपपन्नम्।

याज्ञिकानां तु प्रातः काले विच्छिन्नाग्निसन्धाने प्रातर्होमकालसत्वेपि न तदनुष्ठानं किं तु सायमेवोपक्रमः, तथेहापि इति प्रातर्होमलोप एवेति बाध्यते। एवमग्निष्टोमेऽपि दैवादुदवसानीयाया रात्रौ करणेऽपि ज्ञेयम्। यत्तु "सा यावद्रात्रेष्टिः सन्तिष्ठतेऽथ साय-

(१७)—विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥ स्याद्वा प्राप्तनिमित्तत्वात्कालमात्रमेकम् ॥ ५० ॥

ज्योतिष्टोमे दक्षिणादानात्प्राक् बहिष्पवमानार्थं तद्देशं कच्छं धृत्वा प्रसर्पतामुद्गातृप्रतिहर्तृप्रस्तोतॄणां मध्ये 'यद्युद्गाताऽपच्छिन्द्यात् अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्यात् यत्पूर्वस्मिन् दास्यं स्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यदि प्रस्तोता ब्रह्मणे वरं दद्यात्' इत्यादिना तत्तत्कर्तृकापच्छेदे निमित्ते प्रायश्चित्तं श्रुतम्। तत्रापच्छेदो नाम विभागरूपं फलमेव यदि वा तज्जनिका क्रिया सर्वथा तज्जनकक्रियाकर्तृत्वादेवात्र तत्कर्तृत्वव्यवहारः। तस्यां चान्यतरक्रियाजन्ये उभयक्रियाजन्ये च विभागे एकैकस्यापि प्रत्येकमस्त्येव कर्तृत्वमिति उद्गातृमात्रनिष्ठक्रियाजन्यविभाग इवोभयनिष्ठक्रियाजन्यविभागेऽप्युद्गातृकर्तृकत्वव्यपदेशोपपत्तेर्भवत्येव तत्रापि प्रायश्चित्तमित्युत्तरविवक्षया प्राप्यते ॥ १७ ॥

---

(१८)—तत्र विप्रतिषेधाद्विकल्पस्स्यात् ॥ ५१ ॥ प्रयोगान्तरे वोभयानुग्रहस्स्यात् ॥ ५२ ॥ न चैकसंयोगात् ॥ ५३ ॥

यौगपद्ये प्रायश्चित्तद्वयमविरोधात्समुच्चयेनैव। प्रतिहर्त्रपच्छेदनिमित्तं सर्वस्वदानमुद्गात्रपच्छेदनिमित्ते पुनः प्रयोगेऽपि शक्यत एव कर्तुम्। अथवा दक्षिणोत्कर्षविशिष्ट-पुनः प्रयोगमात्रं तन्नैमित्तिकं न पुनरदाक्षिण्यमपि तस्यार्थप्राप्तत्वेनानुवाद्यत्वात्

---

मग्निहोत्रं जुहोति काले प्रातर्होमं सन्तिष्ठते" इत्यापस्तम्बसूत्रे उदवसानीयाया रात्रौ करणेऽपि तदनन्तरं सायं होमविधानं तज्जैमिनिमतविरोधात् सायमुपक्रमककर्मत्वनियममूलकत्वाच्चानादर्तव्यमिति भावः। इतः परं तत्र विप्रतिषेधादित्यन्तमधिकरणत्रयं स्पष्टार्थम्।

---

॥ तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥

ननु प्रतिहर्त्रपच्छेदनिमित्तसर्वस्वदानस्योद्गात्रपच्छेदनिमित्तादक्षिणप्रयोगस्य परस्परं विरोधे सति कथं समुच्चयसम्भव इत्यत आह—प्रतिहर्त्रपच्छेदेति। तन्नैमित्तिकमिति। उद्गात्रपच्छेदस्तच्छब्दस्यार्थः। अर्थप्राप्तत्वेनेति। यत्पूर्वप्रयोगीयं दास्यं तद्विशिष्टस्य पुनः

अतः पूर्वप्रयोगेऽपि सर्वस्वदाने न कश्चिद्विरोध इति प्राप्ते—

न तावत्पूर्वप्रयोग एव सर्वस्वदानं, असत्यप्यदाक्षिण्यस्य नैमित्तिकत्वे दक्षिणोत्कर्षस्यैव पूर्वप्रयोगे सर्वस्वदाने अनुपपत्तेः। नापि पुनः प्रयोगे सर्वस्वदानं प्रतिहर्त्रपच्छेदवति प्रयोग एव तद्विधानात्। अन्यथा एकस्मिन् प्रयोगे प्रतिहर्त्रपच्छेदे कृतोऽस्तद्वत्त्वाविशेषादनन्तरसर्वप्रयोगेषु सर्वस्वदानापत्तिः। निमित्तवति प्रयोगे नैमित्तिकस्य दैवादकरणे प्रयोगान्तरेऽपि तदापत्तिः। अतो विरोधाददाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्प एव। पुनः प्रयोगमात्रं परमविरोधाद्भवत्येव। तेनापि विकल्पं केचिदिच्छन्ति ॥ १८ ॥

---

## (१९)—पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥

यदा क्रमेण निमित्तद्वयसन्निपातस्तत्रासंजातविरोधित्वादाद्यनिमित्तकमेव नैमित्तिकम्। अथवा नात्र शास्त्रद्वयस्य सामान्यविशेषादिरूपतया बलाबलम्। नापि प्रमाणतदाभासरूपतया, उभयोरपि समतयैव प्रमाणत्वात्। अनुष्ठानवेलायां पौर्वापर्यं तु न शास्त्रार्थावधारणायालं, अतो विकल्प एवेति प्राप्ते—

---

प्रयोगस्य विधाने पूर्वप्रयोगस्यादक्षिणताया अर्थतः प्राप्तत्वादित्यर्थः। एवं च पूर्वप्रयोगे या नित्यभूता दक्षिणा तदुत्कर्षविशिष्टपुनः प्रयोगस्य विधाने पूर्वप्रयोगस्यादक्षिणत्वसिद्धेः प्रतिहर्त्रपच्छेदे सति पूर्वप्रयोगेऽपि सर्वस्वदाने नैमित्तिकतयाऽनुष्ठितेपि न बाधकं, अदक्षिणत्वानपायादित्याह—**अतः पूर्वप्रयोगे इति। अनुपपत्तेरिति।** दायपदेन देयमात्रस्यैवाभिधानात् पूर्वप्रयोगे यत्किञ्चिद्दाने सति दक्षिणोत्कर्षविधानानुपपत्तिरित्यर्थः। **केचिदिति।** उद्गातृपच्छेदवददक्षिणप्रयोगसमाप्त्युत्तरमेव पुनः प्रयोगस्य विधानात् तदभावे प्रतिहर्त्रपच्छेदवति सर्वस्वदानप्रयोगे न पुनः प्रयोगप्राप्तिरित्यभिप्रायः।

---

**॥ पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥**

अलमिति। शास्त्रार्थावधारणस्य प्रयोगाधीनत्वाभावात्, प्रत्युत प्रयोगस्यैव तदवधारणाधीनत्वमिति नानुष्ठानपौर्वापर्यं शास्त्रार्थावधारणनियामकमित्यर्थः। किञ्च सिद्धान्तिना परेण पूर्वस्य बाधो हि श्रुतिलिङ्गादिवन्नोत्पत्तिविरोधलक्षणो वक्तुं शक्यः, उत्पन्नस्य तदसम्भवात्। अत एकस्मिन्नेव प्रयोगे शास्त्रेणोत्पन्नं पूर्वनिमित्तविज्ञानं विषयान्तरमलभमानं मिथ्येति वक्तुमशक्तेर्न मिथ्यात्वलक्षणो बाधोऽपि वक्तुं शक्यते निर्दुष्टशास्त्रप्रतीते मिथ्यात्वे पूर्वशास्त्रस्या-

यथैव नित्यं द्वादशशतं नैमित्तिकेन सर्वस्वेन बाध्यते परत्वात् तद्बलेन च द्वादशशतविधेः निमित्तरहितप्रयोगविषयत्वकल्पनं तथैव परेणापि नैमित्तिकेन पूर्वस्य नैमित्तिकस्यापि परत्वाविशेषादेव बाधः। पूर्वनैमित्तिकविधेश्च परनिमित्तरहितप्रयोगविषयत्वकल्पना। तद्वदेव चानुष्ठानकालीनमेव पौर्वापर्यं शास्त्रार्थावधारणवेलायां पूर्वमेवालोच्य व्यवस्थितविषयत्वकल्पनेति न कश्चिद्विरोधः। न च संजातविरोधित्वेनेह परविज्ञानस्यानुत्पत्तिः ज्ञापकस्य प्रमाणस्य कृतत्वेन तदयोगात्। न ह्यत्रोत्तरं प्रमाणं पूर्वप्रमाणेनैकवाक्यतया स्वार्थबोधजनकं, येन तदुपजीवित्वेन तदानुगुण्येन वर्तेत। अत उत्तरमेव निरपेक्षतयोत्पद्यमानं पूर्वप्रमाणस्य परनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वं कल्पयति। न च पूर्वमेव विज्ञानं परप्रमाणस्य पूर्वनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वं किमिति न कल्पयेत्। न ह्यत्र नित्यापेक्षया नैमित्तिक इव निरवकाशत्वमस्ति उभयोरप्येकैकनिमित्तकप्रयोगे सावकाशत्वादिति वाच्यम्। पूर्वनिमित्तोपनिपातवेळायां परप्रमाणजन्यज्ञानस्य नियमेनोपस्थित्यभावेन धर्मिज्ञानाभावात्तद्गतस्य पूर्वनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वस्य कल्पयितुमशक्यत्वात् परनिमित्तोपनिपातवेळायां तु पूर्वविज्ञानस्य चिकीर्षितविषयत्वेन

---

प्रामाण्यापत्तेरिति समतयैवेत्यनेन सूचितम्। न कश्चिद्विरोध इति। आख्यातेनाशक्यार्थे विधानस्य कर्तुमशक्यत्वात् यदा स्वार्थे विधानं कर्तव्यं तदा यावत् स्वविरुद्धमर्थान्तरं अबाधितत्वात् तत्कर्तुं न शक्यते तावत् तद्बाधनीयमिति शास्त्रार्थवधारणवेलायामेव प्रायोगिकेण पौर्वापर्येण शास्त्रयोर्मिथो बाधोऽवगम्यत इति न प्रयोगोत्तरकाले शास्त्रार्थावधारणापत्तिरिति न विरोध इत्यर्थः। उपक्रमानुसारेण यथा सञ्जातविरोधोपसंहारज्ञानमुत्पन्नमप्यापातरूपमेव, अथवा यथाश्रुतोपसंहारादापातप्रत्ययस्यानुत्पत्तिरेवेति न तत्र परत्वमात्रेण तस्य प्राबल्यं तथेहाप्यस्तीत्याशङ्क्य परिहरति—न च सञ्जातेति। वैषम्यमुपपादयति—न ह्यत्रेति। यत्रोपक्रमोपसंहारयोरेकवाक्यत्वं तत्र वेदपाठक्रमानुसारेण प्रथमोपस्थितार्थज्ञानानन्तरं तदेकवाक्यतयोपनिपतन् उपसंहारो यदि तद्विरुद्धार्थः तदा मुख्यार्थतया न तेनान्वितुं युक्त इति लक्षणाकल्पनापूर्वकं तदेककण्ठतयैवं तस्यार्थबोधकत्वं न तु तद्विसंवादेन; उपक्रमानुसन्धानेन तद्विसप्रतिपत्त्या बोधकत्वसंभवेपि तदानीन्तनज्ञानं दोषजन्यापातप्रत्ययरूपमेवेति तद्विरुद्धार्थनिर्दोषज्ञानोदयाभावान्न तस्य परत्वेन बाधकत्वम्। इह तु एकवाक्यतानुपपत्तिरूपबाधकवत् बाधकान्तराभावात् पूर्ववृत्तमवगणय्यैव नातिरात्रे षोडशिनं गृह्णातीति निषेधजज्ञानमिव परनिमित्तप्रयुक्तनैमित्तिकज्ञानमुत्पद्यमानं पूर्वबाधेनैवोत्पद्यते। अत एव श्येनवाक्ये प्रथमतः श्येनपदादापाततो जायमानं पक्षिज्ञानं उत्तरोपनिपात्यर्थवादजज्ञानेन पूर्वैकवाक्यतानुपपत्तिरूपबाधकाभावात् बाध्यते एव।

**पुरस्स्फूर्तिकत्वाद्धर्मिज्ञानसत्त्वेन तद्गतमिथ्यात्वकल्पने** न किञ्चिद्बाधकम्। **यदि तु परनिमित्तोपनिपातोत्तरमेव पूर्वेण मिथ्यात्वकल्पनमित्याशङ्क्येत तथाऽपि यदा परनिमित्तोपनिपातोत्तरं पूर्वप्रमाणविस्मरणं तदा तेनोत्तरस्य मिथ्यात्वकल्पनानुपपत्तेरवश्यं भवन्मते पूर्वप्रमाणस्मरणं कल्प्यं, मन्मते तु यदा दैववशात् पूर्वप्रमाणस्मरणं तदा तस्य मिथ्यात्वकल्पनेऽपि विस्मरणे परनैमित्तिकस्यैवानुष्ठानान्न किञ्चित्कल्प्यम्। तथा चायमत्र क्रमः परनिमित्तोपनिपाते तन्नैमित्तिकवाक्यार्थज्ञानं पूर्वविज्ञानस्मरणं च ततः परज्ञानस्य तेन सह विरोधज्ञानं, ततस्तेना**पेक्षाबुद्ध्यात्मकेन **विनश्यदवस्थेन चतुर्थक्षणे पूर्वविज्ञानस्य भ्रान्तित्वकल्पना, विरोधज्ञानदशायां तदुत्तरं वा परनैमित्तिकवाक्यार्थस्मरणकल्पनाद्वा सेति न विरोधः। अतस्सिद्धं परेण पूर्वस्य बाध इति॥ १९॥**

---

प्रत्युत तत्र तस्योपनिपात्यर्थवादैकवाक्यतानुपपत्तिरेव पूर्वज्ञानेऽधिकं बाधकम्। यथा वा पशुना यजेतेति श्रवणानन्तरं प्रथमत उत्पद्यमानं पशुसामान्यज्ञानं अनुष्ठानापेक्षितविशेषसापेक्षत्वेनैवापातरूपं सन्मन्त्रवर्णोपस्थितछागरूपविशेषज्ञानेन परत्वाद्बाध्यमेव। एवमन्यत्राप्यूह्यमिति न बाधकम्। **एतावांस्तु विशेषः** षोडशिग्रहणविधिशास्त्रस्य निषेधशास्त्रविषयातिरिक्तविषयन्तराभावे परस्परं संकोचमाश्रित्यैकस्मिन्नेव षोडशिप्रयोगे पूर्वशास्त्रस्य विषयलाभान्न विकल्पेन पौर्वापर्यनिमित्तवति एकस्मिन्नेव प्रयोगे निवेशः कल्पनीयः। किं तु या न्यायाभासाच्छास्त्रस्य सर्वविषयतया बाधकविषये प्रवृत्तिकल्पनपरिभ्रान्तिः सात्र बाध्यते। सा च न्यायाभासजनितत्वाद्युक्तैव बाधितुमिति शास्त्रस्याप्रामाण्याप्रसङ्गात् युक्तः परेणेह पूर्वस्य बाध इति भावः। **न किञ्चिद्बाधकमिति।** एतच्च

पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्नाद्याबाधेन सम्भवः॥

इति न्यायेनोत्पद्यमानमेव परमुत्पन्नस्य सतः पूर्वस्य बाधकं, पूर्वं तु स्वसमयेऽसतः परस्य न बाधकमिति पूर्वस्य मिथ्यात्वपरिकल्पनरूपबाधोत्तरपरप्रवृत्त्यभिप्रायेणोक्तम्। **वस्तुतस्तु** परोत्पत्त्यनन्तरमेव विरोधप्रतिसन्धानेन तदुत्तरमेव पूर्वबाधो वक्तव्यः। तत्र च समये पूर्वपरयोरुभयोरप्युत्पन्नत्वेन सत्वात् कस्य केन बाध इति नियन्तुमशक्यत्वात् कथं परेणैव पूर्वबाध इत्यभिप्रायेणाशङ्क्य परिहरति—**यत्त्विति। तेन चापेक्षाबुद्ध्यात्मकेनेति।** चतुर्थक्षणावस्थायित्वादपेक्षाबुद्ध्यात्मकेन परविज्ञानेनेत्यर्थः। **सेति।** तच्छब्देन पूर्वज्ञानस्य भ्रान्तित्वकल्पना परामृश्यते। तथा च परज्ञानस्य चतुर्थक्षणावस्थायित्वमप्रकल्प्यैव स्मरणरूपेणैव तेन पूर्वबाध इत्यर्थः।

(२०)—यद्युद्गाता जघन्यस्स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् यथेतरस्मिन् ॥ ५५ ॥

क्रमेऽपि यद्युद्गात्रपच्छेदो जघन्यस्तदा तन्निमित्तपुनः प्रयोगे सर्वस्वमेव देयं न तु द्वादशशतं परनिमित्तापातात्पूर्वं तस्यैव पूर्वप्रयोगे देयत्वेन प्रसक्तत्वात् 'तत्र दद्यात्' इत्यनेन यत्पूर्वप्रयोगे पूर्वनिमित्तापातात्पूर्वदेयत्वेन प्रसक्तं तस्यैव दक्षिणात्वेन विधानात् द्वादशशतस्य पूर्वनिमित्तेनैव बाधितत्वेन देयतयाऽप्रसक्तेः। अतश्च यद्यपि सर्वस्वमपि अदाक्षिण्येन दक्षिणोत्कर्षेण वा पूर्वप्रयोगे वस्तुतो बाधितमेव। तथाऽपि परनिमित्तापातात्पूर्वं बाधज्ञानाभावाद्देयत्वेन प्रसक्तौ न काचित् क्षतिः। यदा तु प्रतिहर्त्रपच्छेदो जघन्यस्तदा तस्मिन्नेव प्रयोगे सर्वस्वं देयं न तु पूर्वापच्छेदनिमित्तकः पुनः प्रयोगः कार्यः। न च सर्वस्वदाने अदाक्षिण्यस्यैव विरोधात्तद्बाधेऽपि पुनः प्रयोगबाधे प्रमाणाभावः अदाक्षिण्यपुनः प्रयोगयोस्समुच्चितयोरेव नैमित्तिकत्वेनैकाभावे इतरस्यानुपपत्तेः। अतश्च यथा पत्न्याः श्मश्रूणामभावात्केशानामपि न वपनं साहित्यस्य विवक्षितत्वात् तथैवादाक्षिण्यस्याभावे पुनः प्रयोगस्याप्यभावः। यद्यपि च दक्षिणोत्कर्षस्य पुनः प्रयोगाङ्गतया विधानस्यावश्यकत्वादेव पूर्वप्रयोगेऽदाक्षिण्यस्यार्थप्राप्तत्वात् 'अदक्षिणं तं' इत्यस्यानुवादत्वमुच्यते। तथाऽपि पाक्षिकानुवादभियैवादाक्षिण्यलोपे पुनः प्रयोगलोप इति द्रष्टव्यम् ॥

---

॥ यद्युद्गाता जघन्यः स्यात् ॥

अस्मिन्नधिकरणे उद्गात्रपच्छेदो जघन्यो यदि वा प्रतिहर्त्रपच्छेदो जघन्यो वा यदि पुनः प्रयोगे प्रतिहर्त्रपच्छेदस्तत्र स्थलत्रयेऽप्यनुष्ठानविशेषः दर्शयिष्यते तत्राद्ये तावत्तद्भेदं दर्शयति—क्रमेऽपीति। प्रतिहर्त्रपच्छेदस्य जघन्यत्वे उद्गात्रपच्छेदनिमित्तप्रयुक्तनैमित्तिकादाक्षिण्यप्रयोगस्य, विरोधे सति पूर्वस्य परेण बाधेऽपि पूर्वनिमित्तकः पुनः प्रयोगो भवति न वेति विचारं मूलग्रन्थानुक्तमेव दर्शयति—न तु पूर्वेति। पूर्वप्रयोगे इति। दक्षिणाभावेनेति शेषः। पाक्षिकानुवादभियैवेति। यदि प्रतिहर्त्रपच्छेदप्रयुक्तसर्ववेदसदक्षिणकः पूर्वप्रयोगस्तदुत्तरमपि पुनः प्रयोगः क्रियते नासावदक्षिणपूर्वप्रयोगोत्तरं जातः। यदा तु उद्गात्रपच्छेदो जघन्यः, तदा तु भवत्यसौ तदुत्तरमित्यदक्षिणं तमिष्ट्वेत्यस्य पाक्षिकानुवादत्वापत्तेः न प्रतिहर्त्रपच्छेदप्रयुक्तसर्वस्वदानप्रयोगे पुनः प्रयोग इत्यर्थः। तदेवं प्रतिहर्त्रपच्छेदस्य

वस्तुतस्तु 'सोममपभज्य' इतिवत्पाक्षिकानुवादत्वेऽपि पुनः प्रयोगलोपे प्रमाणाभावः। न च तस्य संमृष्टद्रव्यमात्रोपलक्षणत्वान्न पाक्षिकानुवादत्वमिति वाच्यं, संमृष्टद्रव्यनाशेऽपि पूर्वप्रयोगाङ्गभूतकर्त्रानत्यर्थं विश्वजित आवश्यकत्वेन पाक्षिकानुवादत्वानिवारणात् ॥

वस्तुतस्तु नायमनुवादः 'तत्र तद्द्यात्' इत्यनेन पूर्वप्रयोगे दातव्यदक्षिणाया पुनः प्रयोगाङ्गतया विधानेऽपि पूर्वप्रयोगाङ्गभूतकर्त्रानत्यर्थं तस्मिन्नपि तस्या आवश्यकत्वेनादाक्षिण्यप्राप्त्यभावात्। न चैवंपुनः प्रयोगस्य ज्योतिष्टोमत्वादेव द्वादशशतादिरूपदक्षिणाः प्राप्त्युपपत्तेः 'तत्र तद्द्यात्' इत्यस्य वैयर्थ्यमिति वाच्यं, तस्य पूर्वप्रयोगे एकविंशत्यादिपक्षकरणेन पुनः प्रयोगे द्वादशशतादेरपि प्राप्त्यापत्तौ तन्निवृत्त्यर्थत्वेन सार्थक्यात् उद्गातुर्जघन्यत्वे सर्ववेदसप्राप्त्यर्थत्वाच्च। न चैवं केशश्मश्रुन्यायेन पुनः प्रयोगबाधः, तत्र द्वन्द्वेन साहित्यस्योपादेयकेशश्मश्रुगतत्वेनोक्तत्वात्साहित्यावच्छिन्नस्यैव क्रियाङ्गत्वेन प्रत्येकं तदङ्गत्वाभावात्, प्रकृते तु अरुणैकहायन्योरिवापनयदेवतान्तरसंयोगयोरिव च प्रत्येकमेव क्रियान्वयादेकवाक्योपादानादिना पश्चात्साहित्यावगमेऽपि नैकलोपेऽपरस्य लोपः। न ह्यारुण्यासम्भवे एकहायनीलोपः, उपांशुयाजे देवतान्तरसंयोगाभावे वाऽपनयलोप इष्टः।

---

जघन्यत्वे पुनः प्रयोगलोप इति प्रकाशकारसिद्धान्तमुपपादितं निरस्यति—**वस्तुतस्त्विति**। **सोममपभज्येति**। सोममपभज्येत्यस्य पाक्षिकानुवादत्वे वैयर्थ्यस्यैवापत्तेः सत्रप्रयुक्तद्रव्यसाधनत्वलाभप्रयोजनकोऽयं नियमविधिरेवेत्युक्तमेव युक्तम्। संसृष्टद्रव्यनाशेऽन्याङ्गानामिव विश्वजितोऽपि तत्प्रयोजकत्वं विधित्वपक्षे ममापि सुलभमेवेति ध्येयम्। प्रकाशकारोक्तं वैषम्यमनूद्य परिहरति—**न च तस्येति**। **अदाक्षिण्यप्राप्त्यभावादिति**। तथा च द्वादशशतदक्षिणायाः पुनः प्रयोगे विधानेन पूर्वप्रयोगे दृष्टार्थत्वेन यत्किञ्चिद्दक्षिणाप्राप्तौ तन्निवृत्त्यर्थतयाऽदक्षिणताविधानस्यावश्यकत्वेन नानुवादत्वं सम्भवतीत्यर्थः। **सार्थक्यादिति**। एवं च पुनः प्रयोगे यत्पक्षेण पूर्वप्रयोगे दक्षिणापरिमाणं निश्चितं तदेव परिमाणं विधातुं तद्द्यादिति वचनसार्थक्यमित्यर्थः। **प्रकृते त्विति**। **अयमर्थः**। आरुण्यादीनां प्रत्येकं क्रयभावनाकरणत्वेन प्रत्येकं भेदेन क्रयानुष्ठाने प्राप्तेपि एकवाक्योपादानावगतसाहित्यबलात् सर्वैर्यदा कर्तव्यः तदा सम्भूय कर्तव्य इत्यवगतार्थबाधापत्तेर्न पृथनुष्ठानं तस्य कर्तव्यम्। यदा तु तेषां मध्ये एकतरस्यालाभादिना नेतरसाहित्यसम्भवः, तदा तेन सह सम्भूयेत्यंशलोपेऽपि एकहायन्यादेः स्वान्वये आरुण्यनिरपेक्षतयैव करणत्वेन क्रयभावनान्वयात

**अतः प्रतिहर्तुः परत्वे पूर्वप्रयोगे सर्वस्वं दत्वा पुनः प्रयोगेऽपि तद्देयमिति सिद्धम्। यदा त्वाद्यप्रयोगे उद्गातृमात्रापच्छेदः तन्निमित्तकद्वितीयप्रयोगे च प्रतिहर्त्रपच्छेदः तदा तत्रैव सर्वस्वमेव देयम्। नैमित्तिकत्वेन नित्यदक्षिणाबाधकत्वात्। न च पुनः प्रयोगस्य प्रायश्चित्ततया पूर्वप्रयोगाङ्गत्वात्' तत्र तद्द्यात्' इत्यनेन च पूर्वप्रयोगाङ्गभूतदक्षिणाया एवोत्तरप्रयोगवृत्तित्वमात्रविधानादङ्गगुणविरोधन्यायेनाङ्गभूतपुनः प्रयोगाङ्गसर्वस्वदक्षिणाबाधेन प्रधानभूतपूर्वप्रयोगाङ्गदक्षिणाया एव देयत्वमुचितमिति वाच्यं, अपूर्वविधित्वा-**

---

सम्भवः। तत्करणकक्रयस्य त्यागे प्रमाणाभावादेकहायनीमात्रेणान्तरेणारुण्यं कर्तव्य एव क्रयः। एवमपनयदेवतान्तरसंयोगयोरपि यावत्सम्भवमेव साहित्यमुपपादनीयम्। अत एव स्थविष्ठादीनां दध्नश्चोपादेयत्वेनान्वयपक्षे यावत्सम्भवमेव साहित्यमङ्गीकृत्यासन्नयतोऽभ्युदितेष्ट्यधिकारः साधितः। एवमिहापि उद्गात्रपच्छेदे निमित्ते अदक्षिणतायाः पुनरभ्यासस्य च नैमित्तिकत्वेन विहितस्य प्रत्येकमेव ज्योतिष्टोमाङ्गत्वात् दाक्षिण्याभावेपि पुनः प्रयोगो नानुपपन्नः। एकतराङ्गाभावेपि इतराङ्गत्यागे मानाभावात्। न चादाक्षिण्यप्रयोगानन्तर्यं बाध्येतेति वाच्यम्। तस्य पुनः प्रयोगविधिनैवार्थप्राप्तस्यानुवादत्वेनानङ्गभूतस्यानुग्रहाभावेपि बाधकाभावादिति। **पूर्वप्रयोगे इति**। इति। प्रतिहर्त्रपच्छेदो यस्मिन् प्रयोगे स एव करिष्यमाणपुनः प्रयोगापेक्षया पूर्वः प्रयोगः। तस्मिन् पूर्वसञ्जातोद्गात्रपच्छेदप्रयुक्तादक्षिणबाधेन सर्वस्वं प्रतिहर्त्रपच्छेदनिमित्तं दत्वा प्रयोगं प्रारब्धं समाप्य पुनः प्रयोग उद्गात्रपच्छेदनिमित्तो विरोधाभावादबाधितः कर्तव्यः। तत्र पूर्वप्रयोगे यददत्तं सर्वस्वं तद्देयमित्यर्थः।

**अत्रेदमवधेयम्**। पुनः प्रयोगो हि पूर्वप्रयोगीयदक्षिणोत्कर्षविशिष्टतया विहित इति पूर्वप्रयोगीया सर्वस्वदक्षिणा पश्चादुत्पन्नोद्गात्रापच्छेदनिमित्तकपुनः प्रयोगे इवेहापि पुनः प्रयोग एव स्यात् न प्रतिहर्त्रपच्छेदवति पूर्वप्रयोगे। न चेष्टापत्तिः निमित्तवति प्रयोगे नैमित्तिकाननुष्ठाने निमित्तत्वव्याघातापत्तेः। यौगपद्येन निमित्तोत्पादे सर्ववेदसदानस्य पुनः प्रयोगे निवेशसम्भवेन विकल्पानापत्तेश्च। अपि च पूर्वप्रयोगे सर्वस्वे दत्ते नास्त्यवशिष्टं सर्वस्वान्तरं यद्दीयेत। पुनः प्रयोगेऽपि वक्ष्यमाणविश्वजिन्न्यायेन दक्षिणार्थस्थापितभागस्यैव सर्वताविधानेन सर्वस्वशेषान्तराभावात्। यद्यवशिष्टं न तर्हि पूर्वप्रयोगे सर्वस्वदानं कृतं भवति। अथापि कथञ्चित्सम्पाद्य विप्रकर्षेण पुनः प्रयोगः क्रियेत, तथापि नैतत्पूर्वप्रयोगे दास्यं भवतीति न तद्विशिष्टप्रयोगसिद्धिः। अतोऽत्रान्यतरप्रयोगस्यादक्षिणत्वमथवा पुनः प्रयोगो न भवत्येव, अथवा **गुणलोपेचेति** न्यायेन पूर्वप्रयोगीयदक्षिणालोपेऽपि दक्षिणान्तरेण पुनः प्रयोगमात्रमेव कथञ्चिद्वक्तुं

दृष्टार्थत्वादिदोषप्रसङ्गेनोत्तरप्रयोगवृत्तिदक्षिणायाः पूर्वप्रयोगाङ्गत्वानुपपत्तेः। अतस्तस्यापि पुनः प्रयोगाङ्गत्वात्परेण नैमित्तिकेन पूर्वस्य बाधात् सर्वस्वमेव देयम्॥ २०॥

## (२१)—अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात्॥ ५६॥

द्वादशाहाद्यहर्गणे यद्येकस्मिन् कस्मिंश्चिदहनि उद्गातुरपच्छेदो भवति तदा कृत्स्नस्याहर्गणस्यावृत्तिः। सुत्याहर्गणस्यैव द्वादशाहपदवाच्यत्वेन फलसाधनत्वात्तस्यैव प्रायश्चित्तादिरूपाङ्गग्राहित्वात्। अस्तु वोत्पत्तिवाक्ये प्रत्येकं करणत्वावगमात् द्वादशाहपदेनापि च समुदायिनामेवोक्तेः प्रत्येकमेव फलं प्रति करणत्वं एकपदोपादानाच्च करणानां समुच्चयः। अतश्चाङ्गग्राहित्वमपि प्रत्येकमेव। तथाऽपि यत्क्रतुसम्बन्ध्युद्गाताऽपच्छिन्द्यात्तेन क्रतुना यजेतेत्यर्थावगमादुद्गातुश्चैकस्यैव सर्वसाधारणत्वेन सर्वावृत्तिरिति प्राप्ते—

नोद्गातुः क्रतुसम्बन्धो विवक्ष्यते, अपि त्वावश्यकत्वाद्यत्क्रतुसम्बन्धिबहिष्पवमानार्थं प्रसर्पन्नुद्गाताऽपच्छिन्द्यात्तेन क्रतुना यजेतेत्यर्थावगतेस्तस्य च प्रतिसुत्यं भेदेन तत्सुत्याया एवावृत्तिः। तत्सुत्याया अपि च तत्सुत्याव्यवहितोत्तरमेवावृत्तिः साङ्गपूर्वसुत्याकरणव्यतिरेकेणोत्तरसुत्यायामनधिकारात्। अत एव पूर्वाङ्गानामप्यत्र नावृत्तिरिति ध्येयम्॥ २१॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
षष्ठस्याध्यायस्य पञ्चमः पादः॥

---

युक्तम्। **वस्तुतस्तु** पुनः प्रयोगविधिबलात् पूर्वप्रयोगोत्तरकालत्वलाभेपि पूर्वप्रयोगाव्यवहितानन्तर्यमुपक्रमस्यान्यतोऽप्राप्तस्यात्रैष्ट्येत्यनेन विधानात् अदक्षिणप्रयोगानन्तर्यपूर्वप्रयोगीयदक्षिणाविशिष्टपुनः प्रयोगस्य सर्वस्वदानप्रयोगोत्तरमसम्भवादेवानुष्ठानं न युक्तमिति दिक्। **सर्वस्वमेव देयमिति**। तथाच द्वादशशतदक्षिणायाः प्राकृत्याः प्रयोगद्वयेपि लोप इति भावः।

---

**अहर्गणे यस्मिन्नपच्छेदः**

**साङ्गपूर्वसुत्येति**। पुनरावृत्तिरूपाङ्गसहितवर्तमानसुत्याकरणव्यतिरेकेणेत्यर्थः। **पूर्वान्त्याङ्गानामिति**। यानि द्वादशाहपुरस्कारेण पूर्वोत्तराङ्गानि विहितानि तज्जन्योपकारस्याऽऽन्तमनुवृत्तेः मध्ये पतितावृत्तिप्रयोगस्य प्रसङ्गादुपकारलब्धेर्नावृत्तिरित्यर्थः।

इति श्री......पञ्चमः पादः॥

# अथ षष्ठाध्यायस्य षष्ठः पादः

(१)—सन्निपातेऽवैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥ वचनाद्वा शिरोवत्स्यात् ॥ २ ॥ न वाऽनारम्यवादत्वात् ॥ ३ ॥ स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥ न तत्प्रधानत्वात् ॥ ५ ॥ औदुम्बर्याः परार्थत्वात्कपालवत् ॥ ६ ॥ अन्येनापीति चेत् ॥ ७ ॥ नैकत्वात्तस्य चानधिकारात् शब्दस्य चाविभक्तत्वात् ॥ ८ ॥ सन्निपातात्तु निमित्तविघातस्स्याद्बृहद्रथन्तरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये ॥ ९ ॥ अपि वा कृत्स्नसंयोगादविघातः प्रतीयेत स्वामित्वेनाभिसम्बन्धात् ॥ १० ॥ साम्नोः कर्मवृद्ध्येकदेशेन संयोगे गुणत्वेनाभिसम्बन्धस्तस्मात्तत्र विघातस्स्यात् ॥ ११ ॥

दर्शपूर्णमासादौ कल्पभेदः श्रुतः 'राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाजः तनूनपादन्येषाम्' इत्यादिना। अत्र हि 'तनूनपातं यजति' इत्यनेन एकदेशप्रवृत्तिनिमित्तनामधेयमङ्गीकृत्य विहितस्य द्वितीयप्रयाजस्य क्रमे शाखाभेदेन समाम्नातयोर्नाराशंसतनूनपान्मन्त्रयोरव्यवस्थया विकल्पेन द्वितीयप्रयाजसम्बन्धित्वेन प्राप्तयोर्वासिष्ठसम्बन्धमात्रं नाराशंसस्य क्रियते। अत एव नाराशंस इति तद्धितः द्वितीयपदं प्रयाजपदं

---

सन्निपातेऽवैगुण्यात्। वासिष्ठादीनामिति।

**वासिष्ठादीनामिति।** आदिपदेन कण्वकात्रिभार्म्यश्वानां ग्रहणम्। **एकदेशेति।** द्वितीयप्रयाजे शाखान्तरपठितनराशंसमन्त्रान्नाराशंसस्यापि देवतात्वात् केवलं तनूनपाद्देवताकत्वाभावेन तनूनपाद्देवताकत्वं तन्नामधेयताप्रयोजकं वक्तुमशक्यं, तथापि तनूनपान्मन्त्रस्यापि विकल्पेनाङ्गत्वात् पक्षे तनूनपाद्देवताकत्वमादायैव तनूनपात्पदं नामधेयमित्यर्थः। **विकल्पेनेति।** द्वयोरपि मन्त्रयोस्तत्तद्देवतास्मारकत्वेन दृष्टार्थत्वात् तयोर्विकल्प इत्यर्थः। **तद्धित इति।** स्थानान्मन्त्रसम्बन्धे सति मान्त्रवर्णिकविधितो देवतासम्बन्धोऽपि प्राप्तस्तमादाय

चानुवादः। ततश्च परिशेषादेव तनूनपान्मन्त्रे अन्यसम्बन्धसिद्धेः तनूनपादन्येषां इत्यपि 'षोडश्युत्तरे' इतिवदनुवाद एव। न च नाराशंसमन्त्रस्य पशुप्रकरणे पाठेऽपि दर्शपूर्णमासप्रकरणे पाठाभाव इति केषांचिदुक्तं युक्तं, पशुप्रकरणे आप्रीसूक्ते वैकृतनाराशंसमन्त्रपाठेऽपि 'नराशंसोऽग्न आज्यस्य वेतु' इत्यस्य दर्शपूर्णमासप्रकरणे पाठात्। अत एवाश्वलायनादिभिः तत्रैव स पठितः॥

यत्तु नाराशंसवाक्ये द्वितीयत्वादिविशिष्टप्रयाजान्तरविधिः तस्य च वासिष्ठसम्बन्धित्वेन विधानादन्येषामभाव इति। तन्न—तथात्वे समिद्यागोत्तरत्वरूपद्वितीयत्वस्य नराशंसयागे विधानेऽपि वासिष्ठानां तनूनपाद्यागबाधे प्रमाणाभावान्नाराशंसोत्तरं तत्करणाद्यापत्तेः। न हि द्वितीयपदे तत्कार्यकारित्वेन नाराशंसविधिः, येन तेषां तनूनपाद्बाधश्शङ्क्येत। तथात्वे सिद्धान्ते वासिष्ठानामप्युद्देश्यत्वेन वाक्यभेदापत्तेः। न च 'तनूनपादन्येषाम्' इत्यनेन अन्येषामेव तनूनपाद्विधानात् वासिष्ठानां तद्बाधोपपत्तिः, तस्यैकवाक्यत्वेनोपपत्तौ वाक्यभेदाङ्गीकारे प्रमाणाभावात् विशिष्टविध्यपूर्वविधिकर्मान्तर-

---

तद्धितानुवादः। द्वितीयप्रयाजक्रम एव तदाम्नानात् द्वितीयप्रयाजपदमपि तथेत्यर्थः। **षोडश्युत्तरे इतिवदिति।** अङ्गिरसां द्विरात्रे वैखनसं पूर्वेहनि साम भवति षोडश्युत्तरे इति श्रुते उत्तरेहनि द्विरात्रस्य गृह्यते इत्येनेन द्विरात्रद्वितीयाहः अतिरात्रसंस्थाकत्वात् तत्रैव षोडशिनो नियमसम्भवादुत्तरे इति यथाऽनुवादः तद्वदिहापीति भावः। **अत्र च प्रकाशकारैः शास्त्रदीपिकादिग्रन्थेषु** स्पष्टतया नाराशंसप्रयाजस्य दर्शपूर्णमासगतत्वं प्रतीयमानमप्यनादृत्य द्वितीयस्य प्रयाजान्तरस्यैव विधानम्। न च षष्ठप्रयाजसत्त्वे पञ्चप्रयाजा इत्यनुपपन्नं तस्यानुष्ठानाभिप्रायत्वादिति सिद्धान्तितं, तदुक्तहेतूपन्यासेनानूद्य **दूषयति—न च नाराशंसेति। अत एवेति।** तथाच **तैत्तिरीयशाखायां** तयोस्तदपाठेपि आश्वलायनवचनमूलत्वेन कल्प्यमानशाखान्तरवचनेन तयोस्तद्विधानं भवत्येवेत्यर्थः। **वाक्यभेदापत्तेरिति।** वासिष्ठोद्देशेन द्वितीयप्रयाजेनान्वयो वक्तुं शक्यते तथापि द्वितीयप्रयाजपदे कार्यलक्षणापत्तिरेव दोष इत्यर्थः। **तस्यैकवाक्यत्वेनेति।** वासिष्ठानामिति विध्येकवाक्यत्वेनेत्यर्थः। **यद्यपि** तनूनपादन्येषामित्येव विधिर्वासिष्ठानामित्येवानुवादत्वेनार्थवाद इत्यपि वक्तुं शक्यते **तथापि** अन्यपदस्य स्वतः काश्यपादिगोत्रवाचित्वाभावात् ससम्बन्धिकत्वेन वासिष्ठवाक्यसापेक्षत्वेन विलम्बितं विधित्वम्। वासिष्ठवाक्यस्य तूत्तरनिरपेक्षतयैव विधित्वात् तस्य विधायकत्वे निस्सपत्ने सति तनूनपादित्यनुवादरूपं सत् सावकाशतया एकवाक्यतयाऽन्वेतीति न बाधकम्। **विशिष्टविधीति।** वासिष्ठवाक्ये इति

कल्पनागौरवप्रसङ्गाच्च। अतः पूर्वोक्तप्रकारेण मन्त्रस्यैव वासिष्ठसम्बन्धविधानेन कल्पभेद उपपादनीयः। स च दीक्षणीयादिद्वाराऽनेककर्तृकेषु सत्रादिषु प्राप्तः। तत्र सत्रादौ भिन्नकल्पानामप्यधिकारः उत समानकल्पानामेवेति चिन्तायां—अविशेषाद्भिन्नकल्पानामपि। न चैककल्पकरणेऽन्येषां वैगुण्यप्रसङ्गः, वासिष्ठानां इत्यत्र मन्त्रस्य शुद्धवासिष्ठार्थत्वविधाने प्रकरणबाधाद्यापत्तेः। क्रतुयुक्तपुरुषधर्मत्वे च परिसङ्ख्यापत्तेः वासिष्ठत्वस्य नाराशंसमन्त्रे हौत्रे वैश्वामित्रविधानात् साक्षात्कर्तृपरिच्छेदकत्वेन विध्ययोगेऽपि प्रयोजककर्तृभूतयजमानपरिच्छेदकत्वेन वासिष्ठत्वविध्युपपत्तेः सत्रादावौदुम्बरीसम्मानवदेकवासिष्ठकर्तृकत्वेऽप्यन्येषां वैगुण्यानापत्तेः। अतो भिन्नकल्पानामप्यधिकार इति प्राप्ते—

विकल्पेन प्राप्तयोर्मन्त्रयोर्नियमार्थत्वेन वाक्यसार्थक्योपपत्तौ नियतप्राप्तावासिष्ठव्यावृत्तिरूपपरिसङ्ख्याफलकत्वायोगात् वासिष्ठोद्देशेनैव प्रमाणान्तरवशाद्वासिष्ठाभिलषित-

---

शेषः। **बाधाद्यापत्तेरिति।** आदिपदेन यथा वासिष्ठकत्वेनाविशेषाद्विवाहादिकर्मणि नाराशंसमन्त्रप्राप्तौ प्रकरणबाधस्तथैव द्वितीयप्रयाजक्रमपाठबाधो भवतीति क्रमपाठबाधो गृह्यते। **सत्रादिष्विति।** आदिपदेनानेककर्तृत्वाविशेषात् सत्रभिन्नताहशकर्मणामप्येतदधिकरणविचारविषयत्वे सूचिते सति **यद्भाष्यकारस्य** सत्राण्येवोदाहृत्य विचारकरणं तत्र सत्रपदमुपलक्षणमित्युक्तम्। ततश्चैतच्चतुर्थाधिकरणे सत्रे विश्वामित्रसमानकल्पानामेवाधिकारस्य वक्ष्यमाणत्वाद्वासिष्ठानां अधिकाराभावान्न तत्र वासिष्ठकल्पाधिकारसाधनं प्रयोजनमित्याशङ्का निरस्ता। अन्यार्थं साधितस्य सत्रेऽपि प्रदर्शनमात्रार्थत्वात्। **हौत्रे इति।** वासिष्ठकर्तृकत्वस्य साक्षात् नाराशंसमन्त्रे विधाने तस्य याज्यारूपत्वेन हौत्रान्तःपातित्वात् तस्मिंश्च वचनान्तरेण विश्वामित्रस्य विधानात् न तस्मिन् साक्षात् कर्तृत्वेन वासिष्ठानामन्वय इत्यर्थः। न च सामान्यप्राप्तस्य विश्वमित्रस्य विशेषविहितेन वासिष्ठेन बाधोऽस्तु इत्याशङ्कामन्यरूपेणापि वासिष्ठानामन्वयसम्भवादबाधेनोपपत्तौ बाधायोगादित्यभिप्रायेण दूषयितुमन्यरूपेणान्वय दर्शयति **प्रयोजककेति। सम्मानवदेवेति।** यजमानसम्मितौदुम्बरी भवतीति वचनविहितौदुम्बरी सम्मानं येन केनचिदपि यजमानेन यथा भवति, तत्र यथाऽपरस्य प्रयोगे न वैगुण्यं एवमिहापीत्यर्थः। अतो नाराशंसमन्त्रोद्देशेन वासिष्ठत्वविधानमिति वचनमाश्रित्योपक्रान्तं पूर्वपक्षमुपसंहरति—**अत इति। नियतप्राप्तेति।** नाराशंसमन्त्रे सत्राधिकारित्वेन वासिष्ठावासिष्ठानां समुच्चयेन प्राप्तया वासिष्ठानां नियतप्राप्तत्वमित्यर्थः। **प्रमाणान्तरेति। वासिष्ठानामिति।**

**फलसाधनीभूतदर्शपूर्णमासाङ्गभूतद्वितीयप्रयाजद्वारा नराशंसमन्त्रविनियोगविधिः। अतश्च नराशंसमन्त्रस्यावासिष्ठेषु विनियोगाभावादेव निवृत्तिरिति न तत्परिसङ्ख्याया वाक्यप्रवृत्तिफलत्वं, अतश्च भिन्नकल्पानामप्यधिकारे एकाङ्गभूतमन्त्रपाठे इतरेषां फलानाप्तेस्समानकल्पानामेवाधिकारः ॥ १ ॥**

---

(२)—वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥ अर्थानां च विभक्तत्वात् न तच्छ्रुतेन सम्बन्धः ॥ १४ ॥ पाणेः प्रत्यङ्गभावादसम्बन्धः प्रतीयेत ॥ १५ ॥

**एतेन 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इत्यत्रापि न भिन्नकल्पयोरधिकारः, द्वन्द्वस्य युगपदधिकरणवचनत्वेन पदद्वयेऽपि** लक्षणावृत्तत्वात्। तदनङ्गीकारेऽपि **वा साहित्यबोधार्थं पदद्वये लक्षणाया आवश्यकत्वाच्च। अन्यथा देवतात्वादेर्व्यासज्यवृत्तित्वानुपपत्तेः** अतस्तत्पुरुष **एवायं तदुत्तरं चैकशेषः अतश्च समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह, तस्माद्राजद्वयसम्बन्धिनौ द्वौ पुरोहितौ समानकल्पावेव यजेयातामित्याद्यः पक्षः ॥**

---

सम्बन्धसामान्यपरा षष्ठी प्रकरणरूपप्रमाणान्तरवशादेतादृशपरम्परासम्बन्धविशेषे पर्यवस्यतीति भावः।

---

**वचनात्तु द्विसंयोगः**

पूर्वत्र समानकल्पानामधिकार इति स्थितम्। इह तु राजपुरोहितयोर्भिन्नकल्पयोरप्यधिकारं प्रतिपादयितुं पूर्वापवादेनाधिकरणारम्भः। **लक्षणावृत्तत्वादिति।** राजपुरोहितपदेनेतरेतरसाहितार्थद्वयबोधने तस्य लक्षणावृत्तत्वमित्यर्थः। **तदनङ्गीकारे इति।** युगपदधिकरणवचनतानङ्गीकारे इत्यर्थः। अतः प्रथमतो राज्ञः पुरोहित इति षष्ठीतत्पुरुषं कृत्वा राजपुरोहितश्च राजपुरोहितश्च राजपुरोहितावित्येकशेषमादायाद्यं पूर्वपक्षं साधयति— **अतस्तत्पुरुषेति।** तमिमं तन्त्ररत्नाद्युक्तं प्रथमं पक्षं दूषयन् स्वयं पक्षान्तरमाह—

**द्विवचनस्य** विशेष्यान्वयित्वब्युत्पत्तेस्सङ्ख्याधिकरणे **व्युत्पादितत्वादेकस्यानेकस्य वा राज्ञो द्वौ पुरोहितावित्यपरः।** अथवा **एकशेषं कृत्वैव तत्पुरुषः कार्यः। इतरथा** पदद्वयावृत्तिप्रसङ्गात् राजपदवैयर्थ्यप्रसङ्गाच्च। **अत एकस्यैव राज्ञो द्वौ पुरोहितावित्यन्यः। पूर्वपदे लक्षणायां प्रमाणाभावात् 'पुरोहितं वृणीते'** इत्युपादेयतादशायामेकत्वस्य विवक्षितत्वेन एकस्य राज्ञः पुरोहितद्वयाभावाच्च कर्मधारय एवायमिति प्राप्ते—

ब्राह्मणानामेव **पौरोहित्यश्रवणात्कर्मधारयानुपपत्तेर्द्वन्द्व एवायम्। न च तत्र पदद्वये लक्षणा, युगपदधिकरणवचनत्वस्य निराकृतत्वात्। न च साहित्यप्रतीत्यर्थं लक्षणा,**

---

**विशेष्यान्वयित्वेति।** यथैव प्राजापत्यानित्यत्र विशेष्ये द्रव्ये श्रुतं बहुत्वं तत्रैवान्वेति न तु तद्विशेषणीभूते प्रजापतिसम्बन्धेपीति न द्रव्यदेवतासम्बन्धानां बहुत्वाद्यागभेदः किन्तु [एकद्रव्य] निष्पन्नैकादशावदानद्रव्यत्वचोदकप्राप्तस्यानुग्रहानुरोधेनेत्युक्तं सङ्ख्याधिकरणे। तथा द्विवचनोपात्तं द्वित्वं न राजपदार्थे गुणभूते अन्वेति येन राजद्वित्वमपि प्रतीयेत। अपि तु विशेष्यभूते पुरोहितपदार्थे इति राज्ञो वा पुरोहितावथवा राज्ञो राज्ञां वा पुरोहितावित्यर्थेन पुरोहितद्वयस्यैव समानकल्पस्याधिकार इति द्वितीयः पक्ष इत्यर्थः। एवं च षष्ठीतत्पुरुषोत्तरैकशेषपक्षे एव **तन्त्ररत्नादावनुक्त** एव राजद्वयसम्बन्धित्वनियमानाश्रयणेनापि सम्भवात् द्वितीयपक्षत्वेनोक्तः। तेनात्र पूर्वपक्षचतुष्टयं विवक्षितम्। अतः परं **तन्त्ररत्नादावुक्तं** द्वितीयं पक्षं स्वयं तृतीयपक्षत्वेनोपपादयति—**अथवेति। पदद्वयावृत्तीति।** पूर्वस्मिन् पक्षद्वये राज्ञः पुरोहित इति षष्ठीतत्पुरुषोत्तरमेकशेषाश्रयणे राजपुरोहितश्च राजपुरोहितश्चेति विग्रहे पुरोहितपदस्येव राजपदस्यावृत्तिर्भवतीति पदद्वयावृत्तिप्रसङ्ग इत्यर्थः। राज्ञ एव पुरोहितविधानादव्यावर्तकत्वेन राजपदवैयर्थ्यप्रसङ्गमप्यापादयति—**राजपदेति।** अत्र चेतरथा पदद्वयावृत्तिप्रसङ्गादित्यनन्तरमत एकस्यैव राज्ञो द्वौ पुरोहितावित्यन्य इत्यतः प्राक् राजपदवैयर्थ्यप्रसङ्गाच्चेति लिखनं त्वरातिशयादेव ज्ञेयम्। इतरथोत्तरत्रापि राजपदवैयर्थ्ये समाने सति अत एकस्येति पूर्वपक्षोपसंहारकरणासङ्गत्यापत्तेः। **उपादेयतादशायामिति। यद्यपि** च वृणीत इति वाक्ये वरणसंस्कार्यत्वश्रवणात्तद्गतमेकत्वमविवक्षितमेव प्राप्तोति **तथापि** पुरोहितस्य भूतभाव्युपयोगविधानाभावे संस्कार्यत्वायोगाद्वरणरूपसंस्कारविध्यन्यथानुपपत्त्यैव वृतेन पुरोहितेनेष्टं भावयेदिति कल्प्यमाने विनियोगविधौ पुरोहितस्योपादेयत्वेन तद्गतैकत्वविवक्षा युक्तैवेति कल्प्यमानविधावुपादेयत्वं द्योतयितुमु**पादेयतादशायामित्युक्तम्।** अतश्च कर्मधारयस्यैव युक्तत्वेन राज्ञोऽप्येवं फलचमसकल्पने वात्राधिकारो न तु सिद्धान्ते इव ब्राह्मणस्यापीति पूर्वपक्षाभिप्रायः। **ब्राह्मणानामेवेति।** ब्राह्मणानां पौरोहित्यं विहितं न राज्ञः ब्राह्मणानां कदाचिदापदि क्षत्रिय-

**तत्प्रतीतेरानुमानिकत्वेनाप्युपपत्तौ लक्षणायां प्रमाणाभावात्। समाहारे पर**मेकत्वान्वयार्थं **पदद्वयेऽपि समुदायलक्षणेति विशेषः॥**

**वस्तुतस्तु—इतरेतरद्वन्द्वेऽपि व्याप्त्यभावेन साहित्यप्रतीतेरानुमानिकत्वायोगादवश्यं प्रतीयमानस्य तस्य यद्यपि लाक्षणिकत्वमावश्यकमेव। तथाऽपि तल्लक्षणाया एकशेषेऽपि समानत्वेन सर्वपक्षेष्वावश्यकत्वात्**पूर्वोक्तयुक्त्या **द्वन्द्वत्वोपपत्तिः। अतश्च राज्ञः पुरोहितस्य च भिन्नकल्पयोरप्यधिकारः। पुरोहितोपि तस्यैव राज्ञः, पुरोहितत्वस्य ससम्बन्धिकत्वेन राजप्रतियोगिकत्वावश्यंभावे ऐहिकस्यैकराज्यपतित्वरूपसायुज्यफलकत्वस्यान्यत्रानुपपत्तेः। अस्तु वाऽन्यस्यापि।** भिन्नकल्पत्वं **च यद्यपि न नराशंसमन्त्रे,** राज्ञोऽनुरोधेन **पुरोहितस्यापि नराशंससमानकल्पस्यैव सम्भवेन तादृशयोरेव तयोरधिकारोपपत्तेः। तथाऽपि** सोमफलचमस**रूपभिन्नकल्पयोरप्यधिकारः।** तत्रापि **न विकल्पः, राज्ञः प्राथमिकत्वान्निमित्तत्वाच्च तन्नैमित्तिकेन सोमस्य** बाधात्॥

---

वैश्यवृत्त्यनुकल्पविधानेपि क्षत्रियस्यापदि वैश्यवृत्त्यभ्यनुज्ञानेपि सर्वथा ब्राह्मणवृत्त्यभ्यनुज्ञानाभावादापत्तावपि न ब्राह्मणवृत्त्यन्तर्गतत्वेन पौरोहित्यप्राप्ती राज्ञ इति सूचयितुमेवकारः। **एकत्वान्वयार्थमिति।** समाह्रियमाणपदार्थानां बहुत्वादेकत्वान्वयानुपपत्त्या समाह्रियमाणार्थसमुदायलक्षणेत्यर्थः। **पूर्वोक्तयुक्त्येति।** पूर्वपदे लक्षणाद्यापत्तियुक्त्येत्यर्थः। अत्र **प्रकाराकारै**र्द्वन्द्वसमासेपि समानकल्पयोरेवाधिकारः अस्त्वित्याशङ्कामविशेषप्रवृत्तस्य वचनस्य सङ्कोचापत्तेर्भिन्नकल्पयोरप्यधिकार इत्येवं परिहृत्य पूर्वपक्षे नाराशंस एव द्वितीयः प्रयाजः, सिद्धान्ते तु नाराशंसतनूनपातौ द्वितीयके विकल्प इति प्रयोजनमुक्तं, तदनेन न्यायेन[....]सनेपि तथैवापत्तेरयुक्तमिति सूचयन्नाह—**भिन्नकल्पत्वं चेति। राज्ञोऽनुरोधेनेति।** राजन्यवासिष्ठादीनां नाराशंसस्यैव द्वितीयप्रयाजे विधाने सति नियत एव राज्ञो नाराशंसः तदनुरोधेनेत्यर्थः। **सोमफलचमसेति।** यदि राजन्यं वैश्यं वा याजयेदिति वचनेन फलचमसो राज्ञो विहितो ब्राह्मणस्य तु सोमचमस इति भिन्नः कल्पः। तत्रोभयकल्पस्य विरोधेनाश्रयणासम्भवादेकतरपक्षाश्रयणेन कुलाययागानुष्ठानेप्येकतरकल्परहितस्य वैगुण्यप्रयुक्तफलाभावो नाशङ्कनीयः, वचनेन तथाभूतस्यैवाधिकारबोधनादित्यर्थः। **नत्वेकतरकल्पाश्रयणेऽपि** कदाचित् सोमपक्षेण कदाचित्फलचमसपक्षेणेत्येवं विकल्पेन कुलाययागानुष्ठानं भवत्वित्याशङ्कां निरस्यति—**तत्रापीति। बाधादिति।** यद्यपि भक्षणे न तयोर्विरोधस्तथापि चमसपात्रे तूभयोर्निवेशासम्भवे कस्य बाधेन कस्य निवेश इत्येवं विरोधप्रयुक्तबाधापेक्षायां नैमित्तिकेन फलचमसेन सोमबाधो युक्त इति भावः।

(३)—सत्त्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥ लिङ्गदर्शनाच्च ॥ १७ ॥ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥ वचनादिति चेत् ॥ १९ ॥ न स्वामित्वं हि विधीयते ॥ २० ॥ गार्हपते वा स्यातामविप्रतिषेधात् ॥ २१ ॥ न वा कल्पविरोधात् ॥ २२ ॥ स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥

सत्रेऽपि 'ये यजमानास्त ऋत्विजः' इति श्रुतम्। तत्र न तावद्यजमानानां क्रतुयजनकर्तृत्वरूपऋत्विक्त्वमादाय द्वयोः प्रथमान्तयोस्सामानाधिकरण्येनान्वयः। 'स्वामिसप्तदशाः' इति न्यायेन प्राप्ततया वाक्यवैयर्थ्यापत्तेः। अतोऽत्र ऋत्विक्पदं परिक्रयक्रीतर्त्विक्परं तेनापि च न यजमानपदस्य यागकर्त्रभिन्ना इत्येवं सामानाधिकरण्येनान्वयः स्वात्मनि परिक्रयाऽसम्भवेन बाधात्। न च ऋत्विक्पदेन प्रकृतौ वस्तुतो ये परिक्रयक्रीताः तत्कार्यकर्तॄनभिधाय तेन सह यजमानपदस्याभेदान्वयः, सुबन्तयोः परस्परान्वयस्याव्युत्पन्नत्वाद्विशिष्टकर्तृलक्षणापेक्षया तत्कार्यलक्षणाया एव ऋत्विक्पदे न्याय्यत्वाच्च। अतो 'यो होता सोऽध्वर्युः' इतिवज्जघन्ये ऋत्विक्पद एव तत्कार्यं लक्षयित्वा यजमानसंस्कारार्थत्वेन तद्विधीयते यच्छब्दप्राथम्याभ्यां यजमानस्यैवोद्देश्यत्वप्रतीतेः। अत एव फलमुखत्वादप्राकृतकार्यकल्पनाऽपि न दोषः। एवमृद्धिकामत्वाविशेषात् त्रयाणामपि वर्णानामार्त्विज्यसंस्कार्थत्वावगतेस्त्रयाणामपि सत्रे अधिकारः। अत एव द्वादशाहे

---

॥ सत्राणि सर्ववर्णानामविशेषात् ॥

अत्र सत्रे त्रयाणां वर्णानामधिकारः, उत ब्राह्मणानामिति संशये सति त्रयाणां वर्णानामधिकार इति पूर्वपक्षं कृत्वा ब्राह्मणानामेवेति साधयिष्यते। तदुभयमूलभूतो हि येयजमाना इति वाक्ये आर्त्विज्यं प्रधानं उत याजमानमित्यन्यतरनिश्चय इति कृत्वेममेव विचारमादौ दर्शयति—सत्र इति। इति न्यायेनेति। स्वामिसप्तदशाः कर्मसामान्यात् इति तार्तीयसप्तमपादाधिकरणन्यायेनेत्यर्थः। तत्कार्यकर्तॄनिति। ऋत्विक्पदेनार्त्विज्यलक्षणायामुभयपक्षेप्यावश्यिक्यां पूर्वपक्षमाह—यजमानसंस्कारार्थत्वेनेति। अप्राकृतकार्येति। प्रकृतौ ऋत्विक्कर्तव्यपदार्थानां साक्षात् परम्परया वा क्रतूपकारजनकत्वमासीदिह तु तद्बाधित्वा यजमानगतादृष्टार्थत्वेऽप्राकृतकार्यकल्पनेत्यर्थः। अत एवेति। बार्हद्गिरवाक्यस्य पूर्वोत्तरपक्षसाधारण्येपि

'बार्हद्गिरं ब्राह्मणस्य' इत्यादिलिङ्गमप्युपपद्यते। एवं च यजमानसंस्कारकैरेव ऋत्विक्पदार्थैः प्राकृतक्रतूपकारस्यापि सिद्धेर्न तदर्थं परिक्रयादिभिः ऋत्विगन्तरसम्पादनमित्यपि द्रष्टव्यमिति प्राप्ते—

ज्ञापकसत्त्वे व्यवहितान्वयकल्पनया शाब्दबोधस्य लोके दृष्टत्वादिहापूर्वविधित्वादृष्टरूपाप्राकृतकार्यकल्पनादिदोषभिया यच्छब्दस्य व्यवहितान्वयेन स्वरूपप्राप्तिमात्रसूचनेन वा ऋत्विक्कार्यस्यैवोद्देश्यत्वमङ्गीकृत्य यजमानाः कर्तारो विधीयन्ते। न चैतावता अनृत्विक्कर्तृकत्वं शङ्क्यं, यजमानानामपि ऋत्विक्त्वस्य साधितत्वात्. वरणादिविध्युन्नीतं यजमानभिन्नत्वं परमतिदेशप्राप्तमुपदेशेन बाध्यते। न त्वेतावताऽब्राह्मणकर्तृकत्वमपीति तदनुग्रहाय ब्राह्मणानामेवाधिकारः। बार्हद्गिरादिदर्शनं त्वहीनाभिप्रायेण॥

---

पार्थुरश्म्यं राजन्यस्य, रायोवाजीयं वैश्यस्येत्यादिपदोपात्तवाक्यद्वयमेव पूर्वपक्षे लिङ्गं ज्ञेयम्। अपूर्वविधित्वेति। यद्यप्यपूर्वविधित्वं सिद्धान्तेप्यस्ति तथापि प्रयोजकत्वेनापि तेषां प्राप्तत्वेन न कर्तृत्वांशे विधित्वं, अपि तु प्रयोजकत्वांशे बाधमात्रमेवेत्यभिप्रेत्य पूर्वपक्षे तस्य दोषत्वमुक्तम्। यजमानविधाने प्रधानभूतार्त्विज्यगतर्त्विक्कर्तृत्वबाधमाशङ्कते—न चेति। साधितत्वादिति। नहि वरणभरणजन्यमदृष्टं ऋत्विक्त्वं, तयोरानमनार्थतया दृष्टार्थत्वात्। अदृष्टार्थत्वे वा ऋतुयाज्यावरणवत् सत्रेपि तदापत्तेरतो न तज्जन्यमदृष्टमृत्विक्त्वं अपि तु ऋतुयजननिमित्तं तत्। अतः सत्रेपि सन्त्येवर्त्विजः तद्विशेषा अध्वर्य्वादय इति तृतीये साधितत्वादित्यर्थः। ब्राह्मणकर्तृकत्वमपीति। यद्यपि ज्योतिष्टोमे आर्त्विज्ये ब्राह्मणकर्तृकत्वं न प्रत्यक्षविधिना विहितं, तथापि—

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥

इति स्मृतेः "ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनां" इत्यादिवैदिकलिङ्गात् परेषां शेषभक्षप्रतिषेधाच्च ब्राह्मणानामेव कर्तृत्वमिति द्वादशे साधयिष्यते। तच्च परम्परया ज्योतिष्टोमात् सत्रेपि प्राप्तं किमिति बाधनीयं, ऋद्धिकामवाक्यस्य ब्राह्मणाधिकारमादायाप्युपपत्तेः न तद्बाधकत्वमिति भावः। अहीनाभिप्रायेणेति। द्वादशाहस्याहीनसत्रोभयात्मकत्वेनैतल्लिङ्गदर्शनमहीनात्मकद्वादशाहपरतया नेयमित्यर्थः।

(४)—वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥ सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥ विश्वामित्रस्य हौत्रनियमात् भृगुशुनकवासिष्ठानामनधिकारः ॥ २६ ॥

प्रकृतौ 'वासिष्ठो ब्रह्मा वैश्वामित्रो होता' इति ब्रह्मत्वाद्युद्देशेन वासिष्ठादिविधानात् तयोश्च विरुद्धकल्पत्वात्तत्र विकल्प इति प्राप्ते—

'य एव कश्चित्स्तोमभागानधीते स एव वासिष्ठः' इत्यर्थवादेन श्येनपदस्येव विधिस्थवासिष्ठपदस्य लक्षणया स्तोमभागाध्येतृमात्रपरत्वावसायाच्छक्यार्थविध्यभावेन वैश्वामित्रसमानकल्पानामेवाधिकारः। भाष्ये तु 'य एव कश्चित्स्तोमभागानधीते स एव ब्रह्मा भवेत्' इति वाक्यमुदाहृत्य तस्य विधित्वाङ्गीकारेण वासिष्ठो ब्रह्मेत्यस्य तदर्थवादत्वाच्छक्यार्थविध्यभाव इत्युक्तम् ॥

---

॥ वासिष्ठानां वा ब्रह्मत्वनियमात् ॥

ये यजमाना इत्यत्रेव मुख्यसामानाधिकरण्याश्रयणे वाक्यानर्थक्याप्रसक्तेर्ब्रह्मपदे कार्यलक्षणायां प्रयोजनाभावमभिप्रेत्योद्देश्यविधेयभावं दर्शयन् पूर्वपक्षमाह—**प्रकृताविति। विकल्प इति।** तथावा ब्रह्मत्वे वासिष्ठकर्तृकत्वानुरोधेन हौत्रगतविश्वामित्रकर्तृकत्वबाधेन वासिष्ठसमानकल्पानामेवाधिकारोप्यत्र वैपरीत्येनेति विकल्प इत्यर्थः। एवं विकल्पमुखेनैव युक्ते पूर्वपक्षे **वासिष्ठानां वा ब्रह्मत्वनियमादित्येतत्पूर्वपक्षसूत्रे** वासिष्ठानामेवाधिकारप्रतिपादनमुपक्रममात्राभिप्रायं द्रष्टव्यम्। **शक्यार्थविध्यभावेनेति।** यथा श्येनवाक्ये शक्त्या पक्षिपरमपि श्येनपदं उपमानोपमेयभावप्रदर्शकेन यथा वै इत्यनेनार्थवादेनैकवाक्यतया गौणमेवमिहापि वासिष्ठपदमर्थवादैकवाक्यतया वासिष्ठावासिष्ठपरमिति ब्रह्मत्वगतवासिष्ठकर्तृकत्वविरोधाभावे हौत्रगतविश्वामित्रकर्तृकत्वानुरोधात् तत्समानकल्पानामेवाधिकार इत्यर्थः। **तदर्थवादत्वादिति।** स्तोमभागानधीयानोऽवसिष्ठोऽपि वासिष्ठकार्यसमर्थः कर्तुमित्येवं स्तोमभागप्रशंसार्थत्वेन स्तोमभागवचनार्थवादत्वमित्यर्थः।

(५)—विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥ सारस्वते च दर्शनात् ॥ २८ ॥ प्रायश्चित्तविधानाच्च ॥ २९ ॥ साग्नीनां वेष्टिपूर्वत्वात् ॥ ३० ॥ स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥ साग्निवापं च दर्शयति ॥ ३२ ॥

सारस्वतसत्रे 'परस्थैर्वा एते स्वर्गं लोकं यन्ति येऽनाहिताग्नयस्सत्रमासते' इति विधौ सत्रग्रहणस्य प्रकरणेन सङ्कोचे प्रमाणाभावात् सर्वसत्रेष्वनाहिताग्नीनामप्याहिताग्निसहितानामधिकारः इति मन्यते। अत एव सारस्वतसत्रवदेवेतरसर्वसत्रव्यतिरिक्तविषयमेवाधानगतात्मनेपदम्। इष्टिसोमोत्तरकालता तु क्रत्वङ्गत्वादेकं कञ्चित्तादृशमिष्टिसोमकर्तारमपेक्ष्योपपन्नैव। न हि तत्रेष्टिसोमसमानकर्तृकत्वमपि विधीयते वाक्यभेदप्रसङ्गादिति प्राप्ते—

'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत य एतेनानिष्ट्वा उत्तरेण यजेत गर्तपत्यमेव तद्भवति' इति वाक्येभ्योऽतिदेशादेकक्त्वापदोपादानेन वाक्यभेदाभावादिष्टिसोमसमानकर्तृकत्वावगतेः तत्र च आधानगतात्मनेपदानुरोधेनाहिताग्निमात्रकर्तृकत्वावगतेः सारस्वतसत्रप्रकरणस्थविधिवाक्येन च व्रीह्यादिवत्तत्रैवानाहिताग्नेरभ्यनुज्ञानादात्मनेपदानुरोधेन इतरसत्रेष्वाहिताग्नीनामेवाधिकारः ॥

---

विहारस्य प्रभुत्वात्

प्रकरणेनेति। सत्रमासत इति सत्रपदस्य सामान्यपरस्य सारस्वतसत्रप्रकरणेन सारस्वतसत्रमात्रपरत्वेन सङ्कोचो न युक्त इत्यर्थः। यत्तु सिद्धान्ते आधानगतात्मनेपदवशात् आधातुः सत्रजन्यफलसम्भवेपि अनाधातुः तदसम्भवादिष्टिपूर्वकविधानाच्च नानाहिताग्नीनां अधिकार इति साधितं प्राचीनैः, तत्पूर्वपक्षे परिहरति—अत एवेति। सिद्धान्ते समानकर्तृत्वस्य विधानेऽपि वाक्यभेदो नास्तीति दर्शिते परमार्थतः आकाङ्क्षितविधित्वानुरोधेनार्थादेव तस्य प्राप्तेः न तदंशे पृथग्विधिकल्पनेन विधानमपेक्षितमित्यवगतेरित्यनेन सूचितम्। इतरत् स्पष्टार्थम्।

(६)—जुह्वादीनामप्रयुक्तत्वात्सन्देहे यथाकामी प्रतीयेत ॥ ३३ ॥ अपि वाऽन्यानि पात्राणि साधारणानि कुर्वीरन् विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥ प्रायश्चित्तमापदि स्यात् ॥ ३५ ॥

जुह्वादिपात्रेषु तु आत्मनेपदाश्रवणादौदुम्बरीसम्मानवद्गुणत्वाच्च यस्य कस्य चिद्यजमानस्य पात्रैरपि सत्रे अधिकार इति प्राप्ते—

यस्यैव पात्रैरुपक्रान्तः प्रयोगः तस्यैव यजमानस्य सत्रप्रयोगमध्ये कदाचिन्मरणे यदि तत्पात्रैस्तस्य दाहस्तदा सत्रवैगुण्यं, यदि न दाहस्तदा 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दक्षिणे हस्ते जुहूमासादयति' इत्यादिना विहितस्य पात्रप्रतिपत्तिपूर्वकस्य पात्रगुणकदाहस्य लोपप्रसङ्गः। अतस्साधारणान्यन्यानि पात्राण्युत्पाद्य सत्रे अधिकारः ॥

---

(७)—पुरुषकल्पेन वा विकृतौ कर्तृनियमस्स्याद्यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन् अधिकारस्स्यात् ॥ ३६ ॥ लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥ न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥

यासु विकृतिषु 'सप्तदश सामिधेनीरनुब्रूयात्' इति श्रुतं तासु वैश्यस्यैवाधिकारः प्रकृतौ 'सप्तदश वैश्यस्य' इत्यनेन तत्तद्विकृतिस्थसाप्तदश्यानुवादेन वैश्यस्य कर्तृत्वेन

---

॥ जुह्वादीनामप्रयुक्तत्वात् ॥

पात्रगुणकेति। दक्षिणहस्ते जुहूमित्यादिद्वितीयाश्रवणादासादनादिकं प्रतिपत्तिः। यज्ञपात्रगततृतीयाश्रवणाच्च तेषां गुणत्वं दाहे इति निर्णेष्यते। तेन यज्ञपात्रगुणकेत्युक्तम्। अतस्साधारणानीति। साधारणानां चातिदेशप्राप्तौ अवभृथप्रक्षेपरूपविशेषप्रतिपत्तेर्विधानात् नासादनदाहादावपेक्षेति न दाहादौ तदभावकृतवैगुण्यप्रसक्तिरित्यर्थः।

विधानात्। वैश्योद्देशेनापूर्वसाप्तदश्यविधौ पाञ्चदश्यबाधापत्तेः। वासिष्ठानामित्यत्र तु व्यवस्थार्थत्वात्तथाऽङ्गीकरणमिति विशेषः। अतश्च वैश्यकर्तृकसाप्तदश्यानुरोधेन तस्यैव तास्वधिकार इति प्राप्ते—

सामिधेनीसाधनीभूतसाप्तदश्योद्देशे विशिष्टोद्देशापत्तेः साप्तदश्यमात्रोद्देशे च विकृत्यपूर्वसाधनीभूतसामिधेनीनामेव विशिष्योपस्थापकाभावेनानुवादायोगात् यूपसाप्तदश्यादावपि विधानापत्तेः प्रकरणानुग्रहाच्च वैश्योद्देशेनैव तदधिकारिकदर्शपूर्णमाससम्बन्धिसामिधेनीवृत्तित्वसम्बन्धेन साप्तदश्यं विधीयते, अर्थाच्च वैश्यस्य निमित्तत्वम्। विकृतौ चानैमित्तिकत्वार्थं पुनश्श्रवणमिति सर्वाधिकारः॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
षष्ठस्याध्यायस्य षष्ठः पादः

---

॥ पुरुषकल्पेन ॥

अपूर्वसाप्तदश्येति। वैश्योद्देशेन साप्तदश्यविधाने वैश्यकर्तृकदर्शपूर्णमासप्रयोगे सामान्यविहितपाञ्चदश्यबाधापत्तिरतो यत्र साप्तदश्यादिना स्वत एव पाञ्चदश्यं बाधितं भवति तत्र सप्तदश वैश्यस्येति वचनस्य पाञ्चदश्यबाधकताव्यापाराभावाल्लाघवात् साप्तदश्योद्देशेनैव वैश्यकर्तृकत्वविधिर्युक्त इत्यर्थः। अनैमित्तिकत्वार्थमिति। वैश्यकर्तृकत्वे निमित्ते साप्तदश्यं विधीयमानं प्रकरणात् दर्शपूर्णमासोपकारजनकं सद्वैश्यस्य साप्तदश्यं तदुपकारं जनयति न पाञ्चदश्यमिति वाक्यार्थः। अध्वरकल्पादिप्रकरणाधीतेन वाक्येन चानैमित्तिकं साप्तदश्यं क्रत्वङ्गतया विधीयत इति न तस्य वैश्येन विना वैगुण्यमिति सर्वेषामधिकार इत्यर्थः। एवं च प्रकरणवशात् वैश्यस्योद्देश्यत्वे वासिष्ठानां नराशंस इत्यत्र प्रकरणविरोधाभावात् वासिष्ठाः कर्तृत्वेन नराशंसस्य विधीयन्तामित्याशङ्का निराकृतेत्यपौनरुक्त्यं द्रष्टव्यम्।

इति श्रीकविमण्डनशम्भुभट्टकृतभाट्टदीपिका-
प्रभावल्यां षष्ठस्य षष्ठः पादः

---

# अथ षष्ठस्याध्यायस्य सप्तमः पादः

(१)—स्वदाने सर्वमविशेषात् ॥ १ ॥ यस्य वा प्रभुस्स्यादितरस्याशक्यत्वात् ॥ २ ॥

विश्वजिति सर्वस्वं ददातीति श्रुतम्। तत्र पित्रादीनामपि ज्ञातित्वेन स्वशब्दवाच्यत्वाद्धनवदेव दानम्। नच पित्रादिषु यथेष्टविनियोज्यत्वरूपस्वत्वस्य 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' इत्यादिस्वत्वहेत्वभावेनासम्भवात्, पितृत्वाद्यतिरेकेणात्मीयत्वाभावात् स्वत्वत्यागघटितद्ददातिकर्मत्वानुपपत्तिः। कन्यापुत्रदानादेरपि स्मृतिषूक्तत्वेन तत्रापि स्वत्वाङ्गीकारात्। अस्तु वा तदनुरोधेन परस्वत्वापादनमेव दानपदार्थ इति प्राप्ते—

परविधेयीकरणमात्रेण लोके दानशब्दप्रयोगाभावात् स्वत्वत्यागपूर्वकपरस्वत्वापादनमेव दानपदार्थः। न च पित्रादौ स्वत्वे प्रमाणमस्ति स्वत्वहेतूनामभावात्। कन्यादानादौ ददातेर्गौणत्वात्। न चेह तदाश्रयणं युक्तं, स्वशब्दस्य स्वत्वाश्रयीभूतधनपरत्वेनाप्युपपत्तेः। किञ्चायं स्वशब्दः प्रत्येकशक्त्यैवात्मीयज्ञातिधनेषु प्रवर्तते सर्वानुगतैकशक्यतावच्छेदकाभावात्। अतश्चैकस्मिन् प्रयोगे एकस्यैवार्थस्य ग्राह्यत्वाद्ददात्यनुरोधेन धनस्यैव ग्रहणम्॥

---

### स्वदाने सर्वमविशेषात्

**स्वशब्दवाच्यत्वादिति।** यद्यपि च स्वशब्दोऽयमात्मीयवचनो न धनवचनः धनादन्यत्रात्मीये प्रयोगात् धनेपि चात्मीयत्वेनैव प्रयोगोपपत्तेः, तथाप्यात्मीयत्वं पित्रादिष्वप्यविशिष्टमेव, अथापि परकीयेपि धने स्वशब्दप्रयोगाद्धनस्यैव वाचको भवेत्तथापि धनमात्रदानासम्भवादवश्यमात्मीयमेव ददातिसमभिव्याहृतेन स्वशब्देन प्रतिपादनीयमित्यात्मीयत्वाविशेषादपि पित्रादीनां दानमित्यपि द्रष्टव्यम्। **स्वामीति। रिक्थं** पित्रादीनामभावप्राप्तं, **क्रयो** मूल्येन स्वीकारः **संविभागो** भ्रात्रादीनां साधारणस्य परस्परविभागः **परिग्रहो** वन्येष्वस्वामिकेषु वृक्षफलादिषु पूर्वं स्वीकारः। **अधिगमः** प्रणष्टस्याज्ञातस्वामिकस्य निध्यादेः स्वीकारः। एतेषु करणेषु द्रव्यस्य स्वीकर्ता स्वामी भवतीति गौतमस्मृतेरर्थः। **स्वत्वाङ्गीकारादिति।** पितृत्वपुत्रत्वाद्यतिरिक्तस्य स्वत्वस्याङ्गीकारादित्यर्थः। **तदनुरोधेनेति।** कन्यापुत्रानुरोधेनेत्यर्थः।

## (२)—न भूमिस्स्यात्सर्वान् प्रत्यविशिष्टत्वात् ॥ ३ ॥

येयं महापृथिवी तस्यास्सार्वभौमधनत्वात् तेन तद्दानमिति प्राप्ते—

सार्वभौमस्यापि न तस्यां स्वत्वम्। जयस्यापि च शत्रुस्वामिकधनगृहक्षेत्रादिविषय एव स्वत्वोत्पादकत्वात्। महापृथिव्यां तु राज्यमात्राधिकारस्यैव जयेन सम्पादनात् राज्यं हि स्वविषयपरिपालनकण्टकोद्धारणरूपं, तन्निमित्तकं च तस्य कर्षकेभ्यः करादानं दण्ड्येभ्यश्च दण्डादानं इत्येतावन्मात्रम्। न त्वेतावता तस्यां स्वत्वम्। तथात्वे वनगततृणकाष्ठादावपि स्वत्वापत्तौ तत्र स्वत्वोत्पादकपरिक्रयविधिविरोधापत्तेः तद्विषयस्थप्रजागृहादिष्वपि स्वत्वापत्तेश्च। तस्मान्नासौ देया। माण्डलिकेनापि न मण्डलम्। परिक्रयादिलब्धं गृहक्षेत्रादिकं तु देयमेव॥

---

## (३)—अकार्यत्वाच्च ततः पुनर्विशेषस्स्यात् ॥ ४ ॥

अश्वादयः केसरिणोऽपि सर्वस्वे न देयाः 'न केसरिणो ददाति नोभयतोदतः प्रतिगृह्णाति' इति तेषां पर्युदासात्। यद्यपि चानारभ्याधीतेनानेन रागतः प्राप्तस्यैव मित्रादिभ्यः अश्वदानस्य 'यथाश्रद्धं दक्षिणां ददाति' इत्यादौ अनियमेन विहितस्यापि चाश्वविषये ऐच्छिकस्य दानस्य प्रतिषेध एव क्रियते। तथाऽपि विश्वजित्प्रकरणस्थेनानेन पर्युदास एव। सर्वस्वपदेन नियमत एव सर्वस्वदानस्य विहितत्वेनाश्वांशेऽपि तत्प्रवृत्तेर्वैधतया निषेधपक्षे विकल्पस्यापरिहार्यत्वात्। आवश्यकी चेयं वाक्यद्वयकल्पना इतरथा

---

**न भूमिः स्यात्**

**स्वविषयेति।** विषयशब्देन देश उच्यते। एवं तद्विषयस्थेत्यत्राग्रेऽपि द्रष्टव्यम्।

---

**॥ अकार्यत्वाच्च ॥**

**विश्वजित्प्रकरणस्थत्वेनेति।** एतच्च, विशेष एष ह्यश्वानां अन्येभ्यो द्रव्येभ्यो येषां दानं प्रतिषिद्ध्यते 'न केसरिणो ददाति' "नोभयतोदतः प्रतिगृह्णाति" इति विश्वजित्येव समाम्नायते इत्येतधिकरणोपसंहारभाष्यलिखनात विश्वजित्प्रकरणस्थत्वं ज्ञायते। तत्र प्रतिषिध्यत इति भाष्यलिखनात् निषेधः प्रतीयते तन्न भ्रमितव्यमित्यभिप्रेत्याह—**पर्युदास एवेति। इतरथेति।** अश्वप्रतिग्रहेष्ट्यधिकरणे हि प्रथमपूर्वपक्षे न केसरिणो ददातीति निषेधेन लौकिकाश्वदाने

अश्वप्रतिग्रहेष्ट्यधिकरणादौ लौकिकाश्वदाननिषेधकथनानुपपत्तेः। 'नोभयतोदतः प्रतिगृह्णाति' इत्यत्र तु पुरुषार्थः प्रतिषेधो दानलक्षणया वा पर्युदास इत्यपि ध्येयम् ॥

वस्तुतस्तु प्राकृतस्यैव नैमित्तिकस्य सर्वस्वदानस्यानैमित्तिकत्वार्थं विधेयत्वस्य वक्ष्यमाणत्वात् प्रकृतौ च दक्षिणार्थभागे इच्छयैवाश्वानां प्रसक्तेरनारभ्याधीतेनैव तन्निषेधोपपत्तौ न विश्वजित्प्रकरणे वाक्यान्तरकल्पनमपि। अत एव ज्योतिष्टोमतद्विकारानङ्गे सर्वस्वदाने अश्वानां दानमिष्टमेव।

---

## (४)—नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

यत्किञ्चित्पुरुषस्योपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि तत्सर्वं ददाति इति

---

दोषज्ञापनात्तन्निर्वाहार्थेष्ट्यास्तद्दान एव विधानमुचितमित्यापादितम्। नहि विश्वजित्प्रकरणस्थेन निषेधेनाश्वप्रतिग्रहेष्टेर्लौकिकाश्वदानपरत्वं सम्भवतीत्यनारभ्याधीतनिषेधवाक्यान्तरकल्पनाऽऽवश्यिकीति भावः। विश्वजित्प्रकरणस्थेन नोभयतो दत इति वाक्येन किं क्रियते पर्युदासस्यैकेन पूर्ववाक्येन कृतत्वादित्यत आह—नोभयतो दत इति। प्रतिषेध इति। प्रतिग्रहस्येति शेषः। दानलक्षणया वेति। एतच्चाश्वदानप्रतिषेधे भाष्यकृता वाक्यद्वयमपि एतदुपन्यस्तमित्यभिप्रायेणोक्तम्। वस्तुतस्तु एकतरवाक्येनैव तन्निषेधोपपत्तेरितरवैयर्थ्यापत्तेरश्वप्रतिग्रहेष्ट्यधिकरणन्यायसुधादर्शितरीत्या प्रतिग्रहप्रतिषेधकत्वमेव पूर्वोक्तं युक्तमिति ध्येयम्। नैमित्तिकस्येति। यद्येतावता ऋत्विजो नानमेयुरपि तु सर्वस्वेनेति वचनेन ऋत्विगानमनाभावे निमित्ते विहितत्वेन नैमित्तिकं सर्वस्वदानमित्यर्थः। तद्विकारानङ्ग इति। ज्योतिष्टोमतद्विकारयोरङ्गभूतसर्वस्वदाने ऐच्छिकतया दक्षिणाभागान्तर्गतत्वेन प्राप्तस्य दानस्यानारभ्याधीतनिषेधेन निषेधकरणेऽपि तद्विकारानङ्गभूततीर्थादौ सर्वस्वदाने सर्वस्वान्तर्गतत्वेन प्राप्तवैधाश्वदान अनारभ्याधीतनिषेधाप्रवृत्तेरश्वानां दानमिष्टमेवेति भावः।

---

॥ नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥

कुप्याकुप्येति। "अकुप्यं स्वर्णरौप्यादि लोहमन्यच्च कुप्यकं" इति मेदिनीकोशः।

शास्त्रार्थावधारणात् यस्यापि यन्नास्ति सोऽपि तदार्जयित्वा दद्यात् धात्वर्थविधिलाभादिति प्राप्ते—

षष्ठविधिप्रकारापत्तेश्चोदकप्राप्तदानानुवादेन द्वादशशतबाधेन सर्वतामात्रविधानात् प्रसिद्धस्वत्वेष्वेव सर्वशब्दस्योपपत्तावप्रसिद्धस्वत्वार्जनाक्षेपकत्वानुपपत्तेश्च नार्जयित्वा देयम् ।

---

(६)—शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥

धर्मार्थं भृत्यर्थं वा परिचारकत्वेनावस्थितश्शूद्रोऽपि न देयः तत्रास्य स्वत्वाभावात् परवश्यत्वानभ्युपगमसम्भवाच्च । गर्भदासादयस्तु देया एव ॥

---

प्रसिद्धस्वत्वेष्वेवेति । यद्यपि वा यत्सर्वस्वं तद्देयमिति वचनव्यक्तिः स्यात् तथापि धनमात्रस्य दानासम्भवादवश्यं यदात्मीयं सर्वं धनमिति वक्तव्यम् । ततश्च सिद्धात्मीयेनोपपन्नो विधिर्नाविद्यमानमर्जयितुं प्रभवति । अर्ज्यमानं च कदाचिन्न लभ्येत तत्र तदपेक्षं सर्वस्वदानं न नित्यवदनुष्ठीयेत । यदा लभ्यते तदा दद्यादित्याश्रीयमाणे नैमित्तिकतापत्तेरतः प्रसिद्धस्वत्वस्यैव दानमित्यर्थः ।

---

॥ शूद्रश्च धर्मशास्त्रत्वात् ॥

गर्भदासादयस्त्विति । तथा च ।

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ॥

अकालसम्भृतस्तद्वदाहितः स्वामिना च यः ।
मोक्षितो महतश्च रणाद्युद्धप्राप्तेः प्रयोजितः ॥

तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ।
भक्तदासश्च विज्ञेयः तथैव बडबाहृतः ॥

विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृताः ।

इतिनारदोक्तपञ्चदशसु दासेषु मध्ये येषु स्वत्वमस्ति परविधेयीकरणं च स्वायत्तं तेषां दानमन्येषां तु न तदिति द्रष्टव्यम् ।

(६)—दक्षिणाकाले यत्स्वं तत् प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥

**दक्षिणाकाले यद्यस्य स्वत्वं तस्यैव दानं न तु ततः प्रागपि यत्प्राप्तोपभोगं धनं तदनुपभुज्य प्रयत्नेन धारयित्वा देयम् । धारणप्रयोजकत्वे प्रमाणाभावात् । भाविनस्तु तदानीं स्वत्वाभावादेवाशक्यं दानम् ।** न च **भाविन्यपि प्रतिश्रवणमात्रेण स्वत्वोत्पत्तिः ।** तथात्वे **दत्तस्य पुनर्दानासम्भवेन 'देयं प्रतिश्रुतं चैव' इति विधिवैयर्थ्यप्रसङ्गात् ।** ददातेस्समर्पणमात्रार्थत्वे **लक्षणाप्रसङ्गाच्च । प्रतिश्रवणेन च स्वोपभोगान्यदानायोग्यता परं जन्यते** उक्तदान**नियमात् 'यच्चान्यस्मै प्रतिश्रुतम्' इत्यन्यस्मै दाननिषेधाच्च, न तु स्वत्वं निर्वापवत् ॥**

---

(७)—अशेषत्वात्तदन्तस्स्यात् कर्मणो द्रव्यसिद्धत्वात् ॥ ८ ॥ अपि वा शेषकर्मस्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ तथा चान्यार्थदर्शनम् ॥ १० ॥ अशेषं तु समञ्जसादानेन शेषकर्म स्यात् ॥ ११ ॥ नादानस्य नित्यत्वात् ॥ १२ ॥ दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्माद्विरोधस्स्यात् ॥ १३ ॥

---

**॥ दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥**

अवश्यं प्राप्यं त्वयेदमित्येवं प्रतिश्रवणस्य भाविन्येव करणात

नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥

इति वचनेन प्रतिश्रुतस्यान्यस्मै दाननिषेधात प्रतिश्रावयितुः स्वत्वनिवृत्त्या प्रतिश्रवणसम्पादनस्य स्वत्वमस्त्वित्यभिप्रेत्य शङ्कते—**न चेति** । नारदवचनार्थस्तु शुश्रूषाविवादपदप्रकरणे मिताक्षरादौ द्रष्टव्यः । **तथात्वे इति** । भाविनि प्रतिश्रवणमात्रेण परस्वत्वोत्पत्तौ परस्वत्वापादनसिद्धे देयं प्रतिश्रुतं चैवेति विधिना प्रतिश्रुतस्य दानविधानवैयर्थ्यं स्यात तस्य पुनर्दानासम्भवादित्यर्थः । न च देयं प्रतिश्रुतमित्यत्र ददातिः समर्पणमात्रपर इत्यत आह—**ददातेरिति** । **स्वोपभोगान्यदानेति** । स्वोपभोगान्यदानयोरित्यर्थः । **उक्तदानेति** । देयं प्रतिश्रुतमिति वाक्येन प्रतिश्रुतस्य दानविधानेन स्वोपभोगस्यासम्भवः यस्मै प्रतिश्रुतं तस्मा एव देयं नान्यस्मै इत्येवं निषेधाच्चान्यदानायोग्यत्वं चेत्यर्थः । तथा च निर्वापेन यथा न देवतास्वत्वमुत्पद्यते

**ज्योतिष्टोमे तद्विकारे तदन्यत्र च** यत्र सर्वस्वदानमाम्नातं **तत्र वृत्ता कथा।** तत्र तु **कर्मारम्भ एव त्रिधा यजमानेनात्मीयं धनं वचनाद्व्यवस्थापितं भक्षार्थं क्रत्वर्थं दक्षिणार्थं चेति तत्र सर्वस्य स्वत्वाविशेषात् त्रिविधस्यापि दानं न तु दक्षिणार्थभागस्यैव सर्वता। तस्य प्रकृतौ** दक्षिणार्थत्वे **सर्वस्वदानविधिवैयर्थ्यम्। तदभावे भागत्रयस्याप्यविशेषात् दक्षिणार्थोऽयं भाग इति व्यपदेशानुपपत्तिः। अतश्च प्रत्यक्षवचनोपदिष्टसर्वस्वदानवशेनातिदेशप्राप्तकर्मशेषलोपः।** पदार्थाना प्रधानत्वादङ्गभूतदक्षिणानुरोधेन **बाधस्य** प्रमेयबला**बलन्यायेनानुपपत्तेर्वा किञ्चित् क्रतवे स्थित्वा सर्वमन्यत्प्रदीयतामिति प्राप्ते—**

---

स्वस्वत्वाभावे पुनस्त्यागासम्भवात, किं तु स्वोपभोगान्यदानायोग्यत्वं तथैव प्रतिश्रवणेनापि तदेव, न तु परस्वत्वमुत्पद्यते। तथात्वे स्वस्वत्वाभावे पुनर्दानासम्भवादिति भावः।

---

॥ अशेषत्वात्तदन्तः स्यात् ॥

**यत्र सर्वस्वदानमाम्नातमिति।** तथा वैनत्पादारम्भे विश्वजिद्विषयसर्वस्वदानस्योदाहरणताप्रदर्शनं सर्वस्वदानमात्रोपलक्षणं द्रष्टव्यम्। ज्योतिष्टोमेऽपि यद्येतावतेति वचनेन नैमित्तिकतया सर्वस्वदानविधानेन तस्यापि विचारविषयत्वात्। अत एव स्वदाने सर्वमविशेषादिति सूत्रे साधारणतयैव स्वपदोपादानम्। **तत्र त्विति।** प्रकृतौ ज्योतिष्टोमे इत्यर्थः। **दक्षिणार्थत्वे इति।** प्रकृतौ ज्योतिष्टोमे दक्षिणार्थभागस्यैव सर्वस्य दक्षिणात्वेन दानापत्तावपि तु सर्वस्वदानविधिवैयर्थ्यम्। **यदि** तु दक्षिणार्थभागमध्ये द्वादशशतस्यैव दक्षिणात्वेन दानं नेतरस्येति सर्वस्वदानविधिनाऽवशिष्टं दक्षिणाभागद्रव्यं देयत्वेन विधीयत इति न वैयर्थ्यमित्युच्येत तदा अवशिष्टत्वाविशेषाद्भागत्रयस्यापि सर्वस्वमध्ये दातव्यत्वमिति प्रकृतौ निर्णीते सतीहापि तथैव देयमिति भावः। **पदार्थानां प्रधानत्वादिति। यद्यपि** प्रधानयागनिष्पत्त्यनन्तरं दक्षिणा विहिता तदुत्तरकालीनाश्च पदार्थाः यथा प्रधानयागाङ्गमेवं दक्षिणा सोमस्येति वचनात् तद्दानमपि प्रधानयागाङ्गमेव। अतो न परस्परमेतेषामङ्गत्वप्रधानत्वकृतो विशेषः, **तथापि** प्रधानयागविधौ क्रतुसमाप्तेरेव शास्त्रार्थत्वेन विधानात्तां विना क्रतुसिद्ध्यभावे सति तत्सिद्ध्यर्थं क्रतुसमाप्तेरावश्यकतया तत्प्राधान्येनान्तरालिकपदार्थानामपि प्राधान्यविवक्षया पदार्थानामित्युक्तम्। अत एव 'प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमं' इति **प्राचां** ग्रन्थेष्वपि कर्तृप्राधान्योक्तिरप्येतदभिप्रायिकैव द्रष्टव्येति। **प्रमेयबलाबलेति**। आतिदेशिकमपि क्रतुशेषं प्रधानत्वात् बलवत् दक्षिणादानं तु प्रत्यक्षविहितमप्यङ्गत्वाद्दुर्बलमिति प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य बलवत्वात् क्रतुशेषबाधानुपपत्तेरित्यर्थः। एतत्पादाधिकरणे इतः प्रभृति षडप्यधिकरणानि कृत्वाचिन्तयेति

दक्षिणार्थेन निर्दिष्टस्य तत्सम्बन्धप्राप्तौ सर्वतामात्रविधाने लाघवमिति तस्यैव सर्वस्य दानम्। न चैवं प्रकृतावपि तस्य दानापत्तेरत्र विधिवैयर्थ्यं, इतरथा तस्य दक्षिणार्थत्वानुपपत्तिरिति वाच्यं, यद्येतावता ऋत्विजो नानमेयुः, अपि तु सर्वस्वेनेत्यनेन वचनेन द्वादशशतेनानत्यसम्भवे तस्यापि दक्षिणार्थत्वात्। अत्र च दक्षिणार्थभागस्यैव देयत्वे अवस्थिते पूर्वतनानि षडधिकरणानि कृत्वाचिन्तयेति केचित्॥

वस्तुतस्तु–पित्रादीनामपि दक्षिणाभागान्तः पातित्वेन विचारोपपत्तेर्न कृत्वाचिन्तात्वम्॥ ७॥

---

(८)—अहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषात्॥ १४॥ द्वादशशतं वा प्रकृतिवत्॥ १५॥ अतद्गुणत्वात्तु नैवं स्यात्॥ १६॥ लिङ्गदर्शनाच्च॥ १७॥

अस्त्यष्टरात्रोऽहीनः तस्य विश्वजित्प्रथममहः ततोऽभिप्लवष्षडहः ततोऽभिजित् 'पशुकामो ह्येतेन यजेत' इति श्रुतः। तत्र विश्वजिति प्रकरणान्तराधिकरणोक्तन्यायेन कर्मान्तरे नामातिदेशेनैकाहकाण्डपठितविश्वजितो धर्मः सर्वस्वं अन्येषु तु गणत्वाद्वा-

---

प्रकाशकारैरुक्तमनूद्य दूषयति—अत्रेति। वस्तुतस्त्विति। एतच्च त्रेधाविभागवाक्येपि द्रव्यस्य स्वशब्देनोपादानपक्ष एव द्रष्टव्यम्। यदा तु तत्र धनादिपदस्यैव प्रयोगः तदा तच्छब्देन पित्रादीनां ग्रहणासम्भवात् दक्षिणार्थविभक्तद्रव्यान्तः पातस्य कथमपि पित्रादिषु सम्भव इत्यपि ध्येयम्। अत्र च दक्षिणार्थभागस्यैव सर्वस्य दानमिति सिद्धान्ते 'तमध्वरे विश्वजिति,' 'समृन्मये वीतहिरण्मयत्वात्' इति कालिदासवचनं कथमिव सङ्गच्छत इति मृग्यम्।

---

॥ अहर्गणे च तद्धर्मा स्यात्॥

अत्राहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषादिति सूत्रस्य सिद्धान्तोपक्रमत्वदर्शनात् भाष्यकारादिभिः तथैव वर्णनात् सिद्धान्तोपक्रमेणैवाधिकरणमारभ्यते— तत्रेति। सर्वस्वमिति। सूत्रस्थं तद्धर्मपदं यद्यपि धर्मसामान्यपरं तथापि दक्षिणातिरिक्तधर्मेषु नामातिदेशप्राप्यत्वस्य पूर्वपक्षिणोऽपीष्टत्वान्न तद्विषये पूर्वपक्षकरणं सम्भवति येन तन्निराकरणपूर्वकं सिद्धान्त

**दशाहतो ज्यौतिष्टोमिकी दक्षिणा। द्वादशाहेऽपि च प्रतिसुत्यं भेदेनातिदेशोऽपि प्रयोगैकत्वेन कर्त्रैकत्वस्य** दशमे **वक्ष्यमाणत्वात्तदानत्यर्थाया दक्षिणाया अपि तन्त्रेणादावन्ते वा देयत्वप्रसक्तौ 'अन्वहं द्वादशशतं ददाति' इत्यनेनावृत्तिफलकोऽन्वहकालो विधीयते। द्वादशशतस्यापि विधाने वाक्यभेदापत्तेः। प्राकृतगवादिदक्षिणामात्रोपलक्षणं तत्। या दक्षिणा तन्त्रेण देयत्वेन प्रसक्ता तां प्रत्यहं ददातीति** तद्वाक्यार्थः॥

तदिहा**ष्टरात्रे नामातिदेशप्राथम्याभ्यां विश्वजिद्धर्मानुग्रहप्राप्तावपि भूयोऽनुग्रहस्य न्याय्यत्वात् द्वादशशतस्यैव तन्त्रेणोपकारकत्वप्रसक्तेस्तस्यैवान्वहमित्यनेनावृत्तिकरणाद्द्वादशशतमेव प्रत्यहं देयमिति वार्तिककाराशयः। भाष्यकाराशयस्तु अष्टरात्रप्रकरणस्थेनैव "हीयते वा एष पशुभिर्यो विश्वजिति न सर्वस्वं ददाति" इत्यनन्यथासिद्धलिङ्गोपष्टम्भप्राथम्यादिना तत्कल्प्यविधिनैव वा सर्वस्वविधानादाद्य** एव सर्वेषु **वाऽहस्सु सर्वस्वं देयमिति॥ ८॥**

---

आरभ्येत उभयपक्षेऽपि समानत्वात्। अतः सर्वस्वरूपदक्षिणाविषय एव विवादात् तद्धर्मपदं सर्वस्वपरतयैव व्याख्येयमित्यभिप्रायः। **दशमे इति।** अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदात् स्यादिति पूर्वोत्तरसूत्राभ्यां दशमे षष्ठपादे वक्ष्यमाणत्वादित्यर्थः। **वाक्यार्थ इति।** एतावता च सिद्धान्ते सूत्रभाष्यकाराभिप्रेते उक्ते प्राचीनैर्वक्ष्यमाणवार्तिकदर्शितरीत्याऽनिष्टं सिद्धान्तमभिधाय भाष्योक्तसिद्धान्तस्य मुख्यापेक्षया भूयसां धर्मानुष्ठानमित्यर्थस्य द्वादशे सिद्धान्तितस्यापि इह भूयोपेक्षया मुख्यस्यैव प्राबल्याङ्गीकारेणान्यथानयनात् कृत्वाचिन्तात्वमुक्तम्, तत्र भाष्योक्तसिद्धान्तोपक्रमोत्तरं वार्तिकोक्तमेव पूर्वपक्षस्थानीयमित्यभिप्रायेणाह—**तदिहेति। आद्य-एवेति।** तथाच प्रथमे विश्वजिति अहनि सर्वस्वदाने कृते तस्य प्रयोगाङ्गकर्त्रानत्यर्थत्वेन तद्द्वारा सर्वप्रधानोपकारसिद्धेर्नेतरेष्वहस्सु द्वादशशतं सकृत् भिन्नतया वाऽनुष्ठेयमित्येवकारेण सूचितम्। **सर्वेषु चेति। यद्यपि** विश्वजिति प्रथमेहनि दक्षिणार्थस्थापितभागस्य सर्वस्यैव दाने जाते न पुनस्तद्भागान्तरमस्ति यत्तदग्रिमेष्वहःसु दीयेत, नवा लिङ्गदर्शनकल्प्यविधौ विश्वजित्पदस्याष्टदोषत्वाङ्गीकारेपि अष्टरात्रे सकृत् सर्वस्वदानप्राप्तावपि सर्वेषु वाऽहस्सु तत्प्राप्तिः सम्भवति, **तथाप्ययमाशयः**—प्रकृतौ द्वादशाहे प्रतिकर्मावसायिभिश्चोदकैः तत्तदहर्मात्राङ्गत्वेन प्राप्यमाणमपि द्वादशशतं तत्तदहः प्रयोगीयकर्त्रानतिद्वारैव प्राप्यते इत्यङ्गेष्विव प्रधानान्तरेष्वपि न पृथक्करणम्। एवं च विनिगमनाविरहेणैकमेव द्वादशतमादावन्ते वा दीयमानं सर्वप्रधानानामङ्गानां वोपकारकं प्राप्तं तत्रान्वहं द्वादशशतं ददातीति वचनं प्रवर्तते। अनेन चातिदेश-

## (९)—विकारस्सन्नुभयतोऽविशेषात् ॥ १८ ॥ अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ अनुग्रहाच्च पादवत् ॥ २० ॥

प्रकृतिभूते **विश्वजिति द्वादशशतादिन्यूनधनस्यापि सर्वस्वपदवाच्यत्वोपपत्तेः तद्वतोऽप्यधिकार इति प्राप्ते—**

---

प्राप्ताङ्गभावदक्षिणाया द्वादशशतपदोपलक्षिताया आवृत्तिमात्रं विधीयते। सा चावृत्तिः न द्वादशशतस्य तत्तत्सुत्यामात्रोपकारकतया एकस्मिन्नप्यहनि दीयमानस्य तस्य प्रयोगैक्येन सुत्यान्तरोपकारकत्वावश्यम्भावात्। अपि तु तत्तत्प्रयोगीयकर्त्रानतिरूपव्यापाराबाधाय द्वादशशतरूपसाधनस्यैव तत्पृष्ठभावेन प्राप्तस्य बाधमङ्गीकृत्य सुत्यासमसङ्ख्यद्वादशशतसमुदायस्यैव दक्षिणात्वकल्पनया। सापि च दक्षिणा सर्वेषामेवाह्नां तत्तत्प्रयोगीयकर्त्रानतिद्वाराङ्गं सत् तत्तन्त्रेण सर्वेषामुपकारिका। प्रत्यहं तु तदवयवरूपं द्वादशशतं विभज्य वचनात् दीयत इति विभागोऽपि वचनात्तदङ्गं भवति। एवं पौण्डरीकाहीने विकृतौ तत्स्थाने विहितमयुतं अश्वसहस्रं तत्तदह्नां तत्तत्प्रयोगीयकर्त्रानतिद्वारा तदङ्गभूतमतिदेशविभागवशादवयशो विभज्य देयम्। तद्वदष्टरात्राहीनपुरस्कारेण सर्वस्वदक्षिणाविध्यभावेपि विश्वजिदर्थदक्षिणयैव सर्वोपकारसिद्धेः तत्तदतिदेशप्राप्तद्वादशशताबाधेऽपि अतिदेशप्राप्तस्यावयवशो विभागस्य यावत्सम्भवं बाधायोगात् तदेव सर्वस्वं दक्षिणारूपं सर्वेष्वहस्सु विभज्य देयम्। **यदि** तु तत्तदहः प्रयोगीयकर्त्रानतिद्वारा प्राप्तस्य प्रत्येकं द्वादशशतस्येह तथैव प्राप्तस्य विश्वजित्प्रयोगीयकर्त्रानतिद्वारकसर्वस्वेन बाधे प्रमाणाभावात् विश्वजिति सर्वस्वं अन्येष्वहस्सुः तु सुत्यासमसङ्ख्यद्वादशशतस्यैव प्राप्तस्य प्रत्येकमवयवशो विभाग इति न सर्वेषु वा अहस्सु सर्वस्वं देयमिति वक्तुं युक्तं, **तदापि** लिङ्गदर्शने विश्वजित्पदस्य भूमान्यायेन लक्षणयाऽष्टरात्राहर्गणपरत्वमाश्रित्य तत्कल्प्येन विधिनाऽष्टरात्रपुरस्कारेण विहितसर्वस्वदानमवयवशो द्वादशशतबाधेन विभज्य कर्तव्यमिति नानुपपत्तिः। अत एवात्र **लिङ्गदर्शनाच्चेति** सूत्रं व्याचक्षाणेन भाष्यकृता लिङ्गं खल्वपि दर्शयति किं लिङ्गं भवत्येवमाह—हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददातीति नियतं सर्वस्वदानं दर्शयति। अहर्गणे इति ग्रन्थे अहर्गणे सर्वस्वदानं दर्शितम्। उभयथापि सर्वेषु वाऽहस्सु सर्वस्वं देयमिति मूले सर्वस्वं विभज्य देयमित्यर्थो द्रष्टव्य इति।

---

### विकारस्सन्नुभयतोऽविशेषात्

**प्रकृतिभूतेति।** अन्येषु विश्वजिद्यागेषु विकृतिभूतेषु नामातिदेशेनैकाहकाण्डपठित-

प्रकृतौ ज्योतिष्टोमे यथेतावता ऋत्विजो नानमेयुरपि तु सर्वस्वेनेत्यनेन द्वादशशतासाध्यायामानतौ सर्वस्वविधानात्तत्र च तदधिकस्यैव योग्यतया प्राप्तेस्तादृशस्यैवात्र पक्षप्राप्तस्य नियममात्रकरणाद्द्वादशशताधिकधनवत एव विश्वजित्यधिकारः ॥

---

(१०)—अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥ कल्पान्तरं वा तुल्यवत्प्रसङ्ख्यानात् ॥ २२ ॥ अनियमोऽविशेषात् ॥ २३ ॥ अधिकं वा स्याद्बह्वर्थत्वादितरेषां सन्निधानात् ॥ २४ ॥ अर्थवादश्च तद्वत् ॥ २५ ॥

आधाने "एका देया षट् देयाः द्वादश देयाश्चतुर्विंशतिर्देयाश्शतं देयं सहस्रं देयं अपरिमितं देयमिति" श्रुतम्। तत्रापरिमितशब्दः परिमाणशून्यमवयवव्युत्पत्त्याऽभिधत्ते। न च परिमाणशून्यस्य दानं सम्भवतीत्यतः प्रकृतपरिमाणशून्यत्वमर्थः। तेन प्रकृतपरिमाणप्रतिषेध एवायमिति प्राप्ते—

ज्ञातपरिमाणेऽपि बाहुल्यमात्रेण लोके अपरिमितशब्दप्रयोगात् बाहुल्ये शक्तिः। ततश्चाश्वकर्णादिवद्रूढ्या योगबाधान्नायं पूर्वपरिमाणप्रतिषेधः। अपरिमितशब्दस्य नञ्समासत्वेन तदन्तर्गतस्य नञः क्रियान्वयव्युत्पत्त्यभावेन निषेधायोगाच्च। प्रकृतपरिमाणानामनेकत्वबलेनैव विकल्पप्राप्तेर्निषेधवैयर्थ्याच्च। प्रकृतपरिमाणातिरिक्तानियतपरिमाणकदानान्तरविध्यङ्गीकारे च लक्षणापत्तेः वरं बहुत्वावच्छिन्नद्रव्यकदानान्तर-

---

विश्वजितो धर्मप्राप्तेरेकाहकाण्डपठिते यादृशो निर्णयस्तथैवान्येष्वपि सुलभ इति सर्वान् विश्वजितो विहाय प्रकृतिभूतेत्युक्तम्। स च ज्योतिष्टोमविकारोऽपि अन्येषां प्रकृतिभूत इति नानुपपत्तिः, शेषं स्पष्टार्थम्।

---

अपरिमिते शिष्टस्य

किं प्रकृतपरिमाणानामपरिमितशब्देन निषेधो विहितप्रतिषिद्धत्वाद्विकल्पप्राप्त्यर्थं, उत अनुक्तपरिमाणस्यापि दानविधानार्थं वा, उभयथाप्ययुक्तमित्याह—**प्रकृतपरिमाणानामिति**। उक्तप्रकृतपरिमाणानां परस्परविरोधादेव परस्परं विकल्पः सिद्ध एव, अथापि सर्वथा सर्वेषामेव परिमाणानां निषेधः तदा परिमाणशून्यत्वादाधाने दानस्यैवासम्भवः। तदर्थं चानियतपरिमाणविशिष्टदानविधानमवश्यं वाच्यं तत्राह—**प्रकृतपरिमाणातिरिक्तेति**। अत्र **अनियमो विशेषा-**

विधिरेवायम्। बहुत्वस्य चापेक्षिकत्वेन पूर्वप्रकृतसहस्रावधिकत्वनिश्चयात्तदपेक्षयाऽधिकमेवापरिमितम् ॥ १० ॥

---

(११)—परकृतिपुराकल्पं च मनुष्यधर्मस्स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥ तद्युक्ते च प्रतिषेधात् ॥ २७ ॥ निर्देशाद्वा तद्धर्मस्स्यात्पञ्चावत्तवत् ॥ २८ ॥ विधौ तु वेदसंयोगादुपदेशस्स्यात् ॥ २९ ॥ अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादस्स्यात् ॥ ३० ॥

दर्शपूर्णमासयोः "इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत" इति श्रुतम्। इदं चैककर्तृकोपाख्यानपरत्वात्परकृतिः। अयं चारण्याशनविधेश्शेषः। बहुकर्तृकोपाख्यानपरं च वाक्यं पुराकल्पः सत्रे "उल्मुकैस्सह पूर्वे समाजग्मुः तानसुरा रक्षांसि निजघ्नुः" इति। अयं च "गृहपतेरेवाग्निषु निर्मन्थ्यं निर्वपेरन्" इति निर्मन्थ्याग्निसंसर्गस्तुत्यर्थः उल्मुकसंसर्गनिन्दकस्सन् तद्विधेश्शेषः। न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणे निर्णीतमेव। परकृत्युदाहरणे तु यदा विधिस्तदा कृत्वाचिन्तया विचार्यते। वृष्णिगोत्रोत्पन्नाधिकारिकदर्शपूर्णमासोद्देशेन तत्कर्तृसंस्कारार्थतया वा माषपाकविधिरिति तद्वत एव माषपाकाधिकारो वैश्यनिमित्तकसाद्यद्रश्यवत्। न ह्यत्र प्राच्यत्ववत् वृष्णिगोत्रत्वं दुर्वचं येन तत्कल्प्यविधेः सामान्यविषयत्वं स्यादिति प्राप्ते—

स्तुत्युपायत्वेनोपात्तस्य वृष्णिगोत्रत्वस्य विधेयमाषपाकविशेषणत्वकल्पने प्रमाणाभावान्माषपाकमात्रविधानेन सर्वाधिकारः ॥

---

दिति पृथक् सूत्रेणाधिकरणान्तररचनया सहस्रादधिकं बहु देयमिति प्राचीनैः साधितं, तदर्थमेकहेलयैव लाघवेन दर्शयति—बहुत्वस्य चेति। परकृतीत्यधिकरणं स्पष्टार्थम्।

---

॥ सहस्रसंवत्सरम् ॥

पञ्चाशत इति पदं यदि सङ्ख्येयपरं तदा तस्मिन् विशेष्ये सङ्ख्येये पञ्चत्वपञ्चत्वसङ्ख्यान्वयासम्भवात् उपसर्जनीभूतपञ्चाशत्सङ्ख्यान्वये चैकदेशान्वयापत्तेः सङ्ख्येयपरपञ्चशब्दार्थान्वयानुरोधेन सङ्ख्यापरम्। तथाच पञ्चाशत्सङ्ख्याः पञ्चसङ्ख्यावच्छिन्ना इत्यर्थमभिप्रेत्याह—

(१२)—सहस्रसंवत्सरं तदायुषामसम्भवात् मनुष्येषु ॥ ३१ ॥ अपि वा तदधिकारान्मनुष्यधर्मस्स्यात् ॥ ३२ ॥ नासामर्थ्यात् ॥ ३३ ॥ सम्बन्धादर्शनात् ॥ ३४ ॥ स कुलकल्पस्स्यादिति कार्ष्णाजिनि- रेकस्मिन्नसम्भवात् ॥ ३५ ॥ अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगस्स्यात् ॥ ३६ ॥ विप्रतिषेधात्तु गुण्यन्यतरस्यादिति लाबुकायनः ॥ ३७ ॥ संवत्सरो विचालित्वात् ॥ ३८ ॥ सा प्रकृतिरस्यादधिकारात् ॥ ३९ ॥ अहानि वाऽभिसङ्ख्यत्वात् ॥ ४० ॥

"पञ्च पञ्चाशतस्त्रिवृतस्संवत्सराः । पञ्चपञ्चाशतः पञ्चदशाः । पञ्चपञ्चाशतस्सप्तदशाः । पञ्चपञ्चाशत एकविंशाः । विश्वसृजामयनं सहस्रसंवत्सरमिति" श्रुतम् । तत्र पञ्चाशच्छब्दः सङ्ख्यापर एव । त्रिवृत्संवत्सरशब्दौ तु लक्षणया त्रिवृत्स्तोमकसंवत्सर- साध्यक्रतुवृत्तिपरौ । पञ्चाशच्छब्दविशेषणं पञ्चशब्दोऽपि ; तेन तादृशक्रतुवर्तिनी पञ्चत्व- संख्यावच्छिन्ना पञ्चाशत्सङ्ख्येति पार्ष्ठिकान्वयवेलायां फलितोऽर्थः । तदिदं त्रिवृदादिस्तोम-

---

तद्वेति । सङ्ख्यावाचकपञ्चाशत्पदसामानाधिकरण्योपपत्त्यर्थमाह—लक्षणयेति । यथाचानेन पदद्वयेन त्रिवृत्स्तोमको यः संवत्सरः तत्साध्यक्रतुवृत्तिरूप एकार्थो लक्ष्यते इत्यर्थः । यद्यपि द्विपदबहुव्रीह्यङ्गीकारेणान्यपदार्थप्राधान्यविवक्षया सम्भवति सामानाधिकरण्यं तथाप्युपक्रमेऽन्य- पदार्थे लक्षणापेक्षयोपसंहारगतोत्तरपदद्वये एव । तदापि क्रतुपर्यन्तमत्यावश्यिकी सा युक्तेति प्राथमिकपञ्चपञ्चाशत इति पदे लाघवात् कर्मधारयोऽथवा व्यस्तपदतैव युक्तेत्यभिप्रायः । पार्ष्ठिकान्वयेति । प्रथमतः कर्तव्या इति पदाध्याहारेणानेकविशेषणविशिष्टभावनाविशेष्यको बोधो भवति । पश्चान्निरुक्तबोध इत्यभिप्रायेण पार्ष्ठिक इत्युक्तम् । यद्यपि पञ्चपञ्चाशत इति पदे पञ्चाधिका पञ्चाशत्सङ्ख्यापि प्रतीयते तथाप्युपसंहारे सहस्रसंवत्सरपदाम्नानात् तदुपादाने संवत्सरगतसहस्रसङ्ख्यानुपपत्तेः तदनुरोधेन पञ्चाशत इति बहुत्वाम्नानाच्च पञ्चसङ्ख्यागुणितपञ्चा- शत्सङ्ख्यैवार्थो हि ग्राह्यः । तेनैकैकस्मिन् पर्याये सार्धशतद्वयसङ्ख्यालाभात् पर्यायचतुष्टयेन

कत्वं यद्यपि साक्षात्सम्बन्धेनाहन्येव। तथापि तादृशाहर्घटितत्वात्संवत्सरेऽपि तत्सम्भवतीति न कोपि दोषः॥

तत्र संवत्सरशब्दो मुख्यया वृत्त्या संवत्सरमेवाभिधत्ते तेन मनुष्याणां सहस्रायुष्ट्वाभावात्तिर्यगधिकरणे निराकृतोपि श्रुतिबलाद्गन्धर्वादीनामेवाधिकारः। तेषां त्वन्नाद्युपसंहारासामर्थ्यान्मनुष्याणामेव वा रसायनलब्धसहस्रायुषां सः। रसायनादेरेतावदायुस्सम्पादनसामर्थ्ये प्रमाणाभावात् 'शतायुर्वै पुरुषः' इति श्रुतेश्चैकेनारब्धस्य पुत्रादिपारम्पर्येण समापनमिति कुलकल्पो वा। 'शास्त्रफलं प्रयोक्तरि' इति न्यायस्य विना वचनमपवादे प्रमाणाभावात् समस्तकर्मानुष्ठानाभावे विकलानुष्ठायिनां फलानुत्पत्तिप्रसङ्गात्तत्रारम्भादेव सहस्रायुष्यं जायत इति वा कल्प्यम्। एतादृशकल्पनेऽपि प्रमाणाभावात् पञ्चपञ्चाशत इति यजमानाभिप्राया सङ्ख्या। तेनैकोपि त्रिवृत्स्तोमकयागयुक्तस्संवत्सरः पञ्चपञ्चाशत्सङ्ख्याकैर्यजमानैस्सम्बध्यमानस्तावत्सङ्ख्य इत्युपचर्यते। अतश्चतुस्संवत्सरमिदं सत्रं सार्धशतद्वयैर्यजमानैः कार्यमिति वा पक्षान्तरम्। अस्यापि बुद्धावत्यन्तमनारोहात् 'सप्तदशावराश्चतुर्विंशतिपरमाः' इत्यातिदेशिकपरिमाणबाधापत्तेश्चानुपपत्तिः॥

तस्मात् सङ्ख्याशब्दं संवत्सरशब्दं वा गौणमाश्रित्यैव मनुष्याधिकारस्समर्थनीयः। तत्रापि सङ्ख्याशब्दयोर्मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः। संवत्सरपदं तु जघन्यत्वात्सौरचान्द्रादिभेदेनानेकार्थत्वाच्चार्थनिश्चयासमर्थं भवतीति गौणम्। तत्र 'यो मासस्ससंवत्सरः' इति दर्शनान्मासेष्वेव संवत्सरशब्द इत्येकः पक्षः। तत्रापि त्वशक्तिस्तदवस्थैव। न ह्याधानादूर्ध्वं सहस्रमासपर्यन्तं जीवनं सम्भवति। अतः 'संवत्सरप्रतिमा वै द्वादश रात्रयः' इति प्रयोगात् द्वादशरात्रिष्वित्यपरस्सिद्धान्तः।

---

सहस्रसङ्ख्या उपपद्यत इति न बाधकम्। अहन्येवेति। सुत्यायामेवेत्यर्थः। संवत्सरशब्द इति। स्वसाध्यक्रतुवृत्तित्वरूपार्थलक्षणोऽपि संवत्सरशब्द इत्यर्थः। इत्युपचर्यत इति। एकस्य संवत्सरस्य पञ्चपञ्चाशत्सङ्ख्ययजमानसाध्यत्वेन गौणमेव तत्सङ्ख्यत्वं तद्द्वारा सहस्रत्वमपीति द्रष्टव्यम्। तस्मात् सङ्ख्याशब्दमिति। पञ्चपञ्चाशच्छब्दौ सङ्ख्यावाचिनौ यथा मनुष्याधिकारि सत्रं संवत्सरसाध्यं भवति तादृशसम्भवत्सङ्ख्यापरौ गौणावाश्रयणीयावित्यर्थः। सहस्रमासपर्यन्तमिति। जातपुत्रः कृष्णकेश इत्यादिना तारुण्योत्तरमाधाने सोमपूर्वाधाने वा कृते सावनमानेन यज्ञोपासनविधानात् मासचतुष्टयाधिकैः त्र्यशीतिवर्षैः सहस्रमासः तावत्पर्यन्तं जीवनासम्भव इत्यर्थः।

प्रतिमाशब्दविशेषणं त्वत्र संवत्सरशब्दो, न तस्य द्वादशरात्रिषु प्रयोगः, तेन त्रिवृदादिशब्दसामञ्जस्याद्दिवसेषु संवत्सरशब्दः। त्रिवृदादिपदैर्हि स्तोममात्रवाचकैरपि तद्विशिष्टं अहरेव लक्षणया प्रकाश्यते। तत्सङ्गस्तु लक्षितलक्षणया। लक्ष्यतावच्छेदकगौरवाङ्गीकारेण वा। अतस्तद्भिया संवत्सरपदं दिवसपरमेवेति सिद्धान्तः। इदं च कृतादियुगान्तरेष्वपि मनुष्याणां शतमेव परमायुरिति कृत्वाचिन्तया। यदा तु स्मृतिपुराणेतिहासादौ श्रुतस्य प्रकृष्टतरपुण्ययोगादिफलस्यानेकसहस्रवत्सरपरिमितस्यायुषोपि प्रकृतश्रुत्युपष्टम्भस्य प्रामाणिकत्वं एतज्ज्ञापकवलेनैव च 'शतायुर्वै पुरुषः' इति श्रुतौ शतान्यायूंषि यस्येति विग्रहः कलियुगाभिप्रायत्वं वाऽऽश्रयणीयं, तदा त्रिवृदादिशब्देनाहस्सङ्गमेव त्रिवृत्स्तोमकाहर्घटितत्वसम्बन्धेन लक्षयित्वा संवत्सरशब्दो यथाश्रुत एव। सत्रं च गोबधादिवद्युगान्तरस्थतावदायुष्यपरमिति ध्येयम्। न हि मीमांसकमते युगादिव्यवस्थाऽळीका। तत्तद्युगधर्मव्यवस्थापकस्मार्तविधीनां निर्विषयत्वापत्तेः॥ १२॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
षष्ठस्याध्यायस्य सप्तमः पादः॥

---

सिद्धान्तमाह—प्रतिमाशब्देति। द्वादशाहे चादित्यो वाव सर्वर्तवो यदैवोदेति अथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिधनोऽ वर्षा यदाऽपराह्णोऽथ शरत् यदाऽस्तमेति अथ हेमन्तशिशिराविति श्रुत्याऽह्नि संवत्सरशब्दप्रवृत्तिनिमित्तस्य सर्वर्त्वात्मकत्वस्याभिधानात् गौणतया तस्य तत्परत्वं वेद एव दृष्टमित्यभिप्रेत्याह—अतस्तद्भियेति। स्पष्टमन्यत्।

श्रीखण्डदेवान्तेवासिकविमण्डन-
श्रीशम्भुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां
षष्ठस्य सप्तमः
पादः समाप्तः

---

# अथ षष्ठाध्यायस्याष्टमः पादः

(१)—इष्टिपूर्वत्वादक्रतुशेषो होमस्संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥ उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥ स सर्वेषामविशेषात् ॥ ४ ॥ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥ जपो वाऽनग्निसंयोगात् ॥ ६ ॥ इष्टित्वेन तु संस्तुते होमस्स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ उभयोः पितृयज्ञवत् ॥ ८ ॥ निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥ पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

सन्ति चतुर्होतृसंज्ञका मन्त्राः "पृथिवी होता । द्यौरध्वर्युः" इत्यादयः तैर्जपा होमाश्च विहिताः। तत्र ये तावत्क्रत्वर्थाः पुरुषार्था अपि वा वचनात् क्रतुप्रयोगमध्यवर्तिनः तेषु विवाद एव नास्ति। येऽपि पृथग्भूताः काम्या जपास्तेष्वप्यविवाद एव आहिताग्न्यनाहिताग्निसाधारणत्वात्। ये तु तादृशा होमाः तेषां 'यदाहवनीये जुह्वोति' इत्यनेनाहवनीयाधिकरणकत्वस्य विहितत्वादितरहोमवदेवाहिताग्निमात्राधिकारकत्वम्। यत्तु 'एषा वै अनाहिताग्नेरिष्टिः' इति चतुर्होतृसन्निधौ वचनं तद्येयमनाहिताग्नेः क्रिया जपादिरूपा सा इष्टितुल्येत्येवमिष्टिसादृश्यप्रतिपादनवादेन जपाभिप्रायकतया नानुपपन्नम्। यदि तु विध्यन्तरशेषत्वाभावेनार्थवादत्वानुपपत्तेर्जपे इष्टिसादृश्यस्य कथमप्यनुपपत्तेश्च येयं त्यागघटितत्वसादृश्याच्चतुर्होतृहोमरूपेष्टिः साऽनाहिताग्नेरित्यर्थाङ्गीकारेण विधिरि-

---

इष्टिपूर्वत्वादक्रतुशेषो होमः

ये तावत्क्रत्वर्था इति। ग्रहान् गृहीत्वा सप्तहोतारं जुहोतीत्येवमादयः क्रत्वर्थाः। ये वा पुरुषार्था एव वचनात् क्रत्वन्तःपातिनः यथा यः स्वर्गकामः स्यात् स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रीये जुहुयादिति विहिताः तेष्वाहिताग्न्यधिकारादेव न विवाद इत्यर्थः। स्पष्टार्थमन्यत्।

त्याश्रीयेत तथाऽप्यस्याहिताग्निपरिसङ्ख्यार्थत्वे प्रमाणाभावात् पिण्डपितृयज्ञवदुभयाधिकारिकत्वमिति प्राप्ते—

प्रत्यक्षवचनेनानाहिताग्नेः कर्तृत्वविधौ तत एव स्मार्ताग्न्यधिकरणकत्वप्राप्तेराहवनीयाधिकरणकत्वस्यासम्भवादेव वाधात्परिसङ्ख्यात्वानापत्तेरनाहिताग्नेरेवाधिकारः। पिण्डपितृयज्ञे तु एवमनाहिताग्नेरिति वचनेऽनाहिताग्नेरप्यभ्यनुज्ञानादुभयाधिकार इति विशेषः॥ १॥

---

(२)—उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥ आधानं च भार्यासंयुक्तम् ॥ १३ ॥ अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥ श्राद्धवदिति चेत् ॥ १५ ॥ न श्रुतिविप्रतिषेधात् ॥ १६ ॥ सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥ सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ १८ ॥ पितृयज्ञे तु दर्शनात्प्रागाधानात्प्रतीयेत ॥ १९ ॥

उपनयनाङ्गभूता होमा आचार्यकर्तृका माणवककर्तृकाश्चोभयेऽप्युपनयनद्वारा माणवकसंस्कारार्था इत्यविवादम्। तत्र ये तावदाचार्यकर्तृकास्तेषां सत्यप्याचार्यस्याहिताग्नित्वे आधानगतात्मनेपदविरोधान्नाचार्याग्निषु कार्याः। अपि तु लौकिक एवाग्नौ। ये तु

---

उपनयन्नादधीत

आधानगतात्मनेपदेति। एतेनैतत्सूचितं भवति येषां मते वै उपनयनमाचार्याधिकारं तेषां ये माणकहोमास्तेपि स्वयमफलत्वात् फलवदुपनयनसंयोगाच्च तदङ्गभूता आचार्यकार्या इत्याचार्यस्याहिताग्नौ कर्तव्यत्वेनैव प्राप्नुयुः। सुतरां चाचार्यकर्तृका इत्येतदधिकरणं निर्विषयं स्यात्। अस्मिन् मते तूभयकर्तृकहोमस्यापि माणवकसंस्कारार्थत्वादाचार्यनिष्ठफलाभावे आधानगतात्मनेपदविरोधात् सत्यप्याचार्यस्याहिताग्नित्वे न तदग्निषु कार्य इत्यधिकरणमुपपद्यत

माणवककर्तृकास्ते तु सुतराम् । क्रतुविधीनामिवोपनयनाङ्गभूतहोमानामप्याधानाप्रयोजकत्वात् । प्रयोजकत्वेऽपि वाऽऽधानस्येतरकर्मवत् ज्ञानाक्षेपकत्वाभावेनोपनयनात्पूर्वं कर्तुमशक्यत्वाच्च । आक्षेपकत्वेऽपि चोभयाधिकारकस्याधानस्य भार्याभावेनानुपपत्तेश्च । भार्यायाश्च 'स्नात्वा भार्यामधिगच्छेत्' इति समावर्तनोत्तरकालं विवाहविधानेन पूर्वमसम्भवात् । न च प्रयोजनानुरोधेन कालबाधः । एवद्वाक्यस्य निर्विषयत्वापत्तेः । न चापत्यार्थं दारान्तरकरणे कालविधिः 'धर्मे चार्थे च' इत्यादिपर्यालोचनया धर्मार्थमपत्यार्थं च दारान्तरानुपपत्तेः दारक्रियायामपि स्वतन्त्रकालाम्नानेन क्रतुविधीनामाधानाध्ययनवदेव दारक्रियाप्रयोजकत्वाभावाच्च । अत एव न विरक्तस्य कर्मार्थं दारक्रिया, किन्त्वाश्रमान्तरमेव । किञ्चोपनयनात्पूर्वमाधानकरणे जातपुत्रत्वाद्याधानकाललोपोऽष्टवर्षाद्युपनयनकाललोपो वा प्रसज्येत । अतस्तेऽपि लौकिकाग्नावेव ॥ २ ॥

---

(३)—स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २० ॥
अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥

निषादेष्टेः दर्शपूर्णमासविकृतित्वादतिदेशेनाहवनीयादिप्राप्तौ तेषामाधानाधीनत्वादसत्यपि तस्य स्वतन्त्राधानविधौ निषादेष्टिरेवास्याधानं प्रयोजयेदिति प्राप्ते—

सत्यपि तस्याग्निजनकाकाङ्क्षत्वे जनकीभूतस्याधानस्य ब्राह्मणादिकर्तृकत्वेनैवोत्पन्नत्वात् निषादकर्तृकेनाग्निनिष्पत्तौ प्रमाणाभावात् प्रकृतौ परप्रयुक्ताग्न्युपजीवनेनेहाहवनीयादिप्राप्तेरेवाभावाच्च न सेष्टु सा । विद्यायास्तु तद्व्यतिरेकेण निषादेष्टेरेवासम्भवात्तदुपायस्य

---

इति । पर्यालोचनयेति । नातिचरितव्या त्वयेयं इत्येकवचनप्रयोगादेकस्या अपि विवाहिताया धर्माद्यर्थत्वेनैक्यप्रतीतेर्नापत्यार्थदारान्तरकरणप्रसक्तिरित्यर्थः । उपनयनकाललोपो वेति । वयोवस्थाविशेषरूपाधानकालानुग्रहेणोपनयनाचरणे उपनयनकालस्य उपनयनानुग्रहेणाधानाचरणे आधानकालस्य वा बाध इत्यन्यतरकालबाधः प्रसज्येतेत्यर्थः ।

---

स्थपतीष्टिः

आहवनीयादिप्राप्तेरेवेति । आहवनीये जुहोतीति अनारभ्याधीतविधिना विहितः, सर्वहोमेष्वपि आहवनीयः प्रकृतौ वा द्विरुक्तत्वादिति न्यायेन पर्णतादिवद्यपि प्रकृत्यर्थं

लौकिकत्वेनाक्षेपोपपत्तिरिति वैषम्यम्। तेनाहवनीयाद्यनाक्षेपकत्वेऽपि 'यत्र क्वच न होष्यन् स्यात् पञ्चभूसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत्' इति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात्तमेव तद्देशे स्थापयित्वा तेष्विष्टिः कार्या। यत्तु 'तस्मिन् गृह्याणि' इति गौतमवचनं लौकिकाग्निप्रापकत्वेन तन्त्ररत्ने उदाहृतं तत् गौतमस्मृतौ तच्छब्देन स्मार्ताग्नेरेव परामर्शात् निषादेष्टेश्च गृह्यत्वाभावादुपेक्षितम्। न हि गृहशब्दवाच्यदम्पत्योर्हितमिति व्युत्पत्त्याऽस्यापि गृह्यपदवाच्यत्वं, अभियुक्तप्रसिद्ध्या गृह्यपदस्य गृह्यसूत्रोक्तकर्मस्वेव रूढत्वेन योगस्याप्रयोजकत्वात्। इतरथा दर्शादेरपि गृह्यत्वापत्तेः ॥ ३ ॥

---

## (४)—अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥

'यो ब्रह्मचार्यवकिरेत् स नैर्ऋतं गर्दभं पशुमालभेत' इति श्रुतो यागोपि लौकिक एवाग्नौ। सत्यपि त्रैवर्णिकत्वे विद्वत्त्वे वा भार्याभावेनाधानासम्भात्। न चावकीर्णिनोपि

---

एवेति दर्शपूर्णमासयोस्तत्साधारण्येनातिदेशात् स्थपतीष्टावपि प्राप्यते तथापि प्रकृतावेव आधानविधिप्रयुक्ताहवनीयादीनां प्राप्तौ स्वतस्तत्प्रयोजकत्वाभावाद्येषु कर्मस्वाधानविधिसिद्धाग्नयो न लभ्यन्ते तत्र तदतिदेशेन तत्प्राप्तावप्यन्यत्र तदभावे न तत्प्राप्तिः स्थपतीष्टिप्रयुक्ताधानेन च परमग्नीनां उत्पत्तावदृष्टविशेषावच्छिन्नोत्पत्तौ मानाभावान्नाहनीयादिस्वरूपप्राप्तिः सम्भवति विद्यायास्तदुपायस्य चादृष्टरूपत्वाभावात् यथा कथञ्चिदाक्षेपेण प्राप्ताया अपि तस्याः तद्रूपत्वं न व्याहतं भवतीति वैषम्यमिति भावः। अतिदेशेन वेदेरग्न्यायतनानां तत्त्रित्वस्य प्राप्तत्वात् तदनुग्रह-
तस्मिन्देशे इति। आहवनीयादिदेशे इत्यर्थः।

---

॥ अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥

ब्रह्मचार्यवकिरेदिति। यो योनौ रेतोऽवसृजेदित्यर्थः। सत्यपि त्रैवर्णिकत्वे इति। अनेन च पूर्वाधिकरणेन गतार्थत्वशङ्का निरस्ता। स्थपतेरत्रैवर्णिकत्वादविद्वत्वादाधानाभावेनाहवनीयासम्भवेपि अस्य तद्विपरीततया तत्सम्भवात् भवत्वाहतनीयादिहोम इति विशेषाशङ्कानिराकरणार्थं अधिकरणान्तरारम्भादित्यर्थः। कृतब्रह्मचर्येति। ब्रह्मचर्यपदेन तदाश्रमोक्तावप्यवकीर्णित्वे तस्याप्यविप्लुतत्वासम्भवान्न विप्लुतपदमखण्डितार्थपरं, अपि तु कृतार्थमेव ग्राह्यमित्यभिप्रेत्य कृतेत्युक्तम्। अविप्लुतब्रह्मचर्य इति स्मृतौ ब्रह्मचर्यपदेनान्यत्वकचिद्वेदाध्य-

**स्नात्वा विवाहे बाधकाभावः 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति वचनेन विप्लुतब्रह्मचर्यस्यावकीर्णिनोऽकृतप्रायश्चित्तस्य विवाहनिषेधात्। न ह्यत्राविप्लुतब्रह्मचर्यपदेन कृतब्रह्मचर्याश्रमोक्तेराश्रमयोः पौर्वापर्यमात्रस्यानेन विधानादवकीर्णिनोऽपि विवाहे बाधकाभावः। 'स्नात्वा भार्यामुपेयात्' इत्यनेनैव स्नानपूर्वभाविनो ब्रह्मचर्यस्य स्नानोत्तरभाविना विवाहेनार्थात् पौर्वापर्यसिद्धेरस्य वचनस्य साङ्गब्रह्मचर्यवत एव विवाहाधिकार इत्येवमर्थतयाऽवकीर्णिनो विवाहानुपपत्तेः। अतस्सोपि लौकिकाग्नावेव।** आपस्तम्बवचनाद**प्सु वा।** अयं **चावकीर्णियागो न दैक्षप्रकृतिकः। 'गर्दभं पशुम्'**

---

यनोक्तावपीह रूढेर्योगाद्बलीयस्त्वेन मैथुननिवृत्तिनियम एवोच्यते इति **प्रकाशकारै**रुक्तमयुक्तमिति सूचयितुं **साङ्गब्रह्मचर्यवत** एवेत्युक्तम्। तथाच ब्रह्मचारिणो यावद्विहितं धर्मजातं तस्यैवात्र प्रकृतत्वात् ग्रहणे सम्भवति सति सङ्कोचायोगात् तदेवाविप्लुतमखण्डितं यस्य तादृशाखण्डित-साङ्गब्रह्मचर्यधर्मवतो विवाहेऽधिकार इत्यर्थः। **आपस्तम्बवचनादिति।** यो ब्रह्मचारी स्त्रियमुपेयात् स गर्दभं पशुमालभेत भूमावेककपालं पुरोडाशं श्रपयेत् अप्स्ववदानैश्चरेयुः रक्षोदेवत्यः निर्ऋतदेवत्यो वा निर्ऋतिपाकयज्ञेन यजेतेत्यापस्तम्बवचनम्। तत्राहिताग्नेरथवा ब्रह्मचारिणो वेदं कर्मेति मतभेदः। तत्रेयं व्यवस्था—अप्स्ववदानैर्गर्दभस्य प्रचरेयुरित्यत्र हृदयादीनामिव वपाया अपि अवदानपदेन ग्रहणादङ्गानामप्येकदेशेऽनुष्ठानलाभात् साङ्गवपायाग-हृदयादियागग्रहणम्। तदा प्रणयनकालेऽग्निना सह पात्रान्तरेणापो नीत्वोत्तरवेद्यामग्निं चापश्च पृथक् स्थापयित्वा अप्सु हृदयादिमात्रयागः, आघाराद्यङ्गानि वपायागश्चाहवनीये एव कार्याणि। अवकीर्णियागस्य रक्षोदेवता, अथवा निर्ऋतिर्वा देवता भवति। तत्र रक्षोदेवत्यस्यैवाप्सु हृदयादिवपायागः यदा निर्ऋतिदेवत्यस्तदा तस्य लौकिकाग्नावेव सः। एवं गृहस्थस्य व्रतादिषु अङ्गभूतब्रह्मचर्ये कर्तव्ये मध्ये प्रयत्नपूर्वं रेतस उत्सर्गे पत्न्या दोषाभावेन सहाधिकारनियमाभावात् आत्मदोषपरिहारार्थं लौकिक एवाग्नौ कर्तव्यः। यदा तु स्वभार्यायामेव व्रतादिषु तदुत्सर्गः तदा तस्या अपि दोषसद्भावेन सहाधिकारादौपासने एव। अथवा प्रसिद्धब्रह्मचारिण एवेदं कर्म, रूढेर्वा बलीयस्त्वादित्यादिविस्तरेण **रामाण्डारुद्रदत्तादिग्रन्थेषु** द्रष्टव्यम्। **अयञ्च** याग: आपस्तम्बादिसूत्रेषु दैक्षधर्मानुष्ठानेनैव दर्शितः। तत्र **प्रकाशकारैः** सिद्धान्तत्वेनाङ्गी-कृतं मतान्तरमाह—**अयञ्चेति। वैयर्थ्यादिति।** गर्दभस्य पशुत्वादेव व्यर्थं सद्विशेषणं 'अथ पशुकल्प उत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा धाययित्वा पशुमाप्लाव्ये'त्याश्वलायनोक्तपशुकल्पप्रापकमित्यर्थः।

इति पशुशब्दोपादानवैयर्थ्यात्। किन्तु 'अथ पशुकल्पः' इत्याश्वलायनोक्तायास्स्मार्तपश्वितिकर्तव्यताया एव तदङ्गत्वमिति केचित्॥ ४॥

---

(५)—उदगयनपूर्वपक्षाहः पुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात्॥ २५॥ अहनि च कर्मसाकल्यम्॥ २४॥ इतरेषु तु पित्र्याणि॥ २५॥

श्रुतौ स्मृतौ वा यस्मिन् कर्मणि दैवे पित्र्ये चोदगयनशुक्लकृष्णपक्षादिः यः कालः प्रत्यक्षवचनेनान्यार्थदर्शनकल्प्यविधिना वा विहितस्सोऽविरोधे समुच्चयेन विरोधे विकल्पेन ग्राह्य इत्येवं सुहृद्भूत्वा सूत्रकारश्शिष्येभ्य उपदिष्टवान्॥ ५॥

---

(६)—याच्ञाक्रयणमविद्यमाने लोकवत्॥ २६॥ नियतं वाऽर्थवत्त्वात् स्यात्॥ २७॥

'दीक्षितो भृतिं वन्वीत' इति याच्ञा यस्यापि दक्षिणादानार्थं द्रव्यमस्ति तेनापि कार्या न त्वविद्यमानद्रव्येणैव। नित्यवच्छ्रवणेन सर्वदैव क्रतुनाऽपूर्वेण च प्रयुक्तत्वात्। न चास्याः द्रव्यप्राप्तिद्वारा द्रव्यसंस्कारकत्वात् द्रव्यसत्त्वे च तत्प्रापणोपायवैयर्थ्यादसत्यपि निमित्तत्वश्रवणे प्रयोजनवशादेवाकाङ्क्षितविधिन्यायेन नियमविधित्वोपपत्तिरिति वाच्यं, अनाकाङ्क्षितविधानस्य फलकल्पकत्वेन दोषत्वात् प्रकृते चाविद्यमानद्रव्यस्थले द्रव्यप्राप्तिरूपफलवत् विद्यमानद्रव्यस्थलेऽपि तत्फलत्वाविशेषात् कल्पनाभावेन दोषत्वाभावात्।

---

इतः प्रभृति अधिकरणचतुष्टयं स्पष्टार्थम्। तत्र-तथाभक्षेत्यधिकरणे गौरवाच्चेत्यस्यायमर्थः एतन्मन्त्रलिङ्गान्यथानुपपत्त्या शब्दस्य उर आहतेश्च दोषजनकत्वं परिकल्प्य तत्परिहारार्थत्वमपि होमस्य कल्पनीयमिति गौरवमिति। ननु "मामेऽवाङ्नाभिमतिगा" इत्यादिमन्त्रलिङ्गबलात् सम्यग्जरणविधिकल्पनवत् "तस्मादेनसोंहस" इत्यादिमन्त्रलिङ्गबलात् तथाविधिकल्पने बाधकाभावात् फलमुखत्वेन च गौरवस्वीकारेप्यदोष इत्यत आह— किञ्चेति। प्रतिबन्धकवशादिति। मुखमुद्रणादिरूपप्रतिबन्धकवशादित्यर्थः। यत्नपरामर्शकस्य तस्य चेतिशब्दस्य उपपत्त्यावश्यकत्वेनेत्यर्थः। तेनान्वयः।

याच्ञाप्राप्तद्रव्यस्यैव क्रत्वपूर्वेण ग्रहणात् नित्यत्वोपपत्तेः। एवं विद्यमानेऽपि सोमे क्रयस्यावश्यकत्वम् ॥ ६ ॥

---

## (७)—तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २८ ॥

एवं पयोव्रताद्यपि विद्यमाने अविद्यमानेऽपि भक्षान्तरे स्यात्। 'अग्नीदग्नीन् विहर' इति च प्रैषोऽन्यतोऽनवबुद्धे अवबुद्धेऽपि स्यात्। बुद्धेऽप्यर्थे एतद्बोधजन्यनियमादृष्टसिद्ध्यर्थं प्रैषावश्यकत्वात्। अत एव प्रैषजन्यबोधानुष्ठितेनैव फलसिद्धिरिति कल्पनमपि प्रामाणिकम्। प्रैषग्रहणं च मन्त्रमात्रोपलक्षणम्। तथा दर्भमयं वासो वाजपेये वासोऽन्तरसत्त्वेऽपि परिधेयमेव। तथा "यत्पशुर्मायुमकृतोरो वा पद्भिराहते अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" इति मन्त्रेण विहितस्य संज्ञप्तहोमस्यापि पशुयागे नित्यं करणम्। न च संज्ञप्तहोमस्य मान्त्रवर्णिकशब्दकरणादिजन्यदोषनिर्घातार्थत्वप्रतीतेः तदनुरोधेन मायुपदवाच्यशब्दकरणादावेव होम इति वाच्यं, शब्दादिकरणस्य दोषजनकत्वे प्रमाणाभावेन मान्त्रवर्णिकफलकल्पनानुपपत्तेः। एतद्बलेनैव दोषकल्पने गौरवाच्च। किञ्च नात्र शब्दादिकरणादेव दोषः। अपि तु तदनुकूलप्रयत्नरूपादाख्यतार्थात् तस्य च प्रतिबन्धकवशाच्छब्दाद्यनुत्पत्तावप्युत्पत्त्यावश्यकत्वेन संज्ञप्तहोमस्य नित्यत्वम्। तथा 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रोऽपि द्वेष्यनिश्चयसत्त्वे असत्त्वे वा सर्वदैव प्रयोक्तव्यः। न च मन्त्रलिङ्गात् प्रकरणसङ्कोचः। परकर्तृकद्वेषस्यायोग्यत्वेन तदभावनिश्चयायोगात् ॥ ७ ॥

---

## (८)—अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥

पयोव्रतं यदि रोगोत्पत्त्यादिना मरणादिहेतुत्वसम्भाव्यते तदा क्रतुविरोधप्रसङ्गान्न कार्यमिति जातेष्टिन्यायेन गतार्थमपीदं शिष्यहितार्थमुक्तम् ॥ ८ ॥

---

(९)—पशुचोदनायामनियमोऽविशेषात् ॥ ३० ॥ छागो वा मन्त्रवर्णात् ॥ ३१ ॥ आर्षेयवदिति चेत् ॥ ३२ ॥ न तत्र ह्यचोदितत्वात् ॥ ३४ ॥ नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३५ ॥ अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३६ ॥ रूपाल्लिङ्गाच्च ॥ ३७ ॥ छागेन कर्माख्या रूपलिङ्गाभ्याम् ३८ ॥ रूपान्यत्वान्न जातिशब्दस्स्यात् ॥ ३९ ॥ विकारो नोत्पत्तिकत्वात् ॥ ४० ॥ स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४१ ॥ जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४२ ॥

---

'अग्नीषोमीयं पशुमालभेत' इत्यादौ पशुशब्दो न सामान्यवचनः। न हि पशुत्वं जातिः प्रमाणाभावात् कार्यतायाः कारणताया वाऽनवच्छेदकत्वात्। नापि पुच्छादिमत्त्वं तस्यानुगतत्वाभावेन सामान्यत्वाभावात्। अतः पशुशब्दो व्यक्तिवाची। ततश्च सर्वासामश्वादिव्यक्तीनामप्युक्तत्वात् नायं सन्दिग्धः। अतश्च नार्थवादवदत्र 'छागस्य

---

॥ पशुचोदनायाम् ॥

**नायं सन्दिग्ध इति**। अत एव नाक्ताधिकरणेन गतार्थत्वम्। **तन्त्ररत्नेऽपि छागो वा मन्त्रवर्णादिति** सिद्धान्तसूत्रव्याख्याने यथैव विधिस्तुत्योः समानविषयत्वान्निस्सन्दिग्धघृतादिविषयार्थवादवशेन सामान्यवृत्तिरप्यञ्जनादिविधिर्विशेषे स्थाप्यते, तथैव विधिमन्त्रयोरेकविषयत्वान्मन्त्रवशेन चोदनार्थनिर्णय इति ग्रन्थेनाक्ताधिकरणसिद्धार्थस्य दृष्टान्तत्वमुक्तमिति न तन्निर्णेयत्वमस्येति दर्शितम्। **यद्यपि** सन्दिग्धेषु वाक्यशेषादिति सूत्रे यथा प्रसिद्धः सन्देहो गृह्यते तथाऽव्यवस्थितार्थप्रत्ययोऽप्यनवधारणरूपत्वात् सन्दिग्धपदेन गृह्यते। तेन विधौ यदेव किञ्चन नावधृतं तत्सर्वं निर्दिश्यते सन्दिग्धेति पदेन। अत एवोक्तं **यववराहाधिकरणे वार्तिककृता**।

**वपायाः' इति मन्त्रस्य निर्णायकत्वम्। यद्यपि चायं सामान्यवाची भवेत्। तथाऽपि मन्त्रस्य भिन्नवाक्यत्वात् तद्व्यतिरेकेणैव विधेः सर्वविषयतया पर्यवसानात् न तत्सङ्कोचकत्वम्। एवं सत्यपि यदि मन्त्रस्य विधायकता भवेत् तदा 'आर्षेयं वृणीते त्रीन् वृणीते' इतिवद्भवेदपि** विशेषणविशेष्यभावो **न त्वेतदस्ति। अतो मन्त्रस्थछागपदं छिन्नपुंस्त्वाख्यगमनवत्त्वयोगेन वयोविशेषवचनत्वेन वा सर्वपशुपरम्।** छागपक्षे **वाऽयं मन्त्र इति प्राप्ते—**

**छागशब्दस्याजे रूढत्वेन यौगिकत्वानुपपत्तेः** पुंस्त्ववतो **विहितत्वेन यौगिकार्थग्रहणानुपपत्तेश्च न तावद्यौगिकत्वम्। वयोऽवस्थाविशेषवचनत्वेऽपि वा शोणादिशब्दवदजागतस्यैव वयसो वाच्यत्वादश्वादिग्रहणानुपपत्तेः। छागग्रहणेनापि पशुत्वस्याविरोधोपपत्तौ मन्त्रस्य पाक्षिकत्वकल्पनानुपपत्तेः छागस्यैव ग्रहणम्। यद्यपि च पशुशब्दो व्यक्तिवचनस्स्यात्। तथाऽपि युगपत्सर्वव्यक्तिग्रहणाभावेनैकव्यक्तिग्रहणे मन्त्रस्य निरवकाशत्वाच्च छागव्यक्तिमात्रग्रहणेऽपि न किञ्चिद्बाधकम्॥**

---

सन्दिग्धेषु तु सर्वेषु वाक्यशेषेण निर्णयम्।
वक्ष्यत्येवमतो नात्र पृथक्कार्या विचारणा॥ इति।

ततश्च पशुशब्दस्याप्यव्यवस्थितार्थत्वेन सन्दिग्धस्य तेनैव निर्णेयत्वं सम्भवति तथापि तत्रार्थवादेन निर्णयः, इहतु तदभावेपि दूरस्थेन मन्त्रवर्णेन निर्णय इत्येतावतैव भेदः। यथा स्तुतौ सन्दिग्धं विधिनाऽवधार्यते "यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा नान्ववायन्" इति। अत्र किमसुरागमनहेतुत्वेन ऋक्निन्द्यते, उत वशीकर्तुमशक्यानामसुराणां वशीकरणहेतुतया स्तूयत इति सन्दिग्धं तदनन्तरश्रुतेन "य एवं विद्वान् साम्ना स्तुवीत" इति सामविषयेण विधिनाऽवधार्यते। विधित्सितसामप्रशंसार्थं ऋक् निन्द्यते इति प्रतिपादनार्थं अर्थैकत्वादिति। यथा नावमिकमधिकरणं भिन्नं तथैवैतदपि ज्ञेयमिति भावः। **विशेषणविशेष्यभाव इति।** विधिगतपशुशब्दस्य मन्त्रविधिगतछागशब्देनोपसंहाररूपो विशेषणविशेष्यभाव इत्यर्थः। **छागपक्षे वेति।** पशुसामान्यान्तर्गतत्वेन यदा छागो गृह्यते तत्साधनकप्रयोग एवायं मन्त्रो भविष्यतीति न पशुशब्दसङ्कोचक इत्यर्थः। स्त्रीगमनेन यस्य पुंस्त्वं छिन्नं तस्यैतादृशावयवयोगेन ग्रहणं छागशब्देन न सम्भवतीत्याह— **पुंस्त्ववत इति।** ननु विधायकाविधायकगतयोः पशुछागशब्दयोः न विशेषणविशेष्यभावो घटते छागस्य वपाविशेषणत्वेन विधिगतपशुविशेषणत्वासम्भवात् विध्यर्थवादयोस्तु यदेक-

**वस्तुतस्तु सामान्यवाच्येवायं, तदपि च यद्यपि पुच्छवत्त्वादि, तथाऽपि लोमवत्पुच्छत्वावच्छिन्नवत्त्वस्यैवानुगतस्य वक्तुं शक्यत्वात् न विरोधः। वस्तुतस्तु पुच्छाद्यप्रतीतावपि पशुत्वप्रतीतेः पशुत्वं जातिरेवेति सामान्यवचनत्वमव्याहतं तेन युक्त एव मन्त्रेण निर्णयः।** भिन्नवाक्यत्वेऽपि **च पशुछागशब्दयोः विशेषणविशेष्यभावो वाक्यैकवाक्यतया न विरुध्यते। इदं च सर्वं 'अजोऽग्नीषोमीयः' इति शाखान्तरवाक्यं नास्तीति कृत्वाचिन्तया बोध्यम्। तत् सिद्धं छागवत एवाधिकार** इति निरूपितोऽ**धिकारः॥ ९॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**
**षष्ठस्याध्यायस्याष्टमः पादः**
**अध्यायश्च समाप्तः॥**

---

वाक्यत्वात्सामान्येनोपक्रान्तो विधिरर्थवादान्वयात् प्रागपर्यवस्यन् तदेकवाक्यतया घृताञ्जन एव पर्यवस्यतीति नेह भिन्नवाक्यतया तेन निर्णय इत्याशङ्कां परिहरति— **भिन्नवाक्यत्वेपि चेति।** उक्तं च **तन्त्ररत्ने** यदा व्यक्तिवचनः पशुशब्दः तदा सन्निधिलक्षणप्रकरणवशेन मन्त्रगतछागशब्दः पशुशब्दाभिधानमर्थान्तरेभ्यो व्यावर्त्य छागे नियच्छति। अभिधानविशेषणमपि विशेषणमेवेत्युक्तम्। उक्ते विशेषणं किञ्चिदुच्यमानविशेषणं इति। यदा तु जातिवचनस्तदा प्रयोगवचनेन पशुं साधनत्वेन मन्त्रं च प्रकाशकत्वेन स्वीकुर्वता सामर्थ्यादनेन मन्त्रेण प्रकाशितं पशुमालभेतेति विहितं भवति न च पश्वन्तरोपादाने तथानुष्ठातुं शक्यते इत्यर्थाच्छागेन पशुना यजेतेति छागपशुशब्दयोर्विशेषणविशेष्यभावः सिद्धो भवति। अयमेव प्रकारो मूलस्थवाक्यैकवाक्यतापदेन गृह्यते।

अध्यायार्थमुपसंहरति— **इति निरूपित इति॥**

**इति श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीण श्रीबालकृष्ण-**
**भट्टात्मज श्रीखण्डदेवान्तेवासिकवि-**
**मण्डन श्रीशम्भुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां**
**षष्ठस्याष्टमः पादः**
**अध्यायश्च समाप्तः**

---

# Index of Adhikaraṇasūtras

---

# INDEX OF CITATIONS

---

# Index Of Nyāyas

---

# ERRATA

| *Page* | *Line* | *For* | *Read* |
|---|---|---|---|
| ९९. | ७ | वर्तिक | वार्तिक |
| २७५ | ३ | कमाण्या | कर्माण्या |
| २७९ | १२ | घरिवि | परिधि |
| २७९ | २४ | अभ्वर्यादि | अर्घ्यादि |
| ,, | | रिति अभ्वर्या | रिति अर्घ्या |
| ३३२ | ३ | स्यानि | स्यानुनि |
| ३४५ | ४ | प्रतीत्यप | प्रतिपत्त्यपे |
| ३६७ | ६ | प्रधन | प्रधान |
| ४०३ | १८ | कर्मवृत्त्य | क्रमंप्रवृत्त्य |
| ४०४ | २६ | परिपक्वक्षा | परिपक्वता |
| ४०५ | २२ | त्मक्षाने | त्मज्ञाने |
| ४०७ | ८ | किन्द्वारा | किंद्वारा |
| ४४२ | ९ | घ्रेनुपस्थि | घ्रेरनुपस्थि |
| ४४६ | ७ | मविविशे | मविशे |
| ४४६ | १२ | यत्वापच्या | पत्त्या |
| ५२३ | ६ | पवर्जत्येप | र्जयेत्प |
| ५२७ | ९ | घातन्यायेत | घातन्यायेन |
| ६३७ | १ | पंस्येव | पुस्येव |
| ७७१ | ५ | अपेक्षि वै | अपेक्षितवै |
| ८५४ | PAGES | 854 TO 861 | 855 TO 862 |